गौरवमपि प्रामाणिकत्वान्न दोषायेति निगमनं चातिरमणीयं नितरां व्युत्पादकं च वर्तते ।

एकार्थीभाववादिनो वैयाकरणाः समासस्य [पदसमुदायस्य] विशिष्टैकार्थे शक्तिं स्वीकुर्वन्ति । व्यपेक्षावादिनो नैयायिकास्तु, समासघटकपदानां शक्त्या लक्षणया वा विवक्षितबोधसंभवात् समासे नातिरिक्ता शक्तिरिति वदन्ति ।

समासशक्तिसाधिकाः इमाः भूषणसारमूलकारिकाः —

'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ॥
बहूनां वृत्तिधर्माणां वचनैरेव साधने ।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥
चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्तव्यं ते न्यायसिद्धन्त्वस्माकं तदिति स्थितिः ॥
अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना ।
क्लृप्तत्यागश्चास्ति तव तत्किं शक्तिं न कल्पयेः ॥'

इति । एतासां कारिकाणां विवरणानन्तरं भूषणसारकाराः समासस्य शक्त्यनङ्गीकारे अर्थवत्त्वाभावेन प्रातिपदिकसंज्ञा न स्यात् इति स्वयं व्यपेक्षापक्षं निराकुर्वन्ति ।

शाब्दिकमतनिरूपणे प्रायः वैयाकरणभूषणसारानुसारिणः कौस्तुभकाराः, उक्तकारिकाभिः प्रतिपादितमर्थं संकलय्य एकार्थीभावपक्षं निरूपयन्ति । शाब्दिकमतनिरूपकेण महावाक्यसन्दर्भेण, (१) सामर्थ्यस्य समासप्रयोजकत्वम् (२) व्यपेक्षापक्षे राजपुरुषः इति समासपूर्वपदार्थे राज्ञि सुन्दरयेति पदार्थस्याभेदान्वयेन सुन्दरस्य राजपुरुषः इति प्रयोगाभावस्य 'सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न' इति वार्त्तिकवचनेनोपपादनक्लेशः, (३) समासस्य शक्तिमत्त्वाभावेनार्थवत्त्वाभावात् प्रातिपदिकसंज्ञानुपपत्तिः, (४) चित्रगुः इत्यादौ पूर्वपदे, उत्तरपदे, पदद्वये वा लक्षणया विवक्षितबोधासंभवः, यथाकथंचित् संभवेऽपि अषष्ठ्यर्थबहुव्रीहौ प्राप्तोदको ग्रामः इत्यादौ उदककर्तृकप्राप्तिकर्म ग्रामः इति बोधासंभवश्च, इत्येतानि समासशक्तिसाधकतया सप्रपञ्चं प्रतिपाद्यन्ते ।

तत्र पूर्वपूर्वयुक्त्युपन्यासानन्तरं नैयायिकमतेन तन्निरासशङ्कया उत्तरोत्तरयुक्तिप्रदर्शनमिति प्रणाल्या, प्राप्तोदको ग्रामः इति समासादभिमतबोधासंभवरूपां चरमयुक्तिमवशिष्टां कृत्वा तन्मतनिरूपणमुपसंहरन्ति । निराकरणप्रसङ्गे चरमयुक्तिमात्रं निराकुर्वन्ति । प्राप्तोदको ग्रामः इत्यत्र धातोः प्राप्तिः, क्तप्रत्ययस्य कर्ता कर्म चार्थः । तादात्म्येनोदकान्वि-

तस्य प्रत्ययार्थकर्तुः धात्वर्थे, तस्यापरप्रत्ययार्थे कर्मणि, तस्य च ग्रामे अन्वयः । एवं क्लृप्तानां पदार्थानां विशेषणविशेष्यभावव्यत्यासमात्रकल्पनया उद्दकर्तृकप्राप्तिकर्म ग्रामः इति बोधः संभवति । अनन्तानामीदृशसमासपदानां शक्तिकल्पनामपेक्ष्य विशेषणविशेष्यभावव्यत्यासकल्पनस्यैव लघुत्वादिति । मतान्तरनिरूपणसमय एव बहूनां दोषाणां परिहारवर्णनम्, निराकरणप्रसङ्गे अवशिष्टस्वल्पदूषणमात्रस्य परिहारोक्तिरिति उक्तिवैचित्र्यं प्रदर्शितमस्माभिः ।

व्यपेक्षावादिनो नैयायिकाः, समासस्यार्थवत्त्वाभावेन 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्राप्रवृत्तावपि 'कृत्तद्धितसमासाश्च' इति सूत्रेण प्रातिपदिकसंज्ञा सिद्ध्यति । कृत्तद्धितसूत्रं विधायकम् । कृदन्त-तद्धितान्तयोः प्रकृतिप्रत्ययसमुदायात्मकयोरर्थवत्त्वाभावेन अप्राप्तसंज्ञाविधानार्थं कृत्तद्धितग्रहणम् । आकाङ्क्षाबलेन वाक्यार्थस्य संसर्गस्य भानात् न वाक्यस्यार्थवत्त्वमिति प्रातिपदिकसंज्ञायाः अप्राप्तत्वात् वाक्यव्यवच्छेदो न कर्तव्यः । अत्र सूत्रे समासग्रहणमेव समासे एकार्थीभावस्याभावे प्रमाणम् । अत्र सूत्रे अर्थवदिति नानुवर्तते । प्रत्ययग्रहणे तदन्तग्रहणमिति परिभाषया कृदन्ततद्धितान्तयोर्लाभः । संज्ञाविधौ प्रत्ययग्रहणे न तदन्त-

ग्रहणम् इति तु प्रायिकम् । तद्धितपदेन स्वाव्यवहितोत्तरत्व-संबन्धेन तद्धितविशिष्टप्रकृतिघटितसमुदाय—तद्धितान्तान्यतरद्विवक्षितम् । अतः मध्यस्थिततद्धितकस्य पचतकि इत्यस्य न प्रातिपदिकसंज्ञापत्तिः । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् इति परिभाषया मूलकेनोपदंशमित्यस्य कारकपूर्वकस्य न ग्रहणापत्तिः, ज्ञापकसिद्धं न सर्वत्र इति तस्य असार्वत्रिकत्वादिति वदन्ति । इत्थमेव श्रीहरिवल्लभाः कृत्तध्दित-सूत्रस्य विधित्वपक्षं परिष्कुर्वन्ति ।

तथापि अस्य सूत्रस्य विधित्वं पचतकि इत्यादावति-प्रसङ्गेन दूषयित्वा, अर्थवत्सूत्रेणैव समासस्य प्रातिपदिकसंज्ञा-मुपपादयन्ति कौस्तुभकृतः । अर्थवत्त्वं च समाससाधारण्येन वृत्तिमदविषयकप्रतीत्यविषयत्वमिति परिष्कुर्वन्ति । अयमर्थ-वत्त्वपरिष्कारः श्रीधर्मदत्तसूरिभिरपि गूढार्थतत्त्वालोके परि-गृहीतः इति बोध्यम् ।

एवं व्यपेक्षावादे वैयाकरणाभिहितं दूषणं परिहृत्य, स्वयं एकार्थीभावपक्षे *शशशृङ्गादिपदानां प्रातिपदिकसंज्ञानु-पपत्तिं सप्रपञ्चं निरूपयन्ति । "समासे एकार्थीभावाभ्युप-

---

* श्री नागेशसंमतः बौध्दार्थमादायार्थवत्त्वपक्षः नोपक्षिप्तः इति बोध्यम्।

गमेऽपि न समुदायशक्तिसिद्धिः । एकार्थीभावो न विशिष्टै-कार्थप्रतिपादकत्वम् । विशिष्टस्य विशेषणविशेष्याभ्यामनति-रिक्तत्वेनैक्यासंभवात् । किन्तु विशिष्टविषयताप्रयोजकत्व-रूपमेकवाक्यत्वमेव । .... सामर्थ्यं निरुक्तैकवाक्यत्वमेव। तदेव चैकार्थीभावः । तयोः भेदाभिमानवतां परस्परं कलहो-ऽप्यज्ञानमूलक एवेति युक्तमुत्पश्यामः ।" इति कौस्तुभकृतां निरूपणमतीव चमत्कारमादधाति ।

राजपुरुषः इत्यत्र राजपदस्य राजसंबन्धिनि लक्षणेति पक्षमादौ साक्षेपनिरासं निरूप्य, तदनन्तरं विनैव लक्षणां राज-पदार्थस्य स्वत्वसंबन्धेन पुरुषे अन्वयः इति नवीनानां पक्ष-मुपोद्बलयन्ति 'नवीनास्तु' इत्यादिना सन्दर्भेण । नामार्थ-योर्भेदेनानन्वयव्युत्पत्तिर्नाङ्गीकर्तव्या । राजा पुरुषः इत्यादौ आपादकाभावादेव स्वत्वसंसर्गकराजप्रकारकपुरुषविशेष्यकबोधः नापादयितुं शक्यते। ऋद्धस्य राजमातङ्गाः इत्यादौ समास-घटकराजपदार्थे ऋद्धपदार्थाभेदान्वयो न भवति । समान-विभक्तिकविशेष्यवाचकपदसमभिव्याहाररूपाकाङ्क्षाया अभा-वात् । राजपदोत्तरलुप्तविभक्तेरनुसन्धाने शाब्दबोधो भवति। प्रयोगस्तु न साधुः । 'सापेक्षमसमर्थवद्भवति' इति असमा-र्थ्यातिदेशेन समासस्यासाधुत्वात् । इत्येवं प्रतिपाद्य सापेक्ष-त्वपरिष्कारे पराक्रान्तं कौस्तुभकारैः ।

एवं, नञर्थविचारोपक्रमे, न्यायसिद्धे नञः अभावार्थकत्वे,

'नञ्समासे चापरस्य प्राधान्यात् सर्वनामता ।

आरोपितत्वं नञ्द्योत्यं नह्यसोऽप्यतिसर्ववत् ॥' इति भूषणसारकारिकोक्तं दोषं भूषणसारदिशा निरूप्य, 'अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात्' इति कारिकान्तरव्याख्यान दिशा परिहारमपि वर्णयन्ति । एवमिवादीनां वाचकत्वे भूषणसारोक्तं दोषमनूद्य दूषयन्ति ।

---

न्यायसिद्धान्ते अभिनवभाट्टमीमांसकैरुद्भावितदूषणोद्धारः

प्रवर्तकं वाक्यं विधिवाक्यम् । प्रवृत्तौ इष्टसाधनताज्ञानं कृतिसाध्यताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं च कारणमिति तादृशज्ञानजनकं विधिवाक्यमङ्गीकरणीयम् । अतः इष्टसाधनत्वादित्रयं लिङर्थः । तच्च धात्वर्थे अन्वेति । श्येनेनाभिचरन् यजेत इत्यत्र बाधात् बलवदनिष्टाननुबन्धित्वं न बोध्यते धात्वर्थे । न कलञ्जं भक्षयेत् इत्यादौ बलवदनिष्टाननुबन्धित्वस्याभावो धात्वर्थे बोध्यते । ततश्च निषेधवाक्यस्य अनिष्टसाधनत्वबोधकत्वान्निवर्तकत्वम् । प्रवृत्तिहेतुत्वात् इष्टसाधनत्वमेव प्रवर्तना इति नैयायिका वदन्ति ।

आचार्यखण्डदेवाः भाट्टरहस्ये, स्वयं तन्मतं दूषयित्वा अयमत्र प्रवर्ततामित्याकारकेच्छायाः प्रेरणायाः लिङर्थत्वं, तस्याश्चाख्यात-सामान्यार्थभावनायां प्रयोज्यतासंबन्धेनान्वयं व्यवस्थापयन्ति ।

भाट्टरहस्यकारान् अभिनवभाट्टमीमांसकपदेन निर्दिश्य तदुक्तदूषणं पराकुर्वन्ति कौस्तुभकृतः ।

अत्रायं लिङर्थविचारे न्यायसिद्धान्ते भाट्टरहस्योक्त-दोषसंग्रहः—

(१) प्रेरणाविषयप्रवृत्तिविषयत्वेन धात्वर्थे इष्टसाधन-त्वानुमानात् अन्यलभ्यमिष्टसाधनत्वं न विध्यर्थः । (२) इष्ट-साधनत्वस्य प्रवर्तनात्वे आचार्यप्रेरणया यत्र गवानयनं, तत्र-आचार्यस्य प्रवर्तकत्वव्यवहारानुपपत्तिः, प्रवर्तनाश्रयत्वस्याचार्ये-विरहात् । (३) पाककृतेर्वर्तमानतादशायां पचेदिति प्रयोगा-पत्तिश्च वाक्यार्थस्य पाकानुकूलकृतेरबाधात् ।

एवं, आख्यातार्थकृतेः नञोऽसत्त्वे प्रथमान्तार्थे अन्वयः, नञः सत्त्वे चैत्रो न पचतीत्यादौ नञर्थाभावे अन्वयः इति व्युत्पत्तिभेदः । न कलञ्जं भक्षयेदित्यत्र बलवदनिष्टाननुबन्धि-त्वमात्रस्याभावः धात्वर्थे बोध्यते । नातिरात्रे षोडशिनं गृह्णा-तीत्यत्र धात्वर्थान्वितनञर्थाभावे इष्टसाधनत्वमन्वेति । श्येने-नाभिचरन् यजेतेत्यत्र बाधात् बलवदनिष्टाननुबन्धित्वस्य लिङर्थस्य नैव बोधः, इति व्युत्पत्तिभेदकल्पनागौरवमिति ।

कौस्तुभकृतः, इष्टसाधनत्वमात्रं लिङर्थः । बलवदनिष्टाननुबन्धित्वज्ञानं न प्रवर्तकम् । अतः बलवदनिष्टाननुबन्धित्वं न लिङर्थः । कृतिसाध्यताज्ञानस्य प्रवर्तकत्वेऽपि, कृतिसाध्यत्वं न लिङर्थः । धात्वर्थस्याख्यातसामान्यार्थकृतौ अनुकूलतासंबन्धेनान्वये तुल्यवित्तिवेद्यतया धात्वर्थे कृतिसाध्यताभानसंभवात् । तस्मात् इष्टसाधनतामात्रं लिङर्थः । निषेधस्थले धात्वर्थे कलञ्जभक्षणादौ इष्टसाधनत्वाभावः बाधात् न बोध्यते । परं तु तत्र लिङः अनिष्टसाधनत्वे लक्षणा । नञः केवलं लक्षणातात्पर्यग्राहकत्वेति वर्णयन्ति ।

एतेषांमते बलवदनिष्टाननुबन्धित्वे लिङर्थताविरहेण, तन्निबन्धनाः भाट्टरहस्याभिहिता दोषा न प्रसरन्ति ।

प्रेरणाविषयत्वेनेष्टसाधनत्वानुमानवत् इष्टसाधनत्वेन प्रेरणानुमानसंभवादन्यलभ्या प्रेरणा न विध्यर्थः । इष्टसाधनतामात्रस्य लिङर्थतायामपि आचार्यादेः प्रवर्तकत्वव्यवहारः उपपद्यते । राजप्रेरितपदातिव्यावृत्तस्य पिशुनप्रेरितराजादिसाधारणस्य स्वतन्त्रत्वे सति प्रवृत्तिप्रयोजकेष्टसाधनत्वबोधकलिङाद्युच्चारयितृत्वस्यैव प्रवर्तकत्वरूपत्वात् । मीमांसकानां मतेऽपि प्रेरणाप्रयोज्यायाः पाककृतेर्वर्तमानतादशायां पचेदिति

प्रयोगापत्तिः संभवति विषयाबाधात् । अतः तैः लिङर्थ-प्रेरणायाः आख्यातसामान्यार्थभावनायां (कृतौ) तत्तत्प्रवृत्ति-प्राक्कालीन – तत्तल्लिङादिज्ञानजन्य – प्रेरणाज्ञानव्यक्तिजन्येष्ट-साधनत्वानुमितिप्रयोज्यत्वस्य संसर्गतया भानं स्वीकृत्य, प्रेरणाप्रयोज्यप्रवृत्तेर्वर्तमानतादशायां निरुक्तसंसर्गेण प्रेरणावत्त्वस्य कृतौ बाधितत्वात् तादृशप्रयोगो वार्यते । एवं, न्यायमते-ऽपि धात्वर्थस्य पाकस्य आख्यातसामान्यार्थकृतौ स्वानुकूलत्व-स्वप्रतिपादकधातुसमभिव्याहृत– तत्तत्प्रवृत्तिप्राक्कालीनलिङादि-पदज्ञानोत्तरत्वोभयसंबन्धेनान्वयः स्वीक्रियते । कृतिवर्तमान-तादशायां द्वितीयसंबन्धस्य कृतौ बाधात् न पचेदिति प्रयोगा-पत्तिः संभवति । कृतिनिष्ठं प्रवृत्तिप्राक्कालीनतत्तल्लिङादि-पदज्ञानोत्तरत्वं लिङादिपदप्रयोगोपाधिः इति स्वीकारादपि न निरुक्तप्रयोगापत्तिः, इति भाट्टरहस्योक्तं दूषणजातमुद्धरन्ति ।

तत्र यक्षानुरूपो बलिरिति न्यायेन पाककृतेर्वर्तमानतायां तदीयफक्किकानुसारी धात्वर्थस्य कृतौ संबन्धनिरूपणप्रकारः अन्यापरिशीलितः अतीव चमत्कारमादधाति ।

भाट्टरहस्ये, इष्टसाधनत्वमात्रं । लिङर्थः निषेध-वाक्ये लिङः अनिष्टसाधनत्वे लक्षणा । नञ्पदं तात्पर्यग्राहक-मिति मतमनूदितम् ।

तदेव मतमनुमोदितं कौस्तुभे । तत्र च मते ज्योति-ष्टोमेन न यजेत इति लौकिकवाक्यस्य प्रामाण्यापत्तिः, आन्त-रालिकश्रमरूपानिष्टसाधनत्वस्य यागे अबाधितस्य बोधनसंभवा-दिति दूषणमुक्तं भाट्टरहस्ये ।

नैयायिकैः नञ्समभिव्याहारस्थले सर्वत्रानिष्टसाधनत्व-बोधः नोच्यते । चैत्यं न वन्देत, जलं न ताडयेत् इत्यादौ इष्टसाधनत्वाभावस्यैव धात्वर्थे बोधाङ्गीकारात् । तथा सत्येव तद्वाक्यप्रामाण्योपपादनसंभवात् । अत एव चैत्यं न वन्देत इति वाक्यप्रामाण्योपपादनाय इष्टसाधनत्वस्य लिङर्थता-स्वीकार आवश्यकः इति श्रीगदाधरभट्टाचार्याः व्युत्पत्तिवादे निरूपयन्ति । एवं च यत्र इष्टसाधनत्वाभावबोधो न संभवति न कलञ्जं भक्षयेदित्यादौ रागतः प्राप्तस्य निषेधस्थले, तत्रा-निष्टसाधनत्वबोध आवश्यक इति अनिष्टसाधनत्वे लिङो लक्षणा स्वीकृता । यत्र तु विधितः क्रियायाः प्राप्तिः, तत्र निषेधे इष्टसाधनत्वाभावः बोध्यते । ज्योतिष्टोमस्य विधिवाक्यादेव प्राप्तिः । तन्निषेधवाक्येन इष्टसाधनत्वाभाव एव बुध्येत ।

स च ज्योतिष्टोमे विधिविरोधात् बाधितः इति ज्योतिष्टोमेन न यजेतेति लौकिकवाक्यं न प्रमाणं भवति। एवं दूषणपरिहारः भाट्टरहस्यपरिशीलनेनैव सुबोधः। तथाहि—'अस्मन्मते च, इत्यादिना निषेधस्थले निवर्तनायाः भावनायां संसर्गघटकतया भासमानानुमितिः भिन्नभिन्ना प्रदर्शिता। न कलञ्जं भक्षयेदित्यत्रानिष्टसाधनत्वानुमितिः। नातिरात्रे षोडशिनं गृह्णाति इत्यत्रषोडशिग्रहणाभावेऽपि इतराङ्गैरेव क्रतुमहोपकारसिद्ध्यनुमितिः, न तत्रानिष्टसाधनत्वानुमितिः। 'अत एव विध्युत्तरनिषेधे सर्वत्र विधिप्रमितेष्टसाधनत्वाभावस्यैव बोधनात् द्वयोर्वैदिकत्वे प्रयोगभेदेन प्रामाण्योपपत्तावपि, श्रौतविधिविरोधे लौकिकवाक्यस्याप्रामाण्यं नानुपपन्नम्।' इति ग्रन्थपरिशीलने, श्रौतविधिविरोधस्थले इष्टसाधनत्वाभावस्यैव बोधनं, नानिष्टसाधनत्वस्येति स्पष्टं ज्ञायते। इयांस्तु विशेषः, न्यायमते इष्टसाधनत्वाभावः शाब्दबोधविषयः। तन्मते निवर्तनायाः भावनायां संसर्गघटकानुमितेः स विषयः। वस्तुतस्तु, संसर्गघटकानुमितेः, यागे बाधितस्येष्टसाधनत्वाभावस्यावगाहनेन भ्रमत्वेऽपि, तादृशानुमितिघटितसंसर्गेण लिङर्थवत्त्वस्यार्थभावनायामबाधितत्वात् प्रमात्मकशाब्दबोधजनकत्वलक्षणं प्रामाण्यं निरस्तलौकिकवाक्यस्य न वारयितुं

शङ्क्यते । इत्थं तद्ग्रन्थपरिशीलनेन सुबोधः परिहारः इति कौस्तुभकृद्भिः विशिष्य नाभिहित इति बोध्यम् ।

इदमवधेयम् । नातिरात्रे षोडशिनं गृह्णाति इति वाक्ये इष्टसाधनत्वाभावो न बोध्यते । विधिवाक्यविरोधात् । किंतु धात्वर्थान्विते नञर्थाभावे इष्टसाधानत्वं बोध्यते । स्पष्टश्चायमर्थः नञ्वाददीधितौ इति ।

---

### ग्रन्थकृतां मतान्तरनिरासः

अथेदानीं कौस्तुभकाराणां मतान्तरनिरासप्रकारश्चिन्त्यते ।

अभिनवभाट्टमीमांसकाः, नञः समभिव्याहारे असमभिव्याहारे च विभिन्नव्युत्पत्तीनां कल्पनायां गौरवातिशयदोषेण न्यायमतं दूषयित्वा, सर्वत्र योग्यतत्तत्संबन्धेन भावनायामेवान्वयं स्वीकृत्य भावनामुख्यविशेष्यकं बोधं व्यवस्थापयन्ति ।

---

* इष्टसाधनताया विध्यर्थत्वे श्रीनागोजीभट्टैरुक्तं, यागः इष्टसाधनं तस्मात् त्वं कुरु इति प्रयोगानुपपत्तिः हेतुहेतुमद्भावस्यैकत्रायोगात् इत्यादि दूषणमत्र ग्रन्थे न परामृष्टम् । वस्तुतः तत्र यागगतमिष्टसाधनत्वं हेतुः । कुरु इत्यत्र करण (कृति) गतमिष्टसाधनत्वं हेतुमदिति हेतुहेतुमतोर्भेद एवेति नानुपपत्तिः । अन्यथा यागः प्रेरणा विषयः तस्मात् त्वं कुरु इति नोपपद्यते इत्यपि सुवचत्वादिति बोध्यम् ।

कौस्तुभकृतस्तु, 'भवन्मतेऽपि संसर्गभेदेन व्युत्पत्ति-भेदकल्पनप्रयुक्तगौरवस्यावश्यकत्वात्' इति ग्रन्थेन मीमांसक-मतेऽपि व्युत्पत्तिभेदः समभिव्याहाररूपाकाङ्क्षाज्ञानस्य तत्त-त्संसर्गकबोधकारणताभेदकल्पनपर्यवसितः आवश्यकः इति नेदं न्यायमतदूषणायालमिति निरूपयन्ति ।

तत्रायमाशयः । संसर्गस्य संबन्धत्वेन संसर्गतया भानं नास्ति । वह्निमान् इत्यादौ संबन्धिनः मतुबर्थतया प्रकारतयैव संबन्धत्वेन भानमिष्यते । शाब्दबोधे संसर्ग-विधया भासमानः विशेषरूपेणैव भासते । संसर्गतात्पर्य-ज्ञानस्य शाब्दबोधहेतोः सत्त्वात् । संबन्धत्वेन संसर्गाव-गाहिशाब्दबोधानन्तरं मानान्तरेण संसर्गविशेषलाभे तदवगाही मानसो बोधो जायते । स एव प्रवृत्त्यादिप्रयोजकः इति विलम्बकल्पनमेव गौरवपराहतम् । ततश्च संसर्गविशेषाणां भिन्नभिन्नतया तत्तदवगाहिशाब्दबोधे तत्तदाकाङ्क्षाज्ञानानां कारणताकल्पनमवर्जनीयमेवेति । इत्थमुक्तिश्च मीमांसकानां मूलयुक्तिविभेदिनीति बोध्यम् ।

अपि च, व्युत्पत्तिभेदकल्पनायां गौरवमित्याग्रहे सति, विभक्तीनां तत्तद्विभक्त्यर्थसंसर्गकबोधतात्पर्यग्राहकतां स्वीकृत्य, लाघवेन तण्डुलादिनामार्थस्य भावनायां विभक्त्यर्थघटित-

योग्यसंबन्धविशेषेणान्वयः, नामार्थसुबर्थयोः सुबर्थाख्यातार्थयोश्चान्वयानङ्गीकारेण तादृशान्वयनिबन्धनव्युत्पत्तिभेदकल्पनागौरवस्यापि नावकाशः, इति कुतो नाभ्युपेयते इति निरूपणमतिसमीचीनं वर्तते ।

किं च, यक्षानुरूपो बलिः इति न्यायेन तदीयमार्गानुसारेण तन्मतदूषणं चमत्कारमादधाति । मीमांसकसंमतं आख्यातार्थभावनामुख्यविशेष्यकबोधं, कीदृशी कृतिः इति प्रश्ने, चैत्रः पचति, न पचति, चैत्रः पचेत्, न पचेत् इत्यादीनामुत्तरत्वापत्तिः उक्तवाक्यैः कृतेरेव विशेष्यतया बोधजननात् इति दोषेण निराकुर्वन्ति । प्रथमान्तार्थ मुख्यविशेष्यकबोधस्वीकारे कीदृशः चैत्रः इति प्रश्ने चैत्रः पचतीत्यादीनामुत्तरत्वापत्तिरिति मीमांसकोक्तदूषणसदृशमिदं दूषणम् ।

कीदृशी कृतिः इति प्रश्नस्य स्त्रीलिङ्गविशिष्टकृतिविषयकत्वात् उत्तरवाक्येनापि स्त्रीलिङ्गविशिष्टकृतिबोधकेन भवितव्यम् । तिङा न स्त्रीत्वं बोध्यते इति चैत्रः पचतीति वाक्यं नोत्तरमिति अभिनवमीमांसकानां समाधानरीतिः न संगच्छते । प्रश्ने स्त्रीत्वाविवक्षायां तथोत्तरापत्तेः दुर्वारत्वात् । वस्तुतः, शब्दगते स्त्रीत्वे मानाभावात् लौकिकमेव योनिमत्त्वरूपं स्त्रीत्वं अजा इत्यादौ स्त्रीप्रत्ययेन बोध्यते । खट्वा,

अटवी इत्यादौ बाधात् न स्त्रीत्वबोधः इति न्यायसिद्धान्तः । तन्मते कीदृशी कृतिः इति प्रश्नः स्त्रीत्वविशिष्टकृतिविषयकः इति वक्तुं न शक्यते इति बोध्यम् ।

किंच, लिङर्थः प्रवर्तना । सा च प्रवृत्त्यनुकूलव्यापारः । प्रवृत्तेः अनुकूलतायाश्चान्यलभ्यत्वात् अनन्यलभ्यं व्यापारत्वमात्रं लिङः शक्यतावच्छेदकमित्येकः प्रकारः । प्रवृत्तिविशेषप्रयोजकतावच्छेदकतया सिद्धः प्रेरणात्वरूपः अखण्डो धर्मः प्रवृत्तिनिमित्तमित्यन्यः पक्षः । अयमत्र प्रवर्ततामित्याकारकत्वरूपविषयताविशेषः लोकवेदसाधारणः शक्यतावच्छेदकः इत्यपरः पक्षः । इच्छात्वमेव शक्यतावच्छेदकम्, अपौरुषेये वेदे तु लिङः अलौकिकव्यापारे लक्षणा इत्यन्तिमः पक्षश्च वर्णितो भाट्टरहस्ये । इत्थं पक्षभेदेन प्रवृत्तिनिमित्तभेदेऽपि, अयमत्र प्रवर्ततामित्याकारकत्वरूपविषयताविशेषः वैदिकलिङादिनिष्ठे व्यापारे स्वीकरणीय एव । लोकवेदसाधारण्येन तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वनिर्वाहाय भट्टमते तथाङ्गीकरणीयतायाः तद्ग्रन्थोक्तेः । अतः अयमत्र प्रवर्ततामित्याकारकत्वरूपविषयताविशिष्टव्यापारस्य वैदिकलिङादिनिष्ठत्वमेव दूषितं कौस्तुभे । निरुक्तविषयताविशेषस्येच्छा-

त्वव्याप्यत्वात् इच्छारूप एव स व्यापारो वाच्यः । शब्दस्य गुणत्वात् तत्र गुणरूपिणी इच्छा न संभवति । शब्दस्य द्रव्यत्वमङ्गीकृत्य, जीवातिरिक्ते ईश्वरे नित्येच्छायाः न्यायमते स्वीकार इव, वैदिकशब्दे नित्येच्छास्वीकारे बाधकाभावः, इति मीमांसकोक्तिर्न युक्ता । द्रव्यं मूर्तममूर्तमिति द्विविधम् । तत्रामूर्तं गगनादि विभु । स्पन्दसमवायिकारणतावच्छेदकं मूर्तत्वं न शब्देऽस्ति । विभुभिन्नत्वात् अमूर्तद्रव्यत्वमपि नास्तीति शब्दस्य द्रव्यत्वासिद्धिः । ईश्वरे चेतने नित्येच्छा-स्वीकारेऽपि अचेतने शब्दे नित्येच्छाङ्गीकारो न युक्तः इति दोषजातमुपन्यस्य अन्ते, 'ईश्वरस्य चेतनत्वेन शब्दस्य चाचेतनत्वेन वैषम्यात् । अनुभवविरुद्धयत्किञ्चित्कल्पने उपेक्षणीयतापत्तेश्च ।' इत्युपसंहृतं कौस्तुभे ।

'यदि तु इच्छात्वस्यात्मनिष्ठत्वव्याप्यत्वमेवेत्याग्रहः, तदा औपनिषदमप्यीश्वरमङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङाद्यर्थः ।' इति भाट्टरहस्योक्तस्य स्वीकारे, विधिरेव तावत् गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम् इति उदयनाचार्यो-क्तसरण्या वेदस्येश्वरकर्तृकत्वेन पौरुषेयत्वं प्रसज्येत । मीमां-सकसर्वस्वभूतं वेदापौरुषेयत्वमेव भज्येतेत्यवधेयम् ।

वैयाकरणाः, धात्वर्थमुख्यविशेष्यक एव शाब्दबोधः इति आतिष्ठन्ते । तथाङ्गीकारे चैत्रः पचतीत्यत्र चैत्रपदोत्तरं तृतीयापत्तिः । लकारादिभिरनभिहिते कर्तरि तृतीया अनुशिष्टा । लकारस्य कर्त्रनभिधायकत्वं, न कर्तृवाचकत्वं कर्तृबोधकत्वं वा । चैत्रेण पच्यते इत्यत्र लकारेण कर्त्रनभिधानासंभवात् । अतः कर्तृविशेष्यतया तत्प्रातिपदिकार्थे अविवक्षिते सति तत्प्रातिपदिकात् तृतीया इत्येवानुशासनार्थः वैयाकरणैरपि वाच्यः । तथाच क्रियामुख्यविशेष्यकबोधस्वीकारे चैत्रप्रातिपदिकार्थस्य कर्तृविशेष्यतया अविवक्षितत्वात् चैत्रपदात् तृतीयापत्तिर्दुर्वारा इति वैयाकरणसंमतं बोधं निराकुर्वन्ति । अनेनैव तृतीयापत्तिदोषेण मीमांसकसंमतं भावनामुख्यविशेष्यकमपि बोधं पराकुर्वन्ति ।

चैत्रो न पचतीत्यादौ चैत्रकर्तृकपाकाभावः इति नञर्थविशेष्यकबोधः भूषणसारकृद्भिर्वर्णितः । तत्र, शाब्दबोधस्य क्रियामुख्यविशेष्यकत्वनियमभङ्गः, अधिकरणाकाङ्क्षापत्तिश्चेति दोषद्वयमभिहितं कौस्तुभे ।

अत्रेदं बोध्यम् । चैत्रो न पचतीति वाक्यात् चैत्रकर्तृकपाकाभावः इति बोधाङ्गीकारे, पचत्यपि चैत्रे,

चैत्रो न पचतीति प्रयोगापत्तिः । तादृशपाकाभावस्यान्यत्र मैत्रे वर्तमानत्वेन विषयाबाधात् । यदि, नञः चैत्रनिष्ठाभावे लक्षणा । चैत्रकर्तृकपाकप्रतियोगिकः चैत्रनिष्ठाभावः इति बोधः । पचति चैत्रे पाकप्रतियोगिकस्य चैत्रनिष्ठाभावस्य बाधितत्वान्न तथा प्रयोगः । यद्वा, नञो न लक्षणा । धात्वर्थस्य पाकस्य समभिव्याहृतप्रथमान्तपदार्थचैत्राद्यनुयोगिकत्वविशिष्टाभावीयानुयोगिताविशेषसंबन्धेन नञर्थे अभावे अन्वयः । मैत्रनिष्ठपाकाभावस्य निरुक्तानुयोगिताविशेषसंबन्धेन पाकविशिष्टत्वाभावान्नापत्तिः इति विभाव्यते । तदापि यादृशराजादिकर्तृकः पाकः अप्रसिद्धः, तादृशराजा न पचति इति वाक्यस्याप्रामाण्यापत्तिः । तादृशराजकर्तृकपाकरूपप्रतियोगिनः अप्रसिद्ध्या तदभावस्य सुतरामप्रसिद्धत्वेन बोधासंभवादिति ।

आरोपिता चैत्रकर्तृका पाकक्रिया इति बोधस्तु अनुभवविरुद्धः । नञा अभावबोधस्यैवानुभविकत्वात् । उक्तं च कौस्तुभे नञर्थनिरूपणे, 'नञ्समभिव्याहारे सर्वत्र [समासे व्यासे च] अभावबोधस्यानुभविकत्वात् । आरोपत्वस्याननुगतस्य ब्रह्मणोऽपि दुर्वचत्वेनारोपस्य नञर्थत्वे गौरवाच्च ।' इति ।

एवं शक्तिलक्षणयोर्निरूपणानन्तरं व्यञ्जनां प्रस्तुत्य, ध्वन्यालोकलोचन—काव्यप्रकाश—साहित्यदर्पण—रसगङ्गाधरादि-प्रामाणिकानेकालंकारशास्त्रग्रन्थोक्तार्थसारसंग्रहात्मकेन विस्तृतेन संदर्भेण व्यञ्जना अतिरिक्ता वृत्तिरिति आलंकारिकमतमनुवदन्ति कौस्तुभकाराः ।

काव्यस्य मुख्यं प्रयोजनं रसास्वादः । विभावानु-भावादिसंवलितं आनन्दांशेभग्नावरणं 'रसो वै सः' इति श्रुति-प्रतिपाद्यं मनोवृत्तिविशेषरूपरत्याद्यवच्छिन्नचैतन्यमेव रसः । काव्यात् तत्प्रतीतिश्च शक्त्यादिना न संभवतीति तत्प्रतीतये व्यञ्जना वृत्तिरावश्यकी । शब्दश्रवणानन्तरं क्रमेण यावा-नर्थः प्रतीयते स सर्वोऽपि शब्दशक्त्या प्रतिपाद्यते इति न युक्तमतिप्रसङ्गात् । नापि लक्षणया व्यङ्ग्यस्य प्रतीतिः । लक्षणया प्रयोगे प्रयोजनमपेक्षितम् । गङ्गायां घोषः इत्यादौ गङ्गापदस्य लाक्षणिकस्य प्रयोगे प्रयोजनं गङ्गाप्रवाहगतशैत्य-पावनत्वादेः घोषादौ प्रतिपत्तिः । सापि यदि लक्षणया भवति, तदा तस्याः प्रयोजनं वक्तव्यम् । तदपि लक्षणयेति चेदन-वस्थितिरिति प्रयोजनमतिरिक्तव्यञ्जनाव्यापारसाध्यमित्येवाङ्गी-करणीयम् । व्यङ्ग्यार्थबोधे बाधज्ञानं न प्रतिबन्धकम् । गतोऽस्तमर्कः इत्येकस्य वाक्यस्य श्रवणे, बोद्धॄणां वैचित्र्यात्

नावः बन्धनीयाः इत्यादयः बह्वोऽर्थाः प्रतीयन्ते । न तावता शक्यार्थभेदे इव वाक्यभेदः ।

असावुदयमारूढः कान्तिमान्रक्तमण्डलः ।
राजा हरति लोकस्य मानसं मृदुलैः करैः ॥ इत्यादौ

प्रकरणेनाप्रकृतार्थे पदशक्तेः कुण्ठीभावात्, प्रकृतार्थोपस्थित्या प्रकृतवाक्यार्थबोधानन्तरं श्लिष्टपदरचनया कविसंरम्भावधारणात् जायमानः अप्रकृतार्थबोधः व्यञ्जनयैव भवति, न शक्त्या । प्रकृताप्रकृतयोरुपमानोपमेयभावबोधोऽपि तथैव भवति । एवं, 'वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्' इत्यादौ वाच्येन गमननिषेधेन विधेः गमनस्य प्रतीतिरनुभवसिद्धा व्यञ्जनयैव, न शक्त्या । वाच्यव्यङ्ग्ययोरत्यन्तवैलक्षण्यात् । नापि वाच्येन लिङ्गेन व्यङ्ग्यस्य लिङ्गिनः अनुमितिः संभवति । पक्षवृत्तितया प्रमाणसिद्धेन निश्चितसाध्यव्याप्तिमता च लिङ्गेन भाव्यम् । निरुक्तस्थलेषु वाच्यस्य व्यभिचारिसाधारणत्वेन निश्चितव्याप्तिमत्त्वं न संभवति, नवा पक्षधर्मत्वं प्रमाणावधृतमिति अतिरिक्तेन व्यञ्जनाव्यापारेण प्रतीतिः । पद- तदेकदेश- वर्ण— संघटना — चेष्टादीनामर्थविशेषव्यञ्जकत्वं सर्वानुभवसिद्धं नापलापार्हम् । वस्तुतस्तु, तत्तद्धीजनकत्वमेव व्यञ्जना ।

सैव सर्वत्र वृत्तिः । न शक्तिः, न वा लक्षणा । व्याकरणादिभिः बोधकत्वानुशासने अभिधेति, बाधज्ञान-तात्पर्यानुपपत्तिप्रतिसन्धानोत्तरं बोधकत्वे लक्षणेति, बाधिताद्यर्थबोधकत्वे व्यञ्जनेति च तान्त्रिकाणां व्यवहारः । जनकत्वं चातिरिक्तः पदार्थः । इत्थं च, गुणालंकारादिविशिष्टकाव्यार्थभावनया शकुन्तलात्वादिविशेषधर्मं परित्यज्य स्त्रीत्वादिना प्रतीतैः विभावादिभिः व्यञ्जित-वृत्तिरूपरत्याद्यवच्छिन्नचैतन्यं स्वयंप्रकाशमानन्दांशे भग्नावरणं विभावादिसंभिन्नमभिव्यक्तं रसः । सा चाभिव्यक्तिरपरोक्षरूपेति कौस्तुभसन्दर्भसारार्थः ।

कौस्तुभकृतः काव्यरसिकाः, रसिकैरालंकारिकैः विरचितप्रक्रियासु चादरविशेषवन्तः । कथमन्यथा व्यञ्जनाया अतिरिक्तवृत्तित्वनिरूपणाय नैकानि व्यङ्ग्यप्रधानकाव्यान्युदाहृत्य तत्र सर्वत्र प्रकारान्तरासंभवे विस्तृतां वाग्वैखरीं प्रकटीकुर्युः, दूषणोपक्रमे च आस्तां तावदियं प्रक्रिया इति वदेयुः । परं तु, ध्वननव्यापारानङ्गीकर्तृन्यायदर्शनसिद्धान्तप्रतिष्ठापनधुरन्धरतया न्यायवासनया औपनिषददर्शनसंमतां आत्मनः स्वप्रकाशचैतन्यात्मकतामानन्दात्मकतां च परित्यज्य ब्रह्मानन्दानुभवसब्रह्मचारिणं रसानुभवमानादृत्य लब्धया सरण्या आलंकारिकाणां मतं कटाक्षयन्ति । तद्यथा—चैतन्यस्यातिप्रसक्त-

त्वात् रत्याद्यवच्छिन्नं चैतन्यं रसः इत्यस्य रत्यादिः रसः इत्येव पर्यवसितोऽर्थः । शब्देन विभावानुभावादीनामुपस्थितौ सत्यां काव्यार्थभावनया रत्यादिर्भासते । तादृशं मानसं भानमेव रसाभिव्यक्तिः । तदनन्तरं लोकोत्तराह्लादो जायते । रसाभिव्यक्तिः आनन्दजनकत्वात् आनन्दविषयकतया उपचर्यते । काव्यजन्यविभावाद्युपस्थितिजन्यत्वात् रसाभिव्यक्तेः काव्यप्रयोज्यत्वमेव, न काव्यजन्यत्वम् । अतः न शब्दस्य व्यञ्जनाव्यापारात् रसाभिव्यक्तिरिति ।

एवमभिनवगुप्ताचार्यसंमतरसाभिव्यक्तिं तत्कारणव्यञ्जनां च पराकृत्य, अनिर्वचनीयख्यातिमवलम्ब्य रसगङ्गाधरे प्रदर्शितं नव्यमतसिद्धं रसाभिव्यक्तिप्रकारमुपवर्ण्य दूषयन्ति । काव्यात् विभावादिज्ञाने जाते, व्यञ्जनाव्यापारेण दुष्यन्तादौ शकुन्तलादिविषयकरतौ गृहीतायां, सहृदयतोल्लासितस्य काव्यार्थभावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्यन्तत्वेनावच्छादिते स्वात्मनि साक्षिभास्यः अनिर्वचनीयः शकुन्तलाविषयकरत्यादिः जायते । स एव रसः । सोऽप्युक्तदोषेण जन्यः दोषनाशेन नाश्यश्च । तादृशानिर्वचनीयरत्युत्पत्त्यनन्तरमानन्दो जायते । तेन भेदाग्रहात् तादृशानिर्वचनीयरतौ आनन्दव्यवहारः । व्यञ्जनया काव्योपस्थापित- दुष्यन्तादिगतशकुन्तलाविषय-

करत्या सह एकत्वाध्यवसायात् निरुक्तरसः व्यङ्ग्यः वर्णनीयश्चेत्युच्यते इति *नव्यानां मतविशेषः । अस्य निराकरणप्रकारो यथा—

काव्यार्थभावनारूपदोषात् दुष्यन्तोऽहं शकुन्तलाविषयकरतिमानिति बोधो जायते । स एव रसः । स्वाप्नस्य तादृशज्ञानस्य काव्यार्थचिन्तनारूपदोषजन्यत्वाभावात् न रसत्वम् । अयं च बोधः भ्रमात्मकः अलौकिकमानसबोधः । अतो न स्वस्मिन् विषयस्य रत्यादेः सत्त्वमपेक्ष्यते । आस्वादस्य रसविषयकत्वव्यवहारालम्बनं रसस्योक्तबोधस्य रत्यादिविषयकत्वमेवेति, नानिर्वचनीयख्यातिरपेक्षिता, न वा व्यञ्जनावृत्तिरिति ।

व्यङ्ग्यत्वेनाभिमतानां मानस एव बोधः, न शाब्दः । प्रकरणादेः मानसबोधाप्रतिबन्धकत्वात् अप्रकृतार्थबोधोऽपि मानसः । एवमेव व्यङ्ग्यत्वेनाभिमतस्य बाधितस्यापि मानसो बोधो जायते । काव्यार्थभावनारूपदोषमहिम्ना बाधस्याप्रतिसन्धानात् । प्रतिसन्धानसत्त्वेऽपि भावनाविशेषात्मकदोषजन्यत्वात् मानसं ज्ञानं बाधज्ञानेन न प्रतिबध्यते । इत्येवं

---

* एतन्मतनिरूपणे रसगङ्गाधरवाक्यान्येव कौस्तुभे लक्ष्यते ।

मानसबोधेनैव निर्वाहः इति न व्यञ्जनावृत्तिः स्वीकरणीयेति ग्रन्थकारा निरूपयन्ति ।

महादेवपण्डिताः रसगङ्गाधरकारान् पण्डितराजजगन्नाथान् आधुनिकालंकारिकपदेन व्यवहरन्ति । तेषामाशयनिराकरणे महान्तं निर्भरं प्रदर्शयन्ति । तथाहि—

'अवलानां श्रियं हृत्वा वारिवाहैः सहानिशम् ।
तिष्ठन्ति चपला यत्र स कालः समुपस्थितः ॥'

इति श्लोके, स्त्रीणां शोभापहारिण्यः विद्युतः मेघैः सहानिशं तिष्ठन्ति इति बोधानन्तरं, दुर्बलानां द्रव्यमपहृत्य जलवाहकैः पुरुषैः पुंश्चल्यो रमन्ते इत्यर्थान्तरं प्रतीयते । योगस्थले रूढिशक्तेः अवयवशक्तिप्रतिबन्धकत्वं सर्वतान्त्रिकसिद्धम् । अतः वारिवाहकादि योगरूढशब्दैः मेघाद्यविषयकस्य केवलावयवार्थजलवाहकत्वाक्रान्तपुरुषविषयकस्य बोधस्यासंभवात्, चपलापदेन योगशक्त्या पुंश्चलीबोधासंभवाच्च, निरुक्तार्थान्तरप्रतीतिः विना व्यञ्जनाव्यापारं न घटते, इति व्यञ्जनाङ्गीकारे युक्तिरभिहिता रसगङ्गाधरे ।

पङ्कजादिपदात् केवलावयवशक्त्या पङ्कजनिकर्तृत्वेन कुमुदबोधो न भवति । अतः तत्र पद्मे रूढिशक्तेः प्रतिबन्धकत्वमभिहितं प्राचीनैः । तत् न सर्वतान्त्रिकाणां

संमतम् । 'पङ्कजपदस्य पद्मे न रूढिशक्तिः । योगशक्त्या पङ्कजनिकर्तृत्वेनैव बोधः । तेन रूपेण कुमुदबोधोऽपीष्यत एव । यद्वा, पद्मत्वं प्रयोगोपाधिः । नातः तेन रूपेण कुमुदस्य बोधः ।' इति मीमांसकग्रन्थे लेखनात्, तल्लेखनादर्शनात् सर्वतान्त्रिकसंमतत्वलेखनं रसगङ्गाधरकृतः । वस्तुतस्तु रूढिशक्तेः योगशक्तेश्च यत्र विरोधः मण्डपादिपदे, तत्रैव रूढिशक्तेः योगापहारिता, नान्यत्र । अत एव चन्द्रे रूढात् सोमपदात् सह उमया वर्तते इति योगशक्त्या शिवस्य बोधः । प्रकृतश्लोके श्लिष्टपदोपादानकविसंरम्भोन्नीततात्पर्यसहितयोगशक्त्यैव द्वितीयार्थबोधः समुचितः । अन्यथा कविसंरम्भवैयर्थ्यात् । चपलाशब्दात् योगेन पुंश्चलीबोधस्यासंभवोक्तिः ,चोषति—मन्दं गच्छति जारान् प्रतीति चपला इति वदता 'चपला कमलाविद्युत्पुंश्चलीपिप्पलासु च' इति मेदिनीकोशमुदाहरता च उणादिसूत्रवृत्तिकृतैव प्रत्याख्याता, इत्येवं सर्वमपि रसगङ्गाधरोक्तं सावेगं दूषयन्ति । एवं, इवशब्दार्थविचारेऽपि वनं गज इव चैत्रो गृहं गच्छति इत्यत्र शाब्दबोधं जगन्नाथोक्तं पराकुर्वन्ति । अतः जगन्नाथोक्तिनिरासे निर्भरोऽवगम्यते ग्रन्थकाराणाम् ।

इदमत्र बोध्यम् । सहृदयानां काव्यार्थभावनया ब्रह्मानन्दानुभव सदृशः रसानुभवो जायते इत्यनुभवसिद्धोऽर्थः । विभावादिभिरुपस्थितरत्यादेरलौकिकमानसबोध एव जायते, तस्य वाक्यप्रयोज्यतैव न वाक्यजन्यता, शब्दात् प्रत्येमीति अनुभवस्यापि प्रयोज्यताविषयकत्वम्, आस्वादस्य रसविषयकत्वमौपचारिकम्, इति कथनं ग्रन्थकृतां स्वीयवासनाविजृम्भितमेव । व्यङ्ग्यत्वाभिमतार्थानामलौकिकमानसबोधेनैव निर्वाहे, तुल्ययुक्त्या पदोपस्थापितपदार्थानां संसर्गानुभवस्यापि अलौकिकमानसबोधत्वोपगमसंभवेन शाब्दबोधाख्यविलक्षणप्रमितेरेवासिद्ध्या तत्करणशब्दप्रमाणस्यैव विलयापत्तिः । यदि शब्दादमुमर्थं शृणोमि, शाब्दयामि इति स्वारसिकानुभवबलेन शाब्दबोधाख्यविलक्षणप्रमितिः सिद्ध्यतीत्युच्यते । तदा शब्दादमुं प्रत्येमीति व्यङ्ग्यत्वाभिमतार्थप्रत्ययस्य शब्दजन्यत्वावगाहिस्वारसिकप्रतीतिबलात् व्यङ्ग्यार्थबोधोऽपि अलौकिकमानसातिरिक्तः सिद्ध्यत्येव । नचासंबद्धं काव्यं तं तमर्थं बोधयितुं प्रभवतीति व्यङ्ग्यव्यञ्जकभावाख्यः संबन्धः अवश्यं स्वीकरणीयः । स एव व्यञ्जना वृत्तिरित्यभिधीयते । यद्यपि इयं पदशक्तिरिव न ज्ञाता सती पदार्थस्मृतिद्वारा संसर्गानुभवं जनयति । नापि पदमात्रवृत्तिः, किंतु पद–तदर्थ–वर्ण–रचना–चेष्टादिसाधारणी इति

वैलक्षण्यमस्ति । तथापि अभिधेयाविनाभूतार्थप्रतीतिर्लक्षणा इति नये ज्ञातत्वस्य पदार्थस्मारकत्वस्य च विरहेऽपि यथा लक्षणा वृत्तिर्भवति, तथैव व्यञ्जनापि वृत्तिर्भविष्यति । अनुगतं च वृत्तित्वं दुर्वचमिति शक्तिवादसामान्यकाण्डे श्रीगदाधरभट्टाचार्यैः प्रपञ्चितम् । तस्मात् कविभारतीनां रमणीयतासंपादिका व्यञ्जनावृत्तिः स्वीकरणीया । समासोक्त्यलंकृतं 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इति काव्यं, प्राचीप्रारम्भसंबन्धाश्रयः चन्द्रः जारसंबन्धिपरनायिकावदनचुम्बनाश्रयः इति व्यङ्ग्यार्थसंसृष्टवाच्यार्थबोधजननैव चमत्कृतिमादधाति । ततश्च 'अन्यथा वृत्तेः, पदव्यापारानियमेन व्यञ्जनायाः पारिभाषिकवृत्तित्वोपगमापत्तेः, तदुपगमे प्रमाणाभावाच्च' इति ग्रन्थकारोक्तिः वासनामात्रविजृम्भितेति भाति ।

शास्त्रान्तरेष्वपि व्यञ्जनानिराकरणे निर्भरो नावगम्यते । श्रीनागोजीभट्टाः लघुमञ्जूषायां वृत्तिनिरूपणावसरे व्यञ्जनां वृत्तिं विवृण्वन्ति । वेदान्तिनः श्रीमधुसूदनसरस्वतीस्वामिनः वेदान्तकल्पलतिकायां व्यञ्जनाप्रस्तावे, 'अस्तु सापि शब्दवृत्तिरिति, न काप्यस्माकं क्षतिः' इत्युपसंहरन्ति । श्रीहरिवल्लभाः भूषणसारदर्पणे शक्तिनिर्णयप्रकरणे 'यदि आनुभाविकः स्वरसवाही शब्दादमुमर्थं प्रत्येमीत्यनुभवः, तदा व्यञ्जनासिद्धिः

निष्प्रत्यूहैव ।' इति प्रतिपादयन्ति । न्यायदर्शनेऽपि शक्तिवादमाधवीयविवृतिः व्यञ्जनाप्रस्तावे पक्षद्वयं निरूप्य, 'पक्षयोरनयोः युक्तता सुधीभिर्विभावनीया' । इत्युपसंहरन्ती व्यञ्जनानिराकरणे निर्भराभावं सूचयति । "यदि पुनरानुभाविको लोकानां स्वरसवाही शब्दादमुमर्थं प्रत्येमीत्यनुभवः, तदा वैयञ्जनिकी वृत्तिः गीर्वाणगुरूणामप्यशक्यवारणेति व्यञ्जनासिद्धिः निष्प्रत्यूहैवेति मन्तव्यम् ।" इति नीलकण्ठीयग्रन्थः स्पष्टमेव व्यञ्जनानिराकरणे निर्भरविरहं बोधयति।

---

### दर्शनान्तरीयग्रन्थस्योद्धारः विवरणं च

अथ ग्रन्थकृतां दर्शनान्तरीयग्रन्थस्योद्धारः विवरणं च चिन्त्यते । योग्यताविचारे, शाब्दबोधे बाधनिर्णयो न प्रतिबन्धकः, बाधितस्याप्यर्थस्य 'यशः शुभ्रम्' इत्यादिकविवाक्येन आहार्ययोग्यताज्ञानाधीनशाब्दबोधानुभवात् । नचैतावता शब्दबोध्ये बाधितेऽर्थे प्रवृत्त्यापत्तिः संभवति, बाधप्रमया शाब्दबोधे अप्रमात्वज्ञापनेन प्रामाण्यज्ञानाभावात् । इति प्रतिपाद्य, तस्मिन्नर्थे प्रमाणत्वेन खण्डनकाराणां श्लोकः उदाहृतः, स्वोक्तार्थसंवादकतया शेषपूरणादिना विस्तरेण विवृतश्च कौस्तुभे ।
"तदुक्तं खण्डनकारैः—

अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।
प्रमाबाध्याऽप्रमा तत्र ह्यतः प्रामाण्यनिर्णयः ॥ इति ।

अस्यार्थः । अत्यन्तासत्यपि-बाधितत्वेनावधारितेऽपि अर्थे—विषये, हि—निश्चयेन शब्दः ज्ञानं करोत्येव । द्वितीयो हिशब्दः एवकारार्थः । नन्वेवं तत्र प्रवृत्त्यापत्तिः, तज्जनकस्य विशिष्टज्ञानस्य सत्त्वात्, अत आह—प्रमेत्यादि । तत्र—बाधितार्थे प्रमाबाध्या–प्रमया—अयोग्यताप्रमया बाध्या—अप्रमात्वेन ज्ञाप्या । अप्रमा–भ्रमात्मकशाब्दबुद्धिरेव, भवतीति शेषः । तावतापि किं जातम्, अत इति । प्रवृत्तिप्रयोजकः इति शेषः । तथाच प्रवृत्तिप्रयोजकप्रामाण्यनिर्णयाभावात् न तत्र प्रवृत्तिरिति भावः ।" इति कौस्तुभः ।

मथुरानाथीये रहस्ये पूर्वोद्धृतखण्डनश्लोकस्य 'बाधात्तु नप्रमा तत्र अतः प्रामाण्यनिर्णयः ।' इत्युत्तरार्धं पठितम् । श्लोकविवरणं तु कौस्तुभानुसार्येव लक्ष्यते ।

परं तु मूलग्रन्थे खण्डनखण्डखाद्ये प्रथमपरिच्छेदे, अद्वैतश्रुतेः प्रत्यक्षबाधोद्धारप्रसङ्गे,

'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम् ॥' इति श्लोकः

पठितः । तत्र पूर्वार्धे एक एव हिशब्दः । उत्तरार्धं तु विलक्षणमेव दृश्यते । बाधितार्थविषयकमपि बोधं जनयति शब्दः कलहादिस्थले इत्यनुभवसिध्दम् । अत्र-अद्वैतात्मतत्त्वे स्वतःप्रामाण्यनिश्चलां - प्रमात्वस्वतस्त्वप्रयोज्याप्रामाण्यज्ञानानास्कन्दितत्वेन विशिष्टां प्रमां अबाधात्-बाधाभावात् शब्दः करोति इति श्लोकार्थो निरूपितः खण्डनव्याख्यातृभिः ।

एवं, न्यायग्रन्थेषु ग्रामं गच्छतीत्यादिवाक्यात् राजपुरप्रवेशन्यायेन खण्डवाक्यार्थबोधपूर्वकं महावाक्यार्थबोधो जायते इत्यत्र प्रमाणतया,

'यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥'

इति कारिकामुदाहरन्ति, 'अनन्तरं महावाक्यार्थबोधो भवति' इति शेषपूरणेन व्याचक्षते च नैयायिकाः । परं तु, मूलग्रन्थे वाक्यार्थमातृकायां, पदार्थाः न वाक्यार्थमवगमयन्ति, पदान्येव अन्वितमर्थं—वाक्यार्थमवगमयन्ति इति प्राभाकराणामन्विताभिधानप्रक्रियां निरूपयन्ती इयं कारिका लक्ष्यते । अत एव तत्र 'पदैरेव' इत्येवकारेण पदार्थानां व्यवच्छेदः साधु संगच्छते । श्रीब्रह्मानन्दसरस्वतीस्वामिभिः लघुचन्द्रिकायां अन्विताभिधानवादिकारिकात्वेनेयं कारिका प्रतिपादिता ।

एवं,

'सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु च ॥' इति

भाष्यवार्त्तिकम् । तत्र कर्मणि द्वितीयैव, कर्मण्येव द्वितीया इति च नियमद्वयमभिहितम् । कर्मण्येव द्वितीया इति द्वितीयनियमात् न्यायमते घटं जानातीत्यादौ घटपदोत्तरं द्वितीया न स्यात् । घटे क्रियाजन्यफलाश्रयत्वरूपस्य कर्मत्वस्याभावात् विषयत्वस्य च कर्मतानात्मकत्वादिति वैयाकरणानामाक्षेपपरिहारावसरे, पदवाक्यरत्नाकरे—

'विभक्तिः प्रकृतेष्वेवेत्येवं नियमवादिनि ।
चतुर्थे चरणेऽनास्थां वाकारेणाह वार्त्तिकम् ॥'

इति कारिका दृश्यते । 'सुपां कर्मादयोऽप्यर्थाः' इति वार्त्तिके चतुर्थपादे 'नियमः प्रकृतेषु वा इति वाकारोपादानात् तत्पक्षे अनादरसूचनात् कर्मण्येव द्वितीया इत्यादिर्नियमः न वार्त्तिकसंमतः इति न घटं जानातीत्यत्र घटपदोत्तरं द्वितीयानुपपत्तिरिति तदाशयः । कौस्तुभेऽपि यजतिषु ये यजामहं करोतीत्यत्र यजतिपदेन यागरूपार्थस्य लाभप्रकारविवेचनावसरे, 'एवं कर्मणि द्वितीयैव इत्येव नियमः, न तु द्वितीया कर्मण्येवेति । अत एव घटं जानाति, आत्मानं

वेत्तीत्यादौ विषयतामात्रे लक्षणया प्रयोगः।' इत्येक एव नियमो-ऽभिहितः। तच्च, नियमः प्रकृतेषु वा इति वार्त्तिकपाठमव-लम्ब्य वाकारस्यानादरसूचकतापक्षमनुधावति।

एवं, महाभाष्यटीकायां हरिणोक्तं, वार्त्तिकमिति व्यत्या-सेन मीमांसकग्रन्थेषु लिखितमिति,

'कृत्तद्धितसमासेभ्यः मतभेदनिबन्धनम्।
त्वतलोरर्थकथनं टीकायां हरिणा कृतम्॥' इति

कारिकाविवरणात् भूषणसारादवगम्यते। "कृत्तद्धितसमासे-भ्यः संबन्धाभिधानं भावप्रत्ययेनान्यत्र रूढ्यभिन्नरूपा-व्यभिचरितसंबन्धेभ्यः।" इति वार्त्तिकवचनमिति मीमांसका-दीनां भ्रममपाकुर्वन्नाह-टीकायामिति। भर्तृहरिणा महाभाष्यटी-कायामित्यर्थः।' इति भूषणसारः। इत्यलं प्रासङ्गिकेन।

---

### ग्रन्थकर्तां श्रीगदाधरभट्टाचार्यसमानधर्मता

कौस्तुभकृतः प्रौढान् शास्त्रार्थान् सरलया सरण्या निरूपयन्ति। परेषां प्रबन्धॄणां प्रबन्धानां च नामानि प्रायेण न निर्दिशन्ति। नापि परमतापाकरणप्रसङ्गे, हृदयारुन्तुदां

वाचमुपयुञ्जते । भिन्नविषयकानुमितिसामग्र्याः शाब्द-बोधप्रतिबन्धकताधिक्यन्यूनतानिरूपणपूर्वकं लाघवगौरवचर्चां विधाय शास्त्रार्थान् निर्धारयन्ति । एते च धर्माः नव्यनैयायिकधुरन्धराणां श्रीगदाधरभट्टाचार्याणां समाना लक्ष्यन्ते ।

---

ग्रन्थकृतां श्रीगदाधरभट्टाचार्याणां च संप्रतिपन्नाः शास्त्रार्थाः

अथोभयेषां संप्रतिपन्नाः शास्त्रार्थाश्चिन्त्यन्ते ।

---

अनभिहिते कर्मणि द्वितीयेत्यनुशासनार्थः

१) कृतपूर्वी कटम् इत्यत्र द्वितीयानुपपत्तिः इति पूर्वपक्षस्य निष्कृष्टसारार्थकथनेन परिहारावसरे, प्रातिपदिकार्थविशेष्यतया कर्मत्वे विवक्षिते द्वितीया भवतीति अनभिहिते कर्मणि द्वितीया इत्यनुशासनस्य पर्यवसितार्थः प्रदर्शितः श्रीमहादेवपण्डितैः ।

'वस्तुतस्तु अनभिधानपदार्थपर्यालोचनायां कृतपूर्वी इत्यादौ न द्वितीयानुपपत्तिशङ्कापि' इत्युपक्रम्य, 'तस्मात् प्रधानीभूतकृदाख्याताद्यन्यतमेनानभिधानमेव अनभिधान-

पदार्थः इति वक्तव्यम् । अथवा, तत्तत्प्रातिपदिकार्थ-विशेषणतामात्रेण कर्मत्वाद्यविवक्षणमेव तदनभिधानपदार्थः । तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षायां द्वितीयादेः साधुत्वमिति पर्यवस्यति । इत्थं च प्रधानीभूततद्धितेन कर्म-त्वानभिधानात्, कटविशेष्यत्वेन कर्मत्वस्य विवक्षितत्वाच्च न द्वितीयानुपपत्तिशङ्कालेशोऽपि । ... वृत्त्यनुप्रवेशानुपपत्ति-रपीति सारार्थः ।" इति उपसंहृतं कौस्तुभे ।

श्रीगदाधरभट्टाचार्यैरपि अयमेवानुशासनार्थः सिद्धा-न्तितः व्युत्पत्तिवादे प्रथमाविचारे, लकारार्थविचारे च । "तत्तत्प्रातिपदिकार्थविशेषणत्वमात्रेण कर्तृकर्मत्वाद्यविवक्षाया एव तदनभिधानपदार्थत्वात् । तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादिविवक्षायां द्वितीयादिविभक्तेः साधुत्वमित्यर्थे तात्पर्यस्य पर्यवसितत्वात् ।" (व्यु–प्रथमा.) "अनभिहिते कर्तरि तृतीयेत्यस्य कर्तृत्वविशेष्यतया प्रातिपदिकार्थे अविवक्षिते तृतीयेत्यर्थः । प्रातिपदिकार्थविशेषणतयैव कर्तृत्वे अविवक्षिते इति यावत् । अवधारणपरतया प्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते तदुत्तरं तृतीयेति पर्यवसितम् ।" (व्यु–लकार.)

---

## लिङर्थस्येष्टसाधनत्वस्य निष्कर्षः

२) विधिवादे, लिङा स्वर्गत्वादिना स्वर्गादिसाधनत्वं बोध्यते। तदादिस्थले बुद्धिविषयत्तावच्छेदकत्वस्येव अतेच्छाविषयतावच्छेदकत्वस्योपलक्षणतया न शाब्दबोधे भानम्, इत्यादिकमुपपाद्य, 'इत्थं चेष्टतावच्छेदकस्वर्गत्वादिप्रकारेण शाब्दबोधोत्पत्त्या विधिवाक्यात् प्रवर्तकज्ञाननिर्वाहः। एवं चेच्छाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे विधेः शक्तिरिति पर्यवसितम्।' इत्युपसंहृतं कौस्तुभे। श्रीगदाधरभट्टाचार्यैरपि व्युत्पत्तिवादे 'वस्तुतः तादृशकामनाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे शक्तिस्वीकारात् सर्वसामञ्जस्यम्' इत्यभिधाय, स्वर्गत्वविशिष्टसाधनत्वस्वरूपविचारः विस्तरेण प्रवर्तितो बोध्यः।

---

## विरुद्धविभक्तिराहित्यमनुगतं नाभेदान्वयबोधे नियामकम्

३) विशेष्यविशेषणपदयोः वस्तुसत् विरुद्धविभक्तिराहित्यं नाभेदान्वये नियामकम्, विरुद्धविभक्तिमत्त्वभ्रमकाले अभेदान्वयबोधानुदयात्। नापि ज्ञायमानं, विभक्तेरनुपस्थितिकालेऽपि नीलो घटः इत्यानुपूर्वीज्ञानेन अभेदान्वयबोधात्। नापि विरुद्धविभक्तिमत्त्वेनाज्ञायमानत्वं प्रयोजकम्। तत्तत्पुरुषीय-

हेतुत्वकल्पनात् न तत्रान्वयबोधानुपपत्तिः, इत्यादिकमन्यत् स्वयमूह्यम् ।

---

## धात्वाख्यातयोरन्वयस्थले कार्यकारणभावनिरूपणम्

एवं, आनयति, प्रापयति इत्यादौ धात्वाख्यातयोरन्वयस्थलेऽपि आनयतीत्यानुपूर्वीज्ञानजन्यानयनाद्युपस्थितिविशिष्टे कृत्यादिविशेष्यकानयनादि प्रकारकान्वयबोधे आनयतीत्याद्यानुपूर्वीज्ञानत्वेन प्रत्येकरूपेण स्वप्रयोजन्यानयनाद्युपस्थितिसंबन्धेन [1]कारणत्वं ज्ञेयम् । न तु, कृत्याद्यंशे [2]विषयत्वादिसंबन्धेन आनयनादिविधेयकान्वयबोधसामान्यं प्रत्येव आनयनोपस्थापकधातूत्तरकृत्युपस्थापकप्रत्ययज्ञानत्वेन कारणत्वमिति मतमादरणीयम् । (त) [य] त्र आनयनार्थकधात्वनुत्तरवर्तिन एव तिपः तदुत्तरत्वभ्रमात् आनयनीया कृतिः इत्यन्वयबोधः, तत्र व्यभिचारप्रसङ्गात् । नचाव्यवहितोत्तरत्वसंबन्धेन

---

1 कारणत्वमिति — आनुपूर्वीज्ञानस्येत्यादिः ।

2 विषयत्वादीति — अनुकूलत्वं विषयत्वं च धात्वर्थस्य आख्यातार्थकृतौ संबन्धः ।

(भानो) [आनयनो] पस्थापकधातुप्रकारककृत्युपस्थापकप्रत्ययविशेष्यकज्ञानत्वेनैव तादृशान्वयबोधे कारणत्वान्नोक्तव्यभिचार इति वाच्यम् । [1]प्रमेयत्वादिप्रकारेणापि तादृशधातुप्रकारकज्ञानादन्वयबोधापत्तेः । न च कृत्युपस्थापकाख्यातत्वाद्यवच्छिन्नविशेष्यताकानयनोपस्थापकधातुत्वावच्छिन्नप्रकारताशालिज्ञानत्वेन तादृशान्वयबोधे कारणत्वोक्तौ नोक्तापत्तिरिति वाच्यम् । [2]आनुपूर्वीविशेषस्याग्रहे [3]तावन्मात्रादप्यन्वयबोधापत्तेः। इष्टापत्तौ (वा) [चा] नुभवविरोधात् । धातुत्वाख्यातत्वाद्यग्रहेऽपि घटमानयतीत्यानुपूर्वीविशेषज्ञानमात्रादपि घटकर्मकानयनानुकूलकृतिमान् इत्यन्वयबोधोत्पत्त्या व्यभिचाराच्च।

तादृशानुपूर्वीविशेषस्य निश्चय (मे) [ए] व हेतुः, तस्य सन्देहे, व्यतिरेकनिश्चये वा अन्वयबोधानुदयात् । एवमग्रेऽपि ।

---

1 प्रमेयत्वादिप्रकारेणेति — प्रमेयवत् वाच्यम् इत्याकारकात् धातुप्रकारकाख्यातविशेष्यकज्ञानात् आनयनीया कृतिरिति बोधापत्तिरिति समुदायार्थः ।

2 आनुपूर्वीविशेषस्य — आनयतीत्यानुपूर्व्याः ।

3 तावन्मात्रादपि — कृत्युपस्थापकाख्यातमव्यवहितोत्तरत्वसंबन्धेन आनयनोपस्थापकधातुमत् इति ज्ञानमात्रादपि ।

वाकारार्थः

६) मिथो विरुद्धयोर्विधानं विकल्पविधिः । यथा व्रीहियवयोः एकत्र यागे अकरणतया विरुद्धयोः यागकरणतया विधानम् ।.... व्रीहियवविधौ परस्पराभावसाहित्यं प्रतीयते इत्युक्त्वा, व्रीहिभिः यवैर्वा यजेतेत्यत्र बोधचर्चां विस्तरेण विधायान्ते, 'वेदस्थले विशिष्टान्वयपरतासंभवे तदपरित्यागात् व्रीहिकरणकत्वाभावस्य विशेषणतयैव यवकरणकयागधर्मिकस्वर्गसाधनत्वभानेन तादृशाभावस्य स्वर्गादिफलप्रयोजकत्वसिद्धिः । एवमुक्तातिप्रसङ्गवारणाय कल्पनीयव्युत्पत्त्या व्रीहिभिर्यजेतेत्यत्रापि यवकरणकत्वाभावविशिष्टव्रीहियागस्य स्वर्गादिसाधनत्वभानात् तस्यापि तादृशयागजन्यफलप्रयोजकतासिद्धिरिति नोभयकरणकयागात् फलम् ।' इति कौस्तुभकारा निरूपयन्ति ।

श्रीगदाधरभट्टाचार्याः स्वीय-मुक्तिवादस्यावसाने, व्रीहिभिः यवैर्वा यजेत इत्यत्र वाकारस्याभावोऽर्थः । तृतीयान्तव्रीहिपदार्थ-व्रीहिकरणकत्वान्वित-वाकारार्थाभावेनान्विते धात्वर्थे यागे यवैरिति तृतीयान्तार्थ-यवकरणकत्वस्यान्वयात्, तथा तृतीयान्तयवपदार्थ – यवकरणकत्वान्वित–वाकारार्थाभावान्विते

धात्वर्थे तृतीयान्त व्रीहिपदार्थ—व्रीहिकरणकत्वान्वयाच्च, नोभय-करणकयागस्य इष्टस्वर्गसाधनत्वमिति संक्षेपेण निष्कृष्टार्थं प्रतिपादयन्ति ।

## नलादिपदजन्यबोधः

७) स्वरूपतः नलत्वादिजातिविशिष्टस्यानुपस्थितत्वेन तत्र नलादिपदशक्तिग्रहासंभवात् कथं नलादिपदाच्छाब्दबोधः इति विचारे, मतान्तरनिरूपणानन्तरं 'वस्तुतस्तु' इत्यादिना ग्रन्थेन नलादिपदात् शक्त्या न नलत्वादिप्रकारको बोधः । किं तु लक्षणया नलपदार्थत्वेन नलस्य बोधः इति सारार्थं प्रतिपादयन्ति ग्रन्थकृतः । "वस्तुतस्तु नलरामादिपदार्थत्वादिप्रकारक एव शाब्दबोधो लक्षणया संभवति । न च नलत्वविशिष्टे शक्त्यग्रहात् स्वशक्यसंबन्धरूपलक्षणाग्रहोऽपि न संभवतीति वाच्यम् । सामान्यरूपेण तत्रापि शक्तिग्रहस्योक्तत्वात्, वृत्ति-संसर्गकज्ञानस्यापि हेतुताया उक्तत्वेन लक्षणासंसर्गकबोधे शक्तिग्रहस्यानपेक्षणीयत्वाच्चेति सारः ।" इति कौस्तुभः । श्रीगदाधरभट्टाचार्या अपि शक्तिवादे तच्छब्दशक्तिविचार-प्रसङ्गे 'रावणादिपदेभ्यः लक्षणया तत्तत्पदार्थत्वादिप्रकारक एवान्वयबोधः ।' इति प्रतिपादयन्ति ।

---

## आकाशपदार्थः

८) आकाशपदस्य शब्दाश्रयत्वोपलक्षिते न शक्तिः । किंतु शब्दाश्रयत्वविशिष्टे एवेति शब्दाश्रयत्वमपि शक्यमेव । आकाशपदात् कदाचित् अष्टद्रव्यातिरिक्तद्रव्यत्वेन बोधस्तु लक्षणया । लघुधर्मावच्छिन्ने एव शक्तिस्वीकारस्योचितत्वात् । आकाशः शब्दाश्रयः इत्यत्र आकाशपदस्य आकाशपदबोध्ये लक्षणाङ्गीकारेण शब्दाश्रयत्व–आकाशपदबोध्यत्वयोः उद्देश्यतावच्छेदक–विधेयतावच्छेदकयोः भेदात् नाभेदान्वयबोधानुपपत्तिरिति न्यायकौस्तुभकाराः । श्रीगदाधरभट्टाचार्या अपि, आकाशपदस्य शब्दाश्रयत्वोपलक्षिते शक्तिः, उपलक्षणमपि शाब्दबोधे भासते इति मतविशेषं दूषयित्वा, आकाशपदस्य शब्दाश्रयत्वविशिष्टे शक्तिरिति, आकाशः शब्दाश्रयः इति प्रयोगे आकाशपदस्य अष्टद्रव्यातिरिक्तद्रव्यत्व– आकाशपदवाच्यत्वाद्येकतररूपेण लक्षणा अभ्युपगम्यते इति च प्रतिपादयन्ति शक्तिवादविशेषकाण्डे ।

---

## उभयेषां विप्रतिपन्नाः शास्त्रार्थाः

अथ ग्रन्थकाराणां श्रीगदाधरभट्टाचार्याणां च विप्रतिपन्नाः शास्त्रार्थाः चिन्त्यन्ते ।

---

### विध्यर्थः

१) कौस्तुभकृतः, लिङः इष्टसाधनत्वमात्रमर्थः । कृतिसाध्यत्वस्य न विध्यर्थता । धात्वर्थस्य आख्यातत्वेन लिङर्थे कृतौ अनुकूलतासंबन्धेनान्वये, तुल्यवित्तिवेद्यतया कृतिसाध्यतायाः धात्वर्थे भानसंभवेनान्यलभ्यत्वात् अनन्यलभ्यस्यैव शब्दार्थत्वात् । * शाब्दबोधे तुल्यवित्तिवेद्यताया अनङ्गीकारेऽपि, आख्यातसामान्यार्थकृतेः साध्यतासंबन्धेन धात्वर्थेक्रियायामन्वयः । लाघवेन साध्यतासंसर्गक—कृतिप्रकारकक्रियाज्ञानं प्रवर्तकम् । तदेव विधिवाक्येन जायते । चिकीर्षापि साध्यतासंबन्धेन कृतिप्रकारकक्रियेच्छैव । एवं,

---

* ईदृशयुक्तिद्वयमवलम्ब्यैव व्युत्पत्तिवादे 'अपरे तु' इत्यादिना सन्दर्भेण कृतिसाध्यताया विध्यर्थत्वं निर्युक्तिकमिति प्रतिपादितमिति बोध्यम् ।

बलवदनिष्टाननुबन्धित्वमपि न लिङर्थः, तज्ज्ञानस्य प्रवृत्तिकारणत्वाभावात् । तस्य कारणत्वे अनेकायाससाध्ये कर्मणि प्रवृत्तेरनुपपत्तेः । तस्मात् प्रवृत्तिकारणज्ञानविषयीभूतमिष्टसाधनत्वमेव लिङर्थः । न कलञ्जं भक्षयेदित्यादौ इष्टसाधनत्वाभावस्य धात्वर्थे बाधात् न बोधः । लिङः तत्रानिष्टसाधनत्वे निरूढलक्षणा । नञः तात्पर्यग्राहकतैवेति *निरूपयन्ति ।

श्रीगदाधरभट्टाचार्याः कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वं च विध्यर्थः इति संप्रदायमतं रोचयन्ते । न कलञ्जं भक्षयेदित्यादिनिषेधवाक्यानां प्रामाण्योपपत्तये बलवदनिष्टाननुबन्धित्वस्य लिङर्थप्रवेशः । बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावः कलञ्जभक्षणे विशेषणाभावप्रयुक्तः अबाधितो बोध्यते । वस्तुतस्तु विशेषणविशेष्यभावे विनिगमनाविरहात् बलवदनिष्टाननुबन्धित्वमिष्टसाधनत्वं च खण्डशो लिङर्थः । निषेधस्थले बलवदनिष्टाननुबन्धित्वस्यैवाभावो नञा धात्वर्थे बोध्यते । श्येनेनाभिचरन् यजेत इत्यादौ अभिचारविधया नरकसाधने श्येनयागे

* मतमिदमाधुनिकनैयायिकमतत्वेनानूदितं भाट्टरहस्ये विधिवादे श्रीखण्डदेवैरिति बोध्यम् ।

बलवदनिष्टाननुबन्धित्वस्य बाधान्न बोधः इति प्रतिपादयन्ति ।

२) न्यायकौस्तुभकाराः, नैयायिकमते सर्वत्र प्रथमान्तपदार्थमुख्यविशेष्यक एव बोधः इति न नियमः । कैरप्यभियुक्तैः तथा अलिखनादनिर्वाहाच्च । किं तु यथासंभवं तत्तद्विशेष्यकः, पचतीत्यत्र भावनाविशेष्यकः, भावाख्याते धात्वर्थविशेष्यकः इत्यादिकमुपवर्ण्य, अन्धः आकाशं न पश्यति इत्यत्र अन्धवृत्तित्व-आकाशविषयकत्वोभयाभाववत् दर्शनमिति धात्वर्थमुख्यविशेष्यकं बोधं वर्णयन्ति । "अत एव अन्धः आकाशं न पश्यतीत्यादिप्रयोगाणामप्युपपत्तिः । अन्धवृत्तित्व-आकाशविषयकत्वोभयाभावप्रकारकदर्शनविशेष्यकबोधसंभवात् । आकाशविषयकदर्शनाभाववानन्धः इति प्रथमान्तार्थविशेष्यकबोधस्याप्रसिद्ध्या असंभवात् ।" इति कौस्तुभः । प्रथमान्तासमभिव्याहारे अनियमेऽपि, प्रथमान्तपदसमभिव्याहारे प्रथमान्तार्थमुख्यविशेष्यकत्वनियम एवेति 'अथवा' इत्यादिना निरूप्य, तत्पक्षे निरुक्तस्थले नञर्थस्य वारद्वयं भानोपगमेन प्रथमान्तार्थविशेष्यकं बोधं वर्णयन्ति । "अन्धः आकाशं न पश्यतीत्यादावपि नञर्थस्य वारद्वयं भानोपगमेन आकाशविषयकत्वाभाववद्दर्शनाभाववानन्धः इति प्रथमान्तार्थविशेष्यक एव बोधः ।" इति कौस्तुभग्रन्थः ।

श्रीगदाधरभट्टाचार्यास्तु, घटः आकाशं न पश्यति इत्यत्र उक्तं द्विविधमपि बोधं दूषयन्ति । अन्धपदस्थाने तत्समान योगक्षेमघटपदं संघटितम् । बोधद्वयमपि परिष्कृत्यानूदितं दूषितं च व्युत्पत्तिवादे द्वितीयाविचारे ।

ii) चाक्षुषादिवाचकधातुसमभिव्याहृतद्वितीयायाः लौकिकविषयिता अर्थः । उपनीतभानात्मकसौरभ-चाक्षुषदशायां सौरभं पश्यतीति प्रयोगाभावात् । अतः घटः आकाशं न पश्यतीत्यत्र आकाशनिरूपितलौकिक-विषयित्व-घटवृत्तित्वोभयाभावस्य चाक्षुषे बोधो न संभवति, आकाशनिरूपितलौकिकविषयताया अप्रसिद्धेः । तस्मात् अलौकिकविषयताशून्यचाक्षुषं लक्षणया धातोरर्थः । द्विती-यार्थः विषयितामात्रम् । आश्रयत्वं द्वित्वं निरूपकत्वं चाख्यातार्थः । प्रथमान्तार्थस्य व्युत्पत्तिवैचित्र्यादाश्रयत्वे, तस्य निरूपकत्वे चान्वयः । द्वितीयान्ताकाशपदबोध्याकाश-विषयकत्वे, उक्तान्वयलब्धे घटनिष्ठाश्रयतानिरूपकत्वे च द्वित्वस्यान्वयः । द्वित्वाश्रयस्य द्वित्वावच्छिन्नप्रतियोगिता-कत्वसंबन्धेन नञर्थाभावे तस्य च धात्वर्थे अन्वयः । धात्वर्थः मुख्यविशेष्यतया भासते । अलौकिकविषयताशून्य-चाक्षुषं आकाशविषयकत्व-घटवृत्तित्वोभयाभाववदिति पर्य-वसितबोधः ।

एवं तत्तत्पदार्थान्वयकथनपूर्वकमुभयाभावबोधो वर्णितः व्युत्पत्तिवादे । पक्षे चास्मिन् चत्वारो दोषाः प्रतिपादिताः । १) घट आकाशं न पश्यतीत्यत्र समवायेन घटवृत्तित्व-आकाशविषयकत्वोभयाभावस्य बोधनीयत्वात् तत्समानयोग-क्षेमे अभावः आकाशं न पश्यतीत्यत्रापि अभावसमवेतत्व-घटितोभयाभावबोधो वक्तव्यः । स च अभावसमवेतत्वा-प्रसिद्ध्या न संभवति । (२-३) चैत्रः घटं न पश्य-तीत्यत्रापि घटः आकाशं न पश्यतीति वाक्यजबोधसमानाकारः उभयाभावबोध एव वक्तव्यः । तथाच यदा किञ्चिदंशे अलौकिकमेव घटादिचाक्षुषं चैत्रस्य जातम्, यदा च घट-निरूपित-लौकिकालौकिकोभयविषयताशालिचाक्षुषं जातम्, तदा चैत्रो घटं न पश्यतीति प्रयोगापत्तिः । (४)अकाशनिरूपिता-लौकिकविषयताशालिचाक्षुषप्रत्यक्षे घटवृत्तित्वस्य आकाश-निरूपितत्वेन लौकिकविषयतायाश्च भ्रमदशायां घटः आकाशं न पश्यति इति वाक्यात् शाब्दबोधापत्तिः । निरुक्तभ्रमस्य अलौकिकविषयताशून्यचाक्षुषे निरुक्तोभयाभावबुद्धावप्रतिबन्ध-कत्वादिति ॥

b) एवं, नञर्थस्य द्विधा भानोपगमेन बोधस्य आकाशनिरू-पितलौकिकविषयित्वाभाववद्दर्शनाभाववानित्याकारकस्य वर्णयितु-

मशक्यत्वात्, द्वितीयार्थलौकिकविषयितायां आकाशनिरूपित-त्वाभावविषयकः, आकाशनिरूपितत्वाभाववल्लौकिकविषयता-शालिचाक्षुषाश्रयत्वाभाववानिति शाब्दबोधः अनूदितः । पक्षे चास्मिन् दोषद्वयं प्रतिपादयन्ति । १) चैत्रो घटं न पश्य-तीत्यादिवाक्यजन्यशाब्दबोधादविलक्षणस्य बोधस्य सर्वानुभव-सिद्धस्योक्तवाक्यादनुपपत्तिः । चैत्रो घटं न पश्यतीत्यत्रापि अभावद्वयावगाहिबोधोपगमे, पटं पश्यति चैत्रे, घटं न पश्यति चैत्रः इति प्रयोगानुपपत्तिः । घटाविषयक–पटप्रत्यक्षाश्रय-त्वस्य चैत्रे सत्त्वेन तदभावबाधात् ।

२] चैत्रः घटं पश्यतीति निश्चयदशायां, चैत्रः पटं न पश्य-तीति वाक्यात् बोधो जायते । एवमेव, घटे आकाशातिरिक्तपदार्थ-विषयकचाक्षुषाश्रयत्वस्य भ्रमदशायां घटः आकाशं न पश्य-तीति वाक्यात् शाब्दबोधो जायते इति वक्तव्यम् । स च न स्यात्, तस्य बोधस्य आकाशानिरूपितलौकिकविषयता-शालिचाक्षुषाश्रयत्वाभावविषयकत्वे, आकाशातिरिक्तविषयक-चाक्षुषाश्रयत्वभ्रमेण प्रतिबन्धादिति ।

एवं बोधद्वयस्यापि वक्तुमशक्यतया अगत्य घटः आकाशं न पश्यति, अभावः आकाशं न पश्यति

इत्यादिवाक्यानामप्रामाण्यमेवोपगन्तव्यमिति सिद्धान्तयन्ति भट्टाचार्याः ॥

---

राजपुरुषः इति समासजन्यबोधः

३) राजपुरुषः इत्यत्र राजपदस्य न राजसंबन्धिनि लक्षणा, न वा राजपुरुषः इति समुदायस्य राजकीयपुरुषे शक्तिः । किन्तु, राजपदार्थस्य स्वत्वसंबन्धेन पुरुषपदार्थे अन्वयः । नामार्थयोः भेदेनानन्वयव्युत्पत्तेः यथा घटः पटो नेत्यादौ संकोचः, तथा समासस्थलेऽपि संकोचः कल्प्यते । वस्तुतस्तु तादृशव्युत्पत्तिरेव न कल्प्यते । राजा पुरुषः इत्यत्र भेदसंबन्धेनान्वयापत्तिस्तु न संभवति । तादृशबोधस्याप्रसिद्धत्वात् । कथञ्चित् प्रसिद्धिसंपादनेऽपि, तत्स्थलीयसमभिव्याहाररूपाकाङ्क्षाज्ञानघटितसामग्र्या आपादिकायाः राजा पुरुषः इत्यत्राभावेनापादकाभावात् । सर्वथापि, स्वत्वसंबन्धेन राजवान् पुरुषः इति समासाधीनो बोधः इति कौस्तुभकृतो वर्णयन्ति ।

श्रीगदाधरभट्टाचार्यास्तु, सांप्रदायिकं राजसंबन्ध्यभिन्नः पुरुषः इति बोधं रोचयन्ते । राजपदस्य राजसंबन्धिनि निरूढलक्षणां चाभ्युपगच्छन्ति । स्वत्वसंबन्धेन राजपदार्थस्य

पुरुषपदार्थे अन्वयवादिनामपि, राजपदस्य राजसंबन्धिनि स्वारसिकलक्षणाग्रहदशायां, सति च अभेदेन राजसंबन्धि-विशिष्टपुरुषबोधतात्पर्यज्ञाने, राजपुरुषः इति समासपदात् राज-संबन्ध्यभिन्नः पुरुषः इति शाब्दबोधः अनुभवसिद्धः। परं तु सः कर्मधारयसमासः इति तन्मतमित्यन्यदेतत्।

तादृशाभेदान्वयबोधतात्पर्यज्ञानादिघटितायाः शाब्द-सामग्र्याः भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकत्वमपि कल्प-नीयमेव। तथाच राजपदस्य राजसंबन्धिनि निरूढलक्षणा-वादिनां तादृशसामग्रीप्रतिबन्धकत्वमधिकं न कल्पनीयम्, वादिद्वयसंमतत्वात्। स्वत्वसंसर्गकबोधवादिनां तु तादृशबोध-तात्पर्यज्ञानादिघटितायाः राजपुरुषः इति समासस्थलीयसाम-ग्र्याः भिन्नविषयकप्रत्यक्षं प्रत्यधिकं प्रतिबन्धकत्वं कल्पनीय मिति गौरवम्। तस्मात् राजपदस्य राजसंबन्धिनि लक्षणामाश्रित्य राजसंबन्ध्यभिन्नः पुरुषः इति बोध एवोचितः इति व्युत्पत्ति-वादे निरूपयन्ति।

---

यजतिपदात् यागलाभः

४) इक्श्तिपौ धातुनिर्देशे इत्यनुशासनविहितस्य श्तिपः धातुस्वरूपार्थकत्वात् 'यजतिषु ये यजामहम्' इति वाक्ये यजतिपदात् कथं यागलाभः इत्याशङ्कामुत्थाप्य, मतभेदेन तल्लाभप्रकारश्चिन्तितो न्यायकौस्तुभे । तत्र 'वस्तुतः' इत्यादिना स्वमतं प्रतिपादितम् । तद्यथा—श्तिपः धातुस्वरूपे शक्तिः । पचतिः इत्यत्र पचधात्वर्थपाकस्य प्रतिपादकतासंबन्धेन श्तिबर्थे धातुस्वरूपे अन्वयात् पाकप्रतिपादको धातुः इति शाब्दबोधः। यजतिषु ये यजामहमित्यत्र तु श्तिपः यागस्वरूपे लक्षणा । तत्प्रकृतिभूतयजधातोः यजधातुस्वरूपे लक्षणा। प्रकृत्यर्थस्य यजधातोः प्रतिपाद्यतासंबन्धेन श्तिबर्थे यागस्वरूपे अन्वयः। तथाच *यजतिषु इत्यत्र यजप्रतिपाद्ययागेषु इति बोधः इति।

---

* कौस्तुभे, एतद्विचारे यजतिषु इत्यत्र यजधातोः यजप्रतिपाद्ययागे लक्षणा। श्तिबर्थः धातुः । तस्य प्रकृत्यर्थैकदेशे अभेदेन यज् इत्यत्रान्वयः। धात्वभिन्नयज्प्रतिपाद्येषु (यागेषु) इति बोधः। इत्यन्येषां मतमनूद्य, 'तदसत् । एकदेशेन समं भेदेनान्वयेऽपि अभेदेनान्वयानुपगमात्, प्रकृत्यर्थ-प्रत्ययार्थयोः अभेदान्वयस्य क्वाप्यदृष्टत्वाच्च' इति सन्दर्भेण दूषितम् ।

परमसुन्दरः इत्यत्र परमपदार्थस्याभेदेन सुन्दरपदार्थैकदेशेन सौन्दर्येण, स्तोकनम्रा इत्यत्र स्तोकपदार्थस्याभेदेन पदार्थैकदेशनमनेन चान्वयदर्शनात्, ऐन्द्रं हविः इत्यादौ देवतातद्धितस्थले तद्देवताकत्वरूपतद्धितार्थैकदेशदेवतायां प्रकृत्यर्थस्येन्द्रस्याभेदेनान्वयस्य नैयायिकसंप्रतिपन्नत्वात् कौस्तुभोक्तं दूषणं चिन्तनीयं विपश्चिद्भिरिति बोध्यम् ।

श्रीगदाधरभट्टाचार्यास्तु, नञ्वाददीधितिव्याख्याने, 'ईक्षतेर्नाशब्दम्' इति वेदान्तसूत्रे ईक्षतिशब्दः यथा ईक्षणवाचकः, एवं यजतिषु इत्यत्र यजतिशब्दः यागबोधकः इति वदन्ति ।

---

श्रीगदाधर-महादेवपण्डितयोः परस्परपरिचयविमर्शः

अत्रेदं चिन्तनीयम् । प्रबन्धारः केचित् परमतनिरूपणावसरे तत्तद्ग्रन्थानां, ग्रन्थकाराणां च नामानि निर्दिशन्ति । अन्ये प्रबन्धानां प्रबन्धकाराणां च नामान्यनिर्दिशन्त एव तदुक्तप्रमेयपरिशीलनमारचयन्ति । तादृशा निबन्धारः श्रीहरिवल्लभ-श्रीगदाधर-श्रीपुणताम्बेकर-महादेवपण्डितप्रभृतयः । तेषां ग्रन्थेभ्यः निबन्धकाराणां पौर्वापर्यं दुर्बोधं भवति । न्यायकौस्तुभकृतः, बहूनामुक्तीः परिशीलयन्तोऽपि कतिपयानामेव नामधेयानि निर्दिशन्ति । प्रतिपाद्यप्रमेयानुसारं पौर्वापर्यं बोद्धव्यमास्ते ।

वैयाकरणमतपरिशीलनावसरे, समासशक्ति-अपभ्रंशवाचकता- निपातद्योतकता-शाब्दबोधमुख्यविशेष्यताप्रभृतीनां चर्चासु वैयाकरणभूषणसारकारिकार्थानांभूषणसारकृदभिहि-

तानां च स्पष्टमुद्धरणात् श्रीकोण्डभट्टानन्तरकालिकता कौस्तुभस्य निश्चीयते । एवं, अभिनवभाट्टमीमांसकाभिहिततया कौस्तुभे प्रतिपादितानां न्यायसिद्धान्तदूषणानां, भाट्टमतसिद्धानामर्थानां च भाट्टरहस्ये समुपलम्भात् श्रीखण्डदेवानन्तरकालिकतापि निर्णीयते ।

एवं, आधुनिकालंकारिकनिरूपितत्वेन कौस्तुभोक्तानां व्यञ्जनासाधकयुक्ति-नव्यमतसिद्धस्वरूप-वनं गज इवेत्यादिवाक्यजशाब्दबोधप्रभृतीनां प्रमेयानां पण्डितराज-जगन्नाथसन्दृब्धे रसगङ्गाधरे लक्ष्यमाणत्वात् जगन्नाथानन्तरकालिकताप्यवसीयते ।

परं तु श्रीरघुनाथशिरोमणिभट्टाचार्येभ्यः अर्वाचीनानां श्रीगदाधरभट्टाचार्याणां कौस्तुभकाराणां च पौर्वापर्यं दुर्बोधमास्ते । उभयेषां संप्रतिपन्नाः विप्रतिपन्नाश्चांशाः पूर्वं चिन्तिताः । व्युत्पत्तिवादवाक्यानां कौस्तुभवाक्यानां च समानरूपतापि क्वचित् लक्ष्यते ।

कौस्तुभसंमतः राजपुरुषः इति समासाधीनः भेदान्वयबोध: व्युत्पत्तिवादे दूषितः । तच्च दूषणं न परिशीलितं कौस्तुभे । एवं, अन्धः आकाशं न पश्यति इति वाक्या-

धीनः द्वेधा कौस्तुभोक्तः शाब्दबोधः, यत्तु इत्यादिना ग्रन्थ-द्वयेन परिष्कृत्य व्युत्पत्तिवादे अनूदितः दूषितश्चास्ति । तदपि दूषणं न चिन्तितं कौस्तुभे ।

नञ्वाददीधितिव्याख्याने, यजतिषु येयजामहं करोति इत्यत्र यजतिपदात् यागरूपार्थलाभप्रकारः श्रीगदाधर-भट्टाचार्योक्तः अनूद्य दूषितः कौस्तुभे । 'एतेन 'ईक्षतेर्ना-शब्दम्' इत्यत्रेक्षतिशब्दस्येक्षणवाचकत्ववत् यजतिष्वित्यादावपि यजतिशब्दस्य यागवाचकत्वमिति नवीनोक्तिः परास्ता । 'इक्श्तिपौ धातुनिर्देशे' 'इत्यनुशासनविरोधात्।' इति कौस्तुभः। 'श्तिबन्तोऽपि यजतिशब्दः यागरूपधात्वर्थवाचकः, 'ईक्षतेर्ना-शब्दम्' इत्यादौ तादृशेक्षत्यादिपदमिव ज्ञानादिबोधकम्।' इति नञ्वादगदाधरीयम्। एवं च कौस्तुभे नवीनपदेन श्रीगदाधरभट्टाचार्या अभिहिता इति भाति ।

नञ्वादे पर्युदासप्रस्ताव एव, रात्रौ श्राद्धं न कुर्वीत इत्यत्र न पर्युदासः, किंतु प्रसज्यप्रतिषेधः श्राद्धकरणनिषेधः इति दीधितिकारैरभिहितम् । तदुपबृंहणानन्तरं पर्युदासपक्षा-वलम्बिनां केषांचित् परिष्कारमुपन्यस्य, तत्र दूषणं निरूपयन्ति भट्टाचार्याः । "केचित्तु रात्रौ श्राद्धं न कुर्वीत इत्यस्य क्रिया-वैयर्थ्यभयेन अमावास्यायामित्यादिविधिवाक्यैकवाक्यत्वा-

संभवेऽपि अमावास्याष्टकादिश्राद्धविधायकवाक्येषु अमावास्याद्यनेकपदानां रात्रिभिन्नामावास्यात्वादिना लक्षणामपेक्ष्य निषेधवाक्ये एव कालसामान्यबोधकसप्तम्यन्तपदाध्याहारो युक्तः। तथाच नञः पर्युदासार्थकतया श्राद्धनिमित्तीभूततत्तत्कालेषु रात्रिभिन्नत्वरूपविशेषणस्यैव विधिरयम्। एवं चैतद्वाक्यात् श्राध्दजन्यापूर्वसामान्ये रात्रिभिन्नकालहेतुत्वलाभेन रात्रिकृतश्राध्दे अपूर्वरूपफलानुपधानग्रहात् न रात्रिश्राध्दकरणप्रसक्तिरिति पर्युदासपक्षं परिष्कुर्वन्ति। यत्र नञ्पदं नास्ति, अपि तु न कुर्वीतेति समानार्थकं वर्जयेत्, त्यजेत्, इति क्रियापदं यथा 'याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्' इत्यादौ, तत्र न कुर्वीतेत्यादितः यथा श्राध्दादिकरणे विध्यर्थेष्टसाधनत्वाभावबोधः, तथा तत्तत्क्रियायामिष्टसाधनत्वाभावबोधो न संभवति। अपि तु धात्वर्थे अकरणे इष्टसाधनत्वमेव लिङा प्रत्याय्यम्। तथाच हरिशयनादिकृतपुष्करणीयागादीनां निष्फलत्वानुपपत्तिः, तदकरणस्य प्रत्यवायाभावरूपेष्टसाधनत्वसंभवेन करणं प्रत्यवायमप्यावहेत् इत्यत्र समाधिः परिचिन्तनीयः।" इति गदाधरीयम्।

ग्रन्थेऽस्मिन् केचिदित्यादिनोक्तपक्ष एव कौस्तुभे दीधितिकारपक्षनिरूपणानन्तरं निरूपितः। अत्रोक्ततत्पक्षीय-

दूषणं तु न चिन्तितम् । एतत्पर्यालोचनायां ग्रन्थकृतां गदाधरीयपरिचयो नेति प्रतिभाति ।

श्रीगदाधर-महादेवपण्डितयोरन्योन्यपरिचयविरहः

समानतन्त्रनिष्णातानां परस्परनिबन्धपरिचयं विनैव इतरेतरसंप्रतिपन्नाः विषयाः प्रतिभान्ति। वाक्यरचनापि समाना भवतीत्यनुभवसिध्दमेतत् । गदाधरीये कौस्तुभकाराणां, कौस्तुभे श्रीगदाधराणां च निर्देशो नास्ति । परं तु कतिपये तन्त्रार्थाः समाना लक्ष्यन्ते । नैतावता परस्परग्रन्थपरिचयेन भाव्यमिति निर्णेतुं शक्यते । इष्टसाधनत्वमात्रं लिङर्थः । निषेधस्थले लिङः अनिष्टसाधनत्वे लक्षणेति कौस्तुभादृतः पक्षः आचार्यखण्डदेवैः आधुनिकनैयायिकमतत्वेन भाट्टरहस्ये प्रतिपादितः । न हि तत्र आधुनिकनैयायिकपदेन कौस्तुभकाराः अभिसंहिताः इति वक्तुं युक्तं । यतः अभिनवभाट्टमीमांसकपदेन श्रीखण्डदेवान्निर्दिशन्ति कौस्तुभकृतः । भाट्टरहस्योक्तानि न्यायमतदूषणान्युद्धरन्ति, तन्मतसिध्दान्तार्थांश्च दूषयन्ति इति स्पष्टं प्रतीमः । अतः महादेवपण्डितेभ्यः प्राक्तनाः केचन नवीनपदेन व्यपदिश्यन्ते । तदीय-

पक्षोऽनुसृतः कौस्तुभे इत्येव युज्यते । एवं, राजपुरुषः इति समासे नामार्थयोः भेदान्वयबोधः तत्पूर्वतन-नवीनतार्किकैः स्वीकृतः । तेषां पक्षः 'नवीनास्तु' इत्यादिना सन्दर्भेण कौस्तुभे स्फुटीकृतः । अत एव व्युत्पत्तिवादगूढार्थतत्त्वालोके श्रीबच्चाझामहोदयैः समासे भेदान्वयप्रस्तावे, 'इदं च विभक्त्यर्थसंसर्गतावादिनां नवीनानां मतम्, अनुमोदितं च शब्दशक्तिप्रकाशिकायां न्यायकौस्तुभे च ।' इति निरूपितम् ।

श्रीगदाधरभट्टाचार्याः प्रायः संप्रदायमनुवर्तन्ते, न नवीनमतम् । विध्यर्थविषये इष्टसाधनत्वादिकं त्रयं विध्यर्थः इति पक्षमेव परिष्कुर्वन्ति । राजपुरुषः इत्यादौ राजपदस्य राजसंबन्धिनि लक्षणापक्षमेवोपोद्बलयन्ति, दूषयन्ति च भेदान्वयबोधम् । नैतावता कौस्तुभपरिचयः श्रीगदाधराणामवधारयितुं पार्यते । गदाधरीयोक्तस्य भेदान्वयबोधदूषणस्यापरामर्शात् कौस्तुभकाराणामपि तद्ग्रन्थपरिचयः नेति प्रतीयते ।

अन्धः आकाशं न पश्यति इत्यत्र, अभावद्वयावगाही प्रथमान्तार्थविशेष्यको बोधः इति, धात्वर्थे उभयाभावावगाही धात्वर्थमुख्यविशेष्यको बोधः इति च, कौस्तुभे निरूपितं पक्षद्वयं, व्युत्पत्तिवादे 'यत्तु इत्यादिना ग्रन्थद्वयेनानूद्य दूषित-मिति, श्रीगदाधराणां कौस्तुभपरिचयः स्यादिति शङ्का

समुन्मिषति । परं तु, लौकिकविषयताप्रवेशं विनैव द्वितीयान्तार्थस्याकाशविषयकत्वस्याभावं धात्वर्थे, धात्वर्थाभावं च प्रथमान्तार्थे अवगाहमानः आकाशविषयकत्वाभाववद्दर्शनाभाववानन्धः इति बोधो वर्णितः कौस्तुभे । व्युत्पत्तिवादे तु द्वितीयार्थे लौकिकविषयितायां प्रकृत्यर्थाकाशनिरूपितत्वाभावं धात्वर्थचाक्षुषान्विताख्यातार्थाश्रयत्वाभावं च प्रथमान्तार्थे अवगाहमानः आकाशनिरूपितत्वाभाववल्लौकिकविषयिताश्रयचाक्षुषाश्रयत्वाभाववान् घटः इति बोधः प्रथमेन 'यत्तु' इत्यादिसन्दर्भेणानूद्य दूषितः । एवं च कौस्तुभप्रदर्शितबोधवैलक्षण्यात् नायमनुवादः कौस्तुभोक्तस्येति ज्ञायते । परं तु नवीनग्रन्थान्तरेषु स्थितस्यानुवादः इति वक्तुं शक्यते ।

एवं, द्वितीयेन 'यत्तु', इत्यादिग्रन्थेनानूदितः उभयाभावबोधोऽपि कौस्तुभोक्त एवेति न निर्धारणमर्हति । कौस्तुभे लौकिकविषयितां अलौकिकविषयताशून्यत्वं वा अप्रवेश्य, आकाशविषयकत्व-अन्धवृत्तित्वोभयाभाववच्चाक्षुषमिति धात्वर्थमुख्यविशेष्को बोधो वर्णितः । व्युत्पत्तिवादे तु धातोः अलौकिकविषयिताशून्यचाक्षुषत्वावच्छिन्ने लक्षणां द्वितीयायाः विषयित्वमात्रार्थकतां च स्वीकृत्य, अलौकिकविषयिताशून्यचाक्षुषत्वावच्छिन्नं आकाशविषयकत्व–घटवृत्तित्वोभया-

भावत्वदिति धात्वर्थमुख्यविशेष्यकबोधः, अथवा अलौकिक-विषयिताशून्यचाक्षुषनिष्ठ- आकाशविषयकत्व- घटवृत्तित्वोभयाभावनिरूपको घटः इति प्रथमान्तार्थविशेष्यको बोधः इति उभयाभावविषयकबोधद्वयमनूदितं दूषितं च । नायमनूद्यमानो बोधः धात्वर्थगतोभयाभावावगाहितामात्रेण कौस्तुभे वर्णित एवेत्यत्रधारयितुं पार्यते । परं तु अयमपि पूर्वतन-नवीन-तार्किकोक्तपक्षः स्यादिति वक्तुं युज्यते । एतदीयदूषणा-परामर्शात् कौस्तुभकाराणां न व्युत्पत्तिवादपरिचयः इति स्पष्टं प्रतीयते ।

रात्रौ श्राद्धं न कुर्वीत इत्यत्र, काले इति सप्तम्यन्त-पदमध्याहृत्य रात्रिभिन्नकाले श्राद्धं कुर्वीत इति पर्युदासपक्षः कौस्तुभोक्तः । स पक्षः नञ्वादगदाधरीये, केचित् पर्युदा-सपक्षं परिष्कुर्वन्ति इत्यनूद्य दूषितः । तद्दूषणापरामर्शात् कौस्तुभकृतां उक्तगदाधरीयपरिचयाभावः स्पष्टः । श्रीगदा-धराणां पर्युदासपक्षपरिष्कारानुवादेनापि कौस्तुभपरिचयः न निर्णेतुं शक्यते । यतः कौस्तुभे आदौ दीधितिकारप्रदर्शितं प्रसज्यप्रतिषेधपक्षं निरूप्य, 'अत्र वदन्ति' इत्यादिना सामान्य-शास्त्रविरोधिविषयकबोधजनकनञः पर्युदासपरत्वनियममाश्रित्य

पर्युदासपक्षः प्रतिपादितः । ततः परं, 'अपरे तु नञो भेद एवार्थः' इत्यादिना 'सप्तम्यन्तैककालपदाध्याहारकल्पने लाघवेन पर्युदासपरत्वस्यैव युक्तिसहत्वात्, शेषं पूर्ववदिति प्राहुः ।' इत्यन्तेन ग्रन्थेनोक्तपक्षः विस्तरेण वर्णितः । तदनन्तरं रात्रौ श्राद्धं न कुर्वीत इति वाक्यस्याप्राशस्त्यपरत्वमिति पक्षान्तरमुपपाद्य निराकारि । तद्वत् पूर्वोक्तपक्षस्यानिराकरणात्, प्राहुः इत्यत्र प्रशब्देनास्वरसाभावसूचनाच्च पक्षस्यास्य कौस्तुभसंमतत्वमवसीयते । तथाचैतत्पक्षस्य कौस्तुभात्पूर्वतनग्रन्थेषु प्रतिपादनावगमात्, तेषु ग्रन्थेषु उक्तस्यानुवादः निरासश्च श्रीगदाधराणां संभाव्यते । अतः तेषां कौस्तुभपरिचयः न निर्धारयितुं शक्यते ।

इदमेकमवशिष्यते, यत्, यजतिषु इत्यत्र यागलाभविचारे ईक्षतेरित्यत्र ईक्षतिशब्दस्येक्षणवाचकत्वमिव यजतिशब्दस्य यागवाचकत्वमिति नवीनोक्तिः परास्ता इति कौस्तुभवचने नवीनपदेन गदाधरा अभिसंहिता भवेयुः, नञ्वादगदाधरीये तथा व्याख्यानादिति । परं तु, गदाधरनामनिर्देशाभावात्, समासविचारे इव नवीनपदेन तत्पूर्वतन–नवीननैयायिकानां निर्देशसंभवात्, पूर्वतन–नवीनतार्किकानुसारेण गदाधरीयव्याख्यानसंभवाच्च न गदाधरपरिचयं व्यवस्थापयितुं निरुक्तकौस्तुभग्रन्थः प्रभवति ।

तस्मात् श्रीगदाधर-महादेवपण्डितौ नैयायिकधुरीणौ परस्परपरिचयरहितौ स्वपूर्वतनतार्किकैः प्राचीनैः नवीनैश्च व्यवस्थापितान् सिद्धान्तविशेषान् स्वस्वमनीषानुसारेण स्थापयन्ति दूषयन्ति चेति युक्तमुत्पश्यामः ॥

---

श्रीगदाधर-खण्डदेवग्रन्थयोः इतरेतरप्रतिपाद्यपरामर्शाभावः

इदमपरमवधेयम् । श्रीखण्डदेवैः नव्यनैयायिकादृत-परिष्कारसरणिमत्रलम्ब्य तार्किक-वैयाकरणादिमतविशेषनिरास-पूर्वकं भाट्टमीमांसकसिद्धान्तानां व्यवस्थापकः भाट्टरहस्याभिधानः शाब्दबोधग्रन्थः विरचितः चकास्ति । न्यायसिद्धान्तानुवर्णनप्रधानः व्युत्पत्तिवादः नैयायिकधुरन्धरैः श्रीगदाधर-भट्टाचार्यैः निर्मितोऽस्ति ।

व्युत्पत्तिवादे निष्कर्षितान् न्यायसिद्धान्तप्रभेदान् परिशीलयति भाट्टरहस्यमिति कतिपये मन्यन्ते । तत्सामञ्जस्यं किञ्चिदिव चिन्त्यते । भाट्टरहस्यं विधिवादे, भावनामुख्य-विशेष्यतावादे, तथा सर्वत्र तार्किकमतं निराकरोति । परं तु श्रीगदाधराभिमतान् निष्कर्षान् न परामृशति । अतः व्युत्पत्तिवादपरिचयः भाट्टरहस्ये नोपलभ्यते । एवं व्युत्पत्ति-

वादे क्वचित् भाट्टरहस्योक्तदूषणमुद्भाव्य परिहृतमिति भाति । तथापि भाट्टरहस्यपरिचयः व्युत्पत्तिवादे नावधारयितुं शक्यते । विधिवादे बलवदनिष्टाननुबन्धित्वस्य लिङर्थतां विस्तरेण दूषयति भाट्टरहस्यम् । बलवदनिष्टाननुबन्धित्वपदार्थं विकल्प्य, अन्ते बलवद्द्वेषविषयाप्रयोजकत्वं तदित्यभिधाय, प्राचीनकर्मवशेन यागजन्ये आन्तरालिकश्रमे पुरुषविशेषस्य बलवद्द्वेषोदयसंभवात् तज्जनके यागादौ बलवदनिष्टाननु-बन्धित्वस्य बाधात् यजेतेत्यत्र लिङा तस्य बोधो नोपपद्यते इति दूषणमुद्भावि । नेदं व्युत्पत्तिवादोक्तस्य निरासकम् । विधिप्रत्ययस्य तदादिन्यायानुसारेण बलवद्द्वेषविषय-तावच्छेदकत्वोपलक्षितनरकत्वाद्याश्रयसाधनतात्वावच्छिन्नप्रति-योगिताकाभावकूटे तादृशाभावत्वेनानुगते एकैव विधिप्रत्य-यस्य शक्तिः । उपलक्षणीभूतद्वेषविषयतावच्छेदकत्वं परित्यज्य नरकाद्यसाधनत्वं प्रतीयते । कुत्रचिन्नरकासाध-नत्वं, कुत्रचित् रोगासाधनत्वं प्रतीयते इत्यत्र तात्पर्यमेव नियामकम् । यजेतेत्यत्र नरकासाधनत्वमेव बुध्यते, न श्रमासाधनत्वम् । शाकं न भुञ्जीत इति वैद्यकवाक्ये, रिक्तायां न गच्छेत्, नैकः पर्वतमारोहेत् इत्यादौ रोगादितत्तद-निष्टासाधनत्वस्य लिङर्थस्याभावो बोध्यते इति तन्मतनिष्कर्षः ।

बलवदनिष्टानुबन्धित्वज्ञानस्य प्रवृत्तौ प्रतिबन्धकत्वात् तदभावस्य स्वरूपसत एव प्रवृत्तिहेतुत्वात् बलवदनिष्टाननुबन्धित्वज्ञानस्याप्रवर्तकत्वात् न बलवदनिष्टाननुबन्धित्वस्य लिङर्थता युक्तेति रहस्यग्रन्थः । व्युत्पत्तिवादस्तु बलवदनिष्टानुबन्धित्वज्ञानस्य प्रवृत्तिप्रतिबन्धकतामनुमोदमानोऽपि, न कलञ्जं भक्षयेदिति निषेधविधेः प्रामाण्यानुरोधतः बलवदनिष्टाननुबन्धित्वस्य विध्यर्थप्रवेशः, इष्टसाधनत्वाभावस्य कलञ्जभक्षणे बाधेन बलवदनिष्टाननुबन्धित्वाभावबोधकत्वे एव प्रामाण्यसंभवादिति निरूपयति ।

एवं, तार्किकमते यजेतेत्यादितः इष्टसाधनयागानुकूलकृतिमान् स्वर्गकामः इति शाब्दबोधानन्तरं यागे स्वर्गसाधनत्वस्य मानसो बोधः । शाब्दबोधे स्वर्गरूपेष्टसाधनत्वभानं न संभवति । स्वर्गकामः इत्यत्र कामनाविशेषणत्वेनोपस्थितस्य स्वर्गस्य लिङर्थेष्टे अभेदेनान्वयानुपपत्तेः । तदुत्तरं जायमानः मानसः इष्टे स्वर्गाभेदबोध एव भेदनिश्चयप्रतिबध्यः, न शाब्दबोधः, इति तार्किकमतमनुवदति प्रघट्टकद्वये भाट्टरहस्यम् । 'यजेत स्वर्गकामः इत्यादौ स्वर्गसाधनत्वस्य यागे प्रतीयमानस्य मानसबोधविषयत्वमङ्गीकृत्य क्लृप्तव्युत्पत्तितः इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकामः इत्येवंविध-

शाब्दबोधस्य भवत्संमतस्यानापत्तेश्च ।' इति । 'आवश्यकं चैतत्परेषामपि । इष्टसामान्यसाधनत्वस्यैव लिङर्थत्वात्, स्वर्गादिपदार्थस्य च कामनाविशेषणत्वेन इष्टे अभेदान्वयानुपपत्तेः, इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकामः इति शाब्दबोधस्यावश्यकत्वात्, तदुत्तरमिष्टे स्वर्गाभेदबोधो मानस एव शास्त्रतात्पर्यविषयः इति ।' इति च ।

व्युत्पत्तिवादे तु, लिङा इष्टत्वमविषयीकृत्य स्वर्गत्वादिप्रकारेण स्वर्गसाधनत्वस्य बोधः । समभिव्याहृतपदोपस्थितकामनाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे लिङः शक्तिरिति निर्व्यूढम् । शाब्दबोधानन्तरं न मानसोत्पत्तिरभिहिता ।

'वस्तुतस्तु अशक्यस्यैव तस्य (इष्टत्वस्य) शक्यानुगमकता, सर्वनामस्थले बुद्धिस्थत्ववत् । तेन रूपेण फलानां संकेतविषयतां विना शक्यैक्यासंभवात् तस्य संकेतविषयत्वोपगमेऽपि यथा न तस्य वाच्यता तथा प्रपञ्चितमन्यत्र । अत्र चेष्टत्वस्य शाब्दबोधे अभानात् विशिष्य इष्टतावच्छेदकस्वर्गत्वादिप्रकारेण शाब्दबोधोत्पत्त्या विधिवाक्यात् प्रवर्तकज्ञाननिर्वाहः । ....वस्तुतः तादृशकामनाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे शक्तिस्वीकारात् सर्वसामञ्जस्यम् ।" इति व्युत्पत्तिवादः ।

एवं, प्रथमान्तार्थमुख्यविशेष्यतावादिनैयायिकमतोद्भावनासरे, चैत्रः ओदनं पचतीत्यादौ तिङुपात्तैकत्वसंख्यायाः प्रथमान्तपदोपस्थाप्ये अन्वयस्य निर्विवादतया, तिङर्थ-भावनाया अपि तस्मिन्नेवाश्रयतासंबन्धेनान्वयः । न तस्या मुख्यविशेष्यत्वम्, कालादिव्यतिरिक्ताख्यातार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति अन्याविशेषणीभूतप्रथमान्तपदजन्योपस्थितिः कारणमिति एककार्यकारणभावकल्पने लाघवादिति निरूपयति भाट्टरहस्यम् ।

व्युत्पत्तिवादे, घटोऽस्ति इत्यादौ सुबेकवचनादेव एकत्वबोधसंभवात् आख्यातैकवचनस्य संख्यार्थकत्वमेव नास्ति । तिङेकवचनसाधारणमनुगतमेकवचनत्वं एकत्वशक्ततावच्छेदकं न संभवति । तिङः संख्यावाचकत्वस्वीकारेऽपि तिबादिपदत्वप्रकारकज्ञानजन्यैकत्वोपस्थितित्वेन एकत्वशाब्दहेतुत्वे मानाभावः इत्यादिना, प्रथमान्तार्थे आख्यातार्थसंख्यान्वयस्य निरस्तत्वात् प्रथमान्तार्थे संख्यान्वयस्य निर्विवादतया भावनाया अप्यन्वयः इत्युक्तिः न व्युत्पत्तिवादानुसारिणी । प्रकृतित्व-प्रत्ययत्व-तिङ्त्वादीनामननुगतत्ववादिनां भट्टाचार्याणां न संमता च निरुक्तैककार्यकारणभावकल्पनालाघवोक्तिः ।

एवं, परसमवेतत्वघटितकर्मत्वविषयकशाब्दबोधस्य नैयायिकसंमतस्य दूषणावसरे, भाट्टरहस्ये अनूदितः तादृश-

बोधः न व्युत्पत्तिवादानुसारी । तथाहि—चैत्रो ग्रामं गच्छति इत्यत्र वृत्तित्वं भेदश्च द्वितीयार्थः । ग्रामस्योभयत्रान्वयः । वृत्तित्वस्य धात्वर्थफले, भेदस्य सामानाधिकरण्यसंबन्धेन धात्वर्थव्यापारे चान्वयः इति ग्रामप्रतियोगिकभेदवत्समवेत-ग्रामवृत्तिसंयोगजनकव्यापारानुकूलकृतिमानिति शाब्दबोधः । चैत्रेण ग्रामो गम्यते इत्यत्र आत्मनेपदस्य फलं भेदश्चार्थः । प्रथमान्तार्थस्य भेदे, तस्य सामानाधिकरण्येन धात्वर्थगमने, तस्य पुनः आत्मनेपदार्थफले, तस्याश्रयतया प्रथमान्तार्थेऽन्वयः इति चैत्रकर्तृक-ग्रामभिन्नसमवेत-गमनजन्यसंयोगाश्रयः इति शाब्दबोधः अनूदितोऽस्ति भाट्टरहस्ये ।

व्युत्पत्तिवादे द्वितीयाविचारे लकारार्थविचारे च विभिन्नप्रकारेण निष्कृष्टशाब्दबोधो वर्णितः । द्वितीयाविचारे, क्रियान्वयि भेदप्रतियोगितावच्छेदकत्वं द्वितीयार्थः । एवमपि विहगो भूमिं प्रयाति इतिवत् विहगो विहगं प्रयाति इति प्रयोगापत्तिः । अतः विहगादिवृत्तित्वविशिष्टस्य संयोगस्य फलस्य क्रियाय स्वजनकत्व- स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेनान्वयः इति निष्कर्षमभिधाय, 'एवं सति परसमवेतत्वं संबन्धघटकमेव, न तु द्वितीयार्थः इति चेत्, का क्षतिः' इत्युपसंहृतम् । लकारार्थविचारे, ग्राम गच्छतीत्यादौ फलं भेदश्च द्वितीयार्थः । आधेयतया ग्रामान्वितस्य फलस्य

अपरस्मिन् द्वितीयार्थे भेदे सामानाधिकरण्य–स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वोभयसंबन्धेनान्वयः। भेदस्य स्वप्रतियोगितावच्छेदकत्वसंबन्धेन धात्वर्थे, तस्याख्यातार्थाश्रयत्वे, तस्य प्रथमान्तार्थे अन्वयः। चैत्रेण ग्रामो गम्यते इत्यादौ फलं भेदश्च कर्माख्यातार्थः। चैत्रेणेति तृतीयान्तार्थचैत्रवृत्तित्वान्वितधात्वर्थक्रियायाः स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भेदेऽन्वयः। तस्यापरस्मिन्नाख्यातार्थे फले स्वसामानाधिकरण्य-स्वप्रतियोगितावच्छेदकजन्यत्वोभयसंबन्धेनान्वयः। विशिष्टफलस्याश्रयतया प्रथमान्तपदार्थे अन्वयः इति निरूपितमास्ते।

एवं, घटं जानातीत्यादौ द्वितीयायाः विषयत्वे लक्षणा तार्किकसिद्धा। तद्वत् स्वमतेऽपि विषयत्वे लक्षणेति साक्षेपनिरासं निरूपयति भाट्टरहस्यम्। 'सविषयकधातुसमभिव्याहारे तार्किकरीत्यैव विषयत्वादिकं द्वितीयादिना लक्षयित्वा आख्यातेनाश्रयत्वं लक्षयित्वा घटविषयकज्ञानाश्रयत्वं चैत्रीयमिति चैत्रो जानाति घटमित्यत्र शाब्दबोधः।' इति। व्युत्पत्तिवादे विषयित्वादौ शक्तिरेवेति व्यवस्थापितम्। 'विषयित्वादौ द्वितीयायाः लक्षणैव न शक्तिरिति सांप्रदायिकाः। वस्तुतस्तु विषयितात्वस्य संयोगत्वाद्यपेक्षया आधेयतात्वाद्यपेक्षया च अगुरुतया किंधर्मावच्छिन्ने शक्तिः कल्प्यते इत्यत्र विनिगमकं दुर्लभम्। एकस्मिन् प्रयोगभूयस्त्वमप्यशक्य-

निर्णयमिति तत्रापि शक्तिः सिद्ध्यतीत्यवधेयम् ।' (व्यु. वा.) इति । एतावता भाट्टरहस्ये व्युत्पत्तिवाद परिचयाभावश्चिन्तितः । इदानीं व्युत्पत्तिवादे भाट्टरहस्यपरिचयशून्यता चिन्त्यते ।

व्युत्पत्तिवादे–विधिविचारे, सन्ध्यावन्दनादिनित्यकर्मणां निष्फलत्वात् सन्ध्यामुपासीतेत्यादौ इष्टसाधनत्वान्वयासंभवात् इष्टसाधनत्वं न लिङर्थः । नित्यकर्मणि प्रवर्तिका सामग्री नेष्टसाधनताज्ञानघटिता । अपि तु, सन्ध्यावन्दनाभावे नरकसाधनत्वज्ञानाधीनद्वेषघटिता । इष्टसाधनत्वस्य लिङर्थत्वाभावेऽपि, स्वर्गासाधनं न स्वर्गकामनाधीनकृतिसाध्यमिति इतरबाधबलात् स्वर्गकामकृतिसाध्यतान्वयितावच्छेदकतया स्वर्गसाधनत्वं विधिजन्यबोधे भासते, इति मीमांसकानां मतमनूदितमस्ति । भाट्टरहस्ये निर्धारितस्य, अयमत्र प्रवर्ततामित्याकारकत्वविशिष्टप्रवर्तनायाः लिङर्थत्वस्य, तस्याः स्वज्ञानाधीनानुमितिप्रयोज्यत्वसंबन्धेन आख्यातसामान्यार्थभावनायामन्वयस्य च नैव परामर्शोऽस्ति । एवं, आख्यातसामान्यस्य व्यापारमात्रमर्थः, न कृतिः, करोतिरपि व्यापारवाचक एव न यत्नार्थकः इत्येवं मीमांसकमतमनुवदति व्युत्पत्तिवादः । भाट्टरहस्यं तु आख्यातस्य करोतेश्च यत्नत्वावच्छिन्नवाचकतां व्यवस्थापयति ।

अपि च इष्टसाधनत्वस्य विध्यर्थत्वे, १) आचार्यादेः प्रवर्तकत्वव्यवहारानुपपत्तिः २) पाककृतेर्वर्तमानतादशायां चैत्रः पचेत् इति प्रयोगापत्तिः ३) चैत्रः कीदृश इति प्रश्ने, चैत्रः पचति, चैत्रः पचेत् इत्यादीनामुत्तरत्वापत्तिः, ४) नानाव्युत्पत्तीनां कल्पनागौरवम्, इत्यादिदूषणानां भाट्टरहस्योदीरितानामनुवादो न दृश्यते व्युत्पत्तिवादे । परं तु यागेऽपि कदाचित् बलवद्द्वेषविषयान्तरालिकश्रमजनकत्वसत्त्वेन बलवदनिष्टाननुबन्धित्वस्य बाधात् न तस्य लिङर्थता इत्याक्षेपः रहस्योक्तः पराकृतो व्युत्पत्तिवादे । स्वसिद्धान्ते परोक्ताक्षेपाणामिव स्वोत्प्रेक्षितानामप्याक्षेपाणां परिहारः प्रामाणिकग्रन्थेषु बहुलं दृश्यते । अत्र बहूनां रहस्योक्तानामपरामर्शात् आक्षेपोऽयं तद्ग्रन्थपरिचयाधीनः इति न निर्धारयितुं शक्यते । तस्मात् स्वीयैः स्वेन वा उत्प्रेक्षितोऽयमाक्षेपः पराकृतो व्युत्पत्तिवादे इत्येव युज्यते ।

नैयायिकाः सखण्डस्य निर्वचनासंभवे एव अखण्डपदार्थं स्वीकुर्वन्ति । नव्यमीमांसकास्तु प्रायः अखण्डमेव कर्तृत्व- कर्मत्व-पाकत्व- प्रकृतित्व-प्रत्ययत्वादिकं पदार्थमभ्युपगच्छन्ति । प्रयोगातिप्रसङ्गाप्रसङ्गवारणे दत्तदृष्टयः नैयायिकाः अनुभवानुरोधेन व्युत्पत्तिभेदान् कल्पयन्ति । अभिमतसंशयादिनिवृत्तये शाब्दबोधानन्तरकालिकमानसबोधजननाय विलम्बं न सहन्ते । नव्यमीमांसकास्तु कार्यकारण-

भावकल्पनालाघवं मूलयुक्तिमवलम्बमानाः परम्परासंबन्धेन तत्त्वेनानुपस्थितेन भावनायामेवान्वयं स्वीकृत्य, शाब्दबोधानन्तरभाविमानसबोधेनाभिमतसंशयादिनिवृत्तिं मन्यन्ते। संसर्गाणां विशेषरूपेणैव संसर्गमर्यादया भानं स्वीकुर्वन्तो नैयायिकाः, संसर्गतात्पर्यज्ञानादिघटितशाब्दसामग्रीतः संसर्गविशेषाणामेव शाब्दबोधे भानात् तद्भेदेन समभिव्याहाराकाङ्क्षाज्ञानकारणताभेदस्य सर्ववादिनामवर्जनीयतां मन्यन्ते।

भाट्टरहस्यं, अनेकेषु स्थलेषु, चैत्रः कीदृशः इति प्रश्ने, चैत्रः पचति, पचेत्, न कलञ्जं भक्षयेत् इत्यादीनामुत्तरत्वापत्तिदोषं निरूपयति। इत्थमापादानं सर्वमतसाधारणम्। धात्वर्थमुख्यविशेष्यतावादिमते, पाकः कीदृशः इति प्रश्ने, भावनामुख्यविशेष्यतावादिमते कृतिः कीदृशी इति प्रश्ने च चैत्रः पचेत्, पचति इत्यादेरुत्तरत्वापत्तेः सुलभत्वात्। अतः, कीदृशः चैत्रः इति प्रश्नवाक्यं चैत्रे जिज्ञासितधर्मवद्भेदबोधकमिति, चैत्रे कृतिमदभेदावगाहिबोधजनकं चैत्रः पाचकः इत्यादिकमेवोत्तरम्, न भेदसंबन्धेन कृतिप्रकारकबोधजनकं चैत्रः पचतीति वाक्यम्। रहस्ये, करोतेः यततेश्च यत्नार्थकत्वेऽपि करोतेरेव कर्मसाकाङ्क्षत्वं, न यततेः, द्वितीयार्थस्य कर्मत्वस्य स्वशब्दोपादाने घटः कर्मत्वमित्यादौ न घटनिष्ठकर्मत्वबोधकता

इत्यादेरुपन्यासात् नव्यमीमांसकैरपि शब्दस्वभावो नियामकः इत्यङ्गीकरणीयम् ।, तदेतत्सर्वमभिप्रेत्योक्तं श्रीबच्चाझामहोदयैः 'तस्माच्छब्दमर्यादैव शरणीकरणीया ।' इति । प्राभाकराः धानकर्मताविशिष्टशक्तात् धेनुपदात् धानकर्मत्वेन न महिष्यादेर्बोधः, गोत्वस्याशक्यस्य प्रयोगोपाधित्वादिति वदन्ति । नव्यमीमांसकाः पङ्कजपदस्य पद्मे रूढिशक्तेरभावेऽपि पद्मत्वस्य प्रयोगोपाधितास्वीकारात् नावयवशक्त्या पङ्कजनिकर्तृत्वेन कुमुदादेर्बोधः इत्यभ्युपगच्छन्ति । तथैव आख्यातार्थकृतौ तत्तलिङादिपदज्ञानोत्तरत्वस्य लिङ्पदप्रयोगोपाधितास्वीकारेण पाककृतेः वर्तमानतादशायां पचेदिति प्रयोगापत्तिः सुलभवारणा इत्यादिकमन्यदेतत् ।

तस्मात् भाट्टरहस्यं तार्किकमतविशेषाणां निरासकमपि न व्युत्पत्तिवादपरामर्शि, व्युत्पत्तिवादोऽपि न भाट्टरहस्यपरामर्शीति युक्तमुत्पश्यामः ।

---

### ग्रन्थकृतां न्यायसिद्धान्तस्थापने अभिनिवेशातिशयः सर्वशास्त्रेषु नैपुणी च

कौस्तुभकृतः न्यायसिद्धान्तस्थापने महान्तमभिनिवेशमावहन्ति । ईश्वरप्रणीतत्वादेव वेदः प्रमाणमिति सिद्धान्तव्यवस्थापनायैव वर्णानामनित्यत्वविचारः न्यायसूत्रेषु विततोऽस्ति । वर्णानित्यत्वविचारसमाप्तौ, 'तस्मात् वर्णानामनित्यत्वे सिद्ध

वेदनित्यत्वमूल एव निहितः कुठारः ।' (न्या. कौ.) इति वचनं स्वसिद्धान्तस्थापने निर्भरमाविष्करोति । एवं, समासशक्तिवादे समासस्थले उद्देश्यविधेयभावेनान्वयबोधो नास्तीति वैयाकरणानां स्ववासनाविजृम्भितम् इत्युक्त्वा, अवसाने, 'मात्सर्यमपहाय सुधीभिरालोचनीयम्' इत्यभिधानं वैयाकरणमतनिरासपूर्वकं न्यायसिद्धान्तस्थापने महान्तमभिनिवेशं सूचयति ।

व्यतिसे इत्यादेः प्रक्रियानिरूपणेन, 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' पा. सू. इति सूत्रस्य वृत्तिकारादिवचनसमालोचनपूर्वकं निष्कृष्टार्थकथनेन, कृतद्धितसूत्रस्य नियामकत्वव्युत्पादनेन, कृतपूर्वी कटमित्यादौ द्वितीयोपपादने शाब्दिकमतभेदप्रदर्शनादिना च व्याकरणशास्त्रे पाण्डित्यातिशयः, कपिञ्जलानालभेतेत्यत्र महतः, बहुवचनेन त्रित्वलाभप्रकारविचारस्य करणेन, दर्शपूर्णमासस्थले अपूर्वसंख्यानविचारेण च मीमांसाधिकरणार्थेषु व्युत्पत्त्यतिशयः, अविमृष्टविधेयादेः काव्यदोषस्य दूषकताबीजवर्णनेन, संग्रहेणैवालंकारशास्त्रीयसकलप्रक्रियाप्रतिपादनेन च अलंकारशास्त्रे निपुणतातिशयश्च ग्रन्थकाराणां प्रतिफलति न्यायकौस्तुभे । किं बहुना, 'शब्दे मानत्रये विशिष्टविविधव्युत्पत्तिसंपादकं गूढार्थप्रतिपत्तये वरधियां कुर्वे प्रबन्धं वरम् ॥' इति ग्रन्थोपक्रमे प्रतिज्ञानं,

'यथाश्रुतानां मणिगोचराणां निष्कर्षबोधाय बहूक्तियुक्तः ।
अयं महादेवबुधेन यत्नात् शम्भोर्दयातो रचितो निबन्धः ॥'

इत्युपसंहरणं च सत्यापितं कौस्तुभकारैः । एतैः, १) भवानन्दीयप्रकाशः, २) ईश्वरवादः, ३) सादृश्यविचारः इत्यन्ये न्यायनिबन्धाः विरचिताः इति कौस्तुभशब्दपरिच्छेदपरिशीलनतोऽवगम्यते । एतेषां पितरः मुकुन्दभट्टाः इति मङ्गलश्लोके 'मुकुन्दपितरम्' इत्यभिधानात् ज्ञायते । तेऽपि नैयायिकाः । तैः तरङ्गिणीनामा न्यायनिबन्धो विरचितः इति, सिद्धान्तमुक्तावलीव्याख्यायां प्रभायां श्रीरायनरसिंहशास्त्रिमहोदयानां वचनादवगम्यते । 'अत एव कर्मणो वैलक्षण्येन दलकर्मणोऽतथात्वेऽपि कपालकर्मणः तथात्वे बाधकाभावात् कारणमात्रविभागास्वीकारः इति तरङ्गिण्यां मुकुन्दभट्टोक्तिरपि संगच्छते ।' इति प्रभा । श्री जगदीशभट्टाचार्यविरचितस्य तर्कामृतस्य मुकुन्दभट्टैः तरङ्गिणीनाम्नी व्याख्या कृता न मुद्रिता ।

एवं, म. म. सतीशचन्द्रविद्याभूषणमहोदयैः विरचिते 'History of Indian Logic' नामके ग्रन्थे तर्कसंग्रहचन्द्रिकानाम्नी तर्कसंग्रहव्याख्या विरचितेति निरूपितमास्ते । स एव ग्रन्थः मद्रास् बालमनोरमामुद्रणालयेन मुद्रिते तर्कसंग्रहपुस्तके टिप्पण्यां मुकुन्दभट्टीयनाम्ना निर्दिष्टः स्यात् ।

ग्रन्थकाराश्चेमे पुणताम्बेकरेति उपनाम्ना महाराष्ट्रीया इति ज्ञायते । दीधितिकार—भवानन्दादिनव्यनैयायिकेभ्योऽर्वाचीनाः, वैयाकरणभूषणसारप्रणेतुः श्रीकोण्डभट्टात, श्रीखण्डदेवात,

पण्डितराज–जगन्नाथाच्चानन्तरकालिकाः इति च ग्रन्थपरिशीलनया वक्तुं वयं प्रभवामः । कालविशेषनिर्णये विमर्शकधुरन्धरा एव प्रमाणम् ।

ग्रन्थस्यास्यादर्शः T. M. S. S. M. Library ग्रन्थालयस्थः देवनागरीलिप्या लिखितः न्यायकौस्तुभशब्दपरिच्छेदः प्रायः शुद्धोऽस्ति । क्वचित् ग्रन्थपातः समुपलभ्यते । अत्र निष्कासितो भागः ( )इति, पूरितो भागः [ ] इति च चिह्नितः । क्वचित् पङ्क्तिविच्छेदस्थले मणिग्रन्थादिपर्यालोचनया पूरितमस्माभिः । समुचितशीर्षकनिवेशेन ग्रन्थविभागः प्रदर्शितः पाठकमहोदयानां सुलभावगमाय । दुर्बोधानां ग्रन्थानां बालावबोधाय विवरणमकारि टिप्पण्याम् । प्रकाशितेऽस्मिन् निबन्धे स्थितं दोषजातमविगणय्य गुणलेशमनुमोदमानाः विपश्चिदग्रगण्याः समनुगृह्णन्तु मामित्यभ्यर्थये । विदुषां विद्यार्थिनां चातिशयितव्युत्पत्तिसन्दायिनः शाब्दबोधविचाररसिकैरवश्यबोद्धव्यानां शास्त्रार्थानां परपक्षनिराकरणादीनां च मानसोद्वेजकवाक्यरहितया सरलया वैखर्या निरूपकस्य, सर्वतन्त्रस्वतन्त्र–श्रीधर्मदत्तसूरिभिः स्वग्रन्थे समुद्धृतस्य न्यायकौस्तुभशब्दपरिच्छेदस्य इदंप्रथमतया प्रकाशनेन, तञ्जावूर्–महाराज शरभोजी–सरस्वतीमहाल्–ग्रन्थालयस्याधमर्णाः सर्वे दार्शनिकाः, विशिष्य नैयायिकाश्चेति वस्तुस्थितिः ।

मदीयामभ्यर्थनामङ्गीकृत्य विशिष्टामुखलेखनेन प्रकाशनमिदं महीकृतवतां प्राध्यापकवर्याणां डाक्टर्, सि. एस्. वेङ्कटेश्वरमहोदयानां (Dr. C. S. Venkateswaran M. A. Ph. D., Retired Professor and Head of the Department of sanskrit, Annamalai University & Visiting Professor K. S. R. Institute Mylapore Madras-4) सविधे हार्दीं कृतज्ञतां निवेदयामि ।

अविलम्बेन समीचीनया पद्धत्या ग्रन्थस्यास्य प्रकाशनाय बहूपकृतवतां सरस्वतीमहाल्ग्रन्थालयनिर्वाहकाधिकारिणां श्रीयुत-पार्श्वनाथमहोदयानां (Sri. Parsvanathan, Administrative Officer, T. M. S. S. M. Library, Thanjavur) अधमर्णोऽस्मि ।

परिष्कृतया सरण्या विना विलम्बं ग्रन्थमिमं मुद्रापितवतां कुमार् प्रेस् मुद्रणालयाधिकृतानां मामकीनाभिनन्दनानि प्रकटीकरोमि ।

इत्थमेव दुर्लभप्रौढदर्शनग्रन्थानां प्रकाशनकरणेन वर्धतां सरस्वतीमहाल्ग्रन्थालयग्रन्थावलिः इति भगवन्तं प्रार्थयमानः मदीयामिमां प्रस्तावनामुपसंहरामि ।

अन्तर्वाणिकुलविधेयः,
वे. सुब्रह्मण्यशास्त्री

8. रङ्गरायरग्रहारः
कुम्भघोणम्

शिवं भूयात्

# LIST OF ABBREVIATIONS

## सांकेतिकविवरणम्

| | | |
|---|---|---|
| 1 | उ. सू. | उणादिसूत्रम् |
| 2 | काव्या. | काव्यादर्शः |
| 3 | छा. | छान्दोग्यम् |
| 4 | तै. आ. | तैत्तिरीयारण्यकम् |
| 5 | न्या. सू. | न्यायसूत्रम् |
| 6 | पा. सू. | पाणिनिसूत्रम् |
| 7 | पू. सू. | पूर्वमीमांसासूत्रम् |
| 8 | बृ. | बृहदारण्यकम् |
| 9 | भ. गी. | भगवद्गीता |
| 10 | भ. वा. | भट्टवार्त्तिकम् |
| 11 | भू. का. | भूषणसारकारिका |
| 12 | रघु. | रघुवंशः |
| 13 | वा. | वार्त्तिकम् |
| 14 | वा. प. | वाक्यपदीयम् |
| 15 | वा. सू. | वामनसूत्रम् |

ॐ गणेशाय नमः

# न्यायकौस्तुभशब्दपरिच्छेदस्य

## विषयानुक्रमणिका

विषयः | पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः | पृष्ठसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

| विषयः | पुटसंख्या |
|---|---|

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

| विषयः | पुटसंख्या |
|---|---|

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या

विषयः पुटसंख्या



श्रीः

पुणतामकरोपनामक श्री महादेवपण्डितविरचितः

# न्यायकौस्तुभः

## टिप्पणसहितः

## शब्दपरिच्छेदः

श्री गणेशाय नमः

नत्वा साम्बशिवं मुकुन्द[1]पितरं श्रीकण्ठसंज्ञं गुरुं
भूयः सूक्ष्मधिया विभाव्य च तदुक्तार्थं समस्तं हृदि ।
शब्दे मानवरे विशिष्टविविधव्युत्पत्तिसंपादकं
गूढार्थप्रतिपत्तये वरधियां कुर्वे प्रबन्धं वरम् ॥ १ ॥

---

टिप्पणम्

विश्वाराध्यं विश्वगुरुं संप्रणम्य महेश्वरम् ।
विपश्चितां प्रमोदाय क्रियते लघु टिप्पणम् ॥

1. मुकुन्दपितरम् – मुकुन्दभट्टाभिधं पितरम् ।

अथ शब्दो निरूप्यते ।

## संगतिनिरूपणम्

अत्रोपजीव्योपजीवकभावसंगत्या उपमाननिरूपणानन्तरं शब्दनिरूपणमिति बहवो वदन्ति । तत्र यद्यपि ज्ञायमान-शब्दस्य शाब्दबोधकार (णाभा)[णता] वादिप्राचीनमते स्वरूपत-स्तस्यासंभवः, उपमानस्य शब्दानुपजीव्यत्वात्, तथापि फल-द्वारकः सः[1] संभवत्येव । शाब्दबोधे शक्तिग्रहस्य, तत्रचोपमानस्य हेतुतया शक्तिग्रहद्वारा शाब्दबोधे उपमानस्योपजीव्यत्वात् । नचैवमुपमितौ अतिदेशवाक्यार्थ ज्ञानात्मकोपमानस्य हेतुतया तत्र (वा)[चा]तिदेशवाक्यात्मकशब्दस्य हेतुतया उपमानद्वारा उपमितौ शब्दस्यापि हेतुतया विपरीतस्यापि तस्य[2] संभवेन शब्दस्योपमान-निरूपणानन्तरनिरूपणे नियामकत्वं न संभवतीति वाच्यम् ।। यत्प्रमाणफलसमानधर्मितावच्छेदकक सत् यत्प्रमाणफलं तदु-पजीवकं भवति, तत् तत्प्रमाणनिरूपणानन्तरनिरूपणविषयः इति नियमस्यानन्तरं निरूपणप्रयोजकत्वोपगमेन, गवयो गवयपद-वाच्यः इत्याद्युपमिति (प्र) [स] मानधर्मितावच्छेदककस्य गवयो

---

1. सः – उपजीव्योपजीवकभावः ।
2. तस्य – उपजीव्योपजीवकभावस्य ।

ऽस्ति इत्यादिवाक्यजन्यशाब्दबोधस्य तादृशोपमित्युपजीवकतया, गोसदृशो गवयपदवाच्यः इत्याद्यतिदेशवाक्यार्थ ज्ञानात्मकशाब्दबोधासमानधर्मितावच्छेदकक [गवयो] गवयपदवाच्यः इत्याद्युपमितेः तादृशशाब्दबोधानुपजीवकतया(द्य) [च] विपरीतस्यासंभवेनाऽदोषात् ।

वस्तुतस्तु तत्फलधर्मितावच्छेदकताप्रयोज्यस्वफलधर्मितावच्छेदकताकत्वं प्रमाणस्य तत्प्रमाणानन्तरं निरूपणप्रयोजकमित्युपगमान्न दोषः। शाब्दबोधधर्मितावच्छेदकतायाः शक्तिग्रहा(त्प्र) [त्म] कोपमितिधर्मितावच्छेदकतामात्रप्रयोज्यत्वात् । उपमितिधर्मितावच्छेदकतायाश्च सादृश्यज्ञानधर्मितावच्छेदकतामात्रप्रयोज्यत्वेनातिदेशवाक्यार्थज्ञानात्मक शाब्दबोधधर्मितावच्छेदकत्वाऽप्रयोज्यत्वात् ।

एतेन, — यत्प्रमाणफलेत्याद्युक्तनियमस्य न (तातज) [तन्निरूपणानन्त]रनिरूपणप्रयोजकत्वसंभवः। गवयोऽस्तीत्यादि समूहालम्बनात्मकाऽतिदेशवाक्यार्थज्ञानमादायोपमितेरपि शाब्दबोधसमानधर्मितावच्छेदककत्वसंभवेनोक्तदोषस्य दुर्वारत्वात् - इत्याशङ्कापि निरस्ता ।

शब्दज्ञानस्यैव शाब्दबोधकरणतावादिनवीनमते च, शक्तिग्रहात्मकोपमितेरेव शब्द[1] प्रमाणतया उपमानोपजीवकत्वेन च [2]स्वरूपत एवोपजीव्योपजीवकभावः संभवति । नचोक्तरीत्या यथा शब्दस्योपमानोपजीवकत्वं, तथा अतिदेशवाक्याथज्ञानात्मकोपमानस्याप्यतिदेशवाक्यज्ञानात्मक शब्दप्रमाणोपजीवकत्वेन तस्यानन्तरनिरूपण प्रयोजकत्वासंभव इति वाच्यम् । यत्प्रमाणं स्वसमानविषयक यत्प्रमाणोपजीवकं, तत् तदनन्तरनिरूप्यमिति नियमोपग(मेन)[मात्]न च स्वसमानविषयकत्वं यदि यत्किञ्चिद्विषयमादाय, तदा अतिदेशवाक्यज्ञानात्मक[3]शब्दस्योपमानविषयीभूतगवयपदविषयकत्वेन शब्देऽपि त[4]त् दुर्वारम् । यदि च यावद्विषयमादाय, तदा उपमानेऽप्यसम्भवि, तस्योपमित्यात्मकशब्दविषयीभूत गवयत्वविशिष्टाविषयकत्वादिति वाच्यम् । मुख्यविशेष्यमादाय तद्विवक्षणेन उपमानस्य उपमित्यात्मकशब्द-[मुख्यविशेष्य] मुख्यविशेष्यकत्वेन, अतिदेशवाक्यज्ञानात्मक-

---

1. शब्दप्रमाणतयेति = गवयपदवाच्यः इत्युपमितेः पदविषयकत्वादितिभावः ।
2. स्वरूपत एवेति-एवेन फलद्वारकत्वस्य व्यवच्छेदः
3. शब्दस्य – शब्दप्रमाणस्य । एवमुत्तरत्रापि शब्दपदेन शब्दज्ञानात्मकप्रमाणं विवक्षितमिति बोध्यम् ।
4. तत् – उपमानसमानविषयकत्वम्

शब्दस्य चोपमान [मुख्यविशेष्या] मुख्यविशेष्यकत्वेनोक्तदोषाभावात् । य (त्व) [दि], एवमपि उपमानजनकस्य सदृशं सदृशपदशक्यमित्याकारकशक्तिग्रहस्य शाब्दधीकारणतया शब्दप्रमाणस्योपमानमुख्यविशेष्यकतया[1] उपमानेऽपि स्वसमानमुख्यविशेष्यकशब्दोपजीवकत्वान्नोक्तरीत्या निर्वाहः इति, तदा (अत्यन्त)[अन्त्य] विशेष्यतायामेकधर्मप्रकारताऽनिरूपितत्वनिवेशेन सामञ्जस्यात् ।

यत्तु प्र (त) [माण] तावच्छेदकधर्मावच्छिन्नोपजीव्यतानिरूपितमुपजीवकत्वमानन्तर्याभिधाने नियामकम्; शक्तिपरिच्छित्तिरेवोपमानफलम्; (तत्तु) [न तु] कारणतापरिच्छित्तिरपि इत्युपमानमात्रस्यैव[2] शब्दोपजीव्यता । शब्दमात्रस्य च नोपमानोपजीव्यत्वम् घटोऽस्ति इत्यादौ व्यभिचारादिति न कोऽपि दोषः इति । त (त्र) [न्न], कारणतापरिच्छित्तेरपि[3] उपमानफलस्य

---

1. उपमानमुख्यविशेष्यकतया – उपमानमुख्यविशेष्यमुख्यविशेष्य – कतया।

2. उपमानमात्रस्य–उपमानप्रमाणसामान्यस्य। एवमग्रेऽपि ।

3. कारणता परिच्छित्तेरपीति–इयमोषधिः कटुः इति प्रत्यक्षेणोपलभ्य कटुरोषधिर्ज्वरहरा इति भैषज्यातिदेशवाक्यार्थं स्मृत्वा, ज्वरहरयमोषधिः इत्युमिमीते इति निरूपितं बोध्यम्।

उपमानपरिच्छेदे व्यवस्थापनात् । वस्तुतस्तु, अनुमानपरिच्छेदे संगतेरनन्तराभिधानाव्याप्यत्वस्य[4] अनन्तराभिधानव्यापकत्वस्य च व्यवस्थापनेन संगतेरुभयत्राविशेषेऽपि न क्षतिः । अनन्तराभिधाननियामकश्चोद्देशक्रम एव । यत्तु उद्देशक्रमेऽपि संगतिरेव बीजमिति, तदसत् । उक्तक्रमेण संगतेः तद्बीजत्वासंभवेन स्वतन्त्रेच्छस्येति[5]न्यायेनेच्छाया एव तन्नियामकत्वादित्येव तत्त्वम् । इति संगतिनिरूपणम्

---

4. अनन्तराभिधाना व्याप्यत्वस्येति–यत् यदनन्तरं निरूपितं, तत् तेन संगतमिति नियमः । न तु यत् येन संगतं तत् तदनन्तरं निरूपणीयमिति नियमः इति भावः ।

5. न्यायेनेति स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हत्वमिति न्यायः

## प्रमाणशब्दलक्षण विचारः

तत्र आप्तोपदेशः शब्दः (न्या-सू-1-1-7)[1]। तत्राप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान्, तस्योपदेशः—तज्जन्योपदेशः। विशिष्टजन्यत्वं च विशेष्यस्यान्यावर्तकतया विशेषणजन्यत्व-पर्यवसन्नम्। तथा च प्रकृतवाक्यार्थयथार्थज्ञानजन्यशब्दत्वं लक्षणं फलितम्।

### सदलप्रयोजनं मणिकृदुक्तलक्षणनिरूपणम्

अत एव एतदनुसारिणा मणिकृतापि 'प्रयोगहेतुभूतार्थ-तत्त्वज्ञानजन्यः शब्दः प्रमाणम्' इत्युक्तम्। अस्यार्थः-प्रयोग-हेतुभूतं यत् अर्थतत्त्वज्ञानं-प्रमारूपार्थज्ञानं, तज्जन्यत्वम्। तथा चोक्तएवार्थः अत्र वक्तृबुबोधयिषा(प्रावेक)[पूर्वक]वाक्यत्वावच्छि-(न्न) [ने] वक्तृवाक्यार्थयथार्थज्ञानस्य हेतुत्वमिति प्राचां म(ते) [तम्]। पयसा सिञ्चतीत्यादौ वक्तृयथार्थवाक्यार्थज्ञानजन्यतया लक्षणसमन्वयः। वह्निना सिञ्चतीत्यादौ तु वाक्यार्थज्ञानस्य यथार्थत्वाभावान्नातिप्रसङ्गः। प्रत्येकपदार्थावान्तरवाक्यार्थज्ञानजन्यत्व-मादायोक्तातिप्रसङ्गतादवस्थ्यवारणाय भूतान्तं ज्ञानविशेषणम्।

---

1· 'आप्तोपदेशः शब्दः' इति प्रमाणशब्दलक्षणपरं न्यायसूत्रम्। वक्ष्यमाणस्य प्रकृतवाक्यार्थेत्यादिलक्षणस्य सूत्रारूढत्वसंपादनाय तत्सूत्रं व्याचष्टे- तत्राप्तः इत्यादिना।

महावाक्यार्थभ्रममादायातिप्रसङ्गवारणाय तत्वपदम्। नचैवमपि वह्निना सिञ्चतीत्यादौ प्रत्येकपदार्थावान्तरवाक्यार्थज्ञानयोः यथार्थत्वेन[1] वाक्यार्थमहावाक्यार्थज्ञानद्वारा[2] तज्जन्यत्वमादायातिप्रसङ्गोऽस्त्येवेति वाच्यम्। एतदर्थमेव भूतान्तस्योपादानात्। तदुपादाने भू(प्राप्तः)[प्राप्ता]विति धात्वर्थानुसारेण इतरासहकारेण प्रयोगहेतुतादृशज्ञानजन्यत्वलाभेन उक्तज्ञानवाक्यार्थ[ज्ञानयोः] महावाक्यहेतुतयाऽनतिप्रसङ्गात्।

[3]नन्वेवं पयसा सिञ्चतीत्यादावसंभवः, तत्रापि तत्पूर्वोत्पन्नप्रत्येकपदार्थावान्तरवाक्यार्थज्ञानसहका(रि)(रे)णैव महावाक्यार्थतत्त्वज्ञानस्य प्रयोगहेतुत्वादिति स्वोत्तरोत्पन्नेतरासहकारेणेति वा (क्य)[4] (च्य) मिति । तदसत्। यस्मिन् सति यदभावात् कार्याभावः तस्यैवा (प्र) (र्थ) स्य सहकारितया स्वजनकस्वपूर्वोत्पन्नस्य स्वसहकारित्वाभावेनोक्तदोषाभावात्।

---

1. यथार्थत्वेनेति-वह्नि इति ज्ञानस्य, वह्निनिष्ठं करणत्वमितिज्ञानस्य च विषयाबाधादिति भावः।
2. वाक्यार्थेत्यादि पदार्थज्ञानस्य अवान्तर वाक्यार्थज्ञानद्वारा, अवान्तरवाक्यार्थज्ञानस्य महावाक्यार्थज्ञानद्वारेत्यर्थः।
3. नन्विति-अस्य वाच्यमिति इत्यत्र संबन्धः
4. वाच्यं-विवक्षणीयम्।

मण्युक्तलक्षणे प्रयोगहेतुभूतेत्यस्यार्थान्तरकथनं प्रयोजनान्तरं च

---

वस्तुतस्तु, घटः कर्मत्वमानयनं कृतिः इत्यादिस्वरू (प) [पा] योग्यनिराकाङ्क्षवाक्यस्य घटकर्मकानयनादिरूपविषये प्रामाण्यवारणाय प्रयोगहेतुभूतत्वं ज्ञानविशेषणम् । तत्त्वं च प्रयोग [:] हेतुर्यस्य तत्संबन्ध [व] त्त्वम् । संबन्धश्च विषयतेति स्वजन्यज्ञानसमानविषयकत्वं पर्यवसन्नम् । तथा च स्वजन्यज्ञानसमानविषयकार्थप्रमाजन्यत्वं निराकाङ्क्षादिव्यावृत्तं लक्षणार्थः फलितः ।

यत्तु वर्गत्वेन शाब्दसामान्यं प्रति स्वरूपयोग्यतया शाब्दप्रमास्वरूपयोग्यमात्रस्य लक्षणतया निराकाङ्क्षादेरपि लक्ष्यतया तद्वारणार्थकतया नोक्तविशेषणसार्थक्यम् । (तवै) [नचै] वमपि ध्वन्यात्मकशब्दवारणाय तदावश्यकमिति वाच्यम् ।

---

1 तत्संवन्धवत्त्वमिति–भू प्राप्तौ इत्यनुशासनात् भूधातोः प्राप्तिरर्थः । प्राप्तिर्नाम संबन्धः । स चात्र तात्पर्यानुरोधात् विषयतारूपः । भूतशब्देन संबन्धवान् बोध्यते । प्रयोगहेतुना भूतमिति तत्पुरुषः । बहुव्रीह्याश्रयणात् प्रयोगहेतुपदेन प्रयुज्यमानशब्दजन्यं बोध्यते इति भावः ।

शब्दत्वस्थाने वर्णत्वं निवेश्यैव तद्वारणसंभवात् । वर्णत्वजातेः सत्त्वादिजातिवदप्रामाणिकतया शब्दत्वेनैव शाब्दप्रमास्वरूप योग्यतया ध्वनेरपि लक्ष्यत्वस्य समुचितत्वाच्चेति । तदसत् । घटः कर्मत्वम् इत्यादिनिराकाङ्क्षवाक्यस्य शब्दत्वरूपेण घटकर्मत्वादिविषयकभ्रमस्वरूपयोग्यत्वेऽपि प्रमात्वनियतधर्मावच्छिन्न तत्तदर्थविषयकप्रमानिष्ठकार्यतानिरूपितस्वरूपयोग्यताया एव लक्ष्यतावच्छेदककोटिप्रविष्टतत्तदर्थघटितप्रमाणस्वरूपतया निराकाङ्क्षादेरलक्ष्यतया तद्वारकविशेषणस्यावश्यकत्वात् ।

यदपि, घटःकर्मत्वमित्यादिवाक्यस्य प्रमात्वनियतकर्मत्वादिविषयकघटादिप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति स्वरूपयोग्यत्वात् लक्ष्यत्वमेवेति ।

तदप्यसत् । तत्तदर्थबोधे परस्परसाकाङ्क्षतत्तदर्थोपस्थापकपदत्वेनैव स्वरूपयोग्यत्वात् ।

(तन्न) [ननु] नव्यनये वाक्ये वक्तृवाक्यार्थज्ञानस्याहेतुतया उक्तलक्षणासंभवः । तथाहि । वाक्यत्वस्य जन्यतावच्छेदकत्वे शुकादिवाक्ये व्यभिचारः । न (तु) [च] वक्तृवाक्यार्थबुबोधयिषापूर्वकवाक्यत्वस्य वक्तृवाक्यार्थयथार्थज्ञानजन्यतावच्छेदकत्वान्न दोष इति वाच्यम् । तथापि शुकादिवाक्य-

स्थले क्लृप्तवाक्यार्थज्ञानाघटितसामग्र्यै[1] वोक्तवाक्यस्यापि निर्वाहे तत्र वक्तृवाक्यार्थयथार्थज्ञानस्यान्यथासिद्धेर्दुर्वारत्वात्। क्रमोत्पन्नवर्णसमुदायपर्याप्तवाक्यत्वावच्छिन्नस्य कचिदपि क्षणेऽनुत्पत्त्या वाक्यत्वस्य (नत्ता) [जन्यता] वच्छेदकत्वासंभवाच्चेति चेन्न। लक्षणस्थजन्यपदस्य प्रयोज्यपरतया वाक्यार्थज्ञानस्य वाक्यहेतुत्वाभावेऽपि तत्प्रयोजकत्वेनानुपपत्त्यभावात्।

## लक्षणस्याननुगतत्वाक्षेपः, तत्परिहारश्च

---

यत्तु स्वत्वस्याननुगमेन इदं[2] लक्षणमननुगतमिति दोषोद्भावनम्। तदसत्। प्रमात्वघटितलक्ष्यस्याप्य[3] [न] नुगमेन लक्षणाननुगमस्यादोषत्वात्। यदि च प्रत्यक्षपरिच्छेदोक्तरीत्या प्रमात्वमनुगतमेवेति[4] विभाव्यते। तथापि न क्षतिः।

---

1 उक्तवाक्यस्यापि-वक्तृवाक्यार्थं बुबोधयिषापूर्वकवाक्यस्यापि।

2 इदं लक्षणं- स्वजन्यज्ञानसमानविषयकेत्यादिलक्षणम्।

3 प्रमात्वघटितलक्ष्यस्येति — प्रमाणशब्दस्य लक्ष्यत्वात् प्रमाणशरीरे प्रमाणत्वस्य घटकत्वादिति भावः।

4 अनुगतमिति-स्वावच्छिन्नत्व, स्वप्रतियोगिनिष्ठत्व, स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वैतत्त्रितयसंबन्धेन संसर्गविशिष्टान्य प्रकारताशून्यत्वं प्रमात्वमनुगतम्।

स्वजन्यज्ञानसमानविषयकस्वार्थप्रमाप्रयोज्य [त्व] संबन्धेन वाक्यविशिष्टशब्दत्वस्य, किञ्चिद्धर्मविशिष्ट [त्व] स्यैव वानुगतस्य लक्षणत्वसंभवात् ।

## उक्तलक्षणलक्ष्यतावच्छेदकनिरूपणम्

लक्ष्यतावच्छेदकं (त्वं) चात्र प्रमाणशब्दत्वम् । प्रत्यक्षादावतिव्याप्तिवारणाय शब्दत्वनिवेशः । एवं च संस्कारादावतिप्रसङ्गवारणाय लक्षणे शब्दत्वनिवेशः । न चात्र एकस्यैव[1]शब्दपदस्य सत्त्वात् कथं लक्ष्यलक्षणयोः शब्दत्वलाभ इति वाच्यम् । शब्दपदान्तरपूरणेन तल्लाभसंभवात् । य (त्व) [त्तु] काकाक्षिगोलकन्यायेन मध्यस्थशब्दपदस्योभयत्र संबन्धे नैव तल्लाभे पूरणमनर्थकमिति । तदसत् । उद्देश्यविधेयोपस्थापकपदयोः पौर्वापर्यरूपाकाङ्क्षायाः उद्देश्यविधेयभावप्रयोजकतया एकपदोपस्थाप्यशब्दत्वस्योभयत्र संबन्धासंभवात् ।

---

1 एकस्यैवेति–'प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम्' इति मणिवाक्ये एकमेव शब्दपदं श्रूयते इति भावः ।

## लक्षणे शब्दत्व न निविष्टमिति मिश्रमतम् तन्निरासश्च

यत्तु प्रयोगहेतुभूतत्वं न ज्ञानविशेषणम् । किन्तु, उक्तातिप्रसङ्गवारणाय[1] स्वातन्त्र्येणैव विशेषणम् । अर्थपदस्य च प्रकृतवाक्यार्थपरतया न वह्निनेत्यादावतिप्रसङ्गः । तच्च प्रयोगसामग्रीसहकृतत्वम् । भूधातोः प्राप्त्यर्थकतया सहकार्यसहकारिभावसंबन्धरूपप्राप्तेरेवात्र विवक्षणात् । तथा च प्रयोगपदस्य शब्दपरतया भूतान्तेन शब्दसामग्री[2]जन्यत्वं लब्धम् । तच्च न संस्कारादा[3]विति नातिप्रसङ्ग इति लक्षणे, शब्दत्वं न निविष्टमिति उक्तं मिश्रैः । तच्चिन्त्यम् । लघुभूतशब्दत्वनिवेशेनैवोपपत्तौ शब्दसामग्रीजन्यत्वस्य गुरोर्निवेशानौचित्यात् ।

## लक्षणे एव शब्दत्वनिवेशः इति नवीनमतम्

नवीनास्तु शब्दो गुणः इत्यादिप्रत्यक्षकारणस्य तादृशार्थ-

1 उक्तातिप्रसङ्गवारणाय-वाक्यार्थज्ञानजन्ये संस्कारे अतिव्याप्तिवारणाय ।

2 सामग्रीति - हेतुपदं सामग्रीपरमिति भावः ।

3 संस्कारादौ- वाक्यार्थज्ञानजन्ये संस्कारादौ ।

बोधौपयिकाकाङ्क्षादिरहितस्य वाक्यस्य वारणाय प्रमासामान्य-[1] बोधकशब्दस्य शाब्दप्रमारूपविशेषपरतायाः आवश्यकतया शाब्द-प्रमाकरणत्वरूपलक्ष्यतावच्छेदकज्ञानसंभवे, लक्ष्यतावच्छेदक-[2] कोटौ शब्दपदान्तर (प्रेणां) [पूरणं] विनैव प्रत्यक्षादिव्यावृत्तलक्ष्य-तावच्छेदकलाभसंभव इति, लक्षणे एव शब्दत्वनिवेशः, न तु लक्ष्येऽपीति प्राहुः । अत्र ज्ञायमानशब्दस्य करणतामते तादृशशब्द [त्व] मेव लक्षणम् । शब्दज्ञानस्य करणतामते तादृशशब्दज्ञानत्वं लक्षणं बोध्यम् । एवं लक्ष्यतावच्छेदकमपि, प्रमाणशब्दत्वं, प्रमाणशब्दज्ञानत्वं वा मतभेदेन बोध्यम् ।

शाब्दप्रमाकरणत्वं लक्षणान्तरम् । तस्य सूत्रमणि-
वाक्याभ्यां लाभः ।

---

यद्वा, आप्तोपदेशः । आप्नोति—स्वप्रकारं विशेष्य-तया व्याप्नोतीति [आप्तपदस्य] आश्रयोऽर्थः । उपदेशः—

---

1 प्रमासामान्यबोधकशब्दस्य- मणिवाक्यस्थस्य प्रमाणशब्दस्य ।

2 लक्ष्यतावच्छेदककोटाविति-प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम्' इति मणिवाक्ये प्रमाणपदानन्तरमिति पर्यवसितार्थः ।

शाब्दबोधः । तथा च सः[1] यस्मादिति विग्रहेण तादृशबोध-
करणत्वं शाब्दप्रमाकरणत्वपर्यवसन्नं लक्षणम् । प्रयोगहेतु-
भूतेत्या (दि) [दे:] मणिकारोक्तस्याप्युक्त एवार्थः । प्रयोग
[:] हेतुभूतो यस्य-अर्थतत्त्वज्ञानस्येति समासात् ज्ञानान्त
शाब्दप्रमापरम् । तदेव जन्यं यस्य इति बहुव्रीह्यन्तराश्रय-
णेन शाब्दप्रमाकरणत्वं समुदित[2]लक्षणवाक्यार्थः । प्रत्यक्षादि-
प्रमाणातिप्रसङ्गवारणाय प्रमायां शाब्दत्वनिवेशः । शब्द-
पदस्य च लक्ष्यता[3]वच्छेदके एव निवेशः । लक्ष्यतावच्छेदक-
निविष्टं प्रमाणत्वं च प्रमाणव्यवहारविषयत्वम्, न तु प्रमाकरण-
त्वम् । तेन लक्ष्यतावच्छेदकलक्षणयोर्नाभेदः । शाब्दत्वं,
शाब्दयामीत्यनुभवसिद्धो जातिविशेषः ।

———

1 सः — आश्रयः शाब्दबोधः ।
2 समुदितेत्यादि–शाब्दप्रमाकरणत्वमिति नैयायिकसंमतस्य लक्षणस्य न्यायसूत्र मणिवाक्यारूढत्व संपादनाभिनिवेशेनेदं क्लिष्टं व्याख्यानं बोध्यम् ।
3 मणिवाक्ये शब्दः, प्रमाणमिति पदद्वयं लक्ष्यबोधकमिति पर्यवसितोऽर्थः ।

## सूत्रस्य व्याख्यानान्तरं, तन्निरासश्च

यत्तु, आप्तः— यथार्थ [वा] न्, उपदेशः— शब्दज्ञानजन्यत्वव्याप्यशब्दाविषयकवृत्तिजातिमान् बोधः। शब्दाविषयकेति उपमितिवारणाय। सः यस्मादिति विग्रहः। तथा च तादृशबोधकरणत्वमेव लक्षणमिति। तदसत्। गौरवात्, उपदर्शितरीत्या कारणतापरिच्छित्तेरपि उपमितित्वेनोपमितिवारणासंभवाच्च।

## लक्षणान्तरकथनं, तद्दूषणं च

एतेन[1] जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वाव्यापक[2](तान्त) [जाति] शून्यत्वे सति पदविषयकत्वव्यभिचारिजातिमदनुभवत्वं शाब्दत्वम्। तदवच्छिन्नप्रमाकरणत्वं लक्षणम्।

---

1 एतेन — कारणतापरिच्छित्तेरपि उपमितित्वेन।

2 जन्यपदधीजन्यत्वेत्यादि — शाब्दत्वजातिः अनुभवत्वाव्यापिकापि न जन्यपदधीजन्यत्वव्यभिचारिणी। शाब्दस्य जन्यपदधीजन्यत्वनियमात्। अतस्तादृशी जातिः अनुमितित्वादिरेव। तच्छून्यत्वं शाब्दस्येत्यर्थः।

सत्यन्तमनुमित्यादिवारणाय । उपमित्यादिवारणाय जातिमदित्यन्तम् । सत्तादिकमादायासंभववारणाय सत्यन्ते अनुभवत्वाव्यापकेति । अनुमितित्वस्यापि ईश्वरीय (घट) [पद][1] ज्ञानजन्यत्वाव्यभिचारेणातिप्रसङ्गवारणाय जन्येति, इत्यपि परास्तम् ।

जन्यपदज्ञानजन्यत्वाव्यभिचारिजातिमत्त्वेनैवानुमित्यादिवारणे शून्यत्वान्तविवेशे गौरवाच्च । किञ्च, अनुमितौ ज्ञानत्वेनैव लिङ्गज्ञानस्य कारणतया, जन्यपदज्ञानस्य ज्ञानत्वेन अनुमितौ स्वरूपयोग्यतया शून्यत्वनिवेशेऽप्यनुमितिवारणासंभवः[2] । न च जन्यपदज्ञानत्वेन तज्जन्यत्वनिवेशात् नोक्तदोष इति वाच्यम् । तथा सति शाब्दबोधेऽपि वर्णज्ञानत्वेन (ज्ञान) [पद] ज्ञानत्वेनैव वा पदज्ञानस्य करणतया शाब्द(त्वानिवेशान्नोक्तदोष इति वाच्यम् । तथासति शाब्दबोधेऽपि

---

1 ईश्वरीयपदज्ञानेति — सर्वत्र जन्यज्ञाने सर्वविषयकस्य एकस्य ईश्वरज्ञानस्य हेतुत्वादिति भावः ।

2 अनुमितिवारणासंभव इति — अनुमितित्वजातेरपि जन्यपदधीजन्यत्वव्यभिचारित्वाभावात् तादृशजातिं प्रत्यक्षत्वमुपादाय तच्छून्यत्वस्यानुमितौ सत्त्वादिति भावः ।

वर्णज्ञानत्वेन) त्वस्यापि जन्यपदविशिष्टबुद्धिनिष्ठतादृशजन्यत्वव्यभिचारेणासंभवात् । अपि च, परोक्षत्वजातेरपि जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वाव्यापकत्वेन शाब्दबोधे तच्छून्यत्वाभावादसंभवः । न च परोक्षत्वजातिरेवाप्रामाणिकीति वाच्यम् । बाधाभावादि[1]जन्यतावच्छेदकतया तत्सिद्धेः । अन्यथा अनुमितित्वशाब्दत्वादीनां तत्प्रतिबध्यतावच्छेदकत्वे अनेककारणतापत्तेः । न चानुभवत्वेन सांकर्यान्न परोक्षत्वं जातिरिति वाच्यम् । प्रत्य (क्षा) [क्षत्वा] रिक्तानुभवत्वजातावेव माना[2]भावात् ।

सांकर्यात् परोक्षत्वं न जातिरित्याक्षेपः, तत्परिहारश्च

अथ वह्न्याद्यनुमित्साविशिष्टवह्न्याद्यनुमितिसामग्र्याः प्रत्यक्षशाब्दादौ[3] प्रतिबन्धकतया, प्रत्यक्षत्वादेः तत्प्रतिबध्यताव-

---

1 बाधाभावादीति — लौकिकसंनिकर्षाजन्यतद्वत्तावुद्धावेव बाधज्ञानस्य प्रतिबन्धकतया तदभावजन्यतावच्छेदकं प्रत्यक्षव्यावृत्तं परोक्षत्वमेवेति भावः ।

2 मानाभावादिति -- अनुमित्याद्यनन्तरं अनुभवामि इत्यनुव्यवसायो नास्तीति भावः ।

3 प्रत्यक्षशाब्दादाविति — भिन्नविषयकेत्यादिः ।

च्छेदकत्वे गौरवेण[1] अनुमित्यन्यप्रत्यक्षशाब्दवृत्ति[2]वैजात्यस्यैव तादृशसामग्र्यभावजन्यतावच्छेदकत्वमुपेयते । तादृशवैजात्येन सांकर्या[3] (त्त) [न्न] परोक्षत्वं जातिरिति चेन्न ।

तादृशवैजात्यस्येश्वरज्ञानवृत्तितया नित्यसाधारण्येन जन्यतावच्छेदकत्वासंभवात् । न च ईश्वरज्ञानव्यावृत्तमेव तदुपेयते इति वाच्यम । तथा सति प्रत्यक्षत्वजात्या[4] सांकर्येण वैजात्यस्यैवासिद्धिप्रसङ्गात् । न च नित्यसाधारण्येऽपि कार्यतावच्छेदकत्वे बाधकाभाव इति वाच्यम् । तद्बाधकस्यान्यत्रास्माभिः विस्तरेण प्रपञ्चितत्वात् ।

---

1 गौरवेण — प्रत्यक्षे शब्दे च पृथक् प्रतिबन्धकताद्वयकल्पनागौरवेण ।

2 प्रत्यक्षशाब्दवृत्तीति — प्रत्यक्षशब्दबोधोभयवृत्तीत्यर्थः ।

3 सांकर्यादिति — वैजात्यं विहाय परोक्षत्वमनुमितौ, परोक्षत्वं विहायवैजात्यं प्रत्यक्षे, उभयोः समावेशः शाब्दबोधे इति सांकर्यं बोध्यम् ।

4 प्रत्यक्षत्वजात्येति — प्रत्यक्षत्वं विहाय वैजात्यं शाब्दे वैजात्यं विहाय प्रत्यक्षत्वमीश्वरप्रत्यक्षे उभयोः समावेशः जन्यप्रत्यक्षे इति सांकर्यं ज्ञेयम् ।

### परोक्षत्वस्य जातित्वे नव्यानामाक्षेपः, तन्निरासश्च

यत्तु नव्यैरुक्तम्, शाब्देच्छाविशिष्टशाब्दसामग्रीकाले समानविषयकोपनीतभानस्यानुमितेश्चानुदयेन तद्वारणाय प्रतिबन्धकताद्वयमपेक्ष्य, लाघवेन, प्रत्यक्षानुमितिसाधरणीमेकां जातिं स्वीकृत्य, तदवच्छिन्नं प्रति तस्याः एकमेव प्रतिबन्धकत्वं कल्प्यते, लाघवात् । एवं च तादृशजात्या सांकर्येण[1] परोक्षत्वस्य जातित्वं न संभवतीति ।

तदसत् । वह्निमान्पर्वतो घटवान् इत्याद्यनुमितौ व्यभिचारवारणाय पर्वतोद्देश्यतानिरूपितव (ह्नित्वा) [ह्न्या]दिविधेयताया एवानुमितिस्थलीयतादृशसामग्रीप्रतिबध्यतावच्छेदकतया, विधेयतायाश्च प्रत्यक्षावृत्तितया प्रत्यक्षस्थले स्वतन्त्रप्रतिबन्धक (तावच्छेदक) त्वस्यावश्यकतया तादृशजातौ[2] मानाभावात् । न चैतदनुरोधेन[3] विधेयतायाः प्रत्यक्षसाधारण्योप-

---

1 सांकर्येणेति — तादृश जातिं विहाय परोक्षत्वं शाब्दे, परोक्षत्वं विहाय तादृशजातिः प्रत्यक्षे, उभयोः समावेशः अनुमितौ इति सांकर्यं बोध्यम् ।

2 तादृशजातौ — प्रत्यक्षानुमितिसाधारणजातौ ।

3 एतदनुरोधेन — प्रत्यक्षानुमित्युभयं प्रति एकप्रतिबन्धकत्वानुरोधेन ।

गमान्न दोष इति वाच्यम् परामर्शादिनियम्यायाः तस्याः प्रत्यक्ष-साधारण्यस्य सिद्धान्तविरुद्धत्वात् । न च वह्निशाब्देच्छा-विशिष्टशाब्दसामग्रीकाले वह्निमान्पर्वतो घटवानित्याद्यनुमितेरप्य-नङ्गीकारान्नोक्तव्यभिचार इति वाच्यम्। भिन्ने विषये अनुमिति-सामग्र्याः बलवत्त्वस्य सिद्धान्त सिद्धतया तादृशानङ्गीकारा-संभवादित्यलं पल्लवेन ॥

इति प्रमाणशब्दलक्षणविचारः

## शब्दप्रामाण्यनिरूपणम्

ननु शब्दो न प्रमाणम्, तस्य तत्त्वे[1] मानाभावात् । नचैवं शब्दश्रवणानन्तरं शाब्दबोधासिद्ध्या प्रवृत्त्याद्यनुपपत्ति-रिति वाच्यम् । पदार्थोपस्थित्या पदार्थानां संसर्गावगाहिमान-सोपनीतभानेनैव तदुपपत्तेरिति चेन्न ।

शाब्दयामीत्याकारकशाब्दत्वावच्छिन्नावगाहिसर्वसिद्धा-नुव्यवसायेन शाब्दत्वजातिसिद्धौ तदवच्छिन्नकारणतया शब्दस्य प्रमाणत्वावश्यकत्वात् ।

---

1 तत्त्वे — प्रमाणत्वे ।

## शाब्दत्वस्य मानसत्वव्याप्यत्वात् शब्दस्य प्रत्यक्ष-प्रमाणत्वाक्षेपः, तत्परिहारश्च

---

अथ उक्तानुव्यवसायबलात् शाब्दत्वसिद्धावपि तस्य मानसत्वव्याप्यत्वोपगमेन तदवच्छिन्नकारणस्य[1] शब्दस्य प्रत्यक्षप्रमाणत्वमेव[2] । न च शाब्दत्वस्य मानसत्वव्याप्यत्वेऽपि पदजन्यपदार्थोपस्थित्यादिशून्यकाले तदवच्छिन्नापत्तिवारणाय तदावच्छिन्नं प्रति पदजन्यपदार्थोपस्थित्यादेः हेतुत्वस्यावश्यकत्वे शाब्दत्वस्य मानसत्वव्याप्यत्वे मानाभावादिति वाच्यम् । शाब्दत्वस्य मानसत्वविरुद्धत्वे शाब्दसामग्रीकाले मानसवारणाय-मानसत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयम् । शाब्दत्वस्य मानसत्वव्याप्यत्वमते तदा[3] मानसोत्प-(न्न) [त्ता] विष्टापत्त्या तदकल्पनेन लाघवमिति, लाघवेन शाब्दत्वस्य मानसत्वव्याप्यत्वसिद्धेर्दुर्वारत्वादिति चेन्न ।

---

1 तदवच्छिन्नकारणस्य — शाब्दत्वावच्छिन्नकारणस्य ।

2 प्रत्यक्षप्रमाणत्वमेवेति — शाब्दत्व व्यापकमानसत्वस्य प्रत्यक्ष-त्वव्याप्यतया शाब्दत्वाश्रयबुद्धेः प्रत्यक्ष प्रमात्वादिति भावः ।

3 तदा — शाब्दसामग्रीकाले ।

भिन्नविषयकचाक्षुषादिसामग्रीकाले शाब्दान्यमानसवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकत्वस्य सर्वसिद्धतया शाब्दत्वस्य मानसत्वव्याप्यत्वे तादृशसामग्रीकाले शाब्दबोधानुपपत्त्या,[1] तादृशसामग्र्याः शाब्दान्यमानसत्वमेव प्रतिबध्यतावच्छेदकं वाच्यमिति तत्र शाब्दान्यत्वनिवेशप्रयुक्तगौरवस्य, तस्य मानसत्वस्य च मिथो विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तप्रतिबन्धकताधिक्यप्रयुक्तगौरवस्य[2] च दुर्वारत्वात् । एतेन, पूर्वोक्तमानसं प्रति शाब्दसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवमपि परास्तम् । भिन्नविषयकचाक्षुषादिसामग्र्यभावरूपकारण (व) [स] त्वात् शाब्दसामग्रीकाले शाब्दान्यमानसवारणाय शाब्दान्यमानसत्वावच्छिन्नं प्रति शाब्दसामग्रीप्रतिबन्धकताकल्पनावश्यकत्वात् । परन्तु तत्प्रतिबध्यतावच्छेदककोटौ शाब्दान्यत्वस्याधिकस्य निवेशात् विपरीतमेव गौरवम् । अधिकमनुमानप्रामाण्यव्यवस्थापनोक्तरीत्या अनुसन्धेयमिति दिक् ।

---

1 शाब्दबोधानुपपत्त्येति — मानसस्य तादृशसामग्री प्रतिबध्यत्वे शाब्दस्यापि तत्प्रतिबध्यत्वादिति भावः ।

2 प्रतिबन्धकताधिक्येति — शाब्दान्यत्वविशिष्टमानसत्वावच्छिन्ना मानसत्वविशिष्टशाब्दान्यत्वावच्छिन्ना च प्रतिबध्यता द्वयी । अतः तन्निरूपितप्रतिबन्धकतयोरपि द्वित्वमिति प्रतिबन्धकताधिक्यं बोध्यम् ।

## शब्दस्यानुमानेऽन्तर्भावः इति वैशेषिकमतनिरूपणम्

---

अत्र वैशेषिकाः[1], शब्दस्य प्रमाणत्वसिद्धावपि न प्रमाणान्तरत्वम्, अनुमान एवान्तर्भावसंभवात् । तथा हि(घटवानयेत्यादि) पदानि तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्ब (त्व) त्वात् घटमानयेत्यादिपदकदम्बवत् इत्यनुमानेन संसर्गज्ञानसिद्धौ ज्ञानावच्छेदकतया[2] पदार्थसंसर्गसिद्धिः संभवतीति शब्दो न पृथक् प्रमाणम् ।

अथ रजतज्ञानवानयमिति ज्ञानात् प्रवृत्तिवारणाय पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानस्यैव प्रवर्तकतया[3] प्रवर्तकज्ञानं नानुमानात् सिद्ध्यतीति प्रवर्तकज्ञानसंपत्त्यर्थं शब्दप्रामाण्यमावश्यकम् । न च पुरोवर्तिनि रजतानयनार्थिप्रवृत्तौ परोक्षज्ञानस्य नोपादानप्रत्यक्षविधया, नेष्टसाधनत्वकृतिसाध्यत्वज्ञानविधया /वा/ हेतुतेति न प्रवृत्त्यनुरोधेन[4] शब्दप्रामाण्य-

---

1 वैशेषिका इति — अस्य व्यवहितेन वदन्ति इत्यनेन संवन्धः ।

2 ज्ञानावच्छेदकतया — ज्ञानविशेषणतया ।

3 वर्तकतया -- प्रवर्तकत्वेन वक्तव्यतया ।

4 प्रवृत्त्यनुरोधेनेति — त्रयाणामेव ज्ञानानां प्रवृत्तिहेतुत्वादिति भावः ।

मिति वाच्यम् । रजतानयनमिष्टसाधनं कृतिसाध्यं चेति ज्ञानस्य इदन्त्वेन पुरोवर्तिरूपोपादानप्रत्यक्षस्य [च] सत्त्वेऽपि पुरोवर्तिनि रजतत्वविपरीतज्ञानदशायां[1] न रजतानयनार्थिप्रवृत्तिः, अपितु शब्दादिना तत्र रजतत्वनिश्चये सत्येव इत्यनुसारेण तज्ज्ञानस्यापि[2] स्वातन्त्र्येण हेतुत्वात् । न चैवमपि न प्रवर्तक-ज्ञानसंपत्तिः, इदं रजतमिति शब्दजन्यज्ञानस्य रजतप्रकार-कत्वादिति[3] वाच्यम् । तत्र रजतविशेषणतापन्नस्य रजतत्वस्यापि धर्मिविशेषणतया[4] भानोपगमेन सामञ्जस्यादिति [चेन्न] लाघवेन, अत्र रजतत्वमिति ज्ञानस्य प्रवर्तकत्वानुरोधेन[5] च पुरोवर्तीष्टताव-

---

1 रजतत्वविपरीतज्ञानं -- रजतत्वाभावस्य रजतभेदस्य वा ज्ञानम् ।

2 तज्ज्ञानस्यापि — पुरोवर्तिविशेष्यकेष्टतावच्छेदकरजतत्वप्रकारक-ज्ञानस्यापि ।

3 रजतप्रकारकत्वादिति — नामार्थयोरभेदान्वयव्युत्पत्तेे रजतपदार्थ-स्याभेदेन इदमि प्रकारतया भानादिति भावः ।

4 धर्मिविशेषणतया — रजतस्य धर्मिणि-विशेष्ये इदमि समवायेन प्रकारतया । रजतविशेषणतया रजतपदोपस्थापितस्य रजतत्व-स्य धर्मिपारतन्त्र्येण समवायेन इदमि विशेषणतया भानं स्वीक्रियते इति भावः ।

5 प्रवर्तकत्वानुरोधेनेति — रजतत्वविशेष्यकस्य अत्र रजतत्वमिति ज्ञानस्य रजतत्वप्रकारकत्वाभावादिति भावः ।

च्छेदकवैशिष्ट्यावगाहिज्ञानत्वेनैव प्रवर्तकतया सा (ध्यस्य)[ध्ये] ज्ञानपदस्य प्रमापरत्वेन प्रमाणघटकतया प्रकृते तस्याप्यक्षतत्वात् । न चानुमितेः व्यापकतावच्छेदकप्रकारकत्वनियमेन अनुमानात् स्मारितपदार्थत्वेनैव रजतादिसंसर्गसिद्धिः । न तु रजतत्वादिना तत्संसर्ग[1] इति तत्सिद्ध्यर्थं शब्दप्रामाण्यमावश्यकमिति वाच्यम् । रजतादिपदश्रवणेन रजतत्वादिना रजतादेरुपस्थितौ इतरबाधबलात् विशेषरूपेणानुमितौ भानसंभवात् । लाघवज्ञाने निराबाधसत्त्वे व्यापकतानवच्छेदकरूपेणापि व्यापकभानस्य सर्वसिद्धत्वात्[2] ।

---

## पदार्थपक्षकानुमाननिरूपणम्

यद्वा, रजतादिपदश्रवणेन रजताद्युपस्थित्या, त (द्व्याप्य) [द्वाक्य] घटकपदस्मारिताः रजतानयनादयः पदार्थाः एतद्वाक्य-

---

1 तत्संसर्गः— रजतादेः संसर्गः । -

2 सर्वसिद्धत्वादिति — जन्यं कृतिजन्यमित्यनुमानस्थले, कृतिजन्यत्वव्याप्यकार्यत्ववज्जन्यमिति परामर्शात् कृतेः नित्यत्वे एकत्वे च लाघवमिति ज्ञानसहकृतात्, जन्यं नित्यैककृतिजन्यमित्यनुमितिः नैयायिकसिद्धा अनुसन्धेया ।

तात्पर्यविषयमिथःसंसर्गवन्तः, आकाङ्क्षादि (पदेत) [म] द्वाक्यघटकपदस्मारितत्वात्, घटेन जलमाहरेत्यादिवाक्यघटक-पदस्मारितार्थवत् इत्यनुमानात् विशेषरूपेण[1] संसर्गसिद्धिः ।

---

### अनुमानेन संसर्गनिष्ठविलक्षणविषयताशालिज्ञाना-सिद्धिरिति शङ्का, तत्परिहारश्च

य (त्र) [त्त्] शाब्दबोधे घटकर्मत्वाधाराधेयभावादिः[2] संसर्गमर्यादया[3] भासते इति संसर्गताख्यविलक्षणविषयता-शालित्वं तस्य । अनुमितौ तु पदार्थ (स्य) संसर्ग [स्य] विशेषणतैव । साध्यघटकतया संबन्धस्य विशेषणतया न तादृशविषयताशालित्वमिति शाब्दबोधस्यानुमितिवैलक्षण्येन विलक्षणप्रतीतिनिर्वाहाय शब्दप्रामाण्यमावश्यकमिति (न) ।

---

1 विशेषरूपेण संसर्गसिद्धिः — रजतत्वादिना रजतादिसंसर्ग-सिद्धिः ।

2 घटकर्मत्वाधाराधेयभावादिः — घटपदार्थस्य द्वितीयार्थकर्मत्वस्य च आधाराधेयभावादिः आधेयत्वादिपर्यवसितः ।

3 संसर्गस्य मर्यादा - अभिव्यक्तिः यया इति व्युत्पत्त्या आकाङ्क्षा संसर्गमर्यादा । यद्वा विलक्षणसांसर्गिक विषयता संसर्गमर्यादा । तृतीयार्थः अभेदः धात्वर्थभानान्वयी ।

तदसत् । यत्र धर्मिणि अर्थे याद्दशसंबन्धेन यदर्थ-प्रकारकप्रतीतिः (नियामि) [नैयायि] कानामभिमता, विशिष्य तस्मिन्नर्थे ताद्दशसंबन्धेन तत्साध्यकानुमितेरुपगमेनादोषात् ।

---

विशिष्टवाक्यार्थबोधाय शब्दप्रामाण्यशङ्का, तत्परिहारश्च

अथ उपदर्शितरीत्या चैत्रो घटमानयतीत्यादौ कर्मत्वा-नयन-कृति-चैत्रेषु आधेयत्वनिरूपकत्वानुकूलत्वाश्रयत्वसंसर्गैः घट - कर्मत्व - आनयन - कृतीनां समूहालम्बनानुमितेः कर्मत्वं घटीयम्, आनयनं सकर्मकम्, कृतिरा[न]यनीया, चैत्रः कृति-मान् इत्याकारिकायाः संभवेऽपि, घटकर्मकानयनानुकूलकृति-मांश्चैत्रः इत्याकारकविशिष्टवाक्यार्थबोधासंभवेन, ताद्दशवाक्या-र्थबोधाय शब्दस्य प्रमाणान्तरत्वमावश्यकमिति चेन्न ।

तत्र खले कपोतन्यायेन विशेष्ये विशेषणमिति रीत्या ताद्द-शवाक्यार्थबोधोपगमे ममापि घटकर्मत्वानयनकृतिचैत्राणां समू-हालम्बनोपस्थित्याऽऽहत्यैव विशेष्ये विशेषणमिति रीत्या, चैत्रे घटकर्मकानयनकृत्यनुमितेः । राजपुरप्रवेशन्यायेन विशिष्टस्य विशिष्टयमिति रीत्या तदुपगमे च, प्रथमं कर्मता घ(टकी) [टी]

या इत्यनुमितेः, ततः आनयनं घटकर्मकं, ततः कृतिः घटकर्मकान (वृत्ती) [यनानुकूला], ततः चैत्रो घटकर्मकानयनानुकूलकृतिमान् इत्यनुमितेरुपगमेनादोषात् ।

---

### आधेयत्वानुयोगित्वयोः वृत्त्यनियामकत्वेन व्यापकताघटकत्वासंभवात् तेन संबन्धेनानुमित्यसंभवशङ्का तन्निरासश्च

यत्तु, घटमानयेत्यदौ कर्मत्वादावाधेयतासंबन्धेन घटाद्यनुमितिर्न संभवति । एवं घटो नास्तीत्यादौ अभावे अनु (प) योगितया घटादेरनुमितिर्न संभवति । वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया तत्संबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या तत्संबन्धस्य व्यापकत्वाघटकतया[1] तेन संबन्धेन घटादेर्भानासंभवेन शब्दस्य प्रमा (ण्य) [णा] न्तरत्वमावश्यकमिति ।

---

1 व्यापकत्वाघटकतयेति—हेतुव्यापकताघटक हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसंबन्धस्यैव व्यापकताघटकसम्बन्धत्वमिति भावः ।

त(त्र)[त्र]वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वेऽपि साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यघटितव्याप्तौ तत्संबन्धावच्छिन्नप्रतियोगिताया अनिवेशेन[1] वृत्त्यनियामकसंबन्धस्यापि व्यापकताघटकत्वसंभवात्। वृत्त्यनियामकसंबन्धस्याप्यभावप्रतियोगितावच्छेदकत्वे बाधकाभावेन[2] साध्य-

---

1 अनिवेशेनेति — हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः। धूमसमानाधिकरणस्य समवायेन वह्न्यभावस्य प्रतियोगितामादायाव्याप्तिवारणाय प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम्। हेतुसमानाधिकरणाभावे विशेषणं प्रतियोगिवैयधिकरण्यं यदि प्रतियोगितावच्छेदकसम्बन्धघटितं, तदा समवायेन वह्निव्यधिकरणं समवायसम्बन्धावच्छिन्नाभावमुपादायाव्याप्तेरसम्भवात्. तद्वारकं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं प्रतियोगितायां निवेशनीयम्। साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशे समवायेन वह्न्यभावस्य साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणत्वेनोपादानासम्भवादव्याप्तिविरहः इति साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं न निवेश्यमिति भावः।

2 बाधकाभावेनेति — तत्सम्बन्धावच्छिन्नाया अतिरिक्तप्रतियोगितायाः कल्पनागौरवं बाधकं भविष्यति। अनुभवबलेन तथा सिद्धौ फलमुखत्वान्न दोषः इति भावः। वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्ववादिनां नैयायिकानामपि 'द्रव्यं गच्छति नाभावम्' इत्यत्र द्वितीयार्थे समवेतत्वे निरूपितत्वेनवृत्त्यनियामकेन प्रकृत्यर्थाभावबोधं विना गतिविरहः इत्यपि बोध्यम्।

तावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानिवेशेऽपि तस्य व्यापकताघटकत्वसंभवाच्च ।

---

## घटादन्यः इत्यत्र अन्यत्वे घटप्रतियोगिकत्वभानाय शब्दप्रामाण्यस्वीकाराक्षेपः, तन्निराकरणंच

अथ, घटादन्यः इत्यादौ पदार्थैकदेशे पदार्थविशेषणताद(त्ते)[न्ने]अन्यत्वादौ पञ्चम्यन्तार्थप्रतियोगिकत्वादेः[1] भानं नानुमानान्निर्वहति । अनुमितौ पक्षस्य मुख्यविशेष्यतयैव भानात् । नचान्यत्वादिरूपपक्षस्य धर्मिणि विशेषणतया भानं, धर्मिपक्षकतत्साध्यकानुमानान्तरेण च शाब्दबोधसमानाकारानुमितिनिर्वाहः इति वाच्यम् । शब्दाद्धर्मिणि[2] अन्यत्वादेः निर्धर्मितावच्छेदकस्य भानात्, अनुमानस्य च पक्षतावच्छेदकावच्छिन्ने एव साध्यभासकतया ततः[3] तादृशभाननिर्वाहादिति चेन्न । एक[4]-

---

1 प्रतियोगिकत्वादेः — घटप्रतियोगिकत्वादेः ।
2 धर्मिणि — अन्यपदार्थे भेदवति ।
3 ततः — अन्यत्वपक्षकानुमानात् ।
4 एकदेशे — पदार्थैकदेशे - पदजन्योपस्थितिप्रकारे इति यावत् ।

देशे पदार्थो(निर)न्वयस्य क्वाप्यनभ्युपगमेन घटादन्यः इत्यादौ अन्यत्वादिविशिष्टे एव अन्यत्वादिघटितसंबन्धेन[1] घटप्रतियोगित्वादेरन्वयोपगमेन धर्मिविशेषणतापन्ने (त्यादौ) [अन्यत्वादौ] साक्षात्संबन्धेन[2] तत्प्रकारकभानस्यानभ्युपगमात् ।

---

योग्यतादिघटितहेतुनिर्णयाभावेनानुमानान्न संसर्गबोधः
इति शब्दप्रामाण्यमिति मणिकारानुसारिणां मतम्

यत्तु, मणिकारानुसारिभिरुक्तम्—योग्यतासंशयकालेऽपि शाब्दबोधोऽनुभवसिद्धः । तदानीं योग्यताघटितोक्तहेतोः[3] निर्णयासंभवेनानुमितिर्न संभवति । लिङ्गतावच्छेदकांशे लिङ्गांशे इव संशयात्मकपरामर्शस्यानुमित्यजनकतया, तदंशे निर्णया-

---

1 अन्यत्वादिघटितसम्बन्धेन — स्वनिरूपकभेदवत्त्वसंबन्धेन । एकदेशान्वयस्य प्रसिद्धोदाहरणे चैत्रस्य गुरुः इत्यादावपि षष्ठ्यर्थस्य स्वाश्रयगुरुत्ववत्त्वसम्बन्धेन गुरुपदार्थे एवान्वयः बोध्यः ।

2 साक्षात्सम्बन्धेन — निरूपकतासम्बन्धेन ।

3 योग्यताघटितोक्तहेतोः — आकाङ्क्षायोग्यतादिमत्पदकदम्बत्वादिहेतोः ।

त्मक परामर्शस्यैवानुमितिजनकत्वादिति शाब्दाख्यप्रमितिविशेष-स्वीकारस्यावश्यकतया तदनुरोधेन शब्दस्य प्रमाणान्तरत्व-स्वीकार आवश्यकः। न च [1]योग्यतासंशयस्य ग्राह्यसंशयपर्य-वसन्नतया तस्य [2]चानुमित्यनुगुणतया ग्राह्यसंशयान्यसंशय-भेदस्यैवानुमित्यौपयिकनिश्चयत्वघटकतया योग्यतांशे संशयात्म-कादपि परामर्शान्नानुमित्यनुपपत्तिरिति वाच्यम्। गौरवात, ग्राह्यसं-शयान्यसंशयभेदस्यानुमितिजनकतावच्छेदककोटिनिविष्टनिश्च-यत्वघटकत्वे, सर्वत्र [3]निश्चितस्वव्याप्तिकसंदिग्धसाध्यरूपलिङ्ग-कात् वह्निव्याप्यवह्निमान्नवेत्याद्याकारकपरामर्शादनुमित्यापत्तेश्च।

ननु लिङ्गतावच्छेदकाविषयकस्य साध्याभाववदवृत्ति-त्वरूपव्याप्तिज्ञानस्यानुमितिहेतुत्वोपगमेन लिङ्गतावच्छेदकांशे संशयत्वस्याकिञ्चित्करतया संदिग्धयोग्यताघटितधर्मावच्छिन्न-

---

1 योग्यतासंशयस्य — एकपदार्थे अपरपदार्थसंसर्गरूपयोग्यता-संशयस्य।

2 अनुमित्यनुगुणतयेति — पक्षतारूपत्वेनेत्यादिः।

3 निश्चितस्वव्याप्तिकेति — साध्यस्य लिङ्गत्वे, तत्र स्वस्य साध्यस्य व्याप्तिर्निश्चितैव। पक्षवृत्तित्वं संदिग्धम्। सर्वत्र व्याप्त्यंशे निश्चयात्मकः साध्यरूपलिङ्गांशे संशयात्मकः परामर्शः सुलभो बोध्यः।

लिङ्गकपरामर्शादप्यनुमितिः संभवति । एवं च बाधाभावरूपयोग्यतयाः संशये बाधाभावत्वेन तन्निश्चयासंभवेऽपि व्याप्यत्वेन तन्निश्चयसंभवेन योग्यताहेतुकाप्यनुमितिः संभवतीति चेत् । मैवम्, हेतुतावच्छेदकस्य पक्षवृत्तौ सन्देहे पक्षेऽपि हेतुतावच्छेदकविशिष्टस्यौचित्यावर्जितसंशयेन व्याप्यतावच्छेदकविशिष्टवत्तानिश्चयं विना व्याप्यत्वपुरस्कारेणापि पक्षे व्याप्यनिश्चयासंभवात्, विरोधिनिश्चयासत्वेन व्याप्यवत्ताबुध्दौ व्याप्यसामान्याभावस्य भाने [1]बाधकाभावात् । अत एव, पर्वतीयहेतौ, अयं धूमो वा धूलीपटलो वेति सन्देहे, हेत्वन्तरस्यालोकादेरनिश्चये कदापि न वह्न्यनुमितिः । नचैवमयमालोको धूमो वा उभयथापि वह्निव्याप्यः इति संशयस्थले कथमनुमितिरिति वाच्यम् । तत्र व्याप्यतावच्छेदकतयावगतान्यतरत्वादिना पक्षे धूमादिनिश्चयानन्तरमेवानुमितेरुपगमादिति ।

(आहुः)

तदप्यसत् । योग्यतायाः त (द्वृत्ति) [त्रुटित]हेतोर्वा सर्वत्र निश्चयासंभवेऽपि, तदनिश्चयदशायां तत्रापि क्लृप्तहेतु [ता]

---

1 बाधकाभावादिति — तथाच व्याप्यवत्ताबुद्धौ व्याप्यसामान्याभावभाने सा बुद्धिः संशयरूपैवेति भावः ।

कावश्याभ्युपेयनिश्चयविषयतात्पर्यलिङ्गकपरामर्शादेव शाब्द (सामान्या) [समाना] कारानुमितिसंभवेनानुमानान्तर्भावसंभवे शब्दस्य प्रमाणान्तरत्वासिद्धेः । अथ, तात्पर्यं तद्वत्तया बुबोधयिषितत्वम् । तथा च कर्मत्वादिकमाधेयतादिना घटादिमत्, तेन घटादिमत्तया बुबोधयिषितत्वादित्याकारकानुमाने एवान्तर्भावो वाच्यः । स च न संभवति । [1]तेन घटादिशून्यस्यापि तेन संबन्धेन घटादिमत्तया बुबोधयिषितत्वेन तत्वोक्तहेतोर्व्यभिचारादिति चेन्न । व्यभिचाराप्रतिसन्धानदशायां भ्रमात्मकोक्तलिङ्गकपरामर्शात्, तत्प्रतिसन्धानदशायां च भ्रमाद्यनधीनत्वादिरूपविशेषणावच्छिन्नोक्तलिङ्गकप्रमात्मकपरामर्शादनुमितिसंभवादिति वदन्ति ।

---

## नैयायिकमतेन शब्दस्य प्रमाणान्तरत्वस्थापनम्

अत्र नैयायिकाः — व्याप्त्यादिप्रतिसन्धानविरहदशायामपि शाब्दबोधस्यानुभविकतया तदानीमनुमितिसामग्र्यभावे-

---

1 तेन — आधेयतासंबन्धेन ।

नानुमित्यसंभवात् शब्दस्य प्रमाणान्तरत्वमावश्यकम् । यदि च शब्दस्य प्रमाणान्तरत्वे सर्वत्र शाब्दबोधजनकसाम-(ग्रयेतर) [ग्रयन्तर] कल्पने गौरवमिति सर्वत्र शाब्दबोधस्थले व्याप्त्यादि प्रतिसन्धानकल्पनमेव सम्यक्, तथासति (क्रम) [क्लृप्त] सामग्रैयत्रोपपत्तौ सामग्र्यन्तराकल्पनेन लाघवादिति विभाव्यते । तथापि [1]न क्षतिः । चैत्रवाक्यादयमर्थः श्रुतः इत्यादिव्य वहारविषयतया शाब्दाख्यविलक्षणानुभवस्वीकार-स्यावश्यकतया तत्करणतया शब्दस्य प्रमाणान्तरत्वावश्य-कत्वात् ।

---

## श्रुधातोरनुमित्यर्थकत्वाक्षेपः, तन्निरासश्च

म (नु) [च] अत्र श्रुधातोः अनुमित्यर्थकतया न विलक्षणानुभव सिद्धिः । कुतस्तत्कारणतया शब्दस्य प्रमाणा-न्तरत्वमिति वाच्यम् । तथासति पर्वतो वह्निमानित्याद्यनुमित्य-नन्तरं पर्वते वह्निरनुमितः इत्यादिव्यवहारवत्, पर्वते वह्निः श्रुतः इत्यादिव्यवहारापत्तेः । न च शब्दहेतुकानुमि (तिः) [तेः]

---

1 न क्षतिः — न शब्दस्य प्रमाणान्तरत्वक्षतिः ।

श्रुधात्वर्थत्वोपगमान्नोक्तापत्तिरिति वाच्यम् । तथापि यत्र शब्दहेतुना आकाशे आकाशपदशक्य [त्व] मनुमितं, त (त्रा) [त्रा] काशे आकाशपदशक्यत्वमनुमितमिति व्यवहारवत् आकाशे आकाशपदशक्यत्वं श्रुतमिति व्यवहारस्य दुर्वारत्वात् । न च स्मारितत्वसंबन्धेन शब्दहेतुकानुमितेः श्रुधात्वर्थत्वान्नोक्तदोषः, उक्तस्थले समवायेन शब्दस्य हेतुत्वादिति वाच्यम् । एवमपि आकाङ्क्षादिज्ञानविरहदशायां यत्र स्मारितत्वसंबन्धेन शब्दहेतुकानुमितिः, तत्र श्रुतत्वव्यवहारस्योद्धर्तुमशक्यत्वात् । न च नैयायिकसिद्धशाब्दसामग्रीसमवधानाव्यवहितोत्तरानुमितेः श्रुधात्वर्थत्वान्न दोषः इति वाच्यम् । तादृशसामग्र्याद्यप्रतिसन्धाने तादृशव्यवहारानुपपत्तेः । अनन्तायाः शब्दार्थादिभेदभिन्नसामग्र्याः अननुगमेन श्रुधातुशक्तिग्रहानुपपत्तेश्च ।

## श्रुधातोः श्रावणप्रत्यक्षमर्थः इति स्वीकारेण श्रुतोऽयमर्थः इत्यस्योपपादनम्, तन्निरासश्च

एतेन, श्रुधातोः श्रावणप्रत्यक्षमेवार्थः । श्रूयते शब्दः इत्यादौ [1]कर्मप्रत्ययस्य [2]प्रतिपत्त्यनुबन्धिविषयतार्थकत्वेऽपि चैत्रवाक्यादयमर्थः श्रुतः इत्यादौ [3]व्यापारानुबन्धिविषयतैवार्थः उच्यते, उक्तः इत्यादौ तादृशविषयताया अपि कर्मप्रत्ययार्थत्वस्य [4]क्लृप्तत्वात् । एवं च श्रावणप्रत्यक्षीय शब्दलिङ्गकानुमित्यात्मकव्यापारविषयताया अर्थे सत्त्वेन चैत्रवाक्यादयमर्थः श्रुतः इत्यादिव्यवहारोपपत्तौ न तदनुरोधेन शाब्दाख्यविलक्षणानुभवसिद्धिरिति न शब्दप्रमाणान्तरत्वम् । अत एव, 'आत्मा वाऽरे श्रोतव्यः' इति श्रुत्यनुरोधेन श्रुधातोः 'शाब्दानु[भ] वा-

---

1 कर्मप्रत्ययस्य — कर्मत्वार्थकाख्यातस्य ।

2 प्रतिपत्त्यनुबन्धिविषयतार्थकत्वेऽपि — ज्ञाननिरूपितविषयतार्थकत्वेऽपि । धात्वर्थे श्रावणप्रत्यक्षे शब्दस्य विषयत्वादिति भावः

3 व्यापारानुबन्धिविषयतैव — धात्वर्थश्रावणप्रत्यक्षस्य यः शब्दलिङ्गकानुमितिरूपो व्यापारः तन्निरूपितविषयतैव ।

4 क्लृप्तत्वादिति — उच्यते इत्यादौ शब्दस्यैव धात्वर्थत्वात् तस्य च निर्विषयत्वात् तदीयव्यापारात्मकशाब्दबोधविषयताया एवाख्यातार्थत्वं नैयायिकैरपि वक्तव्यमिति भावः ।

(दा) र्थकत्वमपि नाशङ्क्यम् । तत्रापि [1]उक्तरीत्यैवोपपत्तेः इत्यपि परास्तम् ।

आकाङ्क्षादिज्ञानाभावकालीनशब्दलिङ्गकानुमितिमादाय तद्विषये श्रुतव्यवहारापत्तेः । किंच, श्रुधातोः श्रावणप्रत्यक्षमात्रार्थकत्वे चैत्रवाक्यात् श्रुतोऽयमर्थः इत्यादौ [2]हेतुमत्त्वेऽप्यनुपपत्तिः । श्रावणप्रत्यक्षे वाक्यस्य विषयतया हेतुत्वेऽपि (घटो)' [घटात्] दृष्टो घटः' इत्यादि [3]प्रयोगवारणाय विषयत्वेन हेतुतातिरिक्तायाः हेतुताया एव हेतुपञ्चम्यर्थतया तस्या वाक्येऽसत्त्वात् । न च कर्मप्रत्ययार्थघटकज्ञाने हेतुपञ्चम्यर्थान्वयः, वाक्यपदलक्ष्यवाक्यज्ञानस्य अनुमित्यात्मकतादृशज्ञाने हेतुत्वादिति वाच्यम् । तादृशज्ञाने हेतुपञ्चम्यर्थान्वयोपगमे, अनुमितिरूपे तादृशज्ञाने व्याप्तिज्ञानादेः हेतुतया,

---

1 उक्तरीत्यैव — धात्वर्थश्रावणप्रत्यक्षव्यापारीभूतशब्दलिङ्गकानुमितिविषयतायाः कर्मप्रत्ययेन बोधनमिति रीत्यैवं ।

2 हेतुमत्त्वेऽपीति — धात्वर्थान्वयिनि पञ्चम्यन्तार्थे इत्यादिः ।

3 प्रयोगेति — विषयतया घटहेतुकदर्शनविषयत्वस्य घटे अबाधात् घटात् दृष्टो घटः इति प्रयोगापत्तिर्बोध्या ।

व्याप्त्यादेः श्रुतः इत्यादिव्यवहारस्य [1]दुर्वारत्वात् । तस्मात् शाब्दाख्यविलक्षणानुभवस्य श्रुधात्वर्थत्वमावश्यकम् ।

---

शाब्दत्वस्यानुमितित्वव्याप्यत्वात् शब्दप्रमाणस्यानुमानेऽन्तर्भावः
इति नव्यवैशेषिकमतनिरूपणम्

[2]यत्तु शाब्दाख्यविलक्षणानुभवस्य श्रुधात्वर्थत्वेऽपि न (तत्कारण) तत्करणतया शब्दस्य प्रमाणान्तरत्वम् । शाब्दत्वस्यानुमितित्वव्याप्यत्वोपगमेनानु (भवा) [माना] न्तर्भावात् ।

---

1 दुर्वारत्वादिति— व्याप्त्यादिज्ञानहेतुका या श्रावणप्रत्यक्षव्यापारभूता शब्दलिङ्गकानुमितिः तद्विषयत्वस्याबाधादिति भावः ।

2 यत्त्विति — अस्य व्यवहितेन नव्यवैशेषिकैरुक्तमित्यनेन संबन्धः ।

न च शाब्दबोधे अनुमितित्वसत्त्वे मानाभावेन शाब्दत्वस्यानुमितित्वव्याप्यत्वं न संभवतीति वाच्यम् । [1]विरुद्धत्वमते समानविषयकप्रत्यक्षसामग्रीकाले तादृशशाब्दबोधवारणाय [2]तत्र तादृशसामग्र्याः प्रतिबन्धकत्वान्तरं कल्पनीयमिति गौरवम् । [3]व्याप्यत्वमते तु तादृशसामग्र्याः [4]अनुमितिस्थलीयक्लृप्तसामग्रीप्रतिबन्धकतयैवोपपत्तौ न तत्कल्पनमिति लाघवतर्कसहकृतानुमानस्यैव तत्र मानत्वात् ।

अथ शाब्दत्वानुमितित्वप्रकारकेच्छयोः पृथगुत्तेजकत्वानुरोधेन प्रतिबन्धकताभेदस्यावश्यकतया न क्लृप्तप्रतिबन्धकतयोपपत्तिः । न चैकत्रैवे (शाब्दं यस्य) [2]इच्छाद्वयस्योत्तेजकत्वात् पृथगुत्तेजकत्वमेवासिद्धमिति वाच्यम् । तथा सति शाब्दत्वप्रका-

1 विरुद्धत्वमते — शाब्दत्वस्यानुमितित्वविरुद्धत्वमिति न्यायमते ।
2 तत्र — शाब्दबोधे ।
3 व्याप्यत्वमते — शाब्दत्वस्यानुमितित्वव्याप्यत्वमते ।
4 अनुमितिस्थलीयेत्यादि — अनुमितिस्थलीया क्लृप्ता या समानविषयकप्रत्यक्षसामग्रीनिष्ठप्रतिबन्धकता तयैवेत्यर्थः ।
5 इच्छाद्वयस्येति — शाब्दत्वप्रकारिकायाः अनुमितित्वप्रकारिकायाश्चेच्छाया इत्यर्थः । तथाचेच्छाविरहद्वयविशिष्टप्रत्यक्षसामग्र्याः एकैव प्रतिबन्धकतेति भावः ।

स्येच्छाकाले प्रतिबन्धकताद‍ृशसामग्रीसत्त्वे असत्यां शाब्दसामग्र्यां शाब्दान्यानुमित्यापत्तेरिति चेन्न ।

याद‍ृशविषयविशेषेषु समानविषयकप्रत्यक्षसामग्रीकाले शाब्दत्वप्रकारकेच्छा (क) [स]त्त्वान्न ताद‍ृशशाब्दबोधः, ताद‍ृशानन्तविषयेषु इच्छोत्तेजकत्वानुरोधेन प्रतिबन्धकताभेदाभावेन शाब्दबोधे प्रतिबन्धकत्वान्तरकल्पनप्रयुक्तलाघवस्यानवकाशात् ।

एवं [1]विरुद्धत्वमते, एकस्मिन्नेव विषये शाब्दानुमित्योः सामग्रीसत्त्वे अनुमित्यापत्तिवारणाय अनुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्वान्तरकल्पने गौरवम् । [2]व्याप्यत्वमते तु [3]तत्र शाब्दात्मकानुमितेरुत्पत्त्या इष्टापत्त्या उक्तापत्त्यभावेन तदकल्पने लाघवमिति लाघवसत्त्वेन तत्सहकृतानुमानमपि शाब्दबोधे अनुमितित्वसत्त्वे मानम् ।

---

1 विरुद्धत्वमते — शाब्दत्वस्यानुमितित्व विरुद्धत्वमते ।

2 व्याप्यत्वमते — शाब्दत्वस्यानुमितित्वव्याप्यत्वमते ।

3 तत्र — एकस्मिन् विषये शाब्दानुमित्योः सामग्रीसत्त्वे ।

## शाब्दत्वस्यानुमितित्वव्याप्यत्वे भिन्नविषयक प्रत्यक्षे शाब्दसामग्रीप्रतिबन्धकतायां अवच्छेदकगौरवं बाहुल्यं चेत्याक्षेपः, तन्निरासश्च

अथ, शाब्दत्वस्यानुमितित्वव्याप्यत्वे, शाब्दसामग्र्याः व्याप्त्यादिज्ञानघटिततया गुरुशरीरत्वे [न] भिन्नविषयकप्रत्यक्षादौ शाब्दसामग्रीप्रतिबन्धकतायामवच्छेदकगौरवम् । लिङ्गादिभेदेन एकैकविषय एव न्यायमतापेक्षया शाब्दसामग्रीबाहुल्येन प्रतिबन्धकताबाहुल्यं (वे) [चे] ति चेन्न । (अपिच) [अन्वयि] व्यतिरेकिलिङ्गकानुमित्योः सामग्रीभेदेऽपि एक(ज्ञानो)[जाती]यत्व (वद्वयभावा)[वत् व्याप्त्या] दिज्ञाननिरपेक्षपदज्ञानादिघटितसामग्र्याः शाब्दानुभवजनकत्वेऽपि तस्यानुमितिजातीयत्वाविरोधेन व्याप्त्यादिज्ञाने शाब्दसामग्रीघटकत्वस्यास्माभिरप्यनुपगमात् । न चव्याप्त्यादिज्ञानं विना शाब्दात्मकानुमित्युपगमे तत्र व्याप्त्यादिज्ञानस्यानुमितिहेतुतायां व्यभिचार इति वाच्यम्। अन्वयव्यतिरेकव्याप्तिज्ञानयोः [1]परस्परजन्यानुमिताविव,शाब्दत्वस्यानुमितित्वव्याप्यत्वेऽपि व्याप्त्यादिज्ञानाव्यवहितोत्तरत्वस्य तत्कार्य-

---

1 परस्परजन्यानुमिताविवेति — परस्परजन्यानुमितौ व्यभिचारवारणाय तत्तद्व्याप्तिज्ञानाव्यवहितोत्तरत्वे तत्तत्कार्यतावच्छेदकत्वस्यैव इति पर्यवसितार्थः ।

तावच्छेदकत्वेनैव तस्य निरासासंभवात् । न च शाब्दजनकस्याकाङ्क्षादिज्ञानस्य जन्यतावच्छेदककोटौ अनुमितित्वस्याप्रवेशात् कथं तादृशसामग्रीजन्यज्ञानस्यानुमितित्वमिति वाच्यम् । अनुमितित्वावच्छिन्नं प्रति [1]अभावज्ञानस्य कारणतया शाब्दसामग्र्याः [2]अभावज्ञानरूपानुमितित्वावच्छिन्नकारणात्मकाकाङ्क्षाज्ञानघटिततया तज्जन्यबोधस्यानुमितित्वसंभवात् ।

---

## पक्षताकार्यतावच्छेदके शाब्दान्यत्वनिवेशेन गौरवाक्षेपः, तन्निरासश्च

अथ, सिद्धिकाले शाब्दोद (यमतोऽत्र)[येन तत्र]पक्षताया अनुमितिहेतुत्वे [3]व्यभिचार इति तद्वारणाय शाब्दान्यानुमितित्वमेव [4]तज्जन्यतावच्छेदकं वाच्यमिति शाब्दत्वस्यानुमितित्वव्याप्यत्वे तत्र शाब्दान्यत्वनिवेशप्रयुक्तगौरवं दुर्वारमिति चेन्न ।

---

1 अभावज्ञानस्येति — व्याप्तिस्वरूपे अभावप्रवेशादिति भावः ।

2 अभावज्ञानरूपेति — आकाङ्क्षाज्ञानेन संबध्यते ।

3 व्यभिचार इति — सिद्ध्यभावात्मकपक्षताया अभावादिति भावः ।

4 तज्जन्यतावच्छेदकं—सिद्ध्यभावात्मकपक्षताजन्यतावच्छेदकम् ।

पक्षताया लिङ्गविशेषनियन्त्रिततया तत्तल्लिङ्गकानुमितौ तत्तल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्य हेतुतया [1]उभयलिङ्गकपरामर्शजन्य सिद्धिकालीनान्यलिङ्गकेच्छाधीनानुमितौ व्यभिचारवारणाय तत्तल्लिङ्गकेच्छाविरहविशिष्टसिद्धि [2]विशिष्टान्यत्वस्य जन्यतावच्छेदकत्वावश्यकतया सिद्धिकालीनशाब्दानुमितौ व्यभिचाराभावात् । न च व्याप्त्यादिज्ञानाजन्यशाब्दे अनुमितित्वोपगमे अपसिद्धान्त इति वाच्यम् । पक्षताया अजन्ये अनुमितित्वोपगन्तृणामस्माकं व्याप्त्यादिज्ञानाजन्येऽपि अनुमितित्वोपगमे अपसिद्धान्ताभावादिति, नव्यवैशेषिकैरुक्तम् ।

---

1 उभयलिङ्गकपरामर्शेत्यादि —वह्निव्याप्यधूमालोकोभयवान् पर्वतः इति परामर्शः पर्वतो वह्निमानिति सिद्धिश्च यत्र वर्तते तत्र धूमलिङ्गकानुमितीच्छायामसत्यां आलोकलिङ्गकानुमितीच्छया पर्वतो वह्निमानित्यनुमितिर्जायते। सा च आलोकलिङ्गिकेव धूमलिङ्गिकापि । तत्तलिङ्गकपरामर्शजन्यत्वस्यैवानुमितेः तत्तलिङ्गकत्वरूपत्वात् । तत्पूर्वं धूमलिङ्गकानुमितीच्छाविरहविशिष्टसिद्धिरेव वर्तते इति व्यभिचारः इति समुदायार्थः ।

2 सिद्धिविशिष्टेति — विशिष्टत्वमव्यवहितोत्तरत्वसंबन्धेन ।

## अनुमितित्वस्य शाब्दत्व व्याप्यत्वापत्तिरूपप्रतिबन्दीमुखेन नव्यवैशेषिकमतनिराकरणम्

तदत्यन्तमसत् । व्याप्त्यादिज्ञाननिरपेक्षशाब्दसामग्रीतः अनुमितिं स्वीकृत्य शाब्द (त्व) स्यानुमितित्वस्वीकारे विनिगमनाविरहेण (पदज्ञानादिनिरपेक्षानुमितिसामग्रीतः शाब्दबोधं स्वीकृत्यानुमितवस्य शाब्दत्वव्याप्यत्वापत्तेदुर्धर्षेण) पदज्ञानादिनिरपेक्षानुमितिसामग्रीतः शाब्दबोधं स्वीकृत्यानुमितित्वस्य शाब्दत्वव्याप्यत्वापत्तेर्दुरुद्धरत्वात् । न च शाब्दत्वस्यानुमितित्वव्याप्यत्वे [1]उक्तलाघववत् अनुमितित्वस्य शाब्दत्वव्याप्यत्वे लाघवाभावान्न विनिगमनाविरह इति वाच्यम् । समानविषयकप्रत्यक्षसामग्र्याः [2]तादृशानुमितिप्रतिबन्धकत्वान्तरं न कल्पयते, तादृशशाब्दबोधं प्रति क्लृप्तप्रतिबन्धकतयैवोपपत्तिरिति लाघवस्य संभवात् । न चानुमितिजनकव्याप्त्यादिज्ञानजन्यतावच्छेदककोटौ शाब्दत्वस्यानिवेशात् कथं तादृशसामग्रीजन्यज्ञानस्य शाब्दत्वमिति वाच्यम् । पदज्ञानस्य शाब्दबोधे,पद-

---

1 उक्तलाघववत् — सामग्रीविशेषस्य प्रतिबन्धकत्वान्तराकल्पनलाघववत् ।

2 तादृशानमितीति — समानविषयकानुमितीत्यर्थः ।

विषयकत्वमनिवेश्य ज्ञानत्वादिना करणतासंभवेम लिङ्गज्ञानस्य लिङ्गविषयकत्वमनिवेश्य ज्ञान (वि) त्वेनानुमित्यात्मकशाब्द-(त) त्वादिना अनुमितिकरणत्वेनानुमितिसामग्रीजन्यतावच्छेद-ककोटौ शब्दत्वनिवेशसंभवात् । न चाकाङ्क्षादिज्ञानं विना अनुमित्यात्मकशाब्दबोधोपगमे तत्र आकाङ्क्षादिज्ञानस्य शाब्द-बोधहेतुतायां व्यभिचार इति वाच्यम् । [1]एकैकविधशाब्दबोध-प्रयोजकानुपूर्वीविशेषरूपाकाङ्क्षादीनामननुगततया परस्प-रजन्यशाब्दबोधे व्यभिचारवारणाय तज्ज्ञानजन्यतावच्छेदक-कोटौ [2]अव्यवहितोत्तरत्वनिवेशस्यावश्यकतयोक्तव्यभिचारा-भावात् । न च योग्यतायाः एकपदार्थे अपरपदार्थवत्त्वरूपाया अनुगतत्वेन तज्ज्ञानजन्यतावच्छेदके अव्यवहितोत्तरत्वनिवेश-स्यानावश्यकतया तद्धेतुतायां व्यभिचारो दुर्वार इति वाच्यम् ।

---

1 एकैकेति — घटनिष्ठकर्मताबोधे घटम् इत्यानुपूर्व्या इव कलशम् इत्यानुपूर्व्या अप्याकाङ्क्षात्वमस्तीति भावः ।

2 अव्यवहितोत्तरत्वं — तत्तज्ज्ञानाव्यवहितोत्तरत्वम् ।

बाधनिश्चयाभावस्य [1]क्लृप्तहेतुतयैव [2]निर्वाहे शाब्दबोधे नव्यमते योग्यताज्ञानहेतुताया एवाभावात् । तदङ्गीकर्तृभिः प्राचीनैश्चानुमितावपि संशयसाधारणविशेषणसंसर्गज्ञानहेतुताङ्गीकारेण योग्यताज्ञानस्यानुमितौ तन्मते व्यभिचाराभावाच्च । न चानुमितित्वस्य शाब्दत्वव्याप्यत्वे अनुमिनोमि इत्यनुव्यवसायस्थले शृणोमीत्यनुव्यवसायापत्तिरिति वाच्यम् । शाब्दत्वस्यानुमितित्वव्याप्यत्वेऽपि शृणोमीत्यनुव्यवसायस्थले अनुमिनोमि इत्यनुव्यवसायस्य दुर्वारत्वात् । न चानुमितित्वप्रकारतानिरूपितविशेष्यतासंबन्धेन साक्षात्कारं प्रति शाब्दबोधभेदस्य हेतुत्वोपग-

1 क्लृप्तेति — अनुमितिशाब्दादिसाधारणतद्वत्ताबुद्धिसामान्ये बाधनिश्चयप्रतिबन्धकताया उभयवादिसिद्धत्वादिति भावः ।

2 निर्वाहे — वह्निना सिञ्चतीत्यतो शाब्दानुदयनिर्वाहे ।

मान्नोक्तापत्तिरिति वाच्यम् । शाब्दत्वप्रकारतानिरूपितवि-शेष्यतासंबन्धेन साक्षात्कारं प्रति अनुमितिभेदस्य हेतुतया पूर्वोक्त-वारणस्य ममापि सुवचत्वात् । नचानुमितित्वस्य शाब्दत्वव्या-प्यत्वे पदज्ञानघटितसमानविषयकशाब्दबोधसामग्रीकाले तादृश-सामग्रीजन्यशाब्दबोधो जायतामितीच्छासत्त्वे तादृशसा-मग्र्यजन्यशाब्दात्मकानुमितिवारणाय तादृशसामग्र्याः तत्र प्रतिबन्धकत्वकल्पनाधिक्यमिति वाच्यम् । शाब्दत्वस्यानु-मितित्वव्यप्यत्वेऽपि व्याप्त्यादिज्ञानघटितसमानविषयकानुमि-तिसामग्रीकाले तादृशसामग्रीजन्यानुमितिर्जायतामितीच्छा-सत्त्वे तादृशसामग्र्याः प्रतिबन्धकत्वल्पनाधिक्यात् । न च तत्र तादृशशाब्दबोधस्यापि स्वीकारे क्षतिविरह इति वाच्यम् । मन्मतेऽपि उक्तस्थले तादृशानुमितेरपि स्वीकारे क्षतिविरहात् । नचैवं तत्र अनुमिनोमीत्यनुव्यवसायापत्तिरिति वाच्यम् । भवन्मतेऽपि तत्र शाब्दबोधस्वीकारे शृणोमीत्यनुव्यवसायापत्ते-र्दुर्वारत्वात् समाधानस्यापि उभयमते तुल्यत्वात् ।

वस्तुतस्तु, शाब्दबोधोत्तरं नानुमिनोमि इत्यनुव्यवसा-येन शाब्दत्वस्यानुमितित्वव्याप्यत्वमसंभ (वं) [वि] । न च

तस्य व्याप्त्यादि ज्ञानघटितसामग्रींजन्यानुमितित्वावच्छिन्नाभावविषयकत्वान्न दोष इति वाच्यम् । व्याप्त्यादिप्रतिसन्धानविरहदशायामपि तस्योत्पत्त्या तद्विषयकत्वासंभवात् ।

---

### प्रकारान्तरेण नव्यवैशेषिकमतदूषणं, तन्निरासश्च

केचित्तु; शाब्दत्वस्यानुमितित्वव्याप्यत्वे वह्निव्याप्यसामान्याभावविशिष्टविशेष्यक वह्निशाब्दबोधानुपपत्तिः । तद्विशिष्टे वह्निव्या[1]प्यवत्ताबोधासंभवेनानुमित्यसंभवादित्याहुः ।

तदसत् । उक्तरीत्या परामर्शनिरपेक्षाया एव सामग्र्याः अनुमितिजनकत्वोपगमेनोक्तानुपपत्तेरसंभवादिति दिक् ॥

---

1 वह्निव्याप्यवत्ताबोधासंभवेनेति — वह्निव्याप्याभाववान् वह्निव्याप्यवानिति ज्ञानस्य आहार्यपरामर्शस्यैवानुमितिजनकतया, अनाहार्यपरामर्शासंभवेन अनुमितिर्न संभवतीति भावः ।

## वैदिकं वाक्यं प्रमाणं, लौकिकन्तु अनुमानगृहीतार्थानुवादकम-प्रमाणमिति प्राचीनमीमांसकमतनिरूपणम्

अत्र प्राचीनमीमांसकाः—भवदुक्तरीत्या [1]शब्दस्य स्वतन्त्रं प्रमाणत्वम् । तथापि तत् न शब्दमात्रस्य, किन्तु तद्विशेषस्य, तथाहि घटमानयेत्यादिलौकिकवाक्यश्रवणानन्तरं, अयं वक्ता, आधेयतासंसर्गककर्मत्वादिविषयकघटादिविशिष्टज्ञानवान्, आधेयतासंसर्गेण [2]कर्मत्वादिसाकाङ्क्षं य [त्] घटादिज्ञानं तज्जन्यं भ्रमाद्यजन्यं यद्वाक्यं तत्प्रयोक्तृत्वात् । यो यत्संसर्गकयत्साकाङ्क्षयज्ज्ञानजन्यभ्रमाद्यजन्यवाक्यप्रयोक्ता, सः तत्संसर्गकतद्विषयकविशिष्टज्ञानवान् (घ) [प] टमानयेति वाक्यप्रयोक्ता कर्मत्वविषयकपटविशिष्टज्ञानवानहमिव इत्यनुमानमूलकात्, कर्मत्वादिकम् आधेयतया घटवत्, तेन संसर्गेण [3]स्वविषयकघटविशिष्टज्ञानवदुक्तपदस्मारितत्वात् घटादिनिष्ठकरणत्वादिवत् इत्यनुमानात् घटीया कर्मता इत्यनुमितौ

---

1 शब्दस्येति — यद्यपीति शेषः ।

2 कर्मत्वादिविषयकेति — कर्मत्वादिविशेष्यकेत्यर्थः । एवमग्रेऽपि ।

3 स्वविषयकेति—कर्मत्वादिविशेष्यकेत्यर्थः । इदं च घटविशिष्टज्ञानान्वयि ।

सत्यां, अनन्तरं घटीया कर्मता इत्यादिशाब्दबोधः इति [1]लौकिकशब्दमात्रमनुवादकम्, न तु प्रमाणम् । वैदिकशब्दमात्रं तु प्रमाणम्, वेदस्य नित्यतया वक्तुरभावेन तत्र वक्तृपक्षकानुमानासंभवेन तन्मूलकोपदर्शितानुमानासंभवेनोपदर्शितरीत्या अनुवादकत्वासंभवात् । गृहीतग्राह्यनुभवकरणत्वमनुवादकत्वम्, ग्रहीतग्राहीतरानुभवकरणत्वं च प्रमाणत्वमिति [2]विवेकः, इति वदन्ति ।

तदसत् । लाघवेन प्रमाकरणत्वस्यैव प्रमाणत्वरूपतया लौकिकवाक्यजन्यशाब्दबोधपूर्वं अनुमानेन शाब्दसमानाकारज्ञानोत्पादेऽपि तस्य [3]प्रमाणत्वसंभवात् ॥

---

1 शब्दमात्रं — शब्दसामान्यम् । एवमग्रेऽपि ।

2 विवेकः — प्रमाणत्वानुवादकत्वयोर्भेदः ।

3 प्रमाणत्वसंभवादिति — धारावाहिबुद्धावव्याप्तेः अज्ञातविषयकज्ञानत्वं न प्रमात्वम् । परं तु तद्वति तत्प्रकारकत्वमेव । तच्चानुमानगृहीतविषयकस्यापि शाब्दबोधस्य संभवतीति तत्करणं शब्दः प्रमाणमिति भावः ।

**शाब्दबोधकारणस्य पदार्थतात्पर्यकत्वज्ञानस्य संपादनाय लोके शाब्दबोधात्पूर्वं तत्समानाकारज्ञानापेक्षणात् लौकिकवाक्यमनुवादकम्, वेदे प्रकारान्तरेण तात्पर्यज्ञान-संभवात् प्रमाणता इति प्राभाकरमतनिरूपणम्**

[1]एतेन शाब्दसामग्रीसंपादकतया लौकिकवाक्यजन्य-शाब्दबोधात् पूर्वं [2]तत्समानाकारज्ञानमावश्यकमिति लौकिकवा-क्यमनुवादकम् । वैदिकवाक्ये तु तदनावश्यकतया [3]तत् प्रमाणम् । तथाहि क्वचित् शाब्दप्रमा क्वचिन्न इति नियमनि-र्वाहाय, शाब्दप्रमायाः किञ्चित्कारणमुपेयम् । (तत्र) [तत्] लोकवेदसाधारणं यथार्थतात्पर्यकत्वम् । तच्च शाब्दबोधनि-रूपितज्ञाननिष्ठकारणतायां विषयतया अवच्छेदकम्, शाब्दबोध-निरूपितकरणतावच्छेदकज्ञानविशिष्टकरणस्य शब्दस्य शाब्द-बोधे जननीये सहकारित्वे सति स्मृत्यजनकत्वात् । यत् यज्ज्ञाननिरूपितकारणतावच्छेदकज्ञानविशिष्टकरणस्य यज्ज्ञाने जननीये सहकारित्वे सति स्मृत्यजनकं भवति, तत् तज्ज्ञान-निरूपितज्ञाननिष्ठकारणतायां विषयतया अवच्छेदकम् । यथा

---

1 एतेनेति — अस्य प्राभाकरमतमप्यपास्तमिति व्यवहितेनान्वयः ।
2 तत्समानाकारेति — शाब्दबोधसमानाकारेत्यर्थः ।
3 तत् — वैदिकवाक्यम् ।

व्याप्तिः शब्दशक्तिश्च इत्यनुमानेन यथार्थतात्पर्यकत्वज्ञानस्य शाब्दबोधहेतुत्वं सिद्धम् । अत्र [1]भूयोऽवयवेन्द्रियसंनिकर्षे व्यभिचारवारणाय सत्यन्तम् । [2]तद्घटकविशिष्टान्तेन लिङ्गपरामर्शे व्यभिचारनिरासः, परामर्शस्य विशिष्टासहकारित्वात् । यस्मिन् सति यदभावात् कार्याभावः तस्यैव तत्सहकारित्वेन परामृश्यमानलिङ्गत्वेनानुमितिकरणतया परामर्शविशिष्टलिङ्गसत्त्वे परामर्शाभावस्यासंभवात् । ह्रदो वह्निमान् ह्रदत्वादित्यादौ परामृश्यमानलिङ्गसत्त्वेऽपि व्याप्त्यभावे तत्प्रमानुमित्यभावात् व्याप्तेर्दृष्टान्तत्वसंगतिः । व्याप्तिपक्षधर्मतावल्लिङ्गत्वेन प्रमानुमितिकरणत्वात् । यत्तु एवमपि सल्लिङ्गपरामर्शे व्यभिचारो दुर्वारः, परामृश्यमानलिङ्गसत्त्वेऽपि सल्लिङ्गपरामर्शाभावसंभ-

---

1 भूयोऽवयवेत्यादि — सामान्यमुखव्याप्तिस्थले साध्यतुल्यसाध्याभाववति हेतुतुल्यहेतोः सत्त्वे व्यभिचारः । इन्द्रियसंनिकर्षः प्रत्यक्षप्रमाहेतुः न स्मृतिजनकः । तस्य ज्ञानं न प्रत्यक्षे हेतुः । अत ज्ञाननिष्ठकारणतायां विषयतया अवच्छेदकत्वं संनिकर्षे नास्ति स्मृत्यजनकत्वं चास्तीति व्यभिचारो बोध्यः ।

2 तद्घटकविशिष्टान्तेनेति — कारणतावच्छेदकज्ञानविशिष्टस्येत्यनुपादाने परामर्शे व्यभिचारः । लिङ्गस्य सहकारित्वमस्ति । परामर्शं विषयकज्ञानस्याहेतुत्वात् ज्ञाननिष्ठकारणतावच्छेदकत्वं साध्यं नास्तीति व्यभिचार इति भावः ।

वादिति । तच्चिन्त्यम् । विशेष्यवति विशिष्टाभावस्य विशेष्ये विशेषणाभावपर्यवसानेन परामृश्यमानलिङ्गसत्त्वे सल्लिङ्गपरामर्शाभावस्य लिङ्गे व्याप्तिपक्षधर्मत्वरूपसत्त्वाभावपर्यवसानात् । बाधाभावादौ व्यभिचारवारणाय [1]विशेष्यम् ।

तच्च तात्पर्यं वेदे कपिञ्जलानालभेत इत्यदौ लाघवादितर्कनिर्णीत [त्रि] त्वविशिष्टकपिञ्जलपदार्थपरं बहुवचना (त्) [न्त] कपिञ्जलपदम् इति सामान्यतः कपिञ्जलपदार्थत्वादिना तद्घटितमेत्रोपयुज्यते । सामान्यरूपेण निर्णयेऽपि तत्र पदार्थानां नियतत्वेन विशेषरूपेण तात्पर्यासन्देहात् । लोके तु घटमानयेत्यादौ घटविशिष्टकर्मतापरं द्वितीयान्तं घटपदमिति विशेषतः घटत्वादिना तद्घटितमेवोपयुज्यते । तत्र पदार्थानामनियतत्वेन सामान्यरू (पाणा) [पेण निर्णयेऽपि] विशेषरूपेण तात्पर्य[सन्देह] संभवात् ।

एवं लोके विशेषतः पदार्थतात्पर्यनिर्णयानुरोधेन शाब्दबोधपूर्वं विशेषतः एकपदार्थे अपरपदार्थ निर्णयस्यावश्यकतया लौकिक-

1 विशेष्यं — स्मृत्यजनकत्मम् । स्मरणे बाधज्ञानस्य प्रतिबन्धकत्वात् तदभावस्य जन कत्वं बोध्यम् ।

वाक्यस्यानुवादकत्वं, वैदिकस्य तु प्रमाणत्वम् ।

### वेदवाक्यस्य प्रमाणत्वे मूललाघवतर्कविचारः

ननु कोऽयं लाघवतर्कः, यन्मूलकं वेदवाक्यस्य प्रमाणत्वमिति चेत् ।

---

### चतुष्ट्वाद्यपेक्षया त्रित्वस्य प्रथमोपस्थितत्वं लाघवतर्कः इति मतम्

अत्र केचित् 'कपिञ्जलानालभेत इत्यादौ [1]बहुवचनस्य यावत्कपिञ्जलपरत्वे, [2]यावदालम्भनस्याशक्यतया अननुष्ठान-लक्षणाप्रामाण्यापत्तिः । [3]शक्यानुष्ठानयावत्परत्वे चाननुगमा-पत्तिरिति, किञ्चित्परत्वावश्यकत्वे, (केचित्व) [त्रित्व] परत्वमेव कल्प्यते । चतुष्ट्वादिप्रकारकचतुष्टादिप्रत्यक्षे त्रित्वादिसहि-तैकत्वसाक्षात्कारस्य हेतु [तया] चतुष्ट् [त्वा] दिविशिष्टचतुष्टा-

---

1 बहुवचनस्य — बहुवचनान्तकपिञ्जलपदस्य ।
2 यावदालम्भनस्य — सर्वेषां कपिञ्जलानामालम्भनस्य ।
3 शक्यानुष्ठानयावत्परत्वे — शक्यानुष्ठानविषयालम्भनकर्मी-भूतसर्वकपिञ्जलपरत्वे ।

द्यपेक्षया त्रित्वत्वविशिष्टत्रित्वस्य प्रथमोपस्थितत्वेन [1]तस्यैव लाघवतर्कत्वम् । न [2]चातिरिक्तबहुत्वादिवृत्तेः, त्रित्वादिवृत्तेर्वा बहुवचनशक्यतावच्छेदकतया तेन रूपेण चतुष्ट्वादेरपि प्रथमोपस्थितत्वं संभवतीति वाच्यम् । बहुत्वं बहुत्वत्वं [च] [3]नातिरिक्तम्, त्रित्वत्वादिकमेव बहुवचनशक्यतावच्छेदकमित्याशयात् ।

अथ तथापि त्रित्वस्य नोक्तरीत्या प्रथमोपस्थितत्वम् । चतुष्ट्वत्वादिप्रकारकचतुष्ट्वादि प्रत्यक्षे एकत्वचतुष्टयादि प्रत्यक्षस्य, द्वित्वद्वयादिप्रत्यक्षस्य वा हेतुत्वसंभवेन त्रित्वादिसहितैकत्वप्रत्यक्षस्याहेतुत्वादिति चेत् ।

एवमपि बहुत्वसंख्यायाः त्रित्वादिक्रमेणैव गणनया गणनाक्रमेण त्रित्वस्य प्रथमोपस्थितत्वेन, प्रथम त्यागे माना-

---

1 तस्यैव — प्रथमोपस्थितत्वस्यैव ।
2 अतिरिक्तबहुत्ववृत्तेरिति — त्रित्वाद्यपेक्षया अतिरिक्तं यत् बहुत्वं संख्याविशेषः तद्वृत्तेरित्यर्थः ।
3 नातिरिक्तमिति — बहुत्वं त्रित्वाद्यपेक्षया बहुत्वं त्रित्वत्वाद्यपेक्षया च नातिरिक्तमित्यर्थः ।

भावेन, त्रित्वचतुष्ट्वादौ [1]फलतौल्येन चतुष्ट्वादेरनुपयोगेन च तस्य लाघवतर्कत्वसंभवात् । न च चतुष्ट्वादौ [2]फलभूमा, मानाभावात्। अन्यथाऽनुपपत्त्यैव [3]तत्कल्पनेन प्रकृतेऽनुपपत्त्यभावात् । नचैतादृशप्रथमोपस्थितत्वस्य लाघवतर्कत्वे मानाभाव इति वाच्यम् । तथा सति पूर्वोक्तप्रथमोपस्थितत्वस्यापि प्रथमोपस्थितत्व (भाव) [मात्र] स्य वा लाघवतर्कत्वं न स्यात् । किं बहुना, वेदे लाघवतर्कादिरूपन्यायगम्यमेव तात्पर्यं वेदजन्यशाब्दबोधे नियामकं, नत्वन्यत् इत्यस्याप्यसिद्धिप्रसङ्गात् । न चानादिमीमांसक [परं] परया तथा व्यवहरणात् तत्सिद्धिरिति वाच्यम् । प्रकृतेऽपि तुल्यत्वात् । अनादिमीमांसकपरम्परया तर्कत्वेन व्यवहारविषयत्वस्यैव तर्कत्वात् । अत एव समानप्रकारकत्वसमानविशेष्यकत्वयोः तु (ल्ये) [ल्यत्वेऽ] पि शास्त्रकृतां समानविशेष्यकत्वस्यैव लाघवतर्कत्वोक्तिः संगच्छते । (तन्नैवं) [तत्रैव] शास्त्रकृतां [4]तथा व्यवहारोऽपीत्याहुः ।

---

1 फलतौल्येन — कपिञ्जलत्रयालम्भने चतुष्टयालम्भने च यागफलस्यैकत्वेन इदं च चतुष्ट्वादेरनुपयोगे बीजं बोध्यम् ।

2 फलभूमा — फलाधिक्यम् ।

3 तत्कल्पनेन — फलाधिक्यकल्पनेन ।

4 तथा व्यवहारः — लाघवतर्कत्वेन व्यवहारः ।

**मा हिंस्यादिति श्रुतिबोधितायाः हिंसानिष्टदुरदृष्ट साधनतायाः अवच्छेदककोटौ भेदचतुष्टयापेक्षया भेदत्रयनिवेशे लाघवं तर्कः इति अन्येषां मतनिरूपणम्**

अन्ये तु, 'मा हिंस्यात्सर्वा भूतानि' इति श्रुत्या हिंसायाः दुरदृष्टसाधनत्वबोधने, 'श्वेतं छागमालभेत' इति श्रुत्या श्वेतच्छागा-(व) लम्भने बलवदनिष्टाजनकत्वविशिष्टेष्टसाधनत्वलक्षण-[1]विध्यर्थबोधने बाधापत्तिरिति, वैधेतरहिंसायाः दुरदृष्टजनकत्वं 'मा हिंस्यात्' इति श्रुत्या बोध्यते इत्युपेयम् । तथाच (बाधज्वस्य) [वैधत्वस्य] अनुगतस्याभावेन, तत्तद्व्यक्तित्वेन तत्तद्धिंसाव्यक्तिभेदकूटस्यैव दुरदृष्टजनकतावच्छेदककोटौ निवेशेन, 'कपिञ्जलानालभेत' इत्यत्र बहुवचनस्य चतुष्ट्वाद्यर्थकत्वे हिंसाभेदचतुष्ट्वादिनिवेशे गौरवापत्त्या, भेदत्रयनिवेशे लाघवात् त्रित्वमेव बहुवचनस्यार्थः ।

यत्तु, [न] वैधेतरहिंसात्वेन दुरदृष्टजनकत्वम्, किन्तु [2]वस्तुसद्वैधेतरहिंसावृत्तिवैजात्यविशेषं स्वीकृत्य विजातीयहिं-

---

1 विध्यर्थेति — लिङ्प्रत्ययार्थेत्यर्थः । यद्वा विधिरूपः अर्थः इत्यर्थः ।

2 वस्तुसदिति — हिंसायां वैधेतरत्वमपेक्ष्यते, न तु तस्य ज्ञानमिति भावः ।

सात्वेनेति नोक्तरीत्या गौरवावकाशः, तत्र [1]भेदस्यावच्छेदक-कोटावनिवेशादिति ।

तदसत् । विजातीयहिंसात्वेन दुरदृष्टजनकत्वेऽपि 'मा हिंस्यात्' इति श्रुतेः तादृशजनकताबोधकत्वे, वैधहिंसायामपि तादृशवैजात्यसन्देहेन निष्कम्पप्रवृत्त्यनुपपत्तिरिति, वैधेतरहिंसा दुरदृष्टजनिका इत्याकारकबोधजनकत्वमेवाभ्युपेयमिति, [2]हिंसाचतुष्टयादिभेद [स्य] [3]जनकतावच्छेदककोटि-निवेशप्रयुक्तगौरवाभावेऽपि तादृशशाब्दबोधस्य तादृशभेदचतुष्टयादिविषयकत्वकल्पनाप्रयुक्तगौरवस्य दुरुद्धरत्वात् ।

एतेन, वैधेतरहिंसात्वेन दुरदृष्टजनकत्वे [4]तावद्भेदकूट-निवेशे गौरवापत्त्या, लाघवात् अवैधहिंसायाः (तत्तत्त्वेनैव) [तद्व्यक्तित्वेनैव] दुरदृष्टजनकत्वं कल्प्यते इति न भेद-चतुष्टयादेः जनकतावच्छेदककोटिनिवेशप्रयुक्तगौरवावकाशः

1 अवच्छेदककोटौ — दुरदृष्ट जनकतावच्छेदक कोटौ ।
2 हिंसाचतुष्टयादिभेदस्य — हिंसाभेदचतुष्टयस्य ।
3 जनकतावच्छेदकेति — दुरदृष्टजनकतावच्छेदकेत्यर्थः ।
4 तावद्भेदकूटेति — वैधतत्तद्धिंसाभेदकूटेत्यर्थः ।

इति परास्तम् । तावतापि [1]उक्तगौरवस्य दुर्वारत्वात् । नच तत्तद्व्यक्तित्वेन जनकतामेव 'मा हिंस्यात्' इति श्रुतिर्बोधयतीति वाच्यम् । तथासति वैधहिंसायामपि तत्तद्व्यक्तित्वसन्देहेन द्वे (षानु) [षो] [2]त्पादप्रसङ्गाच्च, इत्याहुः ॥

---

## अन्येषां मतनिरासः

तदसत् । जुहुयाद्वारुणमन्त्रैः इत्यादौ बहुवचनस्य त्रित्वपरत्वानुपपत्तेः । न च तत्र बहुवचनस्य त्रित्वपरत्वं संन्दिग्धमिति वाच्यम् । तथापि श्राद्धप्रकरणे ब्राह्मणान् भोजयेत् इति वेदस्थले बहुवचनस्य त्रित्वपरत्वानुपपत्तेर्दुर्वारत्वात् । न च तत्रापि तत्सन्देहः । 'पितृकार्ये त्रीणि' इत्यादिवचनैकवाक्यतया तत्परत्वनिर्णयात् ।

---

1 उक्तगौरवस्य — मा हिंस्यादिति श्रुतिजन्यशाब्दबोधस्य भेदचतुष्टयविषयकत्वकल्पनाप्रयुक्तगौरवस्य ।

2 द्वेषोत्पादप्रसङ्गादिति — द्विष्टसाधनताज्ञानस्य द्वेषहेतोः सत्त्वादिति भावः ।

## लाघवतर्के मतान्तरम्

केचित्तु, 'कपिञ्जलानालभेत' इत्यत्र बहुवचनस्य चतुष्ट्वादिपरत्वे चतुष्टयादिव्यक्तिषु तादृशवाक्यजन्यशाब्दबोधविषयत्वकल्पने गौरवम् । त्रित्वपरत्वे त्रयस्यैव तत्कल्पनेन लाघवमिति बहुवचनस्य त्रित्वपरत्वमित्याहुः ।

---

## तत्रैव मतान्तरम्

अपरे तु, चतुष्ट्वादिपरत्वकल्पने चतुष्टयाद्यालम्भनस्थले तद्घटकतेर [न] ङ्गत्वेन तद्व्यवधानात्कर्मवैगुण्यमित्याहुः ।

---

## त्रित्वान्वयनिरूपणम्

### त्रित्वस्य पर्याप्तिसंबन्धेन, समवायेन चान्वयाक्षेपः

ननु 'कपिञ्जलानालभेत' इत्यत्र त्रित्वस्य पर्याप्तिसंबन्धेन वा [अन्वयः] समवायेन वा । नाद्यः, [1]छेदनस्य

---

1 छेदनस्य — आलम्भनात्मकछेदन कर्मत्वस्य।

प्रत्येकपर्याप्ततया त्रित्वपर्याप्त्यधिकरणकपिञ्जलकर्म[1]कच्छेदनस्याप्रसिद्धत्वात् । न द्वितीयः, तथा सत्येककपिञ्जलच्छेदनेऽपि [2]कृतकृत्यतापत्तेः, एकस्यापि त्रित्वसमवायित्वात् । यत्तु, त्रित्वस्य पर्याप्तिसंबन्धेनैवान्वयः । छेदनत्वरूपेण निखिलच्छेदनस्य त्रित्वपर्याप्त्यधिकरणकर्मकत्वसंभवेनोक्तदोषाभावादिति । तन्न । तथा सति एककपिञ्जलच्छेदनेऽपि [3]चरितार्थत्वप्रसङ्गात् । कुत्रचित् जातकपिञ्जलत्रयच्छेदनस्य कपिञ्जलत्रयकर्मकत्वसंभवादिति चेत् ।

## निरुक्ताक्षेपपरिहारपूर्वकं त्रित्वान्वयनिष्कर्षः

अत्र वदन्ति- 'कपिञ्जलानालभेत' इत्यत्र न तावत् कपिञ्जलकर्मकच्छेदनबोधः संभवति । (विजातीयावयवात्मक) [कपिञ्जलीयावयवकर्मक] छेदनस्य कपिञ्जलकर्म[क] त्वासंभवात् । किन्तु, कपिञ्जलपदस्य कपिञ्जलावयवे लक्षणोपगमेन कपिञ्जलावयवकर्मकच्छेदनबोधोऽभ्युपेयः । बहु-

1 छेदनस्येति — कपिञ्जलत्रयकर्मकैकच्छेदनस्येति यावत् ।
2 कृतकृत्यतापत्तेः — साङ्गकर्मानुष्ठानापत्तेः । एवमग्रेऽपि ।
3 चरितार्थत्वं — कर्मसाद्गुण्यम् ।

वचनार्थः त्रित्वं च न कपिञ्जलावयवेऽन्वेति । एककपिञ्जलस्यावयवत्रयच्छेदनेनैव कृतकृत्यतापत्तेः । किन्तु कपिञ्जले एव त्रित्वस्य समवायेनान्वयः ।

न च कपिञ्जलस्य पदार्थतावच्छेदकत्वेन तत्र कथं संख्यान्वय इति वाच्यम् । धान्यस्य गृहम्, संपन्नो व्रीहिः, इत्यादौ जातावेकवचनदर्शनेन क्वचित् पदार्थतावच्छेदकेऽपि सुब्विभक्त्यर्थसंख्यान्वयोपगमात् । एवं च तादृशत्रित्वसमवायिकपिञ्जल (त्व) [त्र] यस्य प्रत्येकं प्रत्येकावयवेऽन्वयः । तादृशवाक्यस्य प्रत्येकं क्रमेण प्रत्येकावयवे तादृशत्रित्वपर्याप्त्यधिकरणकपिञ्जलान्वय एव साकाङ्क्षत्वम् । न त्वेकमात्रव्यक्तेरन्वये इति नातिप्रसङ्गसंभावनमिति । एतेन, कपिञ्जलचतुष्टयच्छेदनेऽपि कपिञ्जलत्रयच्छेदनस्य जातत्वात् कपिञ्जलचतुष्टयच्छेदने कर्म (सागं) [साङ्ग] तापत्तिः । न च कपिञ्जलत्रयच्छेदनोत्तरं कपिञ्जलान्तरच्छेदने, कपिञ्जलत्रयच्छेदनाव्यवहितोत्तर (कर्माधीन) कर्मणि अनङ्गव्यवधानान्नोक्तदोष इति वाच्यम् । एककालेऽपि कपिञ्जलचतुष्टयच्छेदनस्य संभवेऽनङ्गव्यवधानासंभवादिति परास्तम् । तादृशवाक्यस्य प्रत्येकं क्रमेण कपिञ्जलत्रयान्वये एव (साकांक्षज्ञा) [साकाङ्क्षता] न चतुष्टयस्यान्वये इत्यभ्युपगमादिति ।

तस्मादुक्तरीत्या वेदवाक्यस्यैव प्रमाणत्वम्, न तु लौकिकवाक्यस्येति निर्व्यूढमिति प्राभाकरमतमप्यपास्तम् ॥ प्रमाणत्वस्य प्रमाकरणत्वरूपतया यथार्थतात्पर्यनिश्चयानुरोधेन शाब्दबोधपूर्वं तत्समानाकारानुभवसत्त्वेऽपि लौकिकवाक्यस्य प्रमाणत्वे बाधकाभावात् । लाघवेन एकपदार्थे अपरपदार्थवत्त्वरूपयोग्यताप्रमायाः संशयनिश्चयसाधारणरूपेण शाब्दप्रमाप्रयोजकत्वसंभवेन, यथार्थतात्पर्यनिश्चयस्य गौरवेण शाब्दप्रमाप्रयोजकत्वाभावाच्च । वेदार्थनियतत्वज्ञानस्य विशेषतः तात्पर्यसन्देहं प्रति प्रतिबन्धकत्वस्योक्ततया, स्वातन्त्र्येण प्रतिबन्धकत्वान्तरस्य च गौरवेण मानाभावेन चाभावेन वैदिकवाक्येऽपि (नान्यतः) [सामान्यतः] तात्पर्यज्ञानसत्त्वे विशेषतः तात्पर्यसन्देहसंभवात्, तत्रापि विशेषरूपेण पदार्थं निवेश्य, विशेषरूपेण यथार्थतात्पर्यज्ञानहेतुत्वस्यैवावश्यकतया लौकिकवाक्यवत् वैदिकवाक्यस्यापि अनुवादकत्वस्य ब्रह्मणोऽपि दुर्वारत्वाच्चेति कृतं पल्लवितेन ॥

इति शब्दप्रामाण्यविचारः

## आकाङ्क्षाज्ञानहेतुताविचारः

नन्वेवं, घटः कर्मत्वमानयनं कृतिः इत्यादितः घटमानयेत्यादित इव शाब्दबोधापत्तिरिति चेन्न ।

आकाङ्क्षाज्ञानस्य शब्देन शाब्दबोधजनने सहकारित्वात् । आकाङ्क्षा [1]चानुपूर्वी (विशिष्ट) [विशेष] एव । अनुगताया दुर्वचत्वात् । तथाच यादृशयादृशानुपूर्वीतः यादृशान्वयबोधः तत्र तादृशानुपूर्वीज्ञानं हेतुरिति फलितम् ।

---

## आकाङ्क्षाज्ञानस्य शाब्दहेतुतायामाक्षेपः

नन्वेवं, घटम् इत्यादिस्थले कर्मताविशेष्यकाधेयतासंसर्गावच्छिन्नघटप्रकारताकशाब्दत्वावच्छिन्नं प्रति घटपदोत्तराम्पदज्ञानत्वादिना हेतुतेति पर्यवसितम् । तच्च न संभवति, कलशमानयेत्यादिस्थलीयतादृशबोधे व्यभिचारात् । नच घटार्थकपदोत्तराम्पदज्ञानत्वादिना हेतुत्वान्न दोष इति वाच्यम् । तथापि

1 आनुपूर्वी — पदानां पूर्वीपरीभावः ।

घट (मानये) [स्यानयनमि] त्यादिस्थले [1]व्यभिचारात् । न च घटार्थकपदोत्तरकर्मतार्थकविभक्तिज्ञानत्वादिनैव तत्र हेतुत्वम् । अतो नोक्तव्यभिचार इति वाच्यम् । यत्र, घटमित्यत्र घटपदान्न घटस्मृतिः, किन्तु कलशोऽस्तीत्यादि-कलशपदात् । एवं द्वितीयातोऽपि न कर्मत्वस्य स्मृतिः, किन्तु पटस्यानयनमित्यादिषष्ठीतः, तत्रापि घटमित्या-नुपूर्वीतः कर्मताविशेष्यकाधेयतासंसर्गावच्छिन्नघट (काधा) [प्रका] रताकशाब्दबोधप्रसङ्गादिति चेत् ।

---

## उक्ताक्षेपपरिहारपूर्वकं केषांचिन्मतेन शाब्दाकाङ्क्षाज्ञानयोः कार्यकारणभावनिरूपणम्

[2]अत्र केचित्— तादृशशाब्दत्वाद्यवच्छिन्नं प्रति वृत्त्या घटोपस्थापकनामोत्तरकर्मत्वोपस्थापकविभक्तिज्ञानत्वादिना हेतु-त्वान्नोक्तदोषः । यद्यप्यत्र शक्त्या कर्मत्वोपस्थापकत्वस्य निवेशे,

---

1 व्यभिचारादिति — उक्तस्थले षष्ठ्या कर्मत्वबोधनादिति भावः ।
2 अत्र केचिदिति — अस्य व्यवहितेन आहुः इत्यनेनान्वयः ।

घटस्यानयनम्, घटाय स्पृहयतीत्यादौ कर्मत्वे घटान्वयधीर्न स्यात्। षष्ठीचतुर्थ्योः कर्मतायां [1]शक्तिविरहात्। वृत्त्या तथात्वनिवेशे च घटादानयेत्यादौ पञ्चम्यां कर्मत्वलक्षणयापि कर्मत्वे घटान्वयधीप्रसङ्गः। तथापि शक्तिनिरूढलक्षणान्यतरवृत्त्या कर्मत्वोपस्थापकत्वप्रवेशान्न दोषः। न च तादृशशाब्दत्वावच्छिन्नं प्रति घटोपस्थापकनामोत्तरकर्मत्वोपस्थापकविभक्तिज्ञानत्वेन. कर्मत्वोपस्थापकविभक्तिप्राग्वर्तिघटोपस्थापकनामज्ञानत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरह इति वाच्यम्। विनिगमनाविरहेण तादृशहेतुताद्वयाङ्गीकारात्।

वस्तुतस्तु, कर्मताविशेष्यकशाब्दत्वावच्छिन्नं [2]प्रत्येव कर्मत्वोपस्थापकविभक्तिप्राग्वर्ति [3]नामज्ञानत्वेन हेतुत्वम् घटपदकलशादिपदसाधार (णेपि) [ण्येन] लाघवात्। तत्र आधेयतासंबन्धावच्छिन्नप्रकार (स्व) [ता] कार्यताघटकसंबन्धः। स्वजन्यस्मृतिविषयत्वं च कारणताघटकसंबन्धः। एवं,

---

1 शक्तिविरहादिति — षष्ठीचतुर्थ्योः कर्मतायां आनुशासनिकी निरूढलक्षणैव स्वीक्रियते इति भावः।

2 प्रत्येवेति — एवेन आधेयतासंसर्गावच्छिन्नघटप्रकारताकत्वस्य कार्यतावच्छेदकधर्मकोटिनिवेशस्य व्यवच्छेदः।

3 नामज्ञानत्वेन — प्रातिपदिकज्ञानत्वेन।

आधेयत्वसंबन्धावच्छिन्नघटप्रकारताकशाब्दत्वावच्छिन्नं [1]प्रत्येव घटोपस्थापकनामोत्तरविभक्तिज्ञानत्वेन हेतुत्वम्, घटं, घटेन इत्यादिसकलद्वितीयादिसाधारण्येन, लाघवात् । अत्रापि कार्यताघटकसंबन्धः विशेष्यता । कारणताघटकश्च स्वजन्य-स्मृतिविषयत्वम् ।

एतेन, यत्र (प) [घ] टमानय, कलशस्यानयनम् इत्येव श्रुत्वा, घटपदोत्तरविभक्त्या कर्मत्वं, कलशपदात् घटं [च] स्मरति, न तु घटपदषष्ठीपदाभ्यां [2]घटकर्मत्वे तत्र, कर्मताविशेष्य-कघटा (च) [दि] प्रकारकशाब्दबोधप्रसङ्गः इत्यपि परास्तम् ।

अथ उक्तक्रमेण हेतुतायामपि यत्र, 'तदस्ति' इत्यादौ [3]घटकर्मत्वपरेण तच्छब्देन घटकर्मत्वोपस्थितौ, अस्तित्वादि-प्रकारकः [4]तद्विशेष्यकान्वयबोधः, तत्र [5]व्यभिचारो दुर्वारः ।

---

1 प्रत्येवेति — एवेन कर्मत्वविशेष्यतायाः कार्यतावच्छेदकधर्मको-टिप्रवेशस्य व्यवच्छेदः ।

2 घटकर्मत्वे — घटं कर्मत्वं च ।

3 घटकर्मत्वपरेण — घटीयकर्मत्वतात्पर्यवता ।

4 तद्विशेष्यकान्वयबोधः — घटीयकर्मत्वविशेष्यकः घटीयकर्मत्वं सत्ताश्रयः इत्याकारकः शाब्दबोधः ।

5 व्यभिचार इति — घटादिनामोत्तरविभक्तिज्ञानस्य, विभक्तिपूर्व-घटादिनामपदज्ञानस्य वा अभावादिति भावः।

न च वृत्त्या घटीयत्वेन कर्मत्वोपस्थित्यजन्यत्वस्यापि कार्यतावच्छेदके निवेशात् नोक्तव्यभिचार इति वाच्यम् । तथा सति द्वितीयान्त घटपद तत्पदाभ्यां जनितस्य तादृशशाब्दबोधस्यासंभवापत्तेरिति चेन्न ।

कर्मतोद्देश्यकघटविधेयकान्वयबोधत्वावच्छिन्नं प्रत्येवोक्तरूपेण हेतुत्वस्य वाच्यतयोक्तदोषाभावात् । तदादिपदजन्यतादृशशाब्दबोधस्थले हि कर्मत्वांशे न घटस्य विधेयत्वम्, वह्निमत्पर्वतो द्रव्यमित्याद्यनुमितौ [1]पर्वते वह्नेरिव । किन्तु, घटीयकर्मत्वांशे अस्तित्वादेरेव । यत्र स्वातन्त्र्येण वृत्त्या (द्वया) द्वयोरुपस्थितौ, परस्परमन्वयबोधः, तत्रैवोद्देश्यविधेयभावस्या नुभवात् । न वा अपभ्रंशस्थ (लेप) [लीय] शाब्दबोधे व्यभिचारः । [2]तत्रोक्तकारणबाधेनान्वयबोधानुपगमात् । असंसर्गाग्रहादेव तत्र प्रवृत्त्याद्युपपत्तेः ।

---

1 पर्वते वह्नेरिवेति — वह्निमत्पर्वतो द्रव्यमित्यनुमितौ द्रव्यत्वस्य विधेयता । वह्निमत्पर्वतस्योद्देश्यता । पर्वते विशेषणस्यापि वह्नेः उद्देश्यतावच्छेदकतैव न विधेयता इति बोध्यम् ।

2 उक्तकारणबाधेन — नामपदोत्तरविभक्तिज्ञानादिकारणस्याभावात् ।

(तत्र) [[1]तज्जन्य] शाब्दबोधान्यत्वं वा कार्यतावच्छेदके अनुप्रवेश्यम् । अत एव, [2]विपरीत (प्रत्ययस्य) [व्युत्पन्नस्य] घटः कर्मत्वमित्यादिवाक्यात् [3]भेदान्वयबोधस्वीकारेऽपि न तत्र व्यभिचारः । व्युत्पन्नपुरुषीयशाब्दबोधत्वस्यैव कार्यतावच्छेदकत्वादित्याहुः ॥

---

## उक्तमतदूषणम्

तन्न । यत्र घटार्थकपदानुत्तरवर्तिन एव अम्पदस्य उत्तरवर्तित्वसंबन्धेन घटपदवत्ताभ्रमेण, कर्मत्वादिस्मृत्या घटीयं कर्मत्वमित्यन्वयबोधः, तत्र घटोपस्थापकनामोत्तरवर्तिन्याः कर्मत्वोपस्थापकविभक्तेर्ज्ञानविरहेण व्यभिचारतादवस्थ्यात् । न च अव्यवहितोत्तरत्वसंबन्धेन घटोपस्थापकनामप्रकारककर्मत्वोप-

---

1 तज्जन्येति — अपभ्रंशजन्येत्यर्थः ।

2 विपरीतव्युत्पन्नस्य —घटः कर्मत्वमिति वाक्यं घटीयकर्मतान्वयबोधजनकमिति ज्ञानवतः ।

3 भेदान्वयबोधेति — कर्मत्वे घटनामार्थस्य आधेयतारूपभेदसंबन्धेनान्वयबोधेत्यर्थः ।

स्थापक [1]विभक्तिविशेष्यक ज्ञा (नत्वे) [ने] नैव कर्मतोद्देश्यक-घटविधेयकान्वय (बोधापत्तेः) [बोधोत्पत्तेः] तस्यापि बोधहेतुत्वो-पगमान्नोक्तव्यभिचारावकाश इति वाच्यम् । तथासति अव्यवहितोत्तरत्वसंबन्धेन वाच्यवत् प्रमेयम् इत्यादिज्ञानादपि घटीयं कर्मत्वमित्यन्वय [बोधापत्तेः, वाच्य] त्वादिरूपेण घटो-पस्थापकनामाद्यवगाहित्वात् ।

न च [2]तादृशसंबन्धेन घटोपस्थापक [3]नामत्वावच्छिन्न-प्रकारताक कर्मत्वाद्युपस्थापकविभक्तित्वावच्छिन्नविशेष्यताकज्ञा-नत्वेनैव हेतुत्वं [4]तत्र वाच्यमिति वाच्यम् । घटम् इत्याद्यानु-पूर्वीज्ञानविधुराणामपि तादृशसंबन्धेन घटोपस्थापकनामवती कर्मत्वोपस्थापकविभक्तिरस्ति इत्यादिज्ञानवतां घटीयं कर्मत्वमि-त्यन्वयबोधापत्तेः । घटादिपदस्य घटोपस्थापकनामत्वं, द्विती-

---

1 विभक्तिविशेष्यकेति — तथाच कर्मत्वोपस्थापकविभक्तेः घट-पदोत्तरवर्तित्वाभावेऽपि भ्रमात्मकात् तज्ज्ञानाद्बोधइति भावः ।

2 तादृशसंबन्धेन — अव्यवहितोत्तरत्वसंबन्धेन ।

3 घटोपस्थापकनामत्वावच्छिन्नेति — वाच्यवत् प्रमेयमिति ज्ञानी-यायाः प्रकारतायाः वाच्यत्वावच्छिन्नत्वेन निरुक्तनामत्वावच्छि-न्नत्वाभावात् तज्ज्ञानव्युदासः ।

4 तत्र — घटीयं कर्मत्वमिति शाब्दबोधे ।

यादेः कर्मत्वोपस्थापकविभक्तित्वमजानतोऽपि घटम् इत्याद्यानुपूर्वीज्ञानमात्रात् घटीयं कर्मत्वमित्यनुभवस्य सर्वसिद्धत्वेन व्यभिचारतादवस्थ्याच्च ।

---

## घटीयं कर्मत्वमित्यन्वयबोधे आकाङ्क्षाज्ञानस्य निष्कृष्टकार्यकारणभावनिरूपणम्

अत्रोच्यते— घटमित्यानुपूर्वीज्ञानजन्यघटाद्युपस्थिति विशिष्टायां कर्मताविशेष्यकघटाद्यन्वयबु (ध्वा) [द्धौ] स्वप्रयोज्यघटाद्युपस्थितिसंबन्धेन घटमित्यानुपूर्वीज्ञानत्वेन कारणत्वम् । एवं कलशमित्यानुपूर्वीज्ञानजन्यघटाद्युपस्थितिविशिष्टायां कर्मताविशेष्यकघटान्वयबुद्धावपि [1]तादृशोपस्थितिसंबन्धेन कलशमित्यानुपूर्वीज्ञानत्वेनोक्तरीत्या प्रत्येकमे [कै] कानुपूर्वीज्ञानस्य कारणत्वं वक्तव्यम् । वैशिष्ट्यं च एकक्षणावच्छेदेनैकात्मवृत्तित्वम् । एवं च घटविशिष्टकर्मताबोधकतदादिपदेन, अपभ्रंशेन वा जनितायां घटीयं कर्मत्वमित्याद्यन्वयबुद्धावपि न

---

1 तादृशोपस्थितिसंबन्धेन — स्वप्रयोज्यघटाद्युपस्थितिसंबन्धेन ।

[1]व्यभिचारः । [2]तत्तद्बोधे उक्तरीत्या तादृशतादृशानुपूर्वीज्ञानत्वेनापि हेतुत्वान्तरकल्पनात् तत एव तत्र तादृशबोधोपपत्तिः।

घटः कर्मत्वमित्यादिनिराकाङ्क्षवाक्यस्थले च शक्तिज्ञानाद्यात्मक[3]सामान्यसामग्र्याः सत्त्वेऽपि घटं, कलशम्, इत्याद्यानुपूर्वीज्ञानात्मकविशेषसामग्रीविरहादेव घटीयं कर्मत्वमित्याद्याकारकान्वयबोधानापत्तिः ।

अत एव, पक्ता पचति, घटो घटः, इत्यादिस्थलेऽपि क्लृप्तयावद्विशेषसामग्रीविरहादेव नान्वयबोधः । न तु [4]तदर्थं प्रकारान्तरमनुसर्तव्यम् । [5]उद्देश्यतावच्छेदकविधेययोरैक्य-

---

1 न व्यभिचारइति— घटमित्यानुपूर्वीज्ञानजन्य घटाद्युपस्थिति विशिष्टत्वरूपकार्यतावच्छेदकानाक्रान्तत्वात्तादृशान्वयबुद्धेरिति भावः ।

2 ननु तदस्ति, इत्यादौ कारणाभावात्तादृशान्वयबोधो न स्यात्, अत आह-तत्तद्बोधे इति-तदस्ति, इत्यत्र अपभ्रंशस्थले च जायमाने निरुक्तबोधे इत्यर्थः ।

3 सामान्यसामग्र्याः — शाब्दबोधसामग्र्याः ।

4 तदर्थं — अन्वयबोधवारणार्थम् ।

5 उद्देश्यतावच्छेदकेति — पक्ता इति पदबोध्ये पाककृतिविशिष्टे, पचति इति पदबोध्यायाः पाककृतेः भेदेन-आश्रयतया अन्वयो न । एकस्याः पाककृतेः विधेयत्वादुद्देश्यतावच्छेदकत्वाच्चा घटो घटः इत्यत्र घटस्यैकस्य विधेयत्वादुद्देश्यत्वाच्च न अभेदेनान्वयः इति बोध्यम् ।

स्थले भेदेन, उद्देश्यविधेययोरैक्यस्थले चाभेदेन अन्वयबोधस्यालीकतया तदन्तर्भावेण तत्तदानुपूर्वीज्ञानस्य हेतुत्वान्तराकल्पनात् ।

अत एव, (यवश्चैत्रो गच्छतीत्यत्र) (थवबति) [न, पचति] चैत्रो गच्छतीत्यादौ पाककर्तृत्वविशिष्टे चैत्रे गतिमत्त्वस्यान्वयबोधः । तादृशानुपूर्व्यन्तर्भावेण तथाविधा (धे) [न्व] यत्रोधं प्रति हेतुत्वाभावात् ।

आख्यातार्थकृत्यादेरुद्देश्यतावच्छेदकविधया अन्वयबोधस्य [1]उदाहरणवाक्यादन्यत्रैवाव्युत्पन्नतया, 'यो य इच्छति, स, जानाति' [2]इत्यादिस्थले एव, इच्छावान् तद्व्यापकीभूतज्ञानवान् [3]इत्याद्यन्वयबोधोदयेन, तत्र तादृशानुपूर्व्यन्तर्भावेण

---

1 अन्यत्रैवेति — पचति चैत्रः सुन्दरः इत्यत्र पाककृतिविशिष्टचैत्रोद्देश्यक सुन्दराभेदावगाहिशाब्दबोधानुदयादिति भावः ।

2 इत्यादिस्थले — मैत्रः जानाति इच्छावत्त्वात् इतिन्यायावयवे उदाहरणवाक्ये ।

3 अन्वयबोधोदयेनेति — इदंच यो यो धूमवान् स वह्निमान् यथा महानसः इत्युदाहरणवाक्ये वह्निपदस्य धूमव्यापकवह्नौ लक्षणा। यत्पदद्वयं तत्पदं महानसपदं च लक्षणातात्पर्यग्राहकम्। धूमवान् धूमव्यापकवह्निमानिति विशिष्टवाक्यार्थबोधः इति मताभिप्रायेण । दीधितिकृन्मते तु वाक्यार्थ चतुष्टयविषयकसमूहालम्बनबोधः इति बोध्यम् ।

हेतुत्वकल्पनात् न तत्रान्वयबोधानुपपत्तिः, इत्यादिकमन्यत् स्वयमूह्यम् ।

---

## धात्वाख्यातयोरन्वयस्थले कार्यकारणभावनिरूपणम्

एवं, आनयति, प्रापयति इत्यादौ धात्वाख्यातयोरन्वयस्थलेऽपि आनयतीत्यानुपूर्वीज्ञानजन्यानयनाद्युपस्थितिविशिष्टे कृत्यादिविशेष्यकानयनादि प्रकारकान्वयबोधे आनयतीत्याद्यानुपूर्वीज्ञानत्वेन प्रत्येकरूपेण स्वप्रयोज्यानयनाद्युपस्थितिसंबन्धेन [1]कारणत्वं ज्ञेयम् । न तु, कृत्याद्यंशे [2]विषयत्वादिसंबन्धेन आनयनादिविधेयकान्वयबोधसामान्यं प्रत्येव आनयनोपस्थापकधातूत्तरकृत्युपस्थापकप्रत्ययज्ञानत्वेन कारणत्वमिति मतमादरणीयम् । (त) [य] त्र आनयनार्थकधात्वनुत्तरवर्तिन एव तिपः तदुत्तरत्वभ्रमात् आनयनीया कृतिः इत्यन्वयबोधः, तत्र व्यभिचारप्रसङ्गात् । नचाव्यवहितोत्तरत्वसंबन्धेन

---

1 कारणत्वमिति — आनुपूर्वीज्ञानस्येत्यादिः ।

2 विषयत्वादीति — अनुकूलत्वं विषयत्वं च धात्वर्थस्य आख्यातार्थकृतौ संबन्धः ।

(भानो) [आनयनो] पस्थापकधातुप्रकारककृत्युपस्थापकप्रत्ययविशेष्यकज्ञानत्वेनैव तादृशान्वयबोधे कारणत्वान्नोक्तव्यभिचार इति वाच्यम् । [1]प्रमेयत्वादिप्रकारेणापि तादृशधातुप्रकारकज्ञानादन्वयबोधापत्तेः । न च कृत्युपस्थापकाख्यातत्वाद्यवच्छिन्नविशेष्यताकानयनोपस्थापकधातुत्वावच्छिन्नप्रकारताशालिज्ञानत्वेन तादृशान्वयबोधे कारणत्वोक्तौ नोक्तापत्तिरिति वाच्यम् । [2]आनुपूर्वीविशेषस्याग्रहे [3]तावन्मात्रादप्यन्वयबोधापत्तेः। इष्टापत्तौ (वा) [चा] नुभवविरोधात् । धातुत्वाख्यातत्वाद्यग्रहेऽपि घटमानयतीत्यानुपूर्वीविशेषज्ञानमात्रादपि घटकर्मकानयनानुकूलकृतिमान् इत्यन्वयबोधोत्पत्त्या व्यभिचाराच्च।

तादृशानुपूर्वीविशेषस्य निश्चय (मे) [ए] व हेतुः, तस्य सन्देहे, व्यतिरेकनिश्चये वा अन्वयबोधानुदयात् । एवमग्रेऽपि ।

— —

1 प्रमेयत्वादिप्रकारेणेति — प्रमेयवत् वाच्यम् इत्याकारकात् धातुप्रकारकाख्यातविशेष्यकज्ञानात् आनयनीया कृतिरिति बोधापत्तिरिति समुदायार्थः ।

2 आनुपूर्वीविशेषस्य — आनयतीत्यानुपूर्व्याः ।

3 तावन्मात्रादपि — कृत्युपस्थापकाख्यातमव्यवहितोत्तरत्वसंबन्धेन आनयनोपस्थापकधातुमत् इति ज्ञानमात्रादपि ।

## कारकक्रिययोरन्वयबोधे आकाङ्क्षाज्ञानहेतुतानिरूपणम्

द्वितीयाद्यर्थकर्मत्वादिकारकाणां धात्वर्थानयनादिक्रियायामन्वयबोधस्थले तु, आनयति, प्रापयति, इत्यादिप्रत्येकानुपूर्वीज्ञानजन्यानयनोपस्थितिविशिष्टे आनयनविशेष्यकघटकर्मत्वादिप्रकारकान्वयबोधे, आनयति, प्रापयति इत्यादिप्रत्येकानुपूर्वीज्ञानत्वे [न] हेतुत्वम् । एवं, घटं, कलशम् इत्यादिप्रत्येकानुपूर्वीज्ञानजन्यघटकर्मत्वोपस्थितिविशिष्टे आनयनविशेष्यकघटकर्मत्वादिप्रकारकान्वयबोधेऽपि प्रत्येकं, घटम्-कलशम्, इत्यानुपूर्वीज्ञानत्वेन हेतुत्वं बोध्यम् । [1]अतः, घटमानयतीत्यत्रेव, आनयति घटम्, इत्यत्रापि आनयने धर्मिणि घटकर्मत्वस्यान्वयबोधः ।

आनयति घटस्य, घटमानयनम्, इत्यादौ च न तादृशान्वयबोधः,[2]उक्तहेतुद्वयस्याभावात् ।

---

1 अत इति — आनयनविशेष्यकघटकर्मत्वप्रकारकान्वयबोधे आनयतीत्यानुपूर्वीविशेषज्ञानस्य, घटम् इत्यानुपूर्वीविशेषज्ञानस्य च प्रत्येकं हेतुताद्वयस्वीकारादित्यर्थः । तादृशबोधे घटमानयतीत्यानुपूर्वीज्ञानस्यैकहेतुत्वे आनयति घटमित्यतः तादृशबोधानुपपत्तिरिति भावः ।

2 उक्तहेतुद्वयस्य — घटम् इत्यानुपूर्वीज्ञानस्य आनयतीत्यानुपूर्वीज्ञानस्य च ।

घटमित्यादिकर्मपदं विना आनयतीत्यादिक्रियापदेन, तादृशक्रियापदं विना च घटमित्यादिकर्मपदेन जनितस्य आनयनविशेष्यकघटकर्मत्वादिप्रकारकान्वयबोधस्य अलीकतया [1]तदापत्तेरसंभवात् ।

एवं क्रियाकारकान्तरस्थलेऽपि तत्तत्क्रियाकारकान्तर्भावेग [2]हेतुताद्वयं बोध्यम् ।

---

### घटमानयति, आनयति घटम्, इत्यानुपूर्वीज्ञानयोः आनयनविशेष्यकघटकर्मत्वान्वयबोधे कारणताद्वयमिति मतम्, तन्निरासश्च

केचित्तु घटमानयतीत्यानुपूर्वीज्ञानाव्यवहितोत्तरानयनविशेष्यकघटकर्मत्वा (वयव) [न्वय] बोधं प्रति तादृशानुपूर्वीज्ञानत्वेन हेतुत्वम् । एवं, आनयति घटमित्यानुपूर्वीज्ञानस्याप्युक्तरीत्या हेतुत्वमपरं वक्तव्यमित्याहुः ।

---

1 तदापत्तेरिति — शाब्दसामग्र्याः आपादिकाया विरहादापत्तिर्न संभवतीति भावः ।

2 हेतुताद्वयमिति — कुठारेण छिनत्ति इत्यादौ, छेदनविशेष्यककुठार करणत्वप्रकारकान्वयबोधे छिनत्तीत्यानुपूर्वीज्ञानस्य, कुठारेण इत्यानपूर्वीज्ञानस्यच हेतुताद्वयमित्यर्थः ।

तदसत् । घटमित्यस्य आनयतीत्यस्य च द्वयोः पौर्वापर्यस्य सन्देहे, तन्निश्चये तदंशे भ्रमत्वस्य सन्देहदशायां वा घटमानयतीत्यानुपूर्वीज्ञानात् तादृशान्वयबोधानुत्पत्तिप्रसङ्गात् । (या) [ता] दृशानुपूर्वीज्ञानस्य हेतुत्वे (ना) निश्चयत्वस्य (प) [विव] क्षितत्वात्, तादृशानुपूर्व्यंशे भ्रमत्वज्ञानाभावस्यापि शाब्दधीहेतुत्वात् । एवं, घटं पटं चानयतीत्यादौ आनयनविशेष्यकघटकघटकर्मत्वादिप्रकारकान्वयबोधोपपत्त्यर्थं त-(न्न) [त्र] [1]सामग्र्यन्तरकल्पने महागौरवप्रसङ्गश्चेति दिक् ।

---

## आनयनविशेष्यकघटकर्मत्वादिबोधे पृथक् कारकपदस्य क्रियापदस्य च हेतुताद्वयं न कल्पनीयमिति निष्कर्षकथनम्

वस्तुतस्तु, क्रियाकारकोभयान्तर्भावेणापि क्रियापदस्य कारकपदस्य [च] पृथक् हेतुत्वद्वयं न कल्पनीयम् । नाम-(विमतेया) [विभक्त्योः] धात्वाख्यातयोश्चान्तर्भावेण क्लृप्तहेतुत्वादेव क्रियायां कारकस्यान्वयबोधसंभवात् । घटमित्याद्यानुपूर्वीज्ञानाव्यवहितोत्तरानयनादिक्रियाविशेष्यकघटकर्मत्वादिप्रकारकान्वयबोधं प्रति तादृशानुपर्वीविशेष्यकतात्पर्यादिज्ञान-

हेतुत्वस्यावश्यकतया तत एव विशेषान्वयबोधसंभवात् । न च घटमानयेत्यादितोऽपि सति तादृशतात्पर्यग्रहे तादृशान्वयबोधापत्तिरिति वाच्यम् । आनयतीत्यानुपूर्वीज्ञानाव्यवहितोत्तर तादृशान्वयबोधरूपस्य तद्विशेषस्य सामग्रीविरहादेवोक्तापत्त्यभावादिति सारः ।

---

## अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राज्ञः पुत्रेण पुरुषेण चान्वयबोधे तात्पर्यं नियामकमिति निरूपणम्

अथ, अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम् इत्यादौ राजकीयपुरुषबोधे [1]तात्पर्यदशायां राज्ञःपुरुषः इत्याद्यानुपूर्वीज्ञानात् तादृशबोधोदयेन तत्र तादृशानुपूर्वीज्ञानहेतुत्वस्य कॢप्ततया, राजकीय (पुरुषप्र) [पुत्र] बोधे तात्पर्यदशायां पुत्रो राज्ञः इत्याद्यानुपूर्वीज्ञानात् तादृग्बोधोदयेन, पुत्रो राज्ञः इत्याद्यानुपूर्वीज्ञानस्य राजकीयपुत्रबोधेऽपि उक्तरीत्या हेतु-

---

1 तात्पर्यदशायां — तात्पर्यज्ञानदशायाम् । एमवग्रेऽपि ।

त्वस्य क्लृप्ततया, तादृशबोधे नियामकाभावः । आनुपूर्वीरूपाकाङ्क्षाया निश्चयस्याविशेषेण नियामकत्वासंभवादिति चेन्न । तादृशतात्पर्यज्ञानस्यैव [1]तत्र नियामकत्वात् ॥

— ———

शाब्दबोधोत्पत्तिसमनन्तरक्षणे पुनः समानाकारशाब्दापत्तिः, तत्परिहारश्च

अथैवमपि घटमानयेत्यादि शाब्दबोधानन्तरं द्वितीयक्षणे पुनः तादृशशाब्दसमानाकारशाब्दापत्तिः, सामग्र्याः सत्त्वादिति चेन्न ।

शाब्दबोधद्वयेच्छाविरहविशिष्टसमानाकारशाब्दबोधस्य शाब्दबोधे प्रतिबन्धकत्वादेवोक्तापत्त्यनवकाशात् । तादृशशाब्दबोधद्वयेच्छासत्त्वे शाब्दद्वयस्योत्पत्तौ विवादाभावात् तादृशेच्छाविरहवैशिष्ट्यस्य प्रतिबन्धकतावच्छेदककोटौ निवेशः ।

वस्तुतस्तु, उक्तप्रतिबन्धकत्वे मानाभावः । प्रथमशाब्दबोधक्षणे तज्जनकपदज्ञानजन्यपदार्थोपस्थित्यादीनामन्यतम-

1 तत्रेति — राजकीयपुरुषबोधे, राजकीयपुत्रबोधे च ।

[1]विनाशेन, तादृशकारणविरहादेव अविरलक्रमोत्पन्नशाब्दबोध-धाराया आपत्त्यसंभवात् । [2]अन्तरा पदज्ञानतज्जन्यपदार्थोपस्थित्युत्पादस्थले, पूर्वान्वयबोधस्य तादृशपदार्थोपस्थिति (क) [स] त्त्वे विनाशात् [3]तदुत्तरमन्वयबोधान्तरस्य सर्वमत एवावश्यकत्वात् ।

यत्र प्रथमशाब्दबोधजनकपदार्थोपस्थितिरेव आकाङ्क्षादिविषयिणी, तत्र विनश्यदवस्थतादृशसमूहालम्बनपदार्थोपस्थिति [सत्त्वात्] तादृशशाब्दबोधद्वितीयक्षणे पुनः तादृशशाब्दबोधस्तु इष्यते एव । शाब्दबोधानन्तरमेकशाब्दबोधोपगमे अनुभवविरोधविरहात्, शाब्दबोधधाराया एवानुभवविरुद्धत्वादित्येव सारः ।

---

### घटः कर्मत्वमित्यादिनिराकाङ्क्षानुपूर्वीज्ञानस्य शाब्दप्रतिबन्धकत्वाक्षेपः, तन्निरासश्च

अथ, तथापि घटः कर्मत्वमित्यादौ शाब्दबोधवारणाय

---

1 विनाशेनेति — ज्ञानादीनां योग्यविभुविशेषगुणानां क्षणद्वयावस्थायित्वादिति भावः ।

2 अन्तरा — प्रथमद्वितीयशाब्दबोधयोर्मध्ये ।

3 तदुत्तरं — पूर्वशाब्दबोधानन्तरोत्पन्न पदज्ञानतज्जन्यपदार्थोपस्थित्युत्तरकाले ।

घटमानयेत्याद्यानुपूर्वीनिश्चयहेतुत्वकल्पनापेक्षया, घटः कर्मत्व-मित्याद्यानुपूर्वीज्ञानस्य प्रतिबन्धकत्वमेवोचितमिति चेन्न ।

घटः कर्मत्वमित्याद्यानुपूर्वीज्ञानसत्त्वेऽपि घटमानयेत्याद्यानुपूर्वीज्ञानकाले शाब्दबोधोदयेन, तादृशानुपूर्वीनिश्चयाभाव[1]विशिष्ट–घटः कर्मत्वमित्याद्यानुपूर्वीज्ञानाभावहेतुत्वापेक्षया तादृशानुपूर्वीनिश्चयहेतुत्वे एव लाघवादित्यलमधिकेन ॥

इत्याकाङ्क्षाविचारः

---

## योग्यताज्ञानस्य शाब्दबोधहेतुताप्रतिपादनम्

ननु वह्निना सिञ्चति इत्यादौ सेको न वह्निकरणकः इत्याद्ययोग्यतानिर्णयदशायामपि सेके वह्निकरणकत्वादिशाब्दबोधापत्तिः, तदानीमुक्ताकाङ्क्षाज्ञानघटितशाब्दसामग्र्याः सत्त्वादिति चेन्न ।

---

1 निश्चयाभावविशिष्टेति — घटः कर्मत्वमित्याद्यानुपूर्वीज्ञाने अन्वेति । विशिष्टत्वं स्वरूपसमवायोभयघटितसामानाधिकरण्यसंबन्धेन । तादृशज्ञानस्य प्रतिबन्धकत्वे तदभावस्य कारणत्वं सिद्धम्, कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकत्वरूपत्वात् इत्याशयेन ज्ञानाभावहेतुत्वेत्युक्तम् ।

शाब्दबोधे योग्यताज्ञानस्यापि हेतुत्वोपगमात् । योग्यता च तद्धर्मावच्छिन्नविशेष्यकतत्संसर्गकतद्धर्मावच्छिन्नप्रकारकशाब्दबोधे, तद्धर्मावच्छिन्नस्य तेन संसर्गेण तद्धर्मावच्छिन्नवत्त्वम् । एवं च सेको [न] वह्निकरणकः इत्याद्ययोग्यतानिर्णयकाले सेकत्वावच्छिन्ने वह्निकरणकत्वत्वावच्छिन्नावगाहिनः सेको वह्निकरणकः इत्याद्याकारस्य योग्यताज्ञानस्यानुत्पत्त्या नोक्तशाब्दबोधापत्तिः । तस्याश्च संशयसाधारणज्ञानमात्रमेव हेतुः । सर्वत्र शाब्दबोधात्पूर्वं योग्यताया निर्णेतुमशक्यत्वात् ।

---

बाधनिश्चयाभावहेतुतयोपपत्तेः योग्यताज्ञानं न कारणमित्याक्षेपः

ननु, विशिष्टबुद्धिसामान्ये बाधनिश्चयाभावस्य हेतुतया तयैव अयोग्यतानिर्णयदशायां शाब्दबोधानुत्पादनिर्वाहेण शाब्दबोधे योग्यताज्ञानत्वेन हेतुतायां [1]मानाभावः ।

अथ प्रत्यक्षस्थलीयबाधनिर्णमप्रतिबन्धकतायामिच्छाया

1 मानाभाव इति — अयं महापूर्वपक्षः व्यवहिते 'इति चेत्' इत्यत्र पर्यवस्यति ।

[1]उत्तेजकत्वानुरोधेन चाक्षुषत्वादेरेव प्रतिबध्यतावच्छेदकतथा, परोक्षस्थले इच्छाविरहमनिवेश्य पृथगेव बाधनिर्णयस्य प्रतिबन्धकत्वं वाच्यम् । तत्र च न परोक्षत्वजातेः प्रतिबध्यतावच्छेदकत्वं संभवति, [2]तत्र मानाभावात् । अपि तु प्रत्यक्षान्यज्ञानत्वस्यैव । तच्च गुरुशरीरमिति [अनुमिति] त्वशाब्दत्वयोरेव [3]तत्त्वमुपेयमिति, [4]तयोरेव बाधनिर्णयाभाव[5]जन्यत्वावच्छेदकत्वं वाच्यम् । तथाच लाघवात् शाब्दत्वावच्छिन्ने योग्यताज्ञानहेतुत्वमेव सम्यक्, बाधनिर्णयाभावहेतुत्वे निर्णयत्वप्रवेशेन गौरवात् । न च योग्यताज्ञानस्य संशयसाधारणहेतुतायां [6]अप्रामाण्यनिर्णयस्यैवोत्तेजकतया गौरवमेवेति वाच्यम् । योग्यताज्ञानस्याहेतुत्वे प्रत्यक्षादौ शाब्दसामग्रीप्रतिबन्धक-

---

1 उत्तेजकत्वानुरोधेनेति – आहार्यं परोक्षानङ्गीकारात् प्रत्यक्षस्यैवाहार्यस्य बाधनिर्णयसत्त्वे चाक्षुषादीच्छाबलादुत्पत्त्या प्रत्यक्षात्मकतद्वत्ताबुद्धौ चाक्षुषादीच्छाविरहविशिष्टबाधनिश्चयस्य प्रतिबन्धकत्वमिति भावः ।

2 तत्र – परोक्षत्वजातौ ।

3 तत्त्वं – प्रतिबध्यतावच्छेदकत्वम् ।

4 तयोरेव – अनुमितित्वशाब्दत्वयोरेव ।

5 जन्यतावच्छेदकत्वमिति – यद्धर्मावच्छिन्ने बाधनिर्णयः प्रतिबन्धकः, तद्धर्मावच्छिन्ने एव तदभावस्य कारणत्वादिति भावः।

6 अप्रामाण्यनिर्णयस्यैवेति – अप्रामाण्य संशयस्य विषयसंशयजनकतया तस्यानुकूलत्वेन नोत्तेजकत्वमिति भावः ।

तायां ग्राह्या[1]भाव-तद्वद्भेद-तद्व्याप्य-तदवच्छेदकधर्मदर्श-नाभावकूटस्य निवेशनीयतया गौरवात् । तद्धेतुत्वे च योग्यता-ज्ञानस्यैकस्यैव निवेशनीयतया लाघवमिति तद्धेतुत्वे एव लाघ-वात् । न च तदहेतुत्वेऽपि सामग्रीप्रतिबन्धकतायां तस्या-न्तर्भावान्नोक्तरीत्या (लाघव) [गौरव] मिति वाच्यम् । तथा सति योग्यताज्ञानशून्यकाले शाब्दबोधो (त्तर) [त्पाद] सकल-कारणसत्त्वे तन्मते शाब्दबोधे जायमाने, [2]प्रत्यक्षाद्युत्पादा-पत्तेरिति चेन्न ।

[3]परोक्षत्वजातेः पूर्वं व्यवस्थापितत्वात् । किञ्च, योग्य-ताज्ञानहेतुत्वेऽपि तत्सन्देहानन्तरक्षणे आप्तवाक्यादितः अयोग्य-तानिश्चये तद्वितीयक्षणे विनश्यदवस्थयोग्यतासन्देहात् शाब्द-बोधवारणाय तत्र अयोग्यतानिश्चयाभावस्य हेतुताया आवश्य-कत्वादिति चेत् ।

---

1 ग्राह्याभावेत्यादि — अभाव-भेदादीनां दर्शनेऽन्वयः । तथाच ग्राह्याभावदर्शनाभावतद्वद्भेददर्शनाभावतद्व्याप्यदर्शनाभाव-तदवच्छेदकधर्मदर्शनाभाव कूटस्येत्यर्थः ।

2 प्रत्यक्षाद्युत्पादापत्तेरिति — योग्यताज्ञानाभावेन तत्सहितशाब्द-सामग्रीरूपप्रतिबन्धकविरहादिति भावः ।

3 परोक्षत्वजातेरिति — तथाच शाब्दानुमित्यादिसाधारणपरो-क्षत्वावच्छिन्नं प्रति इच्छाविरह मनिवेश्य सामग्र्याः प्रतिबन्ध-कत्वेन शाब्दत्वावच्छिन्नं प्रति पृथक् प्रतिबन्धकताकल्पनेन पूर्वोक्तरीत्या लाघवानवकाश इति भावः ।

## सामग्रीविशेषस्य प्रतिबन्धकत्वाकल्पनलाघवेन योग्यताज्ञानस्य केषां चिन्मतेन हेतुत्वस्थापनम्

अत्र केचित्, योग्यताज्ञानस्य शाब्दधीहेतुत्वे, पयःकरणकत्वाभाववत्सेकीया कृतिः इत्याद्याकारिकायां विशेष्ये विशेषणमिति रीत्या मानसादिबुद्धौ पयस ।सिञ्चतीत्याकारकशाब्दसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवम् । तथाहि तादृशसामग्रीकाले सेकत्वाद्यवच्छिन्नविशेष्यक पय करणकत्वप्रकारक योग्यताज्ञानरूपस्य तादृशमानसविपरीतज्ञानस्य सत्ताया आवश्यकत्वेन, विपरीतज्ञानोत्तरप्रत्यक्षनिर्णयहेतुभूतविशेषदर्शनस्य विरहेणैव न [1]तादृशमानसापत्तिः संभवति । सेको न पयःकरणकः इत्यादिप्रत्यक्षजनकीभूतसेकत्वाद्यवच्छिन्नविशेष्यकपयःकरणकत्वाद्यभावव्याप्यवत्तानिर्णयरूपविशेषदर्शनसत्त्वे (न) [च] तदभावव्याप्यवत्तानिर्णयरूपप्रतिबन्धकसत्त्वेन सेकत्वाद्यवच्छिन्नविशेष्यकपयःकरणकत्वादिप्रकारकोपदर्शितशाब्दसामग्र्येव [2]नास्ति ।

न च संशये विशेषदर्शनस्याहेतुतया योग्यतासन्देहघटितोपदर्शितशाब्दसामग्री [काले] (प्रतिबन्धकत्वा) सेकत्वा-

---

1 तादृशमानसेति — पयः करणकत्वाभाववत्सेकीया कृतिः इत्याकारकमानसेत्यर्थः ।

2 नास्तीति — तथाच विशेषदर्शनस्य सत्त्वे. असत्त्वे च शाब्दसामग्री प्रतिबन्धकता न कल्पनीयेति सिद्धम् ।

द्यवच्छिन्नविशेष्यक पयःकरणकत्वाद्यभावप्रकारकसंशयवारणायोपदर्शितसामग्रीप्रतिबन्धकत्वकल्पनमावश्यकमेवेति वाच्यम् । सेकत्वाद्यवच्छिन्नविशेष्यकपयःकरणकत्वादिप्रकारकमानसे तादृशशाब्दसामग्रीप्रतिबन्धकताया उभयसिद्धतया सेकत्वादिविशिष्टे पयःकरणकत्व (मा) [भा] नासंभवेन पयःकरणकत्वाद्यभावप्रकारकमानसे उपदर्शितसामग्रीप्रतिबन्धकत्वाभावेऽपि तादृशसामग्रीकाले संशयापत्त्यसंभवात् । न च विपरीतज्ञानोत्तरप्रत्यक्षनिर्णये विशेषदर्शनस्य हेतुत्वे एवोक्तरीत्या लाघवं संभवति, तत्रैव च न मानमिति वाच्यम् । उपदर्शित [1]लाघवबलेनैव [2]तस्यापि सिद्धेः ।

मा भूद्वा विपरीतज्ञानोत्तरप्रत्यक्षनिर्णये विशेषदर्शनं हेतुः । तथापि योग्यताज्ञानहेतुतामते योग्यताज्ञानाभावप्रकारका (न्य) [त्म] विशेष्यकमानसप्रत्यक्षे शाब्दसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवं दुर्वारमेव । ज्ञानाभावविशिष्टबुद्धौ स्वरूप-

---

1 उपदर्शितलाघवबलेन — शाब्दसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवेन ।

2 तस्यापि — विपरीतज्ञानोत्तरप्रत्यक्षनिर्णये विशेषदर्शनहेतुत्वस्यापि ।

सतो ज्ञानस्य प्रतिबन्धकतायाः [1]सर्वसिद्धत्वादित्याहुः ॥

---

## शाब्दबोधे बाधज्ञानस्य प्रतिबन्धकत्वाभाववादिनामन्येषां मतेन योग्यताज्ञानहेतुतानिरूपणम्

अन्ये (प्रा) [तु], 'यशः शुभ्रम्' इत्यादिवाक्यादितः बाधितार्थस्याप्याहार्ययोग्यताज्ञानादपि अन्वयबोधोत्पत्तेरानुभविकतया बाधनिर्णयस्य न शाब्दबोधप्रतिबन्धकत्वम् । नचैवं बाधितत्वेनावधारितेऽप्यर्थे शाब्दात्प्रवृत्तिप्रसङ्ग इति वाच्यम् । बलव (त्ता) [त्तर] बाधेन तत्र शाब्दबोधे अप्रामा-[2]ण्यज्ञापनेनाप्रवृत्त्युपपत्तेः । तदुक्तं खण्डनकारैः—

'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।
[3]प्रमाबाध्याऽप्रमा त (न्न) [त्र] ह्यतः प्रामाण्यनिर्णयः' ॥

---

1 सर्वसिद्धत्वादिति — योग्यताज्ञानसत्त्वे तस्यैव स्वरूपसतः योग्यताज्ञानाभावप्रकारक मानसप्रतिबन्धकत्वेन तदभावघटितसामग्रीविरहेण तादृशमानसापत्तेरसंभवेन तत्र शाब्दसामग्रीप्रतिबन्धकता न कल्पनीयेति भावः ।

2 अप्रामाण्यज्ञापनेनेति — पूर्वोत्पन्नज्ञाने अप्रामाण्यज्ञापकत्वमेव बाधकत्वं बोध्यम् ।

3 प्रमाबाध्येति—खण्डनग्रन्थे, अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम्, इत्युत्तरार्धम् दृश्यते ।

इति । अस्यार्थः । अत्यन्तासत्यपि—बाधितत्वेनावधारितेऽपि, अर्थे—विषये, हि—निश्चयेन, शब्दः ज्ञानं करोत्येव । द्वितीयो हिशब्दः [1]एवकारार्थः । नन्वेवं त (त्रा) [त्र] प्रवृत्त्यापत्तिः तज्जनकस्य विशिष्टज्ञानस्य सत्त्वात्, अत आह—प्रमेत्यादि । (तोत्र) [तत्र—] बाधिता (र्थैः) [र्थे], प्रमाबाध्या—प्रमया—अयोग्यताप्रमया बाध्या—अप्रमात्वेन ज्ञाप्या, अप्रमा—भ्रमात्मकशाब्दबुद्धिरेव, भवतीति शेषः । तावता किं जातम्, अत आह—अत इति । प्रवृत्तिप्रयोजकः इति शेषः । तथाच प्रवृत्तिप्रयोजकप्रामाण्यनिर्णयाभावान्न तत्र प्रवृत्तिरिति भावः ।

नचैवं योग्यताज्ञानहेतुत्वमप्यलं, बाधनिर्णयदशायां शाब्दधीवारणायैव तस्य स्वीकारादिति वाच्यम् । बाधनिर्णयदशायामपि बुभुत्सितस्यैवार्थस्यान्वयबोधः नतु अबुभुत्सितस्येत्यनुभवस्य योग्यताज्ञानहेतुतामन्तरेणानिर्वाहात् योग्यताज्ञानहेतुत्वम्, आहार्ययोग्यताधीनिर्वाहकतया बुभुत्सोपगमात् । न च शाब्दबोध एवाहार्यः स्वीक्रियताम, तावतैव बुभुत्सोपयोगसंभवे किं योग्यताज्ञानस्य हेतुत्वेनेति वाच्यम् । परोक्ष-

1 एवकारार्थः — एवकारार्थार्थकः ।

ज्ञानमनाहार्यमेवेति सिद्धान्तविरोधात् । तथासति शाब्देच्छाविरहविशिष्टबाधनिर्णयाद्यभावस्य हेतुताया [1]उपगन्तव्यतया गौरवप्रसङ्गाच्च । न च [2]तत्र शाब्दबोधहेतुतया अभिमतशक्यार्थगोचराहार्यमानसप्रत्यक्षादेव शाब्दबोधकार्योपपत्तेः शाब्दबोधोऽप्रामाणिक इति वाच्यम् । श्रुतोऽयमर्थः इत्यनुभवस्य [3]प्रत्यक्षेणानिर्वाहात् । शब्दजन्यवाक्यार्थविषयकबोधस्यैवार्थविशेषादिबोधजनकत्वाच्च । अन्यथा बाधितार्थक (कविव्यासादै) [काव्यादौ] आकाङ्क्षादेरनुपयोगप्रसङ्गादिति प्राहुः ॥

## योग्यताज्ञानहेतुतायां मतान्तरम्

अपरे तु, यत्र विषये योग्यताज्ञानघटित शाब्दबोधसामग्रीदशायां कदापि कस्यचित् बाधनिर्णयो जातः, तत्र बाधावतारदशायां शाब्दबोधवारेणाय योग्यताज्ञानहेतुतैवोचिता उक्तलाघवादित्याहुः । (इतिवा) अधिकमन्यत्र बोध्यम् । विस्तरभयादत्र नोक्तम् ।

इति योग्यताज्ञानहेतुताविचारः

---

1 उपगन्तव्यतयेति — बाधनिर्णयदशायां शाब्देच्छया शाब्दोत्पादानुरोधेन शाब्देच्छायाः उत्तेजकत्वस्यावश्यकत्वादिति भावः ।

2 तत्र — यशः शुभ्रम् इत्यादौ काव्ये ।

3 प्रत्यक्षेण — आहार्यमानसप्रत्यक्षेण ।

## आसत्तेः शाब्दहेतुता

गिरिर्भुक्तमग्निमान् देवदत्तेन इत्यादौ गिरिः अग्निमान्, देवदत्तकर्तृकं भोजनम् इत्यादि शाब्दबोधवारणाय आसत्तेरपि शाब्दबोधहेतुत्वमुपेयम् ।

---

## आसत्तेर्हेतुत्वे पूर्वपक्षः

[1]अथ केयमासत्तिः, यदभावादुक्तस्थले नोक्तरीत्या शाब्दबोधः इति चेत् ।

---

## केषांचिन्मतेन आसत्तिस्वरूपस्य तद्धेतुत्वस्य च निरूपणम्

अत्र केचित्, एकपदार्थोपस्थित्यव्यवधानेनापरपदार्थोपस्थितिरेवासत्तिः । उक्तस्थले च उच्चारणक्रमेण पदार्थोपस्थित्या गिर्यग्निमत्पदा (द्यु) [र्थो] पस्थि (ते) [त्यो] र[2]व्यवधानाभावा-

1 अथेति — अस्य पूर्वपक्षस्य अत्रवदन्ति इति व्यवहितेन समाधानं निरूप्यते ।

2 अव्यवधानाभावादिति — भुक्तपदार्थोपस्थित्या व्यवधानादिति भावः ।

न्नासत्तिः । नचैवं गिरिरग्निमान् इत्यादावपि आसत्त्यनुपपत्तिः, तत्र [1]पदज्ञानेनार्थोपस्थित्योः व्यवधानादिति वाच्यम् । यत्र[2]गिर्युपस्थितिः अग्निमत्पदविषयिणी तत्रैवासत्तेरुपगमात् । अन्यत्रासत्ति[3]भ्रमेणैव शाब्दबोधोपगमात् ।

वस्तुतस्तु, प्रकृतान्वयबोधाननुकूलक्षणव्यवधानाभाव एवाव्यवधानम् । उक्तस्थले च पदज्ञानक्षणस्य प्रकृतान्वयबोधानुकूलत्वान्न दोषः । अत एव, काष्ठैःस्थाल्यामोदनं पचतीत्यादौ काष्ठकरणकत्व–पाकाद्युपस्थित्योः स्थाल्याद्युपस्थितिक्षणेन व्यवधानेऽपि न क्षतिः; तस्य प्रकृतान्वयबोधानुकूलत्वात् । यत्र च गिरिर्भुक्तमित्यादौ भुक्तपदार्थोपस्थितौ, गिरिपदस्य तदर्थस्य वा पुनर्भानं, तत्रासत्तिरेव ।

ननु, गिरिर्भुक्तमित्यादौ गिर्युपस्थित्यग्निमदुपस्थित्योः [4]युगपदवस्थानाभावात् पदार्थोपस्थितिरूपकारणविरहादेव न शा-

---

1 पदज्ञानेन — अग्निमत्पदज्ञानेन ।

2 गिर्युपस्थितिः — गिरिपदार्थोपस्थितिः ।

3 आसत्तिभ्रमेण—अव्यवधानभ्रमविषयीभूतपदार्थोपस्थित्येति यावत् ।

4 युगपदवस्थानाभावादिति— गिर्युपस्थित्यनन्तरोत्पन्नभुक्तोपस्थित्या अग्निमदुपस्थितिक्षणे गिर्युपस्थितेर्नाशादिति भावः ।

ब्दबोधापत्तिः । न च यत्र क्रमिकोपस्थित्यनन्तरं समूहालम्बनतावत्पदस्मरणात् समूहालम्बनतावदर्थोपस्थितिः, तत्र शाब्दबोधापत्तिरिति वाच्यम् । तत्र समूहालम्बनोपस्थितेः स्वात्मकार्थान्तरोपस्थित्यव्यवधानसत्त्वेनासत्तिसत्त्वादासत्तिहेतुतयाप्यनिर्वाहेण इष्टापत्तेरेव शरणीकरणीयत्वादिति [चेत् ।] (चैव) [न,] भेदघटिताव्यवधानस्यैवासत्तिघटकतया समूहालम्बनोपस्थितेरासत्तित्ववारणायैवासत्तेर्हेतुत्वोपगमस्यावश्यकत्वादित्याहुः ।

---

## तन्मतनिरासः

तदसत् । उक्तासत्तेः स्वरूपसत्या हेतुत्वं, ज्ञाताया वा । नाद्यः, आसत्तिभ्रमेण शाब्दबोधानुपपत्तेः । नान्त्यः, उपस्थितीनामनुपस्थितावपि शाब्दबोधस्यानु (भाव) [भवि] कत्वात् ।

वस्तुतस्तु निरुक्तासत्तेः शाब्दबोधोपयोगित्वे मानाभावः । [1]गिर्यग्निमतोरन्वये तात्पर्यज्ञानाभावादेव तयोरन्व-

1 गिर्यग्निमतोरिति—गिरिर्भुक्तमित्यादावित्यादिः ।

यबोधानुदयात् । तत्सत्त्वे चेष्टापत्तेः । अत एव श्लोकादौ तात्पर्यग्राहकतया (भो) (यो) [1]जनाया उपयोगः । यत्र च प्रकारान्तरेण तात्पर्यग्रहः, तत्र योजनां विनैव शाब्दबोधः ।

एतेन, [2]तत्तत्पदयोरव्यवधानमेवासत्तिः । तस्याश्च ज्ञानमेव शाब्दबोधजनकम् । व्यवहितानामपि पदानामव्यवधानभ्रमेण शाब्दबोधात् । [3]अत्रापि प्रकृतान्वयबोधाननुकूलक्षणानन्तरितत्वं निवेशनीयम् । अतो, न काष्ठैः स्थाल्यामोदनं पचति [4]इत्यादावनुपपत्तिः । मौनिना अव्यवधानेन लिखितानां पदानां असत्तिभ्रमादेव शाब्दबोधः । [5]स्वस्यापि

---

1 योजनायाः—योजनावाक्यस्य ।

2 तत्तत्पदयोरिति—यत्पदार्थस्य यत्पदार्थेनान्वयः, तयोः पदयोरित्यर्थः।

3 अत्रापीति—अपिना अव्यवधानेन पदार्थोपस्थितिरासत्तिरिति मतपरिग्रहः।

4 अनुपपत्तिरिति—काष्ठैः स्थाल्यामोदनं पचतीत्यत्र तृतीयान्तार्थस्य काष्ठकरणकत्वस्य पचधात्वर्थे अन्वये, तृतीयान्तस्य धातुपदस्य च स्थाल्यामोदनमिति पदाभ्यां व्यवधानेन आसत्तेरनुपपत्तिः नास्ति, स्थाल्यामित्यादिपदज्ञानक्षणस्य प्रकृतशाब्दानुकूलत्वेन अननुकूलक्षणानन्तरितत्वसत्त्वादिति भावः।

5 ननु पचतीत्यत्र आख्यातस्यैकस्यैव वर्तमानकालः कृतिश्चार्थः। तयोरन्वयः। नच तत्र पदद्वयमस्ति। अतः तत्तत्पदयोरव्यवधानरूपासत्तेरभावात् कथमन्वयबोधः, इत्यत आह— स्वस्यापीति।

स्वाव्यवहितत्वादेकपदोपस्थाप्ययोः कृतिवर्तमानत्वयोः परस्परमन्वयबोधः। अथवा तत्रासत्तिज्ञानस्य हेतुतैव न कल्प्यते, प्रयोजनाभावात्। कुलकादौ च योजनावाक्यादेव शाब्दबोधः। अत एव तत्र योजनाया अप्युपयोगः इत्यपि परास्तम्।

तात्पर्यग्रहेणैव [1]निर्वाहे निरुक्तासत्तेरपि हेतुत्वे मानाभावात्।

---

## आसत्तिस्वरूपस्य तद्धेतुतायाश्च व्यवस्थापनम्

अत्र वदन्ति—पदवृत्तिज्ञानजन्य[2]पदार्थोपस्थितिरेवासत्तिः। सा च [3]स्वरूपसत्त्यैवोपयुक्ता। अगृहीतवृत्तिकस्य पदज्ञानादिसत्त्वेऽपि शाब्दबोधानुदयात्। सा च स्मृतिरूपा ग्राह्या। तत्र च वृत्तिज्ञानस्योद्बोधकविधया हेतुत्वम्। तेन शक्तिलिङ्गकानु-

---

1 निर्वाहे — गिरिर्भुक्तमित्यादौ गिरिरग्निमानिति शाब्दबोधानुदयनिर्वाहे।

2 पदार्थोपस्थितिरेवेति —एवेन अव्यवधानेन पदार्थोपस्थितेः, पदयोरव्यवधानस्य चासत्तित्वव्यवच्छेदः।

3 स्वरूपसत्त्यैवेति — पदार्थोपस्थितेरुपस्थितिः न शाब्दबोधे अपेक्ष्यते इत्यर्थः।

मानजन्यानुमित्यात्मकपदार्थोपस्थितितो न शाब्दबोधः। नचैवमत्रान्तरवाक्यार्थबोधस्यासंग्रहेण घटमानयेत्यादौ अवान्तरवाक्यार्थबोधपूर्वकमहावाक्यार्थबोधानुपपत्तिरिति वाच्यम्। तत्र आनयनाद्युपस्थापकचरमपदज्ञानस्यैव घटादिपदविषयकसमूहालम्बनरूपतोपगमेन, तज्जन्यानयनादिस्मृतेश्च घटादिविषयकसमूहालम्बनोपगमेन च विशेष्ये विशेषणमिति रीत्यैव शाब्दबोधोपगमेन अवान्तरवाक्यार्थबोधपूर्वकमहावाक्यार्थबोधानुपगमात्। एवंच सर्वत्र खले[1]कपोतन्यायेनैव शाब्दबोधः॥

---

## शाब्दबोधद्वैविध्यमतम्, तन्निरासश्च

यत्तु, अवान्तरवाक्यार्थबोधस्यापि महावाक्यार्थबोधहेतुतया (यन्ना) [यत्रा] वान्तरवाक्यार्थबोधः तत्र विशिष्टस्य वैशिष्ट्यमिति रीत्या महावाक्यार्थबोधः। यत्र च [2]स नास्ति,

---

1 खलेकपोतन्यायेनैवेति – 'वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति। तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥' इति खलेकपोतन्यायः। एवेन राजपुरप्रवेशन्यायस्य व्यवच्छेदः।

2 सः — अवान्तरवाक्यार्थबोधः।

ततो[1]क्तस्मृतितो विशेष्ये विशेषणमिति रीत्या बोधः। एवं क्वचित् राजपुरप्रवेशन्यायेन, क्वचिच्च खलेकपोतन्यायेन शाब्दबोधः इति मतम्।

तदसत्। उक्तरीत्या सर्वत्रोक्तस्मृतिरूपैकविधसामग्र्यैव निर्वाहे, अवान्तरवाक्यार्थबोधस्य महावाक्यार्थबोधहेतुत्वे मानाभावात्। क्वचित् स्मृतिघटितत्वेन, क्वचिच्च अवान्तरवाक्यार्थबोधघटितत्वेन महावाक्यार्थबोधसामग्र्या भेदेन समानविषयकानुमित्यादौ महावाक्यार्थविषयकशाब्दसामग्री प्रतिबन्धकताधिक्यप्रसङ्गाच्च। न च विनिगमनाविरहः, सर्वत्र अवान्तरवाक्यार्थबोधरूपैकसामग्र्यैव निर्वाहोपगमादिति वाच्यम्। अवान्तरवाक्यार्थबोधानुरोधेनोक्तस्मृतिरूपसामग्रीकल्पनावश्यकत्वस्यैव विनिगमकत्वादिति।

---

## द्वारमित्यादौ पदाध्याहारेणैव बोधः

अथ पदवृत्तिज्ञानजन्यपदार्थोपस्थितित्वेन शब्दबोधहेतु-

1 उक्तस्मृतितः — तावत्पदार्थविषयकसमूहालम्बनस्मृतितः। एवमग्रेऽपि। विशेषणतावच्छेदकप्रकारकनिर्णयाभावात् न विशिष्टवैशिष्ट्यविषयकः शाब्दबोध इति भावः।

त्वे, यत्र द्वारकर्मकपिधानतात्पर्येण द्वारम् इत्येवोक्तम्, तत्र तादृशबोधानुपपत्तिः, पदवृत्तिज्ञानजन्यपिधानोपस्थितेरभावादिति चेन्न ।

तत्रोक्त[1]तात्पर्यानुरोधेन पिधेहि इत्यादिपदाध्याहार-कल्पनात् । यत्र च न तादृशपदाध्याहारसामग्री, तत्र मानसस्यैव तादृशबोधस्योपगमे [न] [2]शाब्दबोधस्यैवानुपगमात् ।

---

## अर्थाध्याहारवादिनां गुरूणां मतनिरूपणम्

गुरवस्तु, पदार्थोपस्थितिमात्रं शाब्दबोधजनकम् । न तु पदवृत्तिज्ञानजन्यत्वं हेतुतावच्छेदकं, गौरवात् मानाभावाच्च । एवं चोक्तस्थले पिधानाद्यर्थाध्याहारा (वे) [दे]व तादृशबोधोपपत्त्या न पदाध्याहारः कल्पनीयः, मानाभावात् । न च घटादिपदादाश्रयत्वादिसंबन्धेनोपस्थितानामाकाशादीनां शाब्द-बोधवारणाय पदवृत्तिज्ञानजन्यत्वस्य पदार्थोपस्थितिजनकताया-मवच्छेदकत्वमावश्यकमिति वाच्यम् । [3]तत्र तात्पर्यग्रहे

---

1 उक्ततात्पर्यं — द्वारकर्मकपिधानबोधतात्पर्यम् ।
2 शाब्दबोधस्य — द्वारकर्मकपिधानशाब्दबोधस्य ।
3 तत्र — आकाशादौ ।

तादृशशब्दबोधे इष्टापत्तेः। [1]अन्यथा, तात्पर्यग्रहाभावादेव शाब्दबोधाभावोपपत्तेः।

अथैवं यत्र द्वारकर्मत्वपिधानादीनां सर्वेषामेवार्थानां प्रकारान्तरेणैवोपस्थितिः, नतु प्रकृतवाक्यार्थघटकार्थोपस्थापकस्य [2]कस्यापि ज्ञानस्ति, तत्रापि द्वारकर्मकपिधानादिशाब्दबोधप्रसङ्गः।

य (त्व) [त्तु] यत्र प्रकृतवाक्यार्थघटकानां द्वारकर्मत्वपिधानादीनां सर्वेषामेव लाक्षणिकपदादुपस्थितिः, तत्र न्यायमतेऽपि लाक्षणिकपदस्याननुभावकतया न शाब्दबोधः। तदुपपत्तये च तत्र विशिष्टार्थबोधे शक्तिज्ञानजन्य-तत्तद्विशिष्टार्थघटकतावच्छेदकधर्मावच्छिन्नोपस्थितित्वेन हेतुता अवश्यमुपेया। एवं तादृशकारणविरहादेव नोक्तस्थले शाब्दबोधप्रसङ्ग इति।

तदसत्। सर्वलाक्षणिकस्थले शाब्दबोधस्येष्टत्वात्। लाक्षणिकं नानुभावकमिति नियमे मानाभावात्। अत एव,

---

1 अन्यथा — तात्पर्यग्रहशून्यत्वे।

2 कस्यापीति — पदस्येति शेषः।

धूमादित्यत्र हेतु (तदेवेच) [वाक्ये] धूमपदस्य धूमज्ञाने, पञ्च-म्याश्च ज्ञाप्यत्वे लाक्षणिकत्वेऽपि शाब्दबोधः, इति [1]चेत् ।

मैवं, न्यायमत इव [2]अस्माभिरपि पदवृत्तिज्ञानजन्य-पदार्थोपस्थितित्वेन हेतुतामुपगम्यैव सर्वपदाश्रवणे शाब्दप्रसङ्ग-वारणात् । नचैवं सर्वपदाध्याहार आवश्यकः इति वाच्यम् । प्रकृतवाक्यार्थशाब्दबोधप्रयोजकसामग्र्यां पदवृत्तिज्ञानजन्य-यत्किञ्चित्पदार्थोपस्थितेः, इतरपदार्थानां चोपस्थि[3]तिसामान्यस्य निवेशेन सर्वपदाध्याहारं विनैव निर्वाहादिति [आहुः ।]

---

## अर्थाध्याहारवादिगुरुमतदूषणम्

(तत्र) [तन्न] । निराकाङ्क्षपदजन्यपदार्थोपस्थितिकाले शाब्दबोधवारणाय साकाङ्क्षतया तत्तत्पदावगाहिज्ञानस्य

---

1 चेदिति— अत्र अथ इत्यारब्धाक्षेपस्योपसंहारः ।

2 अस्माभिरपि — गुरुभिरपि ।

3 उपस्थितिसामान्यस्य — प्रमाणान्तरजन्योपस्थितिसाधारणोप-स्थितित्वावच्छिन्नस्य ।

हेतुतायाः तत्रावश्यकतया पदाध्याहारस्यावश्यकत्वात्। किञ्च, तदुद्देश्यकतद्विधेयकान्वयबोधे [1]तदुपस्थापकपदोत्तरत्वेन तदुपस्थापकपदानुसन्धानस्य नियामकतया द्वारकर्मत्वांशे पिधानादि-[2]विधेयकशाब्दबोधानुरोधेन, द्वारमित्यादिपदोत्तरत्वेन पिधानाद्युपस्थापकपदानुसन्धानमावश्यकम्। अत एव, उद्देश्यवाचकपद विधेयवाचकपदयोः पौर्वापर्यरूपाकाङ्क्षाया अप्युपयोगः। नचोद्देश्यविधेयभावेन शाब्दबोधानुरोधेन पदाध्याहारकल्पनेऽपि, विशेष्यविशेषणभावमात्रेण शाब्दबोधस्य अर्थाध्याहारादेवोपपत्तेः न तत्र पदाध्याहारापेक्षेति वाच्यम्। अनुमितेरिव उद्देश्यविधेयभावानिरूपकस्य शाब्दबोधस्याप्रामाणिकत्वात्। अन्यथा [3]तादृशशाब्दबोधोपगमे तदीयसामग्र्याः ज्ञानान्तरं प्रति प्रतिबन्धकतायाः आधिक्यप्रसङ्गात्।

यत्तु पदज्ञानजन्यपदार्थोपस्थितिजन्यशाब्दबोधे

---

1 तदुपस्थापकपदोत्तरत्वेन — उद्देश्योपस्थापकपदोत्तरत्वेन।
2 तदुपस्थापकपदेति — विधेयोपस्थापकपदेत्यर्थः।
3 अन्यथा तादृशशाब्दबोधोपगमे — विशेष्यविशेषणभावमात्रेण शाब्दबोधोपगमे।

उद्देश्यवाचकपद विधेयवाचकपदयोः पौर्वापर्येणानुसन्धानं उद्देश्यविधेयभावनियामकम् । अर्थाध्याहाराधीनशाब्दबोधे च तात्पर्यविशेषज्ञानं नियामकमिति ।

(तत्व) [तन्न] तथा सत्येकविधबोधस्यैव सामग्रीभेदात् सामग्रीप्रतिबन्धकता (बु) [वृ] द्धेः । पूर्वापरभावापन्नपदविषयकज्ञानजन्ययोरुद्देश्यविधेयोपस्थित्योः एतन्मतेऽप्येकत्र निवेशनीयतयोक्तलाघवासंभवात् ।

---

**सर्वेषामर्थानां पदादनुपस्थितावपि वाक्यार्थबोधः**
**इति भाट्टमतनिरूपणम्**

भाट्टास्तु [1]सर्वेषां पदादुपस्थिताविव, सर्वेषां पदानुपस्थितावपि शब्दबोधो जायते । अर्ध[2]जरतीयन्यायस्यैवानुपगमात् । अत एव—

---

1 सर्वेषामिति — प्रकृतवाक्यार्थघटकार्थानामिति शेषः । एवमुत्तरत्रापि ।

2 अर्धंजरतीयेति — प्रकृतवाक्यार्थघटकानां केषां चिदर्थानां पदादुपस्थितिः अपरेषां मानान्तरादुपस्थितिरित्यस्येति यावत् ।

'पश्यतः श्वे (ति) [त)[1]मारूपं हे्षाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥ (भ-वा)

इत्युक्तं संगच्छते । अत्र हे्षाश्रवणखुरविक्षेपशब्द-श्रवणाभ्यां (श्वेता) [अश्व] धावनयोरनुमित्यात्मकोपस्थितेः ।

एवं च पदज्ञानजन्यपदार्थोपस्थिति[2]विशिष्टशाब्दबोधे तादृशो-पस्थितित्वेन, पदज्ञानाजन्योर्थोपस्थितिविशिष्टशाब्दबोधे च तादृ-शोपस्थितित्वेन हेतुता । एका, पदज्ञानजन्यपदार्थोपस्थिति-घटिता, अपरा च तदजन्ययावदर्थोपस्थितिघटिता, शाब्द-सामग्री द्विविधा । पदज्ञानजन्ययत्किञ्चित्पदार्थोपस्थिति-तद-जन्यार्थोपस्थितिघटिता च सामग्री नास्त्येवेति, केषां चित् पदात्, केषां चित् प्रकारान्तरेणोपस्थितौ न शाब्द [बोधः] इत्याहुः ।

---

1 श्वेतमारूपमिति — श्वेतिमारूपमिति पाठः असाधुः । आ इत्यस्य ईषदर्थः । ईषत् श्वेतं रूपं पश्यतः इति, श्वेतं रूपं ईषत्पश्यतः इति वाऽर्थो बोध्यः ।

2 विशिष्टेति — वैशिष्ट्यमव्यवहितोत्तरत्वसंबन्धेन बोध्यम् । एवमग्रेऽपि ।

## भाट्टमतनिराकरणम्

तदपि न । पश्यतः इत्यादौ कथं[1]चिदनुमानादित एव श्वेतोऽश्वो धावतीत्यादि बोधनिर्वाहे [2]द्वितीयसामग्रीकल्पने मानाभावात् । तादृशबोधानन्तरं शाब्दयामीत्यनुव्यवसायस्यासिद्धत्वादिति दिक् ॥

## इति आसत्तिविचारः

---

1 अनुमानादित इति — अयं श्वेतः अश्वः, हृषावत्त्वात् इति, अयं श्वेतोऽश्वो, धावति, खुरविक्षेपशब्दवत्त्वात् इति चानुमानद्वयात्, अयं श्वेतः धावदश्वः हृषावत्त्वे सति खुरविक्षेपशब्दवत्त्वादिति अनुमानाद्वा इत्यर्थः ।

2 द्वितीयसामग्रीकल्पने — पदज्ञानाजन्य-प्रकृतवाक्यार्थघटकयावदर्थोपस्थिति घटितशाब्दसामग्रीकल्पने ।

## तात्पर्यज्ञानहेतुताविचारः

### सर्वत्र शाब्दबोधे तात्पर्यज्ञानं हेतुः

ननु नानार्थकसैन्धवादिपदस्थले यत्रैकपदात् लवण-तुरगादिनानार्थोपस्थितिः, तत्र सर्वेषामेव शाब्दबोधापत्तिः, आकाङ्क्षाज्ञानादिघटितशाब्दबोधसामग्रीसत्त्वादिति चेन्न ।

तात्पर्यनिर्णयस्यापि शाब्दबोधसामान्ये हेतुतया यत्रार्थे तात्पर्यनिर्णयः, तस्यैव शाब्दबोधोदयेनोक्तापत्त्यसंभवात् । न च स्वरूपसत् तात्पर्यं शाब्दबोधे हेतुरस्त्विति वाच्यम् । तथा सति तात्पर्याविषयस्य तात्पर्यभ्रमेण शाब्दबोधानुपपत्तेः ।

नन्वेवमपि नानार्थकस्थले तात्पर्यनिर्णयहेतुत्वेऽपि शाब्द-सामान्ये त (र) स्य हेतुत्वे मानाभावः इति चेत् ।

अत्राहुः— लवणादिशक्तनानार्थकसैन्धवादिपदस्थले लवणादितात्पर्यज्ञानस्य हेतुत्वे कल्पनीये, नानार्थ (क) शक्त-सैन्धवादिपदजन्यलवणादिशाब्दत्वस्य कार्यतावच्छेदकत्वे गौर-वेण, (सैन्धवादिपदजन्य) लवणादिशाब्दत्वमेव कार्यता-वच्छेदकम्. लाघवात् ।

तच्च लक्षणया शक्तिभ्रमेण वा घटादिपदजन्यलवणादिशाब्दबोधसाधारणमिति तत्रापि तत्कारणत्वं निर्व्यूढम् । एवं यत्र शक्तिभ्रमेण सैन्धवादिपदेनैव घटादयोऽप्युपस्थाप्यन्ते, त(त्रैव) [त्र] घटादितात्पर्यज्ञानस्यापि कारणत्वं सिद्धम् । एवं लक्षणास्थले शक्तिलक्षणाभ्यां शक्यलक्ष्यार्थयोरुपस्थितौ लक्ष्यार्थस्यैव शाब्दबोधः, न तु शक्यार्थस्येति नियमनिर्वाहाय, लक्षणयैव नानालक्ष्यार्थोपस्थितौ एकस्यैव लक्ष्यार्थस्य शाब्दबोधनिर्वाहाय च तात्पर्यनिर्णयहेतुत्वमावश्यकमिति सर्वत्र शाब्दबोधे तस्य हेतुत्वसिद्धिः । अत एव तात्पर्यानुपपत्तिर्लक्षणाबीजमिति प्रवादोऽपि संगच्छते इति ।

---

## तात्पर्यस्वरूपम्

तात्पर्यं च तत्प्रतीतीच्छयोच्चरितत्वमेव । उच्चरितत्वं च ज्ञापितत्वं मौनिश्लोकादिसाधारणम् । तत्र पदज्ञानानुकूललिप्यादिव्यापारमादाय तात्पर्यनिर्वाहः । न च यत्र सैन्धवपदात् लवणप्रतीतिर्भवतु तुरगादिपदादश्वप्रतीतिर्भवत्विति सम-

हालम्बनेच्छया सैन्धवपदमुच्चरितं लिखितं वा, तत्र सैन्धवपदस्योभयतात्पर्यकत्वात् युगपदुभयशाब्दबोधापत्तिर्दुर्वारेति वाच्यम् । [1]तदंशावच्छिन्नस्वजन्यत्वप्रकारकत्वेनेच्छाया विशेषणीयत्वात् । न च यत्र एकपुरुषस्यैव तदर्थप्रतीतीच्छया यत्पदमुच्चरितं, लिखितं वा, तत्रान्यपुरुषस्यापि तदर्थशाब्दबोधापत्तिरिति वाच्यम् । तत्रान्यपुरुषस्य शाब्दबोधाभावे तात्पर्यस्य [2]पुरुषभेदनियन्त्रितत्वाभ्युपगमेनापत्त्यभावात् । न च शुकादिवाक्यात् कथं शाब्दबोधः, तत्र तात्पर्याभावादिति वाच्यम् । तत्र तात्पर्यभ्रमादेव शाब्दबोधात् । विशेषद-

---

1 तदंशावच्छिन्नस्वजन्यत्वप्रकारकत्वेनेति — तत्पदमर्थविशेषपरम् । अंशः — विषयता । स्वपदं पदपरम् । अवच्छिन्नेत्यस्य जन्यतायामन्वयः । तथाच तदर्थविषयत्वावच्छिन्ना या पदविशेषजन्यता तत्प्रकारक, प्रतीतिविशेष्यकेच्छया उच्चरितत्वं तत्पदस्य तदर्थे तात्पर्यमिति फलितम् । सैन्धवपदात् लवणप्रतीतिर्भवतु, तुरगादिपदादश्वप्रतीतिर्भवतु इति समूहालम्बनेच्छा, लवणविषयत्वविशिष्टप्रतीतौ सैन्धवपदजन्यत्वमवगाहते, न अश्वविषयत्वविशिष्टप्रतीतौ । अतः लवणविषयता जन्यतावच्छेदकतया तत्र भासते । तस्मात् लवणविषयत्वावच्छिन्नं सैन्धवपदजन्यत्वं प्रतीतौ प्रकारः, नाश्वविषयत्वावच्छिन्नमिति सैन्धवपदं लवणतात्पर्यकमेव नोभयतात्पर्यकमिति भावः ।

2 पुरुषभेदनियन्त्रितत्वमिति — तदर्थविषयकतत्पुरुषीयप्रतीतीच्छयोच्चरितत्वं तत्पुरुषबोधोपयोगि तात्पर्यमिति भावः ।

र्शिनां तु पदार्थोपस्थितिमूलकमानसबोध एवोत्पद्यते, न तु शाब्दबोधः इत्युपगमात् ।

न च तथापि मूर्खपठ्यमानवेदात् शाब्दबोधानुपपत्तिः, तत्र मूर्खस्यार्थज्ञानाभावेन निरुक्ततात्पर्याभावादिति वाच्यम् । तत्र (प) [य] दा मूर्खपठ्यमानवेद-ईश्वरोच्चरितवेदयोरभेदभ्रमेण निरुक्ततात्पर्यभ्रमः, तदा शाब्दबोधः । तादृशभ्रमासत्त्वे च वेदत्वसामान्यलक्षणया ईश्वरोच्चरितवेदज्ञानादेव शाब्दबोधः इत्यभ्युपगमात् । न च कपिञ्जलानालभेत इत्यादौ चतुष्ट्वादिप्रतीतीच्छया यत्राधुनिकेन बहुवचनादि उच्चारितम्, तत्र बहुवचनादेः चतुष्ट्वादौ तात्पर्येण [1]तस्य शाब्दबोधापत्तिरिति वाच्यम् । वेदत्वेन ज्ञायमान वाक्यजन्यशाब्दबोधे न्यायगम्यतात्पर्यनिर्णयस्य हेतुत्वोपगमात् । न्यायगम्यतात्पर्यं च न चतुष्ट्वादौ, तस्यावेदार्थत्वात् । न्यायश्च लाघवज्ञानादिरूपः । तत्र बहुवच (नंतस्य) [नान्तस्य] सामान्यतो बहुत्वग्राहकप्र-

1 तस्य — चतुष्ट्वस्य ।

माणेन बहुवचनस्य त्रित्वपरत्वे लाघवमित्याकारकलाघवज्ञान-सहकृतेन, त्रित्वपरत्वं [1]परिच्छिद्यते इति तत्र तात्पर्यं न्याय-गम्यम् । कपिञ्जलचतुष्टयाद्यालम्भनस्य वेदार्थत्वे अधिका-पूर्वाणामधिककार्यकारणभावस्य च कल्पनायां गौरवेण, त्रित्वपरत्वे लाघवनिर्वाहः । अधिकं [2]प्रागेवोक्तम् ।

---

## साक्षेपनिरासं तात्पर्यज्ञान शाब्दयोः कार्यकारणभावे कार्यत्वका-रणत्वावच्छेदकनिष्कर्षनिरूपणम्

[3]ननु सैन्धवादिपदजन्यलवणाद्यर्थविषयकशाब्दबोधे सैन्धवादिपदधर्मिकलवणादितात्पर्यनिर्णयस्य हेतुत्वेऽपि घट-दर्शन-लवणानयनादितात्पर्यकात् घटं पश्य, सैन्धवमान-येत्यादिवाक्यात् लवणदर्शनादिबोधापत्तिर्दुर्वारा । लवण-

---

1 परिच्छिद्यते — निर्णीयते ।
2 प्रागेव — लौकिकवाक्यमनुवादकं, वैदिकं वाक्यमेव प्रमाण-मिति प्रभाकरमतनिरूपणावसरे एव ।
3 ननु — इत्यस्य व्यवहिते इति चेन्नैवमित्यत्र संबन्धः ।

दर्शनाद्योरुभयोरेव [1]सैन्धवादिपदतात्पर्यनिर्णयसत्त्वात् । न च लवणदर्शनाद्योः परस्परमन्वयबोधे [2]तदर्थकपदयोः एकवाक्यताभिप्रायविषयत्वरूपसमभिव्याहारज्ञानस्यापि हेतुतया तदभावान्नोक्तापत्तिरिति वाच्यम् । तादृशहेतुत्वे मानाभावात् । तादृशहेतुतामतेऽपि सैन्धवं कलयति इत्यादि वाक्यात् तुरगभक्षण-लवणानयनयोरन्वयबोधस्य दुर्वारत्वाच्च । न च तदर्थान्विततदर्थशाब्दबोधे तदर्थान्विततदर्थतात्पर्यनिर्णयस्य हेतुत्वान्नोक्तदोष इति वाच्यम् । तथा सति, एकपदार्थान्वितापरपदार्थस्य वाक्यार्थरूपतया तस्य शाब्दबोधात् [3]पूर्वमप्रतीत्या क्वापि तात्पर्यनिर्णयस्यैवासंभवात् ।

अथ पदार्थत्वेन पदार्थद्वयविषयकस्य सैन्धवपदं समभिव्याहृतापरपदार्थान्वितस्वार्थपरम् इत्याकारकस्य, [4]सामा-

---

1 सैन्धवादिपदेति — सैन्धवपद पश्यपदोभयेति यावत् ।
2 तदर्थकपदयोः — लवणदर्शनार्थकयोः सैन्धवपद-पश्यपदयोः ।
3 पूर्वमप्रतीत्येति — वाक्यार्थस्यापूर्वत्वादिति भावः
4 सामान्यतः — पदार्थत्वेन ।

न्यतः एकपदार्थं [1]विशेषतश्चापरपदार्थमवगाहमानस्य, सैन्धवपदं पदार्थान्तरान्विततुरगादिप (द) [रे] म् इत्याकारकस्य वा तात्पर्यनिर्णयस्य हेतुत्वोपगमान्न दोषः इति चेन्न ।

सैन्धवं कलयतीत्यादौ तुरगानयनाद्यन्वयबोधानुरोधेन तादृशतात्पर्यनिर्णयस्याप्यावश्यकतया तद्बलेन तुरगभक्षणान्वयबोधापत्तेर्दुर्वारत्वात् । तुरगानयनान्वयबोधे इव तुरगभक्षणान्वयबोधेऽपि तादृशतात्पर्यज्ञानस्य हेतुत्वात् । न च तुरगभक्षणान्वयबोधे (कालिपदापर) [कलयपदमपर] पदार्थान्वितभक्षणपरम् इत्येतादृशतात्पर्यनिर्णयस्याधिकस्य हेतुत्वान्न दोषः इति वाच्यम् । लवणभक्षणान्वयबोधेऽपि तादृशतात्पर्यनिर्णयस्य हेतुतया [3]तदनुरोधेन [4]तस्यावश्यकतया तद्धेतुतया उक्तापत्तिवारणासंभवादिति चेत् ।

---

1 विशेषतः — तुरगत्वलवणत्वादिना ।

2 तादृशतात्पर्यनिर्णयस्यापि — सैन्धवपदं पदार्थान्तरान्विततुरगादिपरमिति तात्पर्यनिर्णयस्यापि । एवमुत्तरत्रापि ।

3 तदनुरोधेन — लवणभक्षणान्वयबोधानुरोधेन ।

4 तस्य — कलयपदमपरपदार्थान्वितभक्षणपरमिति तात्पर्यनिर्णयस्य ।

मैवम्—कर्मत्वादिविशेष्यतानिरूपिताधेयत्वादिसांसर्गिकविषयतानिरूपितलवणादिप्रकारताशालिशाब्दबोधे तादृशप्रकारताशालिप्रतीतिर्भवतु [1]इत्याकारकनिर्णयस्य हेतुत्वोपगमेन, तादृशज्ञानस्य विशिष्य पदार्थद्वयावगाहित्वेऽपि विषयतांशे एव [2]तत्तत्पदार्थप्रकारतया, एकपदार्थे अपरपदार्थाप्रकारकत्वेन [3]वाक्यार्थानवगाहितया शाब्दबोधात् पूर्वं तत्संभवात् ।

---

तात्पर्यज्ञानं न शाब्दहेतुरिति केषांचिन्मतं, तन्निरासश्च

केचित्तु, तात्पर्यज्ञानं न हेतुः । नानार्थस्थले तात्पर्यविषयस्यैव शाब्दबोधनिय (मो) [म] स्तु, एकतत्पदार्थशाब्दबोधे अन्यतत्पदार्थे तात्पर्यज्ञानस्य प्रतिबन्धकतयोपपादनीयः । एवं च [4]लक्ष्यार्थतात्पर्यदशायां मुख्यार्थस्य [5]शाब्दबोधासंभवेन

---

1 इत्याकारकनिर्णयस्य – इत्याकारकेच्छयोच्चरितत्वरूपतात्पर्यनिर्णयस्य ।

2 तत्तत्पदार्थप्रकारतया – तत्तत्पदार्थानां घटादीनां प्रकारतया ।

3 वाक्यार्थानवगाहितया— आधेयतासंबन्धेन घटादिविशिष्टकर्मत्वाद्यविषयकतया ।

4 लक्ष्यार्थतात्पर्यदशायां — लक्ष्यार्थे तात्पर्यज्ञानदशायाम् ।

5 शाब्दबोधासंभवेनेति – अपरपदार्थे लक्ष्यार्थतीरादौ तात्पर्यज्ञानरूपप्रतिबन्धकसत्त्वादिति भावः ।

लक्षणावृत्तेः कल्पनमिति संगच्छते । [1]अत एव तात्पर्यज्ञानविरहदशायां शाब्दबोधोदयेऽपि न क्षतिरित्याहुः ।

तदसत् । तात्पर्यज्ञानस्य प्रतिबन्धकत्वे उभयत्र तत्सत्त्वे अनुभवसिद्धस्योभयशाब्दबोधस्यानुपपत्तेः । एकतात्पर्यज्ञानप्रतिबन्धकतायामपरतात्पर्यज्ञानस्योत्ते [2]जकत्वे गौरवात् ।

---

### नानार्थस्थले एकत्रार्थे तात्पर्यज्ञानस्य अपरपदार्थोपस्थितिप्रतिबन्धकत्वं वदतामन्येषां मतं, तद्दूषणं च

अन्ये तु, एकत्र तात्पर्यज्ञानमपरपदार्थोपस्थितिं प्रत्येव प्रतिबन्धकम् । एवं च नानार्थस्थले तात्पर्याविषयपदार्थोपस्थित्यकल्पनालाघवम् । उभयत्र तात्पर्यग्रहस्थले च एकतात्पर्यग्रहनाशे सत्येव अपरपदार्थोपस्थित्या शाब्दबोधः इत्याहुः ।

---

1 अत एव — तात्पर्यज्ञानस्य शाब्दाहेतुत्वादेव ।

2 उत्तेजकत्वे इति — एकत्रार्थे तात्पर्यज्ञानाभावविशिष्टस्यापरार्थे तात्पर्यज्ञानस्य प्रतिबन्धकत्वे इति यावत् ।

तदप्यसत् । यत्र एकपदार्थोपस्थित्यनन्तरं उत्पत्तिकाले वा अपरपदार्थतात्पर्यज्ञानं, तत्र [1]तात्पर्याविषयस्यापि शाब्दबोधापत्तेः । लक्षणास्थले यत्र [2]प्रथमत एव (न) लक्ष्यार्थतात्पर्यज्ञानं, तत्र शक्यार्थोपस्थितेरसत्त्वेन शक्यसंबन्धात्मक[3]लक्षणाऽसंभवाच्च ।

इति तात्पर्यज्ञानहेतुताविचारः

---

## नानार्थकस्थले बोधोत्पादविचारः

### नानार्थस्थले उभयत्र तात्पर्यादुभयबोधजनने, प्राचीननवीनमतभेदः

अत्रेदं बोध्यम् । सैन्धवमानयेत्यादौ लवणतुरगादिनानार्थे यत्र तात्पर्यग्रहः, तत्र द्वितीयार्थशाब्दबोधः प्राचां

---

1 तात्पर्याविषयस्यापीति — प्रतिबन्धकोत्पत्तेः पूर्वमेव पदार्थोपस्थितेः जातत्वात् शाब्दबोधे तात्पर्यज्ञानस्याहेतुत्वात् तात्पर्याविषयस्यार्थस्य शाब्दबोधापत्तिरित्यर्थः ।

2 प्रथमत एव — शक्यार्थोपस्थितेः पूर्वमेव ।

3 लक्षणाऽसंभवात् — लक्षणाज्ञानासंभवात् ।

मते [1]आवृत्त्यैव, सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति व्युत्पत्तेः । [2]तदनङ्गीकर्तृनवीनमते च आवृत्तिं विनैव एकदोभयार्थबोधः । तत्र मतद्वयस्याप्याशयमित्थं वर्णयन्ति अभियुक्ताः ।

---

## नानार्थस्थले आवृत्त्या द्वितीयार्थबोधवादिनां प्राचामाशयवर्णनम्

तत्र प्राचामयमाशयः—नानार्थप्रत्यायनेच्छया नानार्थादिशब्दविषयकैकानुसन्धाने अनेकार्थप्रत्यायकत्वप्रकारिका वक्तुरिच्छा न संभवति । 'सकृदुच्चरितः' इत्यादिनियमबलेन स्वसमानार्थकपदान्तरानुसन्धानासमवहितस्य पदानुसन्धानस्य नानार्थाबोधकत्वनिश्चयेन [3]तत्र [4]तादृशप्रत्यायकत्वस्य बाधात् । न च तादृशनियमे मानाभाव इति

---

1 आवृत्त्यैव — वाक्यस्य पुनरनुसन्धानेनैव ।
2 तदनङ्गीकर्त्रिति — सकृदिति व्युत्पत्तेरनङ्गीकर्त्रित्यर्थः ।
3 तत्र — नानार्थशब्दविषयकैकानुसन्धाने ।
4 तादृशप्रत्यायकत्वस्य बाधादिति — नानार्थप्रत्यायकत्वस्याभावात् । नानार्थप्रत्यायकत्वप्रकारकाविसंवादीच्छा न संभवतीति भावः ।

वाच्यम् । तथासति एकपदानुसन्धाने युगपत् नानास्वार्थबोधकत्वस्य दुर्वारतया तत्र वाक्यभेदव्यवहारानुपपत्तेः, वाक्यजन्यशाब्दबोधभेदस्यैव वाक्यभेदव्यवहारप्रयोजकत्वात् । एवं [1]चेच्छागर्भतात्पर्याभावात् न नानार्थकशब्दात् युगपदनेकार्थप्रतीतिः । एकानुसन्धानान्तर्भावेणानेकार्थप्रत्यायनेच्छागर्भं तु तात्पर्यं आवृत्त्या क्रमोत्पन्ननानार्थबोधेनापि चरितार्थं भवतीति [2]तत्रावृत्त्यैवार्थान्तरबोधः ।

---

## 'सकृदुच्चरितः' इत्यादिनियमानामसंभवपूर्वपक्षः

[3]ननु सकृदुच्चरितः इत्यादिनियमो न संभवति । घटौ, घटाः इत्यादौ एकघटपदानुसन्धानादपि [4]अनेकघटादिबोधोदयेन व्यभिचारात् ।

---

1 तात्पर्याभावात् — तात्पर्यज्ञानाभावात् ।

2 तत्र — अनेकार्थतात्पर्यस्थले ।

3 नन्विति — अस्य व्यवहितेन इति चेन्मैवमित्यनेन संबन्धः ।

4 अनेकघटादिबोधोदयेनेति — घटादिपदस्य घटत्वविशिष्टयावद्घटेषु शक्तिग्रहेण घटपदज्ञानात् यावद्घटस्मृतिसमुत्पादादिति भावः ।

## एकशेषानुशासनबलेन, घटाः इत्यादावपि पदान्तरानुसन्धानेनैव बोधः इत्याक्षेपः, तन्निरासश्च

यत्तु, (नै) [ए] कशेषेण सरूपपदान्तरलोपात् [1]तत्प्रतिसन्धानादेव नानाघटादिबोधः । तथाच तत्र पदानुसन्धाने समानार्थकपदानुसन्धानासमवहितत्वरूपविशेषणमेव नास्तीति [2]नोक्तनियमे व्यभिचारः । अत एव [3]एकशेषानुशासनस्यापि सार्थकत्वम् । अन्यथा, एकेन पदेनानेकघटादिबोधसंभवे अनेकघटादिपदप्रयोगाप्रसक्त्या, सरूपपदान्तरलोप(विस्मापक) [विधायक] तदनुशासनवैयर्थ्यापत्तेरिति ।

तदसत् । एवमपि 'घटावानय' इत्यादितः आनयनद्वयादेरेकेन आङ्पूर्वनीधातुरूपपदेन बोधनेन व्यभिचारस्य दुर्वारत्वात् ।

न च प्रातिपदिकरूपपदमन्तर्भाव्य तथा नियमे

---

1 तत्प्रतिसन्धानादेव — लुप्तघटादिपदप्रतिसन्धानादेव ।
2 उक्तनियमे — सकृदुच्चरितः शब्दः सकृदर्थं बोधयति इत्यनेनाभिप्रेते, स्वसमानार्थकपदान्तरानुसन्धानासमवहितस्य पदानुसन्धानस्य नानार्थबोधकत्वमिति नियमे ।
3 एकशेषानुशासनेति — 'सरूपाणामेकशेष एकविभक्तौ' इति सूत्रं बोध्यम् ।

[1]न दोषः इति वाच्यम् । तथा सति घटं पटं चानय इत्यादौ एकेनापि क्रियापदेन नानानयनादिबोधनसंभवेन प्राचां तत्रावृत्तिस्वीकारविरोधात् ।

अत एव, एकपदानुसन्धानेन [2]नानावृत्तिविषयाबोधकत्वनियमस्वीकारेऽपि न निर्वाहः । उक्तस्थले घटपटानयनयोरे[3]कशक्त्यैवोपस्थापनेनावृत्तिस्वीकारविरोधात् ।

न चानेकवाक्यार्थबोधकत्वाभावनियमो[4]ऽभिप्रेतः । घटावानय इत्यादौ घटद्वयाद्यानयनरूपवाक्यार्थस्यैक्यात् । घटं पटं चानयेत्यादौ घटानयन-पटानयनादिरूपवाक्यार्थस्य भेदादावृत्तिस्वीकार इति वाच्यम् । पदार्थभेदे तद्घटितवाक्यार्थभेदस्यावश्यकतया घटावानयेत्यादौ वाक्यार्थैक्यस्यासंभवात् ।

---

1 न दोषइति — धातोः प्रातिपदिकसंज्ञाविरहादिति भावः ।
2 नानावृत्तिविषयेति — घटादिपदस्य घटत्वावच्छिन्नानेकघटेषु एकैव शक्तिः । नानार्थकसैन्धवादिपदस्य तु लवण-तुरगादिषु शक्तिभेदः । अतः एकपदानुसन्धानेन नानाघटबोधः, सैन्धवादिपदस्थले नानार्थबोधश्च निर्वहतीत्याशयः ।
3 एकशक्त्यैवेति — आङ्पूर्वनीधातोः आनयनत्वावच्छिन्ने एकैव शक्तिरिति भावः ।
4 अभिप्रेत इति — सकृदर्थं बोधयतीत्यत्र सकृत्पदार्थैकत्वमर्थपदार्थे अन्वेतीति भावः ।

न च एकपदानुसन्धानजन्यबोधे [1]तदर्थनिष्ठानेकविषयताकत्वाभावनियमः । घटावानयेत्यादिवाक्यजन्यबोधे च घटद्वयत्वाद्यवच्छिन्नघटद्वयादिविषयता, तदानयनत्वाद्यवच्छिन्नानयनद्वयादिविषयता [2]चाभिन्नैव । घटं पटं चानयेत्यादिवाक्यजन्यसमूहालम्बनबोधे घटानयनत्व-पटानयनत्वादिविभिन्नधर्मावच्छिन्नविषयता चावच्छेदकभेदात् भिद्यते इति न दोष इति वाच्यम् ।

घटावानयेत्यादिवाक्यजन्यबोधे [3]एकघटानय (नं) नविषयतायाः अपरघटानयनविषयत्वाभेदे, यत्रानयने यद्घटकर्मकत्वं बाधितम्, तदानयननिष्ठविषयतायाः तदानयनावृत्तितद्घटकर्मकत्वाद्यवच्छिन्नतद्घटानयननिष्ठविषयत्वाभेदेन तद्बोधस्य

1 अनेकविषयताकत्वाभावेति — अर्थबोधनघटके अर्थविषयत्वे सकृत्वं विवक्षितमिति भावः ।

2 अभिन्नैव — एकैव । घटभेदेन आनयनभेदेन च न विभिन्ना विषयता । अत एव न वाक्यभेद इति भावः ।

3 एकघटानयनेति — घटान्वयि एकत्वम् । तच्च समभिव्याहृतपदार्था (घटा) न्यत्वरूपं बोध्यम् । एकशब्दोऽत्रान्यबोधक इति फलितार्थः । एवमपरघटेत्यत्रापि द्रष्टव्यम् ।

तदवृत्तिधर्मावच्छिन्नतन्निष्ठविषयताकत्वेन [1]भ्रमत्वप्रसङ्गात्, तत्र विषयताभेदस्यावश्यकतया [2]तादृशनियमेऽपि व्यभिचारादिति चेत् ।

मैवम् । एकपदानुसन्धानजन्यबोधे एकविषयत्वानिरूपिततदर्थविषयताद्वयाभावनियमोपगमे अनुपपत्त्यभावात् । घटावानय, घटपटावानय इत्यादौ आनयनभेदेन तद्विषयताभेदेऽपि तदुभयविषयतानिरूपिता आनयन (स्व) [त्व] स्य प्रकारतारूपविषयता [3]एकैवोपेयते, विषयभेदविरहात् । घटं पटं चानय इति वाक्याच्च न समूहालम्बनबोधसंभवः । घटानयनं पटानयनमिति समूहालम्बनबोधे तु, तदानयनविषयतानिरूपितानयनत्व विषयताया अपि भेदात् । समूहालम्बनबोधस्य

---

1 भ्रमत्वेति — विशेष्यावृत्तिधर्मप्रकारकज्ञानत्वं भ्रमत्वम् । विषयतावच्छेदकतायाः विषयतारूपत्वात् तदवृत्तिधर्मावच्छिन्नतन्निष्ठविषयताकत्वमित्यभिहितम् । तत्र तत्पदाभ्यां विशेष्यस्य परमर्शः ।

2 तादृशनियमेऽपि — एकपदानुसन्धानजन्यबोधे तदर्थनिष्ठानेकविषयताकत्वाभावनियमेऽपि ।

3 एकैवेति — तथाच एकविषयत्वानिरूपिततदर्थविषयताद्वयशून्यत्वात् बोधस्य न नियमक्षतिरिति भावः ।

प्रत्येकज्ञानोत्पादकसामग्रीसमुदायाधीनतया प्रत्येकज्ञानीय-विषयताद्वयनियामकवशात् विषयताद्वयसंभवात् । अतः तत्रावृत्त्या क्रमेणानेकार्थबोधस्वीकारः ।

नन्वेवमेकशेषानुशासनमफलम्, घटौ इत्यादौ [1]द्वित्वघटत्वाद्येकैकविशेषणीयैकैकविषयतानिरूपितनानाघटादि-विषयताशालिबोधस्य एकेनापि घटादिपदेन जननसंभवादिति चेन्न ।

तदनुशासनस्य वैफल्यस्येष्टत्वादिति ॥

---

## युगपदेव नानार्थविषयकबोधवादिनवीनाशयवर्णनम्

नवीनानां तु अयमाशयः— [2]बाधस्येच्छाया विरोधित्वे मानाभावः । विरोधित्वे वा, तस्य न सार्वत्रिकत्वमिति ।

---

1 द्वित्वघटत्वादीति — घटौ इत्यत्र प्रकृत्यर्थघटद्वयनिष्ठविषय-ताद्वयं प्रकृत्यर्थतावच्छेदकघटत्वनिष्ठया एकप्रकारतया, द्विव-चनार्थद्वित्वनिष्ठया एकप्रकारतया च निरूपितम् । घटत्वस्य द्वित्वस्य च प्रत्येकमेकत्वात् तन्निष्ठविषयताया न भेदः इति बोधनाय एकैकविशेषणीयेत्यभिहितं बोध्यम् ।

2 बाधस्य — बाधनिश्चयस्य । एकदा नानार्थबोधकत्वनिश्चय-स्येति यावत् ।

एतत्पदविषयकमनुसन्धानं एतत्पदस्यार्थद्वयं बोधयतु, एतत्पदमर्थद्वयविषयकैकबोधं जनयतु इत्याकारिका नानार्थादिशब्दविषयकैकानुसन्धाने अनेकार्थप्रत्यायकत्वप्रकारिका वक्तुरिच्छा [1]क्वचित् संभवत्येव । तद्बलात् नानार्थादिस्थले एकदा अनेकार्थबोधो दुर्वारः ।

न च तात्पर्यसत्त्वेऽपि सकृदुच्चरितः इत्यादिनियमभङ्गभयान्नोक्तबोधाभ्युपगमः संभवतीति वाच्यम् । सामग्रीसत्त्वे नियमभङ्गस्याकिञ्चित्करत्वात् ।

किञ्च, [2]कस्यार्थस्य प्रथमं बोधः कस्य वा पश्चादित्यत्र विनिगमकाभावेन आवृत्त्या क्रिमिकबोधोपगमासंभवेन युगपत् नानार्थबोधोपगम एवोचितः । न चैवं तत्र वाक्यभेदव्यवहारानुपपत्तिः, वाक्यजन्यशाब्दबोधभेदस्यैव वाक्यभेदे प्रयोजकत्वादिति वाच्यम् । वाक्यार्थभेदस्यैव वाक्यभेदप्रयोजकत्वात् ।

यत्तु, एवं सति 'एतद्भूतलं घटवत् पटवच्च' इत्यादावपि वाक्यभेदो न स्यात् । तत्र घटपटादिविशिष्टस्यैतद्भूतला-

1 क्वचित् — उक्तबाधनिश्चयाभावस्थले ।
2 कस्यार्थस्येति — नानार्थकपदबोध्येष्वर्थेषु इत्यादिः ।

देर्वाक्यार्थस्यैक्यात् । किंच, एवं सति घटपटावानयेत्यादावपि वाक्यभेदापत्तिः, घटमानय पटं च इत्यादाविव तत्रापि घटानयन—पटानयनरूपवाक्यार्थभेदात् । न चेष्टापत्तिरिति वाच्यम् । तथा सति एकवाक्यघटकयोरेव पदयोः [1]समासप्रयोजकसामर्थ्यस्वीकारेण तत्र घटपटौ इति घटपटपदयोः समासानुपपत्तेरिति ।

तदसत् । [2]अर्थनिष्ठस्वप्रयोज्य (निष्ठ) विषयतयोः

---

1 समासप्रयोजकसामर्थ्येति — समर्थः पदविधिः' इति सूत्रात् सामर्थ्यस्य समासप्रयोजकत्वं बोध्यम् ।

2 अर्थनिष्ठेत्यादि — घटपटावानयेति वाक्यजन्यबोधीया घटविषयता घटपदप्रयोज्या । पटविषयता पटपदप्रयोज्या । तयोः साक्षान्न निरूप्यनिरूपकभावः, घटपटयोः विशेषणविशेष्यभावविरहात् । घटपटयोरुभयोः आनयनक्रियायां विशेषणत्वात् विषयताद्वयमपि आनयनविषयतानिरूपितम् । निरुक्तसमूहालम्बनानात्मकबोधीया आनयनविषयता एकैव । तथाच घटविषयतानिरूपिता या आनयनविषयता तन्निरूपिता पटविषयतेति घटपटविषयतयोःपरम्परया स्वनिरूपितानयनविषयताद्वारा निरूप्यनिरूपकभावोऽस्ति । निरूप्यनिरूपकभावविरहात्मकार्थभेदाभावादत्रैकवाक्यत्वमिति समुदायार्थः । इत्थंच साक्षात्परम्परया वा तत्पदप्रयोज्यवियतानिरूपितविषयताप्रयोजकत्वरूपतदेकवाक्यतालक्षणं समासप्रयोजकं व्यपेक्षासामर्थ्यमपि घटपटपदयोरक्षतमिति बोध्यम् ।

साक्षात्परम्परासाधारणनिरूप्यनिरूपकभावविरहस्यैव वाक्यार्थभेदत्वात् । घटपटावानयेत्यादिवाक्यजन्यबोधीया (न) [नां] घटादिनिष्ठविषयतानामानयनादिनिष्ठ (प्रकारता) [विशेष्यता] निरूपितत्वेन परम्परया निरूप्यनिरूपकभावः । घटमानय पटं च इत्यादिवाक्यजन्यसमूहालम्बनबोधीयानयनत्वादिप्रकारताया विशेष्यताभेदेन भेदोपगमात् तन्निरूपितानयनादिनिष्ठविषयतानां परम्परयापि निरूप्यनिरूपकभावविरहः इत्यदोषः । तथाच निरूप्यनिरूपकभावशून्यविषयताद्वयशालिबोधपरवाक्ये वाक्यभेदः, अतादृशेच वाक्ये एकवाक्यत्वमिति पर्यवसितम् । नचैवं सकृदुच्चरितः इति नियमे मानाभावः इति वाच्यम् । इष्टापत्तेरिति दिक् ॥

इति नानार्थकस्थले बोधोत्पादविचारः

### आवृत्त्यादीनां स्वरूपप्रदर्शनम्

अत्र स्वस्थानस्थस्य पुनरनुसन्धानमावृत्तिः । निकटस्थस्य एकदेशानुसन्धानमनुषङ्गः । दूरस्थस्यानुसन्धानमनुवृत्तिः । सा च [1]सिंहावलोकन-मण्डूकप्लुति-गङ्गाप्रवाहवदिति त्रिधा । (अन्वया) [आवृत्त्य] नुषङ्गानुवृत्तिसाधारणं च श्रुतपदस्य पुनरनुसन्धानत्वम् । अश्रुतपदानुसन्धानमध्याहारः इति ध्येयम्

---

### वेदवक्ता परमेश्वरः, वेदः पौरुषेयः

इत्थं वक्त्रभिप्रायघटिततात्पर्यस्य शाब्दबोधप्रयोजकत्वे स्थिते, वेदे वक्त्रन्तराभावेन तात्पर्यनिर्वाहाय अतीन्द्रिय-

---

1 सिंहावलोकनेत्यादि – सिंहः स्वगृहान्निर्गत्य दूरं गत्वा पुनः परावृत्त्य स्वगृहं पश्यति । तद्वत् उत्तरत्र केषु चिद्वाक्येषु पूर्वतनपदस्यान्वयो नास्ति । क्वचिदुत्तरवाक्ये पूर्वतनपदस्यान्वयः । सा सिंहावलोकना । उतरवाक्येषु एकत्र पूर्वपदस्यान्वयः, एकत्र नान्वयः । पुनः वाक्यान्तरे तदन्वयः सा मण्डूकप्लुतिः । उत्तरवाक्येषु क्रमेण सर्वत्र पूर्वपदान्वयः गङ्गाप्रवाहः इति त्रैविध्यमनुवृत्तेर्बोध्यम् ।

वेदार्थदर्शी वेदवक्ता सर्वज्ञः परमेश्वरोऽपि सिद्ध्यति। जीवात्मनामसर्वज्ञत्वात् योगिनां सर्वज्ञत्वेऽपि योगादिविध्युपदेशकवेदमश्रुत्वा योगाभ्यासानुपपत्तेः, सर्गादौ अयोगिनः सर्वज्ञस्य वेदवक्तुरवश्यं स्वीकरणीयत्वात्। अत एव वेदस्य पौरुषेयत्वमपि भारतादिवत्।

---

## वेदः अपौरुषेयः इति मीमांसकमतनिरूपणम्

अत्र मीमांसकाः— वक्त्रभिप्रायघटिततात्पर्यस्य शाब्दबोधप्रयोजकत्वेऽपि न तदनुरोधेनेश्वरसिद्धिः, अध्यापकतात्पर्येणैव तन्निर्वाहात्। अध्यापकानामसर्वज्ञत्वेऽपि पूर्वाध्यापकोच्चरितात् (तदाद्य) [तदीय] तात्पर्यसहकृतात् वेदादेव तदर्थज्ञानम्। न च मध्ये प्रलयेन अध्यापकपरम्पराया विच्छेदात् सर्गादौ तत्तात्पर्यासंभवेन ईश्वरस्वीकार आवश्यक इति वाच्यम्। प्रलये मानाभावेन अध्यापकपरम्पराया अविच्छेदात्। तस्मात् न वेदस्य पौरुषेयत्वमिति वेदस्यापौरुषेयत्वमेवेति वदन्ति।

## प्रलयसाधनेनोक्तमतनिरासः

तदसत् । [1]कालकपालान्यावृत्तिः घटप्रागभावः, कार्यद्रव्यानाधाराधारः, अभावत्वात् आकाशवृत्त्यभाववत् इत्यनुमानेनातीतप्रलयसिद्धेः । एवमेव घटध्वंसं पक्षीकृत्य भावि (प्रयोगोपि) [प्रलयोऽपि] साधनीयः । एवं एककालीनाः सर्वे परमाणवः, कार्यद्रव्यशून्याः, आरम्भकत्वात् नष्टपवनारम्भकपरमाणुवत्, ब्रह्माण्डसन्ततिः अत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवत्, इत्याद्यनुमानादपि तत्सिद्धिः । 'सदेव

---

1 काल-कपालान्यावृत्तिरित्यादि — अत्रानुमाने जन्यद्रव्यानाधारः आधारः यस्येति व्युत्पत्त्या जन्यद्रव्यानाधाराधारः इत्यनेन जन्यद्रव्यानाधारवृत्तित्वं साध्यं विवक्षितम् । आकाशारब्धद्रव्यस्याभावात् आकाशः न समवायेन जन्यद्रव्याधारः। नापि संयोगेन तदीयसंयोगस्याधारतानियामकत्वाभावात् । नापि कालिकेन, नित्येषु कालिकायोगात् । तस्मात् जन्यद्रव्यानाधारः आकाश इति तद्वृत्त्यभावे दृष्टान्ते साध्यसंगतिः । घटप्रागभावः दैशिकविशेषणतया कपाले, कालिकविशेषणतया काले च वर्तते । न ताभ्यामन्यस्मिन् वर्तते । विषयितायाः वृत्त्यनियामकत्वात् संयोगसमवाययोः व्यधिकरणत्वात् । कालकपालाभ्यामन्यावृत्तिघटप्रागभावे साध्यमानं जन्यद्रव्यानाधारवृत्तित्वं न कपालवृत्तित्वमादाय पर्यवस्यति । कपाले जन्यद्रव्यानाधारत्वबाधात् । अतः जन्यद्रव्यानाधारकालवृत्तित्वे पर्यवस्यति । स एव कालः प्रलयकालः इति प्रलयसिद्धिर्बोध्या ।

सोम्येदमग्र आसीत्' (छा-6-2-1) 'धाता यथापूर्वमकल्पयत्' (तै. आ) इत्याद्याः श्रुतयः,

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ (भ-गी 9-7)

इत्याद्याः स्मृतयोऽपि प्रलये मानम् । प्रकृतिः— मूलकारणत्वात् परमाणुः । अतोऽस्माकं सांख्यानामिवाति[1]रिक्तप्रकृत्यनङ्गीकारेऽपि [2]न क्षतिः ।

एवं वेदस्यापौरुषेयत्वे, 'तस्मात्तेपानाच्चत्वारो वेदा अजायन्त, ऋचः सामानि जज्ञिरे' इत्यादिश्रुतिविरोधश्च । न च श्रुतिराविर्भावपरेति वाच्यम् । [3]मुख्यत्वे बाधकाभावात् । तस्माद्वेदः पौरुषेय एव ।

### वेदत्व–पौरुषेयत्वयोः स्वरूपनिरूपणम्

ननु किमिदं वेदत्वम्, पौरुषेयत्वञ्चेति चेत् ।

---

1 अतिरिक्तप्रकृतीति — परमाणुव्यतिरिक्ता सत्वरजस्तमोगुणात्मिका प्रकृतिरित्यर्थः ।
2 न क्षतिः — न स्मृतिविरोधः ।
3 मुख्यत्वे — अजायन्त इति श्रुतेः उत्पत्तिरूपमुख्यार्थकत्वे ।

अत्राहुः—मन्त्रब्राह्मणान्यतरत्वम् वेदत्वम् । अत एव 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति प्राचीनगाथापि । मन्त्रो द्विविधः, ऋक्, यजुश्च । तत्र नियतवर्णपदा ऋक् । अनियतवर्णपदं यजुः । यत्र ऋचां बाहुल्यं, स ऋग्वेदः । यत्र यजुर्बाहुल्यं स यजुर्वेदः । ऋग्यजुषोरविवक्षया गानप्राधान्ये (न) [च] सामवेदः । गानोत्थानाय व्यासप्रयुक्ताः वेदबाह्याः स्तोभाः । तेन निरर्थका अपि गीयमानाः पुण्याय । ऋग्यजुषोरविवक्षया शान्तिकपौष्टिकपुरस्कारेण प्रवृत्तः अथर्ववेदः । निगदः यजुर्विशेषः । खिलं (प्रकृतपदं) [प्रकीर्णकम्] ऋक् यजुर्वा । एते मन्त्रप्रपञ्चाः ।

ब्राह्मणं तु विधिः, अर्थवादः अनुवादश्च । तत्र विधिःचोदना । अर्थवादः– स्तुतिः, निन्दा, परकृतिः, पुराकृतिश्च । अनुवादः– सप्रयोजनं पुनर्वचनम् । एते ब्राह्मणप्रपञ्चाः । मन्त्रब्राह्मण (तादृश्यश्च) [मय्यश्च] सर्वा एव शाखाः इति सहस्रशाखस्यापि वेदस्य अपूर्वे तात्पर्यम् ।

पौरुषेयत्वं च स्वतन्त्रपुरुषप्रणीतत्वम् । तच्च स्वसमानानुपूर्वीकवाक्यज्ञानाजन्यस्वप्रतिपाद्यवाक्यार्थज्ञानवज्जन्य-

जातीयत्वम् । वेदभारतादौ अध्यापकप्रणीतत्वव्यवहारवारणाय अजन्यान्तं ज्ञानविशेषणम् । पठ्यमानवेदभारतादौ ईश्वरव्यासादिप्रणीतत्व[1]निर्वाहाय जातिघटनमिति ।

---

## मणिकारानुयायिनव्यानां मतेन वेदत्वपरिष्कारः

मणिकारानुयायिनो [2]नव्यास्तु, शब्दशब्दोपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति, शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्वम् । अत्र शब्दः शब्दोपजीवि च यत्प्रमाणं, तदुभयभिन्नप्रमाणजन्यप्रमितिविषयार्थकं यत् तदन्यत्वे सतीति सत्यन्तार्थः । अस्ति(चेदन्त्वक्षण)[चेदं लक्षणं] स्वर्गकामो यजेतेत्यादिवेदे । तदर्थस्य स्वर्गादिसाधनत्वविशिष्टयागादिरूपस्य अलौकिकस्वर्गादिघटितत्वेन शब्दशब्दोपजीविप्रमाणातिरिक्तेन प्रत्यक्षप्रमाणादिना अग्रहात् न निरुक्तप्रमा-

---

1 निर्वाहायेति — वर्णानामनित्यत्वेनोच्चारणभेदेन भिन्नत्वात् अस्मदादिभिः पठ्यमाने वेदे ईश्वरजन्यत्वाभावादव्याप्तिवारणायेति यावत् ।

2 नव्यास्त्विति — अस्य अतिव्यवहितेन 'द्विगिति प्राहुः' इत्यनेन संबन्धो बोध्यः ।

णविषयार्थकत्वम् । किन्तु घटोऽस्तीत्यादिलौकिकवाक्य-स्यैव । तदन्य (त्वस्य) [त्वं वेदस्य] । एवं वेदात्मकशब्द-जन्यं यत् वाक्यार्थज्ञानं वेदार्थशाब्दबोधरूपम्, तज्जन्यं यत् स्मृतिपुराणादि, तदन्यप्रमाणशब्दत्वस्यैव तत्र सत्त्वेन लक्षण-समन्वयसंभवात् । अत्र घटोऽस्तीत्यादिलौकिकवाक्ये, दृष्टार्थकस्मृतिपुराणादिवाक्ये चातिप्रसङ्गवारणाय सत्यन्त-निवेशः ।

शब्दोपजीविप्रमाणातिरिक्ते वेदाद्यात्मकशब्दप्रमाणेन, शब्दभिन्नेन च यागः स्वर्गसाधनं स्वर्गसाधनतावच्छेदकरूपव-त्त्वात् इत्य(त्र) [नु] मानादिना [1]साध्यादिप्रसिद्धिसंपादकशब्दो-पजीविप्रमाणेन वेदार्थस्य ग्रहणात् असंभवः इति, शब्दप्रमा-णभेदस्य, शब्दोपजीविप्रमाणभेदस्य च सत्यन्तार्थभेदप्रति-योगिकोटिप्रविष्टजन्यत्वप्रतियोगिप्रमाणविशेषणतया निवेशः । न च पदज्ञानस्य शाब्दकरणतामते शब्दातिरिक्तत्वस्य प्रमाण-

---

1 साध्यादिप्रसिद्धीति— अलौकिकस्य साध्यीभूतस्वर्गसाधनत्वस्य ज्ञानं वेदशब्देनैव जायते । अतः अस्यानुमानस्य शब्दोपजी-वित्वमिति भावः ।

विशेषणत्वेऽपि असंभवतादवस्थ्यमिति वाच्यम् । तन्मते शब्दपदस्य शब्दज्ञानपरतया अदोषात् ।

---

### लक्षणघटकस्य सत्यन्तस्यार्थविचारः

अत्र शब्दोपजीविप्रमाणत्वं शब्दप्रमाणप्रयोज्यप्रमितिकरणत्वेन । [न] तु शब्दप्रमाणप्रयोज्यत्वे सति प्रमितिकरणत्वेन । [त] था सति चक्षुरादे [रपि] दीपदानादिजन्यादृष्टद्वारा दीपदानादि (कन्नेष्य) [कर्तव्यता] बोधकशब्दप्रयोज्यतया [1]अतिरिक्तान्तेन व्यावर्तनात् नित्यस्य [2]श्रवणादेरे [वा] व्यावर्तनात् तदगृहीतार्थके घटोऽस्तीत्यादिलौकिकवाक्ये अतिप्रसङ्गात् ।

---

1 अतिरिक्तान्तेन — शब्दोपजीविप्रमाणातिरिक्तेत्यनेन प्रमाणविशेषणेन ।

2 श्रवणादेरेवेति — आकाशरूपस्य श्रवणस्य चक्षुरादिवत् शब्दप्रयोज्यत्वाभावात् शब्दोपजीविप्रमाणातिरिक्तत्वम् । तज्जन्यप्रमितौ शब्द शब्दत्वादिकमेव विषयः, न घटास्तित्वादिकम् । तथाच तादृशप्रमाणजन्यप्रमितिविषयार्थकं यत् तद्भिन्नत्वरूपः सत्यन्तार्थः लौकिकवाक्येऽस्तीत्यतिप्रसङ्ग इति भावः ।

अथ चक्षुरादेरदृष्टद्वारा शब्दोपजीवित्वे चाक्षुषादिज्ञानस्यापि शब्दप्रयोज्यतावश्यकतया, जन्यमात्रस्यादृष्टाधीनतया श्रावणप्रत्यक्षस्यापि [1]तत्त्वेन तद्द्वारकशब्दाधीनादृष्टोपजीवितया प्रमाणमात्रमेव शब्दप्रयोज्यप्रमितिकरणमिति तदन्यप्रमाणाप्रसिद्धिरित्यदृष्टाद्वारकत्वविशेषणस्योपजीविताया अवश्यं प्रवेशनीयतया प्रमितिकरणेऽपि शब्दोपजीवित्वविशेषणसंभवः इति चेन्न ।

शब्दसहकृतेन येन प्रमितिर्जन्य (त्वे) [ते] तत्त्वस्य शब्दोपजीविप्रमाणपदेन विवक्षणीयतया अदृष्टा (विषय) [द्वार] कत्वविशेषणं विनैवास्माकं निर्वाहात् । नहि चक्षुरादिना प्रत्यक्षादिजनने शब्दस्य सहकारिता । चक्षुरादिसत्त्वे तज्जनकादृष्टजनकशब्दस्यावश्यकतया चक्षुरादौ प्रमित्यनुपधायकतायाः शब्दव्यतिरेकाप्रयोज्यत्वात् ।

---

**प्रमारूपफलद्वारा शब्दोपजीवित्वमेवात्र विवक्षणीयम्**

वस्तुतस्तु, [2]स्वतः शब्दोपजीविभिन्नत्वप्रवेशे शब्द-

---

1 तत्त्वेन — अदृष्टाधीनत्वेन ।
2 स्वतः — प्रमितिरूपं फलमद्वारीकृत्य ।

जन्यस्वर्गाद्युपस्थितिसहकृत चक्षुरादिप्रमाणजन्यवेदार्थगोच[1]रोपनीतभानमादायासंभवः ।

प्रमितौ गुरु-नैयायिकोभयसिद्धत्वविशेषणोपादानेनोपनीतभानात्मक[2]प्रमितिवारणेऽपि, ज्ञायमानलिङ्गस्यानुमितिकरणतापक्षे यागादौ स्वर्गसाधनत्वाद्यनु(मीयक) [मापक][3]लिङ्गस्य. [4]स्वतः शब्दानुपजीवकत्वेन, [5] ज्ञानकरणतामतेऽपि व्याप्तिघटकपदार्थानां विशकलितानामुपस्थित्या विशेष्ये विशेषणमित्यादिरीत्या परामर्शात् यत्रानुमितिः, तदनुरोधेन व्याप्तिघटकाभावादिज्ञानस्य करणताया उपगन्तव्यतया तस्य च साध्याविषयकस्य स्वतः शब्दानुपजीवित्वेन, तज्जन्यवेदार्थगोचरानुमितिमादायासंभवो दुर्वारः ।

---

1 उपनीतभानं —यागोऽयं स्वर्गसाधनमित्याकारकं स्वर्गसाधनत्वांशे अलौकिकचाक्षुषम् । तत्र स्वर्गसाधनत्वभाने कारणीभूतः उपनयः संनिकर्षः शब्दजन्यस्वर्गाद्युपस्थितिपदेनोक्तः इति ज्ञेयम् ।

2 प्रमितिवारणेऽपीति — प्रभाकरगुरुमते उपनयसंनिकर्षास्वीकारेण निरुक्तोपनीतभानस्य उभयसिद्धत्वाभावादिति भावः ।

3 लिङ्गस्य — स्वर्गसाधनतावच्छेदकधर्मवत्त्वस्य ।

4 स्वतः — अनुमितिमद्वारीकृत्य ।

5 ज्ञानकरणतामतेऽपि — व्याप्यत्वेन लिङ्गज्ञानस्य अनुमितिकरणतामतेऽपि ।

प्रमारूपफलद्वारा शब्दोपजीवितालाभार्थकतयैव [1]प्रथम-प्रमाणसार्थकता । शब्दप्रमाणफले शब्दस्योपजीव्यत्वेऽपि स्वस्य स्वासहकारितया न शब्दप्रमाणे शब्दस्य सहकारितेति शब्दस्य न निरुक्तशब्दोपजीवित्वमिति न [2]प्रथमशब्दपदवैय-र्थ्यम् ।

ननु चक्षुरादिना घटास्तित्वादिरूपलौकिकवाक्यार्थज्ञान-जननेऽपि कुत्र चित् विशेषणज्ञानद्वारा विशेषणबोधकशब्दस्य सहकारितया चक्षुरादेरपि प्रायशः फलद्वारा शब्दोपजीवित्वम-

---

1 प्रथमप्रमाणसार्थकता — लक्षणवाक्ये शब्दशब्दोपजीविप्र-माणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति इति सत्यन्ते शब्दोपजीविप्रमाणातिरिक्तेत्यत्र प्रमाणपदोपादानस्य सार्थ-कता ।

2 न प्रथमशब्दपदवैयर्थ्यम् — सत्यन्ते शब्दशब्दोपजीविप्रमा-णातिरिक्तेत्यत्र प्रथमशब्दपदोपादानस्य न वैयर्थ्यम् । अन्यथा शब्दस्यापि शब्दोपजीवित्वे, शब्दोपजीविप्रमाणातिरि-क्तप्रमाणपदेन वेदशब्दमुपादायासंभवदोषाप्रसक्तेः शब्दाति-रिक्तत्वनिवेशनं व्यर्थं स्यादिति भावः ।

स्त्येवेति तादृशचक्षुरादिमात्रगृहीतार्थके लौकिकवाक्ये [1]अतिव्याप्तिर्दुर्वारा । न च यज्जन्यप्रमितिसामान्ये शब्दप्रयोज्यत्वस्य शब्दोपजीवीत्यनेन विवक्षणान्नोक्तातिव्याप्तिरिति वाच्यम् । तथा सति मनःशरीरादिजन्यप्रमितिसामान्यस्य शब्दप्रयोज्यत्वाभावेन मनःशरीरादीनां शब्दानुपजीवि[2]प्रमाणतया तज्जन्यशाब्दप्रमितिविषयार्थकत्वाद्वेदस्येत्यसंभवापत्तेः ।

अथ [3]द्वितीयप्रमाणपदेनासाधारणप्रमाणस्य विवक्षणान्नायं दोषः । चक्षुरादौ निरुक्तशब्दोपजीवित्वाविरहेऽपि तज्जवेदार्थोपनीतभानमादाय नासंभवः । असाधारणप्रमाणप्रयो-

---

1 अतिव्याप्तिरिति — ननु इत्यादिग्रन्थेनोपक्रान्तः महापूर्वपक्षः 'मैवम्' इत्यतः प्राक्तनेन 'इतिचेत्' इति ग्रन्थेन पर्यवस्यति । महापूर्वपक्षमध्ये 'अथ' इत्यादिना अवान्तराक्षेपः प्रस्तूयते ।

2 प्रमाणतयेति — यद्यपि प्रमाकरणत्वरूपं प्रमाणत्वं मनसः घटते इन्द्रियत्वात् न शरीरस्य । तथापि प्रमासामान्ये मनसः शरीरस्य च कारणत्वात् प्रमाकारणाभिप्रायकं प्रमाणपदं बोध्यम् ।

3 द्वितीयप्रमाणपदेनेति — सत्यन्ते शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणपदेनेति यावत् । मनसः वेदजन्यशाब्दबोधे असाधारणप्रमाणत्वाभावेन शब्दापजीविप्रमाणजन्यप्रमितिविषयत्वं न वेदार्थस्येति नासंभव इति भावः ।

ज्यविषयतायाः अर्थविशेषणत्वोपगमात् । [ज्ञा] नलक्षणायाः मनसः प्रत्यासत्तितया उपनीतवेदार्थनिष्ठचाक्षुषादिविषयतायाः अपि असाधारणप्रमाणभूतचक्षुराद्यप्रयोज्यत्वात् । सामान्य-लक्षणायाः बहिरिन्द्रियप्रत्यासत्तित्वे, स्वजन्य[1]ज्ञानसमानविष-यकत्वेन प्रमितेर्विशेषणीयतया न सामान्यलक्षणाजन्यवेदार्थगो-चरचाक्षुषादिप्रमामादायासंभवः ।

अत एव [2]यागादिरूपवेदार्थैकदेशस्य लौकिकप्रमाणग-म्यत्वेऽपि न दोषः । स्वर्गत्वाद्यप्रकारकस्य लौकिकप्रमाण-जन्ययागत्वादिप्रकारकबोधस्य, स्वर्गसाधनं यागः इत्यादिवेद-जन्यबोधीयविषयतावत्त्वरूपतत्समानविषयकत्वाभावात् । यागः इत्यादिज्ञानीययागादिविषयतायाः स्वर्गसाधनं यागः इत्यादि-ज्ञानीयविषयतातो [3]भेदात् । न च (धर्मित्य) [प्रमित्य]

---

1 ज्ञानसमानविषयेति – तज्ज्ञानीयविषयतावत्त्वं तज्ज्ञानसमान-विषयत्वमिति अग्रे स्पष्टम् ।

2 वेदार्थैकदेशस्येति — स्वर्गसाधनत्वविशिष्टयागः (धर्मः) वेदार्थः । विशेष्यांशः यागः त्यागरूपः लौकिकप्रमाणगम्यः । स्वर्गसाधनत्वमतीन्द्रियम्, वेदैकसमधिगम्यम् । तद्विशिष्टवेषेण यागस्यालौकिकत्वं बोध्यम् ।

3 भेदादिति— समानाकारकज्ञानयोरेव विषयतैक्यादिति भावः ।

विषयार्थकत्वमित्यस्य प्रमितिविषयान्यार्थकत्वमित्येवार्थः । तथाचालौकिकस्वर्गादिरूपार्थबोधकतयैव वेदे लक्षणगमनसंभव इति वाच्यम् । स्वर्गादेरपि स्वर्गत्वादिना अनुमानादिरूपलौकिकप्रमाणगम्यत्वादिति चेन्न ।

स्वर्गसाधनत्वाद्यनुमापकयागविशेषत्वादिरूप [1]लिङ्गात्मकानुमानजन्य[2]गुणत्वाद्यनुमितेः तत्करणक (काद्यनु) [प्र]मितिसामान्यान्तर्गतायाः शब्दोपजीविताविरहेण तादृशानुमानग्राह्यार्थकतायाः वेदे सत्त्वादसंभवस्य दुर्वारत्वादिति चेत् ।

---

1 लिङ्गात्मकानुमानेति — ज्ञायमानलिङ्गस्यानुमितिकरणत्वाभिप्रायकम् ।

2 गुणत्वाद्यनुमितेरिति — यागविशेषत्वहेतुकायाः इच्छात्मके द्रव्यत्यागरूपयागे पक्षे गुणत्वसाध्यकानुमितेरित्यर्थः । यागे स्वर्गसाधनत्वानुमितिकरणं यागविशेषत्वात्मकमनुमानप्रमाणं न शब्दोपजीवि । यागविशेषत्वेनैव लिङ्गेन गुणत्वानुमितौ शब्दानपेक्षणात् यज्जन्यप्रमितिसामान्ये शब्दप्रयोज्यत्वमिति लक्षणाभावात् । तथाच शब्दोपजीविव्यतिरिक्तप्रमाणपदेन यागे स्वर्गसाधनत्वानुमितिकरणस्य यागविशेषत्वात्मकानुमानप्रमाणस्य ग्रहणसंभवात् तज्जन्यप्रमितिविषयत्वस्यैव वेदार्थे (स्वर्गसाधनतादौ) सत्त्वात् तादृशप्रमित्यविषयार्थकत्वाभावादसंभवः इति समुदायार्थः ।

मैवम्— [1]शब्दसहकारेणैव येन स्वजन्यज्ञानसमानविषयकप्रमितिर्जन्यते तदन्यप्रमाणगम्यार्थकं यत्स्वं तदन्यत्वनिवेशे नोक्तदोषाभावात् । [2]गुणत्वाद्यनुमितेः वेदजन्यज्ञानसमानविषयकत्वाभावात्, तत्समानविषयकानुमित्यादेश्चोक्तानुमानादिना जनने शब्दस्य सहकारितानियमात् वेदस्थले [3]उक्तानुमानादेः [4]शब्दोपजीवित्वाक्षतेः । अत एव चक्षुरादिजन्यवेदार्थगोचरोपनीतभानमादायापि नासंभवप्रसक्तिः । चक्षुरादेरप्युक्तरीत्या वेदस्य स्वपदेनोपादाने शब्दोपजीवित्वाक्षतेः ।

न च यादृशचक्षुरादिव्यक्त्या शब्दजन्यविशेषणज्ञान-

---

1 शब्दसहकारेणैवेत्यादि — अत्र येनेति तृतीयान्तयत्पदेन, तदन्यप्रमाणेत्यत्र तत्पदेन च शब्दोपजीविप्रमाणं ग्राह्यम् । एवकारेणावधारणबोधात् तत्र विद्यमानायां स्वजन्यज्ञानसमानविषयकप्रमितिजनकतायां शब्दसहकृतत्वनैयत्यं बोध्यते । सत्यन्तार्थः यत्र स्थाप्यः, तत्परमत्र स्वपदं बोध्यम् ।

2 गुणत्वाद्यनुमितेरिति — यागपक्षक-स्वर्गसाधनत्वानुमापकयागविशेषत्वहेतुकायाः इत्यादिः ।

3 उक्तानुमानादेः — स्वर्गसाधनत्वानुमापकयागविशेषत्वरूपलिङ्गात्मकानुमानादिप्रमाणस्य ।

4 शब्दोपजीवित्वाक्षतेरिति — तथाच तदन्यप्रमाणगम्यार्थकभिन्नत्वं वेदेऽस्तीति नासंभवः इति भावः ।

सहकारेणैव यादृशवाक्यार्थज्ञानं जनितम्, तादृशचक्षुरादिमात्रगृहीतार्थकतादृशदृष्टार्थकवाक्ये ऽतिव्याप्तिर्दुर्वारैवेति वाच्यम्। तादृशवाक्यजनकवक्तृवाक्यार्थज्ञानस्यापि शब्दप्रयोज्यत्वेन तस्य शब्दजन्यवाक्यार्थज्ञानाजन्यत्वदलाभावेनैवोक्तातिव्याप्त्यभावात् । [1]शब्दजन्यपदस्य प्रयोज्यार्थकतया (प्रत्यक्षरूपक्षवाक्यार्थक्षानस्य शब्दजन्यत्वे) शब्दाधीनविशेषणज्ञानजन्यत्वेन शब्दप्रयोज्यत्वात् । चैत्रः शब्दायते इत्यादौ शब्दघटितवाक्यार्थबोधकवाक्ये [2]वाक्यार्थप्रत्यक्षजन्येऽपि [3]एतद्दलाभावादेव नातिव्याप्तिः न तु सत्यन्ताभावात् । शब्दरूपविशेषणज्ञानं विना तादृशवाक्यार्थज्ञानासंभवेन प्रमा (ण) [णेन] [4]तादृशवाक्यार्थप्रमितिजनने शब्दस्य सहकारितया-

---

1 शब्दजन्यपदस्य — शब्दजन्येत्यत्र जन्यपदस्य ।

2 वाक्यार्थप्रत्यक्षेति — वक्तृगतेत्यादिः ।

3 एतद्दलाभावात् — शब्दप्रयोज्यवाक्यार्थज्ञानाजन्यत्वात्मकविशेष्यदलाभावात् ।

4 तादृशवाक्यार्थेति — शब्दघटितवाक्यार्थेत्यर्थः ।

तादृशवाक्यार्थस्य शब्दोपजीविप्रमाणमात्रग्राह्यत्वेन [1]तद्दलसत्त्वात् ।

---

## शब्दोपजीवित्वस्य मिश्रोक्तपरिष्कारः, तन्निरासश्च

यत्तु, शब्दजन्यवाक्यार्थज्ञानोपजीवित्वस्य शब्दोपजीवीत्यनेन विवक्षणात् तादृशवाक्ये नातिव्याप्तिः । न च चैत्रवाक्यादयमर्थो ज्ञात: इत्यादिशब्दजन्य[2]वाक्यार्थघटितार्थकवाक्येऽतिव्याप्तिरिति वाच्यम् । चैत्रवाक्यजन्यार्थबोधं विनापि अन्यत्र चैत्रवाक्यजन्यत्वरूपसामान्यज्ञानात् तेन रूपेण चैत्रवाक्यजन्यबोधभ्रमेण तादृशवाक्यार्थज्ञानोत्पादेन तद्वारणादिति मिश्रैरुक्तम् ।

तन्न चारु । शब्दजन्यवाक्यार्थज्ञानपर्यन्तोपजीवि-

---

1 तद्दलसत्त्वात् — शब्दतदुपजीविव्यतिरिक्तेत्यादि सत्यन्तदलसत्त्वात् ।

2 वाक्यार्थघटितेति — तथाच विशेषणज्ञानविधया चैत्रवाक्यजन्यस्य वाक्यार्थज्ञानस्यापेक्षणात् चैत्रवाक्यादयमर्थः श्रुतः इति वाक्यं शब्दोपजीवीति तदन्यप्रमाणजन्यप्रमित्यविषयार्थकमित्यतिव्याप्तिरित्यर्थः ।

तानिवेशे वेद[1]वाक्यार्थज्ञानं विनैव [2]शब्दजन्यतादृशवाक्यार्थघटकविशकलितस्वर्गादिपदार्थोपस्थितितो वेदार्थगोचरानुमान [संभवेना] संभवापत्तेः । शब्दजन्यवाक्यार्थज्ञानेत्यस्य शब्दवृत्ति(ज्ञानान्य) [ज्ञानजन्य) ज्ञानार्थकत्वे[3]नासंभववारणेऽपि, [4]शाब्दत्वजातिविशिष्टघटितार्थकवाक्ये अतिव्याप्तेर्दुर्वारत्वात् । तादृशवाक्यार्थज्ञाने शाब्दत्वजातिग्रहस्यापेक्षणीयतया तादृशजातिमतः शब्दवृत्तिज्ञानजन्यशाब्दबोधस्यैव ज्ञानापेक्षानियमात्, [5]व्यक्तिं विना मूलभूतप्रत्यक्षज्ञानेन जातेरग्रहणात् ।

---

1 वाक्यार्थज्ञानं विनैव — संसृष्टपदार्थात्मकवाक्यार्थज्ञानं विनैव ।

2 शब्दजन्येति — शब्दवृत्तिज्ञानजन्येत्यर्थः ।

3 असंभववारणेऽपीति— वाक्यर्थघटकपदार्थानां विशकलितानां ज्ञानस्य शब्दवृत्तिज्ञानजन्यत्वेन वेदार्थगोचरानुमानस्य च तदपेक्षत्वेन शब्दोपजीवित्वात् तद्भिन्नप्रमाणजन्यप्रमित्यविषयार्थकत्वस्य वेदे सत्त्वादिति भावः ।

4 शाब्दत्वजातिविशिष्टघटितार्थकवाक्यं — श्रुतोऽयमर्थः इति वाक्ये । श्रुधातोः शाब्दत्वविशिष्टवाचकत्वात् ।

5 व्यक्तिं विना—स्वाश्रयव्यक्तिविषयकत्वं विना अयं घटः इत्यादिप्रत्यक्षे एव घटत्वादिजातेः स्वरूपतो भानादिति भावः ।

## शब्दोपजीवितायाः परिष्कारान्तरम्, तन्निरासश्च

यदपि, स्वजन्यज्ञानसमानविषयकज्ञानजनकशब्दज्ञान (गम्य) [जन्य] ज्ञानोपजीवितायाः विवक्षणान्नोक्तदोषावकाशः। शाब्दत्वजातिविशेषघटितस्य श्रुतोऽयमर्थः इत्यादिवाक्यार्थस्य [न] तादृशवाक्यजन्यज्ञानसमानविषयकज्ञानजनकाद्यपेक्षा। [1]अस्तीत्यादिवाक्यजन्यशाब्दज्ञानमात्रे शाब्दत्वं गृहीत्वापि ग्रहसंभवात्, तादृशवाक्यार्थग्राहकप्रमाणस्य समानविषयकज्ञानजनकशब्दानुपजीवित्वात्। समानविषयकत्वं तद्विषयविषयकत्वमेव, न तु तदीयविषयतावत्त्वम्। अतः स्वर्गकामो यजेतेत्यादि वाक्यजन्यबोधे यादृशी विषयता, तद्विलक्षणविषयताशालिबोधजनककिञ्चिद्वाक्योपस्थापितस्वर्गादिसाधनत्वबोध[2]कानुमानग्राह्यत्वेऽपि तादृशवेदस्य नासंभवः इति।

---

1 अस्तीत्यादि वाक्यजन्यशाब्दज्ञानमात्रे— तादृशवाक्यजन्यशाब्दबोधसाधारणशाब्दत्वावच्छिन्ने।

2 अनुमानग्राह्यत्वेऽपीति — वेदार्थस्येति शेषः।

तदपि न सम्यक् । शब्दत्वविशिष्टघटितयादृशवाक्यार्थघटकयत्किञ्चिदर्थघटितार्थवाक्यार्थविषयकशाब्दबोधे शाब्दत्वं गृहीत्वैव तादृशवाक्यार्थज्ञानं, [1]तत्रातिव्याप्तेर्दुर्वारत्वात् ।

---

## लघोः शब्दतदुपजीविप्रमाणान्यप्रमाणेत्यादिसत्यन्तविवक्षितस्यार्थस्य निरूपणम्

[2]अत्र शब्दप्रयोज्यप्रमितिकरणभिन्नकरणकत्वेन शब्दाप्रयोज्यप्रमितेरुपादानं शिरोवेष्टनेन नासिकास्पर्शवदनुचितमिति शब्दाप्रयोज्यत्वेनैव तादृशी प्रमितिः निवेश्या । प्रयोज्यत्वं च [3]जन्यव्यावृत्तमिति शाब्दबोधान्यत्वमपि विशेषणमुपादेयम् ।

---

1 तत्र — श्रुतोऽयमर्थः इत्यादिवाक्यविशेषे ।

2 एतावता — शब्दतदुपजीवीत्यादिमणिग्रन्थस्य यथाक्षरन्यासं उपजीवित्वादिपरिष्कारपूर्वकं व्याख्यां विधाय, तथैव लक्षणकरणे अनौचित्यं मन्यमानः तद्ग्रन्थविवक्षितं लघुभूतमर्थं निरूपयति — अत्रेत्यादिना ।

3 जन्यव्यावृत्तमिति — साक्षात् शब्दजन्ये अवृत्ति, परम्परया शब्दजन्यजन्यादिवृत्ति शब्दप्रयोज्यत्वमेव निविष्टमिति भावः ।

अन्यथा वेदजन्यशाब्दप्रमितिमादायासंभवापत्तेः । अत एव, [1]पृथक् शब्दपदोपादानाविरोधः । जन्यसाधारणप्रयोज्यत्वनिवेशे तु शाब्दबोधान्यत्वं [2]पृथक् न निवेश्यम् ।

प्रयोज्यत्वं [जन्य] साधारणमेवाभिप्रेतम् । एतल्लाभायैव पृथक् शब्दपदोपादानमिति वा ।

न च शब्दाप्रयोज्यत्वेन प्रमितेरुपादाने ईश्वरप्रमितेरपि अजन्यतया [3]तथात्वेन वेदार्थस्य तद्विषयतया [4]असंभवः, जन्यत्वेन प्रमितेर्विशेषणे तु, [5]परमते जन्यत्वस्याव्यावर्तकतया [6]तद्घटितधर्मस्य गुरुतया अभावप्रतियोगितानवच्छेदकत्वेन

---

1 पृथगिति — शब्दतदुपजीविप्रमाणान्येत्यत्र शब्दोपजीविप्रमाणात् पार्थक्येनेत्यर्थः ।

2 पृथक् न निवेश्यमिति— वेदजन्यशाब्दप्रमितेः शब्दाप्रयोज्यत्वविरहेण तामादायासंभवस्याप्रसक्तेरिति भावः ।

3 तथात्वेन — शब्दाप्रयोज्यत्वेन ।

4 असंभवः — शब्दाप्रयोज्येश्वरीयप्रमितिविषयार्थबोधकत्वाद्वेदस्यासंभवः ।

5 परमते—नित्यज्ञानाश्रयस्येश्वरस्यानङ्गीकर्तुः मीमांसकस्य मते ।

6 तद्घटितधर्मस्य गुरुतयेति—जन्यत्वघटितस्य शब्दाप्रयोज्यजन्यप्रमितिविषयार्थबोधकत्वस्य स्वसमनियत-जन्यत्वाघटित तादृशधर्मापेक्षया गुरुतयेत्यर्थः ।

तदवच्छिन्नप्रतियोगिताक– लक्षणघटक[1]भेदाप्रसिद्धिरिति वाच्यम् । शब्दाप्रयोज्यत्वस्य शब्दाभावाप्रयुक्तप्रागभावप्रतियोगित्वरूपस्य निवेशनीयतया, तस्य च प्रागभावाप्रतियोगी-[2]श्वरज्ञानव्यावृत्तत्वात् ।

यद्वा, उभयमतसिद्धत्वं प्रमितिविशेषणम् । तच्च नैयायिकासिद्ध– शक्त्यादिपदार्थान्तरप्रमितेः व्यावर्तकमिति तद्घटितभेदप्रतियोगितावच्छेदकस्य न [3]धर्मान्तरसमनैयत्यम् । [4]एवं च वेदार्थगोचरयोगजधर्मजन्यप्रमितेः, तन्मूलकोपनीतभानस्य च व्यावृत्तिः ।

न च योगजधर्माधीनप्रमितेः योगविध्युपदेशकशब्दप्रयोज्यतया उभयमतसिद्धत्वविशेषणमन्तरेणापि व्यावृत्तिः संभवतीति वाच्यम् । जन्यमात्रस्यैवादृष्टजन्यतया, अदृष्टे च प्रव-

---

1 भेदाप्रसिद्धिरिति – सत्यन्तार्थस्य तादृशप्रमितिविषयार्थकभेदस्याप्रसिद्धिरित्यर्थः ।

2 ईश्वरज्ञानव्यावृत्तत्वादिति — तथाच जन्यत्वस्यानुपादेयतया न तद्घटितधर्मस्य गुरुत्वनिबन्धनो दोष इति भावः ।

3 धर्मान्तरेति — जन्यत्वाघटित-तादृशप्रमितिविषयार्थबोधकत्वरूपधर्मान्तरेत्यर्थः ।

4 एवं च – उभयमतसद्धित्वस्य प्रमितिविशेषणत्वे च ।

र्तकविधिवाक्यापेक्षया, जन्यप्रमितिमात्रस्यैव शब्दप्रयोज्य [त्व] मिति अदृष्टाद्धारकोपजीवकताया एव [1]निवेशनीयतया, [2]योगाधीनप्रमितेः उक्तविशेषणं विना व्यावृत्त्यसंभवात् । स्वर्गादिपदार्थघटक-दुःखासंभेदसुखादि ना [ना] विशृङ्खलविषयताशालिज्ञानमूलकमानसविशिष्टविषयकोपनीतभानं, [3]तादृशसाध्यप्रसिद्ध्यादिमूलकानुमितिश्च उभयवादिसिद्धत्वविशेषणेनैव व्यावर्त्यते ।

प्रमेयत्वादि सामान्यलक्षणाजन्यवेदार्थगोचरप्रमितेः [4]उभयसिद्धत्वविशेषणेन वारणेऽपि, स्वजन्यज्ञानसमानाकारकत्वं प्रमितिविशेषणमुपादेयम् । अन्यथा यागादेः विशकलितदुःखासंभेदसुखादेश्च शब्दानुपजीविप्रमितिविषयतया असंभवा-

---

1 निवेशनीयतयेति — शब्दप्रयोज्यत्वशरीरे इत्यादिः ।

2 योगाधीनप्रमितेः — योगजधर्माधीनप्रमितेः ।

3 तादृशसाध्यप्रसिद्धीत्यादि — मानसविशिष्टविषयकोपनीतभानात्मकसाध्यप्रसिद्धिमूलकवेदार्थगोचरानुमितिरित्यर्थः ।

4 उभयसिद्धत्वविशेषणेन वारणेऽपीति — सामान्यलक्षणप्रत्यासत्तेः मीमांसकैरनङ्गीकारात् शब्दाप्रयोज्य-सामान्यलक्षणाधीनप्रमितेरुभयसिद्धत्वाभावेन, तादृशप्रमितिविषयार्थके वेदे असंभववारणेऽपीति यावत् ।

पत्तेः । [1]स्वजन्यज्ञानसमानाकारकत्वं च स्वजन्यज्ञानीयविषयतावत्त्वमेव ।

[2]एतस्य प्रमितिविशेषणत्वे च स्वजन्यज्ञानसमानाकारकशब्दानुपजीविप्रमितिकत्वमेव भेदप्रतियोगितावच्छेदकतया निवेश्यम् । न तु तादृशप्रमितिविषयबोधकत्वरूप—तादृशप्रमितिविषयार्थकत्वपर्यन्तम्, प्रयोजनाभावात् ।

वस्तुतस्तु, स्वजन्यज्ञानसमानाकारकत्वेन प्रमितिर्न विशेष्या । अपि तु तादृशप्रमितिविषयार्थकत्वं—तादृशप्रमितिविषयबोधकत्वम् । तदेव तादृशप्रमितिनिरूपितविषयताशालिबोधजनकत्वरूपं निवेश्यम् । लौकिकार्थगोचरप्रमितेः यच्छब्दजन्यज्ञानीयविषयतावत्त्वरूपं तादृशज्ञानसमानाकारत्वं, तच्छब्दस्यैव च तादृशप्रमितिनिरूपितविषयताशालिबोधजनकत्वमिति वेदस्यातथात्वेन सामञ्जस्यात् । विशिष्टविषयकशाब्दादिज्ञाने विशकलिततत्तत्पदार्थविषयतायां अप्रामाणिक-

---

1 स्वजन्येति — स्वपदं प्रमितिविषयार्थकभिन्नमित्यत्र भेदप्रतियोगिपरं बोध्यम् ।

2 पूर्वोक्तमपेक्ष्य लघुधर्मं प्रतियोगितावच्छेदकतया विवेश्य लक्षणमाह—एतस्येति स्वजन्यज्ञानसमानाकारकत्वस्येत्यर्थः ।

तया लौकिकप्रमाणजन्यज्ञानीय सुख—दुःखासंभेदादिनिरूपित-त्रिश्रृङ्खलविषयताया वेदजन्यज्ञाने अभावात् । अन्यथा, शब्दानुपजीविप्रमिति—शब्दजन्यज्ञानयोः समानप्रकारकत्वस्या-वैपरीत्येन निवेश (मक्षय्य) [पक्षेऽप्य] निस्तारात् ।

न च स्वर्गकामो यजेतेत्यादिरूपे लौकिकप्रमाणग्राह्या-र्थवद्वेदेऽपि शब्दानुपजीविप्रमितिविषयार्थकान्यत्वं दुर्घटमिति वाच्यम् । तादृशप्रमितिसमानाकारप्रतीतिपरत्वस्यैव निवेश-नीयतया तात्पर्यप्रमाधीनबोधमादायापत्तिविरहात् । तादृश-प्रमितिसमानाकारप्रतीतिपरत्वंच, तादृशप्रमितेर्या विषयता, तद्वि-शिष्टप्रतीतिविषयकेच्छयोच्चरितत्वम् । तेन लौकिकवाक्यार्थ-विषयकसमूहालम्बनवेदार्थबोधस्य तात्पर्यविषयत्वेऽपि (प्र) [न] दोषः ।

नचैवं निस्तात्पर्यकलौकिकवाक्ये अतिव्याप्तिः । प्रमा-णशब्दत्वरूपविशेष्यदलस्य सतात्पर्यकशब्दत्वरूपतया तद्विरहे-णातिव्याप्तिविरहात् । नचैवं निस्तात्पर्यके मूर्खोच्चरितवेदे नैयायिकनये अव्याप्तिः । तादृशशब्दजातीयत्वस्य तत्स-मानानुपूर्वीकत्वरूपस्य विवक्षणेन तत्संग्रहादव्याप्त्यभावात् । नचैवं अलौकिकवेदार्थमात्र (पद) लाक्षणिकपदघटितं ओदन-

कामः पचेतेत्यादिवाक्यमादाय [1]तादृशवाक्यसामान्येऽतिव्याप्तिरिति वाच्यम् । तस्य शब्दजन्यवाक्यार्थज्ञानजन्यतया वेदसमानार्थकस्मृतिवत् वारणात् । वेदसमानार्थकवेदविपरीतानुपूर्वीकशुकादिवाक्यवारणाय निवेशनीयेन अदृष्टजनकाध्ययनकर्मत्वविशेषणेनापि तद्वारणसंभवाच्च । नचैवं तादृशविशेषणेनैव दृष्टार्थकास्मदादिवाक्यवारणसंभवेन सत्यन्तदलं व्यर्थमिति वाच्यम् । (दृष्टार्थक) भारत पुराणान्तर्गतदृष्टार्थकवाक्यवारकतया तस्य सार्थकत्वात् । भारताध्ययनस्य विधिबोधितत्वेनादृष्टजनकतयोक्तविशेषण [स्य]तत्साधारण्येन तेन तद्वारणासंभवात् ।

अथ दृष्टार्थके आयुर्वेदे अव्याप्तिः, तत्र सत्यन्तविरहादिति चेन्न ।

तस्य मीमांसकैर्वेदत्वानभ्युपगमेनोभयमतसिद्धवेदस्यैव लक्ष्यतया तत्राव्याप्त्यनवकाशात् । एवं दृष्टार्थ (कान्त्रीणा) [कमन्त्राणा] मपि लक्ष्यतानङ्गीकारात् न तत्राप्यव्याप्तिराशङ्क्या । वेदसमानार्थकस्मृति भारतादि वाक्ये अतिव्याप्तिश्च शब्दजन्येत्यादिविशेष्यदलेन वारणीया ।

---

1 तादृशवाक्यसामान्ये इति — तादृशार्थतात्पर्यकवाक्यजातीयत्वेनातिव्याप्तिरिति भावः ।

## शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वमिति विशेष्यदलार्थ-विचारः

तत्र शब्दजन्यत्वं–शब्दप्रयोज्यत्वम् । तेन वेदप्रयोज्यस्मृत्यादिरूपवाक्यार्थज्ञानजन्यस्मृत्यादौ नातिव्याप्तिः । अन्यथा पूर्वोक्तदोषस्यापि वारणासंभवाच्च ।

यद्यपि, न्यायमते जन्यवाक्यार्थज्ञानाजन्यत्वनिवेशेनैव सामञ्जस्यम् । अस्मदाद्युच्चरितवेदस्य अस्मदादिवाक्यार्थज्ञानजन्यत्वेऽपि जन्यज्ञानाजन्येश्वरोच्चरितवेदजातीयत्वमादाय लक्षणसमन्वयात् । शब्दाद्वेदार्थं प्रतीत्यापि अस्मदादेर्वेदोच्चारणसंभवात् तत्संग्रहाय, वाक्यार्थज्ञाने शब्दजन्यत्वनिवेशेऽपि तादृशवाक्यार्थज्ञानाजन्यजातीयत्वनिवेशस्यावश्यकत्वात् ।

तथापि मीमांसकमते ज्ञाने जन्यत्वस्याव्यावर्तकतया जन्यवाक्यार्थज्ञानजन्यत्वस्य अभावप्रतियोगितानवच्छेदकत्वेन, तदवच्छिन्नभेदरूपस्य वाक्यार्थज्ञानाजन्यत्वस्याप्रसिद्धेरिति, ज्ञाने शब्दजन्यत्वं विशेषणम् ।

कामः पचेतेत्यादिवाक्यमादाय [1]तादृशवाक्यसामान्येऽतिव्याप्तिरिति वाच्यम् । तस्य शब्दजन्यवाक्यार्थज्ञानजन्यतया वेदसमानार्थकस्मृतिवत् वारणात् । वेदसमानार्थकवेदविपरीतानुपूर्वीकशुकादिवाक्यवारणाय निवेशनीयेन अदृष्टजनकाध्ययनकर्मत्वविशेषणेनापि तद्वारणसंभवाच्च । नचैवं तादृशविशेषणेनैव दृष्टार्थकास्मदादिवाक्यवारणसंभवेन सत्यन्तदलं व्यर्थमिति वाच्यम् । (दृष्टार्थक) भारत पुराणान्तर्गतदृष्टार्थकवाक्यवारकतया तस्य सार्थकत्वात् । भारताध्ययनस्य विधिबोधितत्वेनादृष्टजनकतयोक्तविशेषण [स्य]तत्साधारण्येन तेन तद्वारणासंभवात् ।

अथ दृष्टार्थके आयुर्वेदे अव्याप्तिः, तत्र सत्यन्तविरहादिति चेन्न ।

तस्य मीमांसकैर्वेदत्वानभ्युपगमेनोभयमतसिद्धवेदस्यैव लक्ष्यतया तत्राव्याप्त्यनवकाशात् । एवं दृष्टार्थ (कान्त्रीणा) [कमन्त्राणा] मपि लक्ष्यतानङ्गीकारात् न तत्राप्यव्याप्तिराशङ्क्या । वेदसमानार्थकस्मृति भारतादि वाक्ये अतिव्याप्तिश्च शब्दजन्येत्यादिविशेष्यदलेन वारणीया ।

---

1 तादृशवाक्यसामान्ये इति — तादृशार्थतात्पर्यकवाक्यजातीयत्वेनातिव्याप्तिरिति भावः ।

## शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वमिति विशेष्यदलार्थविचारः

तत्र शब्दजन्यत्वं—शब्दप्रयोज्यत्वम् । तेन वेदप्रयोज्यस्मृत्यादिरूपवाक्यार्थज्ञानजन्यस्मृत्यादौ नातिव्याप्तिः । अन्यथा पूर्वोक्तदोषस्यापि वारणासंभवाच्च ।

यद्यपि, न्यायमते जन्यवाक्यार्थज्ञानाजन्यत्वनिवेशेनैव सामञ्जस्यम् । अस्मदाद्युच्चरितवेदस्य अस्मदादिवाक्यार्थज्ञानजन्यत्वेऽपि जन्यज्ञानाजन्येश्वरोच्चरितवेदजातीयत्वमादाय लक्षणसमन्वयात् । शब्दाद्वेदार्थं प्रतीत्यापि अस्मदादेर्वेदोच्चारणसंभवात् तत्संग्रहाय, वाक्यार्थज्ञाने शब्दजन्यत्वनिवेशेऽपि तादृशवाक्यार्थज्ञानाजन्यजातीयत्वनिवेशस्यावश्यकत्वात् ।

तथापि मीमांसकमते ज्ञाने जन्यत्वस्याव्यावर्तकतया जन्यवाक्यार्थज्ञानजन्यत्वस्य अभावप्रतियोगितानवच्छेदकत्वेन, तदवच्छिन्नभेदरूपस्य वाक्यार्थज्ञानाजन्यत्वस्याप्रसिद्धेरिति, ज्ञाने शब्दजन्यत्वं विशेषणम् ।

न च शब्दजन्यत्वं यदि शब्दप्रयोज्यत्वं, तदा जन्यत्ववत् तदपि परमते ज्ञाने अव्यावर्तकम्, अदृष्टजनकप्रवृत्तिजनकविधिवाक्यस्य ज्ञानमात्रे एव प्रयोजकत्वादिति वाच्यम् । अदृष्टाद्वारकशब्दप्रयोज्य (पर) त्वस्यैव निवेशनीयत्वात् ।

शब्दाप्रयोज्यत्वस्य, शब्दप्रयोज्यज्ञानमात्राजन्यत्वस्य वा विशेषणत्वे, स्वध्वंसरूपकालोपाधिद्वारा ईश्वरोच्चरितवेदेऽपि शब्दान्तरस्य प्रयोजकत्वात् तत्कालीनपुरुषान्तरीयशब्दप्रयोज्यज्ञानस्य कालोपाधिविधया जनकत्वात् तत्रासंभवः इति वाक्यार्थज्ञानोपादानम् ।

तादृशज्ञानाजन्यत्वं च यथाश्रुतं यद्यपि [1]व्यावर्त्यस्मृत्याद्यव्यावर्तकम् । [2]परमते तेषां वर्णमात्रस्यैव नित्यतया वाक्यार्थज्ञानाजन्यत्वात् । तथापि तादृशज्ञानाजन्यत्वं तादृशज्ञानाजन्योच्चारणकत्वम् । परमतेऽपि वाक्योच्चारणस्य कण्ठा(व)भिघातरूपस्य वाक्यार्थज्ञानजन्यतया स्मृत्याः व्यावृत्ते[3]रुक्त-

---

1 व्यावर्त्येति — शब्दजन्यवाक्यार्थज्ञानाजन्यत्वविशेषणेन व्यावर्तनीयेत्यर्थः ।

2 परमते — मीमांसकमते । एवमग्रेऽपि ।

3 उक्तविशेषणेन — शब्दजन्यवाक्यार्थज्ञानाजन्योच्चारणकत्वविशेषणेन

विशेषणेन संभवात् । न च तादृशोच्चारणकत्वं– तादृशोच्चारणजन्यत्वं, तादृशोच्चारणव्यङ्ग्यत्वं वा । प्रथमे, परमते वेदेऽप्रसिद्धिः । (नव्य) [द्वितीये]न्यायमते [1]स दोषः, तन्मते उच्चारणस्य शब्दजनक(त्व) स्य शब्दा [भिव्य] त्तयजनकत्वादिति वाच्यम् । न्यायमतेऽपि उच्चारणस्य व्यक्तिविशेषसंपादनेन व्यञ्जकतया तद्व्यङ्ग्यताया एव विवक्षितत्वात् ।

अथवा, तादृशज्ञानजन्यत्वं तादृशज्ञानप्रयोज्यानुपूर्वीकत्वम् । प्रयोज्यत्वं जन्य–जन्यतावच्छेदकसाधारणम् । स्मृत्याद्यानुपूर्व्याः न्यायमते तादृशवाक्यार्थज्ञानजन्यतावच्छेदकतया, परमते च तज्जन्यतया तत्प्रयोज्यत्वमव्याहतमिति न स्मृतावतिप्रसङ्गः ।

न च आनुपूर्व्याः अतिरिक्तपदार्थरूपायाः न्यायमते अप्रसिद्धेः, एकवर्णनिष्ठापरवर्णध्वंसकालीनत्वात्मकक्रमरूपायाः परमते अप्रसिद्धेः, विशिष्य निवेशासंभव इति वाच्यम् ।

---

1 स दोषः — अप्रसिद्धिः दोषः ।

1उभयानुगमकप्रसिद्धरूपस्यापि, एकनिष्ठापरध्वंसकालीनत्वानात्मकत्व, शब्दावृत्तित्वोभयाभाववत्त्वादिरूपस्य कथं चिन्निर्वचनसंभवेन तेन रूपेणैव द्विविधानुपूर्वीनिवेशात् ।

---

### वाक्यार्थज्ञानाजन्यत्वस्य परिष्कारान्तरम्, तन्निरासश्च

यत्तु, तादृशवाक्यार्थज्ञानजन्यतया नैयायिकसिद्धभिन्नत्वविवक्षणान्न दोषः इति ।

(तत्र) [तन्न] जन्यज्ञानजन्यतया नैयायिकमतसिद्धभिन्नत्वनिवेशनेनैवानतिप्रसङ्गे, 2विशेषणान्तरवैयर्थ्यात् । न च विशेषणान्तरपरित्यागे जन्यत्वस्य ज्ञाने 3अव्यावर्तकता-

---

1 उभयानुगमकेति — अतिरिक्तपदार्थरूपा, क्रमरूपा, इत्येवं द्विविधानुपूर्व्योरनुगमकेत्यर्थः ।

2 विशेषणान्तरेति — वाक्यार्थज्ञानरूपविशेषणान्तरेत्यर्थः ।

3 अव्यावर्तकताप्रसङ्ग इति — तथाच जन्यत्वाघटितनैयायिकसिद्धिविषयत्वस्य लघोरवच्छेदकत्वेन न गुरुभूत जन्यत्वघटितसिद्धिविषयत्वस्य प्रतियोगितावच्छेदकतेति तादृशभेदाप्रसिद्धिरिति भावः ।

प्रसङ्गः इति विशेषणान्तरोपादानमावश्यकमिति वाच्यम् । ज्ञाने जन्यत्वस्याव्यावर्तकत्वेऽपि नैयायिकसिद्धौ ज्ञानजन्यत्वप्रकारिकायामपि जन्यज्ञानजन्यत्वत्वावच्छिन्नप्रकारकत्वासत्त्वेन तदवच्छिन्नप्रकारकनैयायिकसिद्धिविषयत्वस्य [1]लघुतदेकदेशसमनियतत्वासंभवेन तदवच्छिन्नप्रतियोगिताकभेदप्रसिद्धिसंभवात् ।

---

### स्मृतिविशेषे अतिव्याप्तिशङ्का, तत्परिहारश्च

अथ उक्तविशेषणेन वाक्यार्थज्ञानाधीनं (यद्) [यादृशो]च्चारणं, तादृश[2]स्मृत्यादिवारणेऽपि, वाक्यार्थमज्ञात्वा घुणाक्षरन्यायेन केन चिदुच्चारितस्मृत्यादावतिव्याप्तिः । तादृशवाक्यार्थज्ञानजन्यावृत्त्यानुपूर्वीमत्त्वनिवेशने असंभवः । वेदवाक्य-

---

1 लघुतदेकदेशेति— ज्ञानजन्यत्वत्वावच्छिन्नप्रकारताकनैयायिकसिद्धिविषयत्वरूपस्य जन्यज्ञानघटितापेक्षया लघोः तदेकदेशधर्मस्येत्यर्थः ।

2 स्मृत्यादिवारणेऽपि — स्मृत्यादावतिव्याप्तिवारणेऽपि ।

निष्ठानुपूर्वीविशेषावच्छिन्नानां केषांचित् वाक्यानां शब्दजन्य-वाक्यार्थज्ञानजन्यत्वेन तदानुपूर्वीणां तादृशवाक्यार्थज्ञान-जन्यावृत्तित्वानुपपत्तेरिति चेन्न ।

यादृशानुपूर्वी [मत्प] दादिव्यक्तेः वाक्यार्थज्ञानजन्यता, तदन्यानुपूर्त्रीमत्त्वविवक्षया सामञ्जस्यात् । [1]मीमांसकमते वेदानुपूर्वीमत्पदादिव्यक्तेरभावात् । न्यायमते (वा) [चा] [2]दिवेदव्यक्तीनां जन्यज्ञानाजन्यतया स्मृत्याद्यानुपूर्वीणामेव यादृशपदेनोपादानसंभवात् ।

वाक्यार्थज्ञानजन्यत्वं च तज्जन्योच्चारणकत्वादिरूपं बोध्यमिति दिक् ।

---

1 मीमांसकमते इति — वाक्यार्थज्ञानजन्याया इति शेषः ।
2 आदिवेदेति — सर्गाद्यकालीनवेदव्यक्तीत्यर्थः ।

## पौरुषेयत्वनिर्वचनम्

पौरुषेयत्वं च सजातीयोच्चारणानपेक्षयोच्चरितजातीयत्वम् । [1]अत्र निष्ठार्थो न विवक्षितः । तज्जातीयत्वं च न भेदगर्भं विवक्षितम् । तथाच सजातीयोच्चारणानपेक्षोच्चारणजन्यवृत्तिजातिमत्त्वं पर्यवसितम् । यथाश्रुते इदानीन्तनास्मदादिवेदोच्चारणस्य सजातीयोच्चारणापेक्षत्वेन तादृशोच्चारणा (म) नपेक्षोच्चारणं आद्यवेदोच्चारणमेव । तज्जन्यजातीयत्वस्याऽद्यवेदेऽसंभवेनाव्याप्त्यापत्तेरिति दिगिति प्राहुः ।

---

## वेदस्य पौरुषेयत्वानुमाने प्राचां मतेन पक्षतावच्छेदकनिरूपणम्

प्राञ्चस्तु, पौरुषेयत्वानुमाने वेदत्वावच्छिन्नस्य न पक्षत्वम्, वेदत्वस्यानुगतस्य दुर्वचत्वात् । किन्तु, स्वर्गकामो यजेतेत्यादि ऋग्विशेषस्यैव पक्षत्वम् । ताव (तु) [तै] वेश्व-

---

1 अत्र निष्ठार्थ इति — सजातीयोच्चरणानपेक्षया उच्चरितजातीयत्वमिति वाक्ये उच्चरितेत्यत्र निष्ठाप्रत्ययस्यार्थः अतीतत्वरूपः न विवक्षित इत्यर्थः ।

रेसिद्धेः । नचैवं सर्ववेदकर्तृत्वमीश्वरे न सिद्ध्यतीति वाच्यम् । तत्तदृचि सकर्तृकत्वानुमाने, एकत्र क्लृप्तस्यैव कर्तुः लाघवेनापरत्रापि कर्तृत्वकल्पनया सर्वासु ऋक्षु एककर्तृकत्वसिद्ध्या ईश्वरे सकलवेदकर्तृत्वसिद्धेः । न च एकस्या ऋचः पक्षत्वे ऋगन्तरेषु हेतौ संदिग्धव्यभिचार (कत्वादिति) [कत्वमिति] वाच्यम् । क्षितिपक्षकेश्वरसाधकसकर्तृकत्वानुमानेऽपि अङ्कुरादिषु संदिग्धव्यभिचारकत्वापत्तेः । न च पक्षे [1]पक्ष (समवेता) [समे वा] व्यभिचारो [2]न दोषायेति न तत्र संदिग्धव्यभिचारकत्वं दोषः इति वाच्यम् । [3]प्रकृतेऽपि तुल्यत्वात् । यद्वा, त्रैवर्णिकसाधारणाधर्मजनकाभावप्रतियो (गो) [ग्य] ध्ययनविषयत्वरूपेण वेदत्वेन [4]सर्वपक्षकमेवोक्तानुमानम् । वेदाध्ययनसामान्याभावस्य च पापजनक (त्वेन) [त्वम्] (तस्याःसामान्याभावव्यक्तौ कस्याः)[तस्य] प्रतियोगि ऋङ्मात्राध्ययनम् ।

---

1 पक्षसमे वेति — प्रतिज्ञाविषयत्वाभाववत्त्वे सति साध्यसंशयविशेष्यत्वं पक्षसमत्वम् ।

2 न दोषायेति — पक्षतत्समान्तर्भावेण व्यभिचारसन्देहस्य दूषकत्वे अनुमानमात्रोच्छेदापत्तेरिति भावः ।

3 प्रकृतेऽपि — ऋग्विशेषपक्षकसकर्तृकत्वानुमानेऽपि ।

4 सर्वपक्षकं — सर्ववेदपक्षकम् ।

अतः अनेन रूपेण सर्वर्त्त्कसंग्रहः । न च वेदत्वज्ञाने वेदाध्ययनाभावे पापजनकत्वबोधः, वेदाध्ययनाभावादेव पापजनकत्वबोधे च वेदत्वज्ञानम्, इत्यन्योन्याश्रय इति वाच्यम् । तत्र हि नैतादृशवेदत्वमादाय वेदाध्ययनाभावज्ञानं [1]प्रयोजकम् । किन्तु अदृष्टजनकेश्वरवाक्यत्वरूपवेदत्वमादाय, ईश्वरानङ्गीकर्तृमीमांसकमते [2]नित्यानुपूर्वीकवाक्यत्वरूपवेदत्वमादायेत्यन्योन्याश्रयाभावात् । नचैवं तेन रूपेणैव वेदस्य कथं न पक्षत्वमिति वाच्यम् । उक्तरूपयोः प्रत्येकसाधारण्येऽपि उभयसाधार (णा) [ण्या] भावात् । [3]उभयमतसाधारणपक्षतावच्छेदकावच्छिन्नस्यैव विवादविषयत्वात् । उभयमतसाधारणपक्षतावच्छेदकं विना तदवच्छिन्ने विप्रतिपत्तेरसंभवाच्च । शेषं पूर्ववदित्याहुः ।

---

1 प्रयोजकं — पापजनकत्वबोधे इत्यादिः ।

2 नित्यानुपूर्वीकेति — मीमांसकमते वर्णानामिव वेदानुपूर्व्या अपि नित्यत्वं बोध्यम् ।

3 उभयमतेति — मीमांसक-नैयायिकोभयमतेत्यर्थः ।

### अन्येषां मतेन पौरुषेयत्वानुमानपक्षतावच्छेदकनिरूपणम्

अन्ये तु, वेदत्वेन परिभाषितत्वं अभियुक्तानां परिभाषाविशेषरूपसंकेतसंबन्धेन वेद [पद] वत्त्वपर्यवसितं वेदत्वम् ।

अथवा, 'अखण्डोपाधिविशेषरूपं वा वेदत्वमुक्तानुमाने पक्षतावच्छेदकमिति वदन्ति । इति संक्षेपः ।

अधिकमस्मत्कृतेश्वरवादे द्रष्टव्यम् ।

---

### वेदस्य पौरुषेयत्वे स्मृत्यादिविरोधशङ्का, तन्निरासश्च

न च वेदस्य पौरुषेयत्वे,

'स्वयंभूरेष भगवान् वेदो गीतस्त्वया पुरा ।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ॥'

इति [1]स्मृतिविरोध इति वाच्यम् । 'श्रुतिस्मृत्योर्विरोधे तु

---

1 स्मृतिविरोध इति — स्वयंभूः इति पदेन वेदस्य भवनमन्याधीनं नेति बोध्यम् । स्वाधीनत्वं स्वीये भवने न संभवति । अतः स्वयंभूत्वं जनिरहितत्वे पर्यवस्यतीति भावः ।

श्रुतिरेव गरीयसी' इति न्यायेन स्मृतिप्रतिपाद्यस्वयंभूत्वस्य अस्मदाद्यननुभूत [1]जन्यत्वरूपतया अविरोधात् ।

न च तथापि शब्दस्य नित्यतया वेदभारतादौ जन्यत्वघटितं निरुक्तपौरुषेयत्वं न संभवतीति वाच्यम् । उत्पन्नो गकारः, विनष्टो गकारः इत्यादिप्रतीत्या पदस्यानित्यतया (न) तत्समूहस्य वेदस्य सुतरामनित्यत्वात् ।

इति वेदस्व–पौरुषेयत्वविचारः

---

वर्णनित्यतावादिनां मीमांसकानां मतनिरूपणम्

अत्र मीमांसकाः,

लाघवात् ककारादयो वर्णाः नित्याः एकैका एव ।

---

1 अस्मदाद्यननुभूतजन्यत्वरूपतयेति — वेदस्योत्पत्तेः श्रुतिबोधितत्वात्, स्वयंभूत्वं न जनिरहितत्वम् । वेदस्य सर्गाद्यकाले उत्पत्तिः नास्मदादिभिः अनुभूयते । अस्मदाद्यननुभूतोत्पत्तिमत्त्वमेव तदिति भावः । अत्र जन्यत्वपदमुत्पत्तिपरं बोध्यम् ।

उत्पत्तिविनाशप्रत्ययस्तु, [1]प्रागनुपलब्धोपलभ्यमानत्व–प्रागुपलब्धानुपलभ्यमानत्वरूपदोषात् भ्रम एव । न च वर्णानां नित्यत्वे घटपदत्वादिकं दुर्वचम्, अव्यवहितोत्तरत्वस्य [2]नित्येऽसंभवादिति वाच्यम् । यज्ज्ञानानन्तरमव्यवधानेन यज्ज्ञानं भव(ति)[तु]इत्यभिप्रायविषयत्वसंबन्धेन घवत्त्वस्यैव घटपदत्वात्। शुकाद्युच्चरिते च घटपदे शिक्ष (के) [कस्ये] श्वरस्य वा अभिप्रायमादाय तत्संभवात् ।

---

## सर्वेषां कादिव्यक्तीनामेकत्वे, तारत्व-मन्दत्वादिविलक्षणप्रत्ययानुपपत्तिशङ्का, तन्निरासश्च

अथ, सर्वेषां ककारादीनामेकत्वे तार–तारतर–मन्द–मन्दतरादि विलक्षणप्रत्ययानुपपत्तिः । न चैकस्यामेव ककारादिव्यक्तौ तारत्व–तारतरत्व–मन्दत्व–मन्दतरत्वादिनानाधर्म-

---

1 प्रागनुपलब्धेत्यादि — घटादिवत् प्रागनुपलब्धस्य वर्णस्योपलभ्यमानत्वदोषात् उत्पत्तिभ्रमः, प्रागुपलब्धस्यानुपलभ्यमानत्वदोषात् विनाशभ्रमः वर्णानामित्यर्थः ।

2 नित्येऽसंभवादिति — घकारध्वंसाधिकरणक्षणवृत्तित्वरूपस्याव्यवहितोत्तरत्वस्य घकारादीनां नित्यत्वे न संभव इयि भावः ।

स्वीकारात् नोक्तानुपपत्तिरिति वाच्यम् । तारत्वादेः तुल्यव्यक्तिवृत्तित्वे जातिरूपतानुपपत्तेः । न च [1]त्वन्मतेऽपि तारत्वादेः जातित्वमसिद्धं, कत्वादिना [2]संकरप्रसङ्गादिति वाच्यम् । कत्वादिव्याप्य[3]नानातारत्वादेरुपगमात् । न च तारत्वादिकं वा नाना, कत्वादिकं वा इत्यत्र विनिगमनाविरह इति वाच्यम् । कत्वादेर्नानात्वे, तारमन्दसाधारणककाराद्यनुगतप्रत्ययानुपपत्तेरिति चेन्न ।

तारत्वादेः कत्वादिव्याप्यनानाजातित्वे (क) [ग] कारादिसाधारणताराकारानुगतप्रत्ययानुपपत्तेः । न च (ता) [तस्या] सिद्धिः, अनुभवापलापात् । न च नानातारत्वादेः

---

1 त्वन्मतेऽपि — अनित्यनानाककारादि वर्णवादिनः नैयायिकस्य मतेऽपि ।

2 संकरेति—कत्वं विहाय गकारे, गत्वं विहाय ककारे च स्थितस्य तारत्वस्य तारककारे कत्वेन सह समावेशादित्यर्थः ।

2 नानातारत्वादेरिति — कत्वं विहाय गकारे स्थितस्य तारत्वस्य कत्वेन सहावस्थानं नास्ति । गवृत्तितारत्वस्य कवृत्तितारत्वाद्भिन्नत्वात् । तथाच परस्पराभावसमानाधिकरणयोरेकत्र समावेशरूपः संकरः परिहृतो भवतीति भावः ।

[1]स्वाश्रयसजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकशब्दवृत्तिजातित्वादिना अनुगमात् ताराद्याकारानुगतप्रत्ययोपपत्तिरिति वाच्यम्। तादृशप्रतिबन्धकतावच्छेदकत्वानुपस्थितावपि तादृशानुगतप्रत्ययोत्पत्तेः। एतस्यापि स्वत्वघटितत्वेनाननुगतत्वाच्च।

तस्मात् तारत्व–तारतरत्वादिकमनुगतत्वात् लाघवाच्च ककारगकारादिसाधारण [2]मखण्डोपाधिः। तच्च सर्वमेकस्यामेव ककारादिव्यक्तौ वर्तते इति [3]न तादृशप्रत्ययानुपपत्तिः।

अथवा, तारत्व–तारतरत्वादिकं वायुनिष्ठैव जातिः। तच्च दोषविशेषवशात् शब्दनिष्ठतया भासते, दर्पणनिष्ठ [मलिन] ताया मुखादिसमवायि [तया भानवत्] ताराद्युत्पत्तिनियमार्थं वायुनिष्ठवैलक्षण्यस्यावश्यकत [या तस्यै] व लाघवेन

---

1 स्वाश्रयेति — स्वपदं तारत्वादिजातिपरम्। तारशब्देन मन्दशब्दसाक्षात्कारः प्रतिबद्धो भवतीति निरुक्तसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वं तारत्वादिजातेर्बोध्यम्।

2 अखण्डोपाधिरिति— तारत्वादीनामखण्डत्वेऽपि जातित्वानङ्गीकारात् न तुल्यव्यक्तिकत्वस्य बाधकतेति भावः।

3 न तादृशप्रत्ययानुपपत्तिः — न मन्दतारादिविलक्षणप्रत्ययानामनुपपत्तिः।

तारत्व–तारतरत्वादिरूपताया उचितत्वात् । न च तस्य वायुधर्मत्वे, श्रोत्रेन्द्रियेण कथं तद्ग्रहः, कर्णशष्कुल्यवच्छिन्नत्वगिन्द्रियोपनीतस्य श्रोत्रेण भानाभ्युपगमे, तारत्वं स्पृशामीत्यनुव्यवसायापत्तिः, तारत्वं शृणोमीत्यनुव्यवसायानुपपत्तिश्चेति वाच्यम् । वायुनिष्ठधर्मान्तरस्य श्रोत्राग्राह्यत्वेऽपि तारत्वादेः तद्योग्यतास्वीकारात्, योग्यतायाः [1]फलकल्प्यत्वात् । न च श्रोत्रेण वायुनिष्ठतारत्वादिप्रत्यक्षाभ्युपगमे श्रोत्रसंयुक्तसमवाये अतिरिक्तप्रत्यासत्तित्वकल्पनापत्तिरिति वाच्यम् । अप्रत्यास(त्त) [न्न] स्यैव तारत्वादेः श्रोत्रेण ग्रहात् । वक्ष्यमाणक्रमेण विलक्षणवायुसंयोगस्य तारत्वादिव्यञ्जकतयैवातिप्रसङ्गविरहात् ।

---

## युगपत् सर्ववर्णसाक्षात्कारशङ्का, तन्निरासश्च

ननु तथापि ककारगकारादीनां नित्यत्वे ककाराद्येकसाक्षात्कारदशायां गकारादिसर्वशब्दसाक्षात्कारापत्तिः, सर्वेषामेव शब्दानां सर्वदा कर्णशष्कुल्यवच्छेदेन सत्त्वादिति चेन्न ।

---

1 फलकल्प्यत्वादिति — श्रोत्रजन्यतारत्वादिप्रत्यक्षरूपफलबलेन तारत्वादेः श्रोत्रग्रहणयोग्यता कल्प्यते इति भावः ।

न्यायनये वर्णानां प्रतिनियतजनकजन्यत्वाभ्युपगमेन ककाराद्युत्पादकविलक्षणवायुसंयोगस्यैव अस्मन्मते वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वाभ्युपशमेन ककारादिसाक्षात्कारजनकतया, तद्विरहादेव युगपदेव सर्वशब्दोपल (ब्धि) [ब्धेर] संभवात् । कण्ठाद्यभिघातश्च तत्र विलक्षणवायुक्रियासंपादकतयोपयुज्यते ।

---

### वायुसंयोगस्य शब्दसाक्षात्कारहेतुताविचारः

न्यायनये वायुसंयोगस्य शब्दहेतुतावत्, मीमांसकमते शब्दसाक्षात्कारहेतुता न वक्तुं शक्येति पूर्वपक्षः

ननु, न्यायनये यत्रावच्छेदकतासंबन्धेन ककाराद्युत्पत्तिः तत्र समवायसंबन्धेन विलक्षणवायुसंयोगः इति सामानाधिकरण्यप्रत्यासत्त्या वायुसंयोगानां ककारादिहेतुत्वम् । अतो न कर्णान्तरे ककाराद्युत्पत्तिः । तत्पुरुषीय[1]शब्दलौकिकसा-

1 शब्दलौकिकसाक्षात्कारं प्रतीति — शब्दनिष्ठलौकिकविषयतया साक्षात्कारं प्रतीत्यर्थः ।

क्षात्कारं प्रति तत्पुरुषीयकर्णावच्छिन्नश्रोत्रसमवायस्य, अवच्छिन्नतासंबन्धेन तत्पुरुषीयकर्णस्य वा विषयनिष्ठतया हेतुत्वम्। अतो न तत्पुरुषीयकर्णावच्छेदेनोत्पन्नशब्दस्य पुरुषान्तरेण ग्रहणम् ।

भवन्मते च तत्तद्विलक्षणवायुसंयोगानां ककारादिसाक्षात्कारं प्रति कया प्रत्यासत्त्या हेतुत्वम् । अव्यवहितपूर्ववर्तित्वमात्रेण हेतुत्वे युगपत् (पू) [स] र्वशब्दोपलब्धेर्दुर्वारत्वात् । सर्वदैवावश्यं यत्किञ्चित्कर्णावच्छेदेन तत्तद्विलक्षणवायुसंयोगसत्त्वात् । कर्णस्य ज्ञानानवच्छेदकतया, यत्कर्णावच्छेदेन ककारादिसाक्षात्कारः तत्र विलक्षणवायुसंयोगः इति क्रमेण हेतुत्वासंभवात् । न च स्वीयकर्णावच्छिन्नविलक्षणवायुसंयोगस्य फलबलकल्प्यतया ककारादिसाक्षात्कारदशायामेव तस्यात्मनि सत्त्वान्नातिप्रसङ्ग इति वाच्यम् । आत्मनो विभुत्वादेकस्य पुरुषस्य कर्णावच्छेदेन विलक्षणवायोः संयोगदशायां, सर्वेषामेव पुरुषाणां आत्मनि तदवच्छेदेन विलक्षणवायोः संयोगस्यावश्यकत्वा (न्ता) [द] तिप्रसङ्गतादवस्थ्यात् ।

न हिं संयोगनिष्ठवैलक्षण्यं जनकतावच्छेदकम् । कर्मजन्यतावच्छेदक- संयोगजन्यतावच्छेदकजात्योर्नानात्वापत्तेः । अपि तु (वाप्रतिष्ठ) [वायुनिष्ठ] मेवेति चेन्न ।

---

उक्तपूर्वपक्षनिरासः, वायुसंयोगस्य साक्षात्कारहेतुतानिरूपणं च

[1]ममापि तत्तद्वायुसंयोगानां शरीरनिष्ठतया ककारादिसाक्षात्कारहेतुत्वात् । नचैवं हस्ताद्यवच्छेदेन विलक्षणवायोः संयोगस्य सत्त्वेऽपि ककारादिसाक्षात्कारापत्तिरिति वाच्यम् । कर्णावच्छिन्नविलक्षणवायुसंयोगत्वेन हेतुत्वात् । पुरुषान्तरीयकर्णः न पुरुषान्तरीयशरीरनिष्ठसंयोगावच्छेदकः । विलक्षणवायुसंयोगस्य फलबलकल्प्यतया ककारादिसाक्षात्कारदशायामेव तस्य शरीरे सत्त्वेन हस्ताद्यवच्छिन्नसंयोगस्य हेतुत्वेऽपि क्षतिविरहाच्च ।

[2]इत्थं च श्रोत्रसमवायादेरपि न प्रत्यासत्तित्वम्, तत्तद्विलक्षणवायुसंयोगानां व्यञ्जकत्वस्यावश्यकतयैवानतिप्रसङ्गात् ।

---

1 ममापि — वर्णनित्यतावादिनो मीमांसकस्यापि ।
2 इत्थं च — वायुसंयोगस्य शब्दव्यञ्जकत्वे च ।

न च तथापि न्यायनये विलक्षणवायुसंयोगानां कत्वादिकमेव समवायेन कार्यतावच्छेदकम् । [1]भवन्मते च ककारादिविषयकसाक्षात्कारत्वमिति महागौरवम् । न्यायनये अनन्तककारादिकल्पनं, तत्र तत्तत्पुरुषीयशब्दसाक्षात्कारं प्रति तत्तत्पुरुषीयश्रोत्रसमवायादेः हेतुत्वकपनं च [2]फलमुखमिति वाच्यम् । व्यक्तिकल्पनस्थले फलमुखगौरवस्यापि दोषत्वात् । [3]ममापि लौकिकविषयतासंबन्धेन ककारादिव्यक्तेरेकैकतया ककारादिकत्वाद्योरविशेषाच्च । न च तथापि लौकिकविषयत्वस्य स्वरूपसंबन्धात्मकस्याननुगततया कार्यतावच्छेदकतानियामकसंबन्धत्वे गौरवमिति वाच्यम् । समवायव (त्व) [त्] लौकिकविषयत्वस्याप्ये[4]कत्वात् । तवापि समवायस्यैकत्वेन

---

1 भवन्मते — वर्णनित्यतावादिमते ।

2 फलमुखमिति— तथाचानन्तककारादिकल्पनगौरवं तत्तत्पुरुषीयश्रोत्रसमवायादेः हेतुत्वकल्पनागौरवं च फलमुखत्वान्न दोष इति भावः ।

3 ममापीत्यादि — मीमांसकमते लौकिकविषयतासंबन्धेन कादिव्यक्तिविशिष्टस्य(साक्षात्कारस्य) वायुसंयोगकार्यतावत्त्वात् कार्यतावच्छेदिका कादिव्यक्तिः। साचैकैव न्यायमते कत्वजातिवदिति भावः ।

4 एकत्वात् — एकत्वाङ्गीकारात् ।

समवायसंबन्धावच्छिन्नाधारत्वस्यैव प्रतिव्यक्ति भिन्नतया स्वरूपसंबन्धात्मकस्य कार्यतावच्छेदकतानियामकसंबन्धत्वेनाननुगमगौरवस्य सत्त्वाच्च । न च तथापि तव कत्वादिरूपेण कादिव्यक्तिरवच्छेदिका । न्यायनये तु [1]स्वरूपतः कत्वादिव्यक्तिरिति लाघवमिति वाच्यम् । (प्र) [म] [2]मापि स्वरूपतः कादिव्यक्तेरवच्छेदकत्वात् । न च जात्यतिरिक्तपदार्थस्य किञ्चिद्धर्मप्रकारेणैव भानमिति कथं कादिव्यक्तेः स्वरूपतोऽवच्छेदक[त्व]मिति वाच्यम् । कादिव्यक्तेः स्वरूपतोऽवच्छेदकत्वेऽपि कार्यकारणभावग्रहे कत्वादिरूपेण भानात् । न हि जात्यतिरिक्तपदार्थस्य [3]किञ्चिद्रूपेण भानवत्, किञ्चिद्रूपेणावच्छेदकत्वमित्यपि नियमोऽस्ति, मानाभावात् ।

— —

1 स्वरूपतः कत्वादिव्यक्तिरिति — अवच्छेदिकेत्यनुषज्यते । कत्वादिजातिरत्र कत्वादिव्यक्तिपदार्थः । कत्वजातिः निरवच्छिन्नावच्छेदकतावतीति यावत् ।

2 ममापि — मीमांसकस्यापि ।

3 किञ्चिद्रूपेणेति — सावधारणम् । किञ्चिद्रूपेणैव न स्वरूपत इत्यर्थः । एवमुत्तरत्रापि ।

वायुसंयोगस्य व्यञ्जकत्वे कार्यकारणभावद्वयापत्तिः, तत्परिहारश्च

अथ तथापि तव लौकिकविषयतया कव्यक्तिरेवावच्छेदिका, लौकिकविषयतया कत्वं वेत्यत्र विनिगमकाभावात् कार्यकारणभावद्वयापत्तिः । न च कत्वस्यावच्छेदकत्वेऽपि विलक्षणवायुसंयोगाभावदशायां ककारसाक्षात्कारापत्त्या ककारव्यक्तेरवच्छेदकत्वावश्यकत्वमेव विनिगमकमिति वाच्यम् । एवं सति विलक्षणवायुसंयोगाभावदशायां कत्वसाक्षात्कारापत्त्या कत्वस्यावच्छेदकत्वस्यावश्यकत्वात्, इति चेन्न ।

ककाराविषयककत्वसाक्षात्कारस्या[1]लीकतया कत्वसाक्षात्कारसामग्रीविरहादेव तदानीं कत्वसाक्षात्कारासंभवेन कत्वस्यानवच्छेदकत्वात् । कोलाहलस्थले कत्वाविषयकस्यापि [2]साक्षात्कारस्य सत्त्वेन कव्यक्तेरवच्छेदकत्वस्य चावश्यकत्वात्, इति वदन्ति ।

---

1 अलीकतयेति — जात्याश्रयव्यक्तिमविषयीकृत्य स्वरूपतः जातिभानं नास्ति । गौरिति प्रतीतावेव स्वरूपतो गोत्वभानादिति भावः ।

2 साक्षात्कारस्य — वस्तुतः कत्वजात्याश्रयव्यक्तिविषयकसाक्षात्कारस्य ।

## वर्णनित्यत्ववादिमीमांसकमतखण्डनम्

## वर्णानां, प्रतिनियतव्यञ्जकव्यङ्ग्यत्वाभावसाधकानुमान-निरूपणम्

तदसत् । वर्णाः, न प्रतिनियतव्यञ्जकव्यङ्ग्याः, एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वात् घटैकत्व–परिमाणवत्, इत्यनुमानेन वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वाभावसिद्ध्या [क] कार–गकारादीनां नित्यत्वे ककाराद्येकसाक्षात्कारदशायां गकारादिसर्वशब्दसाक्षात्कारापत्तेः ब्रह्मणोऽपि दुरुद्धरत्वात् ।

## उक्तानुमाने साध्यपरिष्कारः

ननु, वर्णाः न प्रतिनियतव्यञ्जकव्यङ्ग्याः, एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वात् घटैकत्व-परिमाणवत् इत्यत्र, किं नाम प्रतिनियतव्यञ्जकव्यङ्ग्यत्वम् । न तावत् [1]तद्विषयकसाक्षात्काराजनकजन्यसाक्षात्कारविषयत्वम् ।

---

1 तद्विषयकेत्यादि — ककारसाक्षात्कारजनकं खकारसाक्षात्कारजनकं न भवति । एवं च खकारसाक्षात्कारजनकभिन्नेन जन्ये ककारसाक्षात्कारे ककारः विषयः इति समुदायार्थः ।

तथा सति तथाविधविषयत्वाभावस्य प्रकृते साध्यतायां, घटै-कत्वे, घटवृत्त्येकपृथक्त्वविषयकसाक्षात्काराजनकं (मेत) [य] देकत्त्रविषयकसाक्षात्कारजनकं एकत्वविषयकज्ञानं तज्जन्य-साक्षात्कारविषयत्वस्य सत्त्वेन तथाविधसाध्यासत्त्वात् व्यभि-चारः इति चेन्न ।

स्वविषयकसाक्षात्काराजनकजन्यसाक्षात्कारविषय [त] त्कत्वे सति तद्विषयकसाक्षात्कारजनकजन्यसाक्षात्कारविषयीभूतं यद्यत् स्वं त [त्त]द्भिन्नत्वस्य प्रकृतानुमाने साध्यत्वेनानुपपत्त्य-भावात् । स्वपदं भेदप्रतियोगिपरम् । तथाच यत् एका-वच्छेदेन यत्समानदेशत्वे सति यद्ग्राहकेन्द्रियग्राह्यं भवति, तत् स्वविषयकसाक्षात्काराजनकजन्यसाक्षात्कारविषयतत्कत्वे सति तद्विषयकसाक्षात्कारजनकजन्यसाक्षात्कारविषयीभूतं यद्यत् तत्तद्भेदकूटवत् भवति, इति सामान्यमुखी व्याप्तिः ।

अनुमानप्रयोगस्तु, खकारविषयकसाक्षात्कारविषय-ककारः, स्वविषयकसाक्षात्काराजनकजन्यसाक्षात्कारविषय-खकारकत्वे सति स्व-विषयकसाक्षात्काराजनकजन्यसाक्षा-त्कारविषयीभूतं यद्यत् स्वं तत्तद्भेदकूटवत्, एकावच्छेदेन

ख–समानदेशत्वे सति ख–ग्राहकेन्द्रियग्राह्यत्वात् घटैकत्व–परिमाणवत् इत्यादिक्रमेण बोध्यः ।

अत्र अजनकत्वं फलानुपधानरूपं ग्राह्यम् । अतः खकारविषयकसाक्षात्कारजनकवायुसंयोगस्य ककारविषयसाक्षात्कारस्वरूपयोग्यत्वेऽपि न मीमांसकनये [1]सिद्धसाधनावकाशः । (तन्न) [तत्र] कथं तथाविधस्वरूपयोग्यत्वमिति तु नाशङ्कनीयम् । कदा चित् विजातीयसंयोगाभ्यां ककार–खकार–विषयकसमूहालम्बनजननेन तत्र तथाविधस्वरूपयोग्यत्वसंभवात् । एवं च नैयायिकनये बाधवारणाय ख-विषयसाक्षात्कारविषयत्वस्य पक्षतावच्छेदककोटौ निवेशः । अन्यथा

---

1 सिद्धसाधनेति - वर्णानां वायुसंयोगव्यङ्ग्यत्वेऽपि, खकारव्यंजकवायुसंयोगस्य ककारसाक्षात्कारस्वरूपयोग्यत्वेन ककारसाक्षात्काराजनकत्वाभावात्, ख-साक्षात्कारस्य क–साक्षात्काराजनकजन्यत्वं नास्ति । अतः स्वपदेन ककारोपादानं न संभवति, तस्मिन् स्वविषयकसाक्षात्काराजनकजन्यसाक्षात्कारविषयखकारवत्त्वस्याभावात् । तथाच स्वपदेनोदासीनमादाय तद्भिन्नत्वरूपं साध्यं ककारे सिद्धमिति सिद्धसाधनस्य, साक्षात्काराजनकत्वस्य साक्षात्कारानुपधायकत्वरूपत्वे नावकाशः । ख-व्यंजकवायुसंयोगस्य क–साक्षात्कारोपधायकत्वाभावेन स्वपदेन ककारोपादानसंभवात्, तद्भिन्नत्वरूपसाध्यस्यासिद्धेः इति समुदायार्थः ।

[1]एकैकमात्रविषयकसाक्षात्कारजनकस्य [2]एकैकमात्रविषयकसाक्षात्काररूपफलानुपधायकतया बाधवारणस्याशक्यत्वात् ।

नचैवं सत्यपि उपदर्शितसामान्यव्याप्तौ, घटवृत्त्येकपृथक्त्वमादाय निरुक्तहेतुशालिनि घटैकत्वे व्यभिचारः । तत्र एकत्वविषयकसाक्षात्कारानुपधायकीभूतं यत् एकत्वग्रहप्रतिबन्धकदोषादिकालीनमेकपृथक्त्वज्ञानरूपकारणं, तज्जन्यसाक्षात्कारविषयत्वस्य एकपृथक्त्वे सत्त्वेन, एकपृथक्त्वग्रहप्रतिबन्धकदोषादिसमवधानकालीनं यत् एकत्वज्ञान (द्रव्य) [रूप] कारणं तज्जन्यसाक्षात्कारविषयत्वस्य एकत्वे सत्त्वेन च, [3]निरुक्तसाध्यासत्त्वादिति वाच्यम् । [4]तत्तत्साक्षात्कारा-

---

1 एकैकमात्रेति – ख-ककारयोरेकैकख-मात्रेत्यर्थः ।

2 एकैकमात्रेति— ख-कयोरेकैक-ककारमात्रेत्यर्थः ।

3 निरुक्तसाध्यासत्त्वादिति—तत्पदेन एकपृथक्त्वमुपादाय सत्यन्तार्थस्य विशेष्यदलार्थस्य च एकत्वे संभवेन, स्वपदेन घटैकत्वस्य धर्तुं शक्यत्वात् तद्भिन्नत्वात्मक साध्यं एकत्वे नास्तीति व्यभिचार इति भावः ।

4 तत्तत्साक्षात्कारेति — स्वसाक्षात्कारानुपधायके तत्साक्षात्कारप्रतिबन्धकासमवहितत्वस्य, तत्साक्षात्कारानुपधायके स्वसाक्षात्कारप्रतिबन्धकासमवहितत्वस्य च निवेश इत्यर्थः ।

जनके तत्तत्साक्षात्कारप्रतिबन्धकासमवहितत्वस्यापि निवेशनीयत्वादिति । [1]तथाच, यत् एकावच्छेदेन यत्समानदेशत्वे सति यद्ग्राहकेन्द्रियग्राह्यं, तत् स्वविषयकसाक्षात्कारानुपधायकं यत् तद्विषयकसाक्षात्कारप्रतिबन्धकासमवहितकारणं, तन्निष्ठफलोपधायकतानिरूपकसाक्षात्कारविषयतत्कत्वे सति, तद्विषयकसाक्षात्कारानुपधायकं यत् (तद्वि) [स्ववि] षयकसाक्षात्कारप्रतिबन्धकासमवहितकारणं, तन्निष्ठफलोपधायकतानिरूपकसाक्षात्कारविषयीभूतं यद्यत् (सं) [स्वं] तत्तद्भेदकूटवत् भवति इति सामान्यमुखव्याप्तिनिश्चयः ।

---

## सामान्यमुखव्याप्तौ हेतुसाध्यघटकदलानां प्रयोजननिरूपणम्

अत्र तथाविधकारणनिष्ठफलोपधायकतानिरूपकत्वनिवेशात्, घटवृत्त्येकपृथक्त्वादिसाक्षात्कारानुपधायकं यत् इतरकारणसमवहितात्ममनःसंयोगादिकं, तदीयस्वरूपयोग्यता -

1 निष्कृष्टं— विवक्षितं सामान्यमुखव्याप्तिस्वरूपमाह–तथाचेति ।

मादाय तथाविधैकपृथक्त्वादौ [1]निरुक्तपरस्पराव्यञ्जकव्यङ्ग्यत्वसत्त्वेऽपि [2]न क्षतिः । विभिन्नकालीनपाकजैकघटवृत्तिगन्धद्वये, एकगन्धविषयकसाक्षात्कारानुपधायक– [जन्य] परगन्धसाक्षात्कारविषये व्यभिचारवारणाय एकावच्छेदेनेति । स्वावच्छेदककालानवच्छिन्नतत्कं यद्यत् स्वं, तत्तद्भेदकूटवत्त्वार्थकम् । नातः परनये शब्दस्य [3]व्याप्यवृत्तित्वेऽपि हेतुः स्वरूपासिद्धः ।

---

1 परस्पराव्यञ्जकेति — एकत्वसाक्षात्कारानुपधायकस्यापि एकपृथक्त्वसाक्षात्कारस्वरूपयोग्यत्वात्. तथा एकपृथक्त्वसाक्षात्कारानुपधायकस्यापि एकत्वसाक्षात्कारस्वरूपयोग्यत्वात्, एकत्वाव्यञ्जकव्यङ्ग्यत्वमेकपृथक्त्वे, एकपृथक्त्वाव्यंजकव्यङ्ग्यत्वमेकत्वे च वर्तते इति, स्वपदेन, एकत्वस्य, एकपृथक्त्वस्य चोपादानसंभवेन तद्भिन्नत्वरूपसाध्याभाववति एकत्वे एकपृथक्त्वे च प्रसक्तव्यभिचारो नेति समुदायार्थः ।

2 न क्षतिः —न एकत्वैकपृथक्त्वयोः व्यभिचारः ।

3 व्याप्यवृत्तित्वेऽपि — अवच्छिन्नवृत्तिकान्यत्वेऽपि । शब्दावच्छेदकाप्रसिद्ध्या स्वपदेन शब्दोपादानासंभवात् तादृशोदासीनभेदकूटवत्त्वं शब्दे नासिद्धमिति भावः ।

केचित्तु, व्याप्यवृत्तेरपि [1]प्रतीतिबलात् कालावच्छेदकत्वाभ्युपगमे क्षतिविरहात् एकावच्छेदेनेत्यस्य एककालावच्छिन्नत्वे सतीति यथाश्रुतार्थ एव समीचीनः इत्याहुः ।

एवं विभिन्नसंस्थानविशेषव्यङ्ग्ययोः गोत्वाश्वत्वयोः व्यभिचारवारणाय समानदेशत्वे सतीति विशेषणम्, सम (न) नियताधिकरणत्वार्थकम् । नातः एकावच्छिन्नयोः एकश्येनप्रतियोगिकशाखासंयोग – वृक्षसंयोगयोः श्येनरूपैकदेशवृत्तित्वेऽपि व्यभिचारः । नचैवमपि एककालावच्छिन्नश्येनचरणद्वयावच्छिन्नश्येनवृक्षसंयोगे व्यभिचारः । तत्र परस्परविषयकसाक्षात्काराजनकपरस्परा [न] वच्छेदकावच्छिन्नसंनिकर्षजन्यसाक्षात्कारविषयत्वेन [2]निरुक्तसाध्यासत्त्वादिति वाच्यम् । विभिन्नदेशानवच्छिन्नत्वस्यापि निवेशनीयत्वात् । नचैवं सति समनियताधिकरणतार्थकं समानदेशत्वविशेषणं व्यर्थम् । उपदर्शितश्येनप्रतियोगिकशाखा-वृक्षसंयोगयोः

---

1 प्रतीतिबलादिति–अत एव–पर्वतीयरूपनिष्ठस्य वह्निमत्संयुक्तत्वाभावस्य व्याप्यवृत्तेरपि पर्वते तदीयरूपे न वह्निमत्संयुक्तत्वमिति प्रतीतिबलात् पर्वतावच्छिन्नत्व स्वीकुर्वन्ति सार्वभौमानुसारिणः ।

2 निरुक्तसाध्यासत्त्वादिति– परस्पराव्यञ्जकव्यङ्ग्यत्वसत्त्वात् स्वपदेनोपादानसंभवेन तद्भिन्नत्वरूपसाध्यासत्त्वादित्यर्थः ।

शाखाद्यवयव- वृक्षावयवरूपपरस्परविभिन्नावच्छेदकावच्छिन्नत्वेन तथाविधानवच्छिन्नत्वविशेषणेनैव वारणसंभवादिति वाच्यम् । एवमपि घटावधिक –घटकुड्यवृत्तिद्विपृथक्त्व– (घ) [प] टावधिक(घ) [प] टकुड्यवृत्तिद्विपृथक्त्वयोः एककालावच्छिन्नयोः [1]स्वस्वावधिज्ञानव्यङ्ग्ययोः व्यभिचारवारणाय तदुपादानस्यावश्यकत्वात् । नचैवं पक्षधरमिश्रोक्तोपदर्शितस्थलव्यावृत्तिविरोधः । तावता क्षतेरभावात्, तद्ग्रन्थस्योपलक्षणपरत्वाद्वा ।

अत्र विभिन्नदेशानवच्छिन्नत्वं, स्वावच्छिन्नत्व–स्वभिन्नदेशावच्छिन्नत्वोभयसंबन्धावच्छिन्नप्रतियोगिताकयत्किञ्चिद्देशाभाववत्त्वम् । अतो न विभिन्नदेशानवच्छिन्नत्वस्य दुर्वचत्वापत्तिरिति ।

अत्र पक्षतावच्छेदकसामानाधिकरण्येनैव साध्यसिद्धेरुद्देश्यत्वात् न नैयायिकनये विभिन्नदेशावच्छिन्नखकारविषयक-

---

1 स्वस्वावधिज्ञानव्यङ्ग्ययोरिति— अतः परस्पराव्यञ्जकव्यङ्ग्यत्वेन द्विपृथक्त्वस्य स्वपदेनोपादासंभवेन तद्भिन्नत्वरूपसाध्याभावः तयोरिति भावः ।

साक्षात्कारविषयककारे हेतोः भागासिद्धिः । तन्मते समान-देशावच्छिन्नतथाविधवर्णद्वयमादायैव पक्षे हेतुमत्त्वसंभवादिति।

एककालावच्छिन्नयोःकिञ्चिद्देशावच्छिन्नयोः एकघट-वृत्तिरसगन्धयोः व्यभिचारवारणाय समानेन्द्रियग्राह्यत्वादिति । तद्ग्राहकेन्द्रियजन्यलौकिकसक्षात्कारविषयत्वादित्यर्थः । नातः तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वप्रत्यक्षं प्रति तत्पुरुषीयापेक्षाबुद्धे-र्हेतुत्वेऽपि क्षतिः । न चैवमपि स्वस्वावधिज्ञानव्यङ्ग्ययोः घटवृत्त्येकपृथकत्व-दीर्घत्वयोर्व्यभिचार इति वाच्यम् । [द्वि] हस्तत्ववितस्तित्वादिरूपदीर्घत्वव्याप्यजातिपुरस्कारेण दीर्घत्व-ग्रहे अवधिज्ञानस्य हेतुतया दीर्घत्वत्वरूपेण दीर्घत्वग्रहे अव-धिज्ञानस्य हेतुत्वानभ्युपगमेनानुपपत्त्यभावादिति ।

---

## उक्तानुमाने सत्प्रतिपक्षशङ्का, तन्निरासश्च

अथ वर्णाः प्रतिनियतव्यञ्जकव्यङ्ग्याः [1]स्वग्राह(कैक-क्रिया) [केन्द्रिया] ग्राह्य लौकिकसाक्षात्कारविषयतदाश्रयकत्वात्, घटरसगन्धवत् इति सत्प्रतिपक्षसत्त्वान्नोक्तरीत्या वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वाभावसिद्धिः संभवति । पूर्वोपदर्शितसाध्यस्य प्रतियोग्येवात्र साध्यम् । पक्षोऽपि पूर्ववदेव । तेन न सत्प्रतिपक्षानुपपत्तिरिति चेन्न ।

---

1 स्वग्राहकेत्यादि — वर्णाः प्रतिनियतव्यंजकव्यङ्ग्याः आश्रयेण सह समानेन्द्रियाग्राह्यत्वात्, गन्धवत् इत्यनुमानं प्रदर्शितं मणौ । गन्धव्यञ्जकघ्राणस्य गन्धाश्रयद्रव्यग्रहणासामर्थ्यात् दृष्टान्ते गन्धे, वर्णव्यञ्जकश्रोत्रस्य शब्दाश्रयाकाशाव्यञ्जकत्वेन पक्षे च हेतोः सत्त्वं बोध्यम् । मण्युक्तस्य हेतोः परिष्कृतिः स्वग्राहकेत्यादिकम् । यत् स्वग्राहकेन्द्रियाग्राह्य-लौकिकसाक्षात्कार-विषयतदाश्रयकं तत् तेन समं प्रतिनियतव्यञ्जकव्यङ्ग्यं यथा रसेन गन्धः इति सामान्य मुखव्याप्तिः । अत्र अग्राह्येति तदाश्रये, लौकिकसाक्षात्कारविषयेति तदित्यत्र च विशेषणम् । स्वपदेन गन्धं, तत्पदेन रसं चोपादाय व्याप्तिर्ग्राह्या ।

[1]समूहालम्बनसाक्षात्कारमात्रविषययोः गन्धयोर्व्यभिचारेण सत्प्रतिपक्षासंभवात् ।

---

## घटादीनां नित्यत्वैकत्वापत्तिप्रतिबन्द्या शब्दनित्यतानिरासः

वस्तुतस्तु, वर्णानामुक्तरीत्या नित्यत्वे घटादीनामपि नित्यत्वापत्तिः । तत्रापि एकजातीयानां सर्वेषां घटानामेकत्वस्य नित्यत्वस्य च लाघवेन वक्तुं शक्यत्वात् । तत्तदवयवसंयोगादिरूपप्रतिनियतव्यञ्जकव्यङ्ग्यत्वस्य तत्राभ्युपगमेन एकघटादिसाक्षात्कारदशायां न सकलघटादिसाक्षात्कारापत्तिः,

---

1 समूहालम्बनसाक्षात्कारमात्रेति — मात्रपदेन प्रत्येकगन्धसाक्षात्कारव्यवच्छेदः । गन्धद्वयस्यैकप्रत्यक्षविषयत्वेन प्रतिनियतव्यञ्जकव्यङ्ग्यत्वरूपसाध्याभाववत्त्वात्, गन्धग्राहकेन्द्रियेण तदाश्रयाग्रहणात्, निरुक्तहेतुमत्त्वाच्च व्यभिचारः इति भावः ।

न वा सर्वदोपलम्भापत्तिः । [उत्पन्नः, विनष्टः] इत्यादिप्रत्ययस्यापि शब्दस्थले इव भ्रमत्वस्य [1]सुवचत्वात् ।

अथ, तन्नाशत्वेन तत्समवेतनाशत्वेन [च] [2]कार्यकारणभावात्, कपालनाशेन घटनाशस्य दुर्वारतया [3]घटस्य नित्यत्वासंभवः । न च जात्यादिनाशवारणाय, स्वप्रतियोगिजन्यत्वस्य नाशकतावच्छेदकसंबन्धतया, घटादेर्नित्यत्वे स्वप्रतियोगिजन्यत्वविरहादेव न नाश इति वाच्यम् । लाघवात् स्वप्रतियोगिसमवेतत्वस्यैव नाशकतावच्छेदकसंबन्धत्वात् । अनन्तघटादिकल्पनागौरवस्य च फलमुखत्वेनादोषत्वात् । [4]सत्त्वेन ध्वंसत्वेन [च] नाश्यनाशकभावान्तरादेव जात्यादेर-

1 सुवचत्वादिति — प्रागनुपलब्धोपलभ्यमानत्वादिदोषमूलकत्वेनेत्यादिः ।

2 कार्यकारणभावेति — प्रतियोगितासंबन्धेन तत्समवेतनाशं प्रति स्वप्रतियोगिसमवेतत्वसंबन्धेन नाशत्वेन कार्यकारणभावो बोध्यः ।

3 घटस्य नित्यत्वासंभव इति— वर्णस्य तु स्वसमवायिनः आकाशस्य नाशासंभवात् नैवं नित्यत्वासंभवइति भावः ।

4 सत्त्वेनेति — प्रतियोगितासंबन्धेन ध्वंसं प्रति समवायेन सत्ता कारणमिति कार्यकारणभावः । सत्तायाः जातावभावान्न जातेर्नाश इति भावः ।

विनाशोपपत्तेः । अनन्तस्थले स्वप्रतियो(गा)[गि]जन्यत्वस्य नाशकतावच्छेदकसंबन्धत्वकल्पनामपेक्ष्य अतिरिक्तैकनाश्यनाशकभावकल्पनाया लघुत्वादिति चेन्न ।

व्यक्त्यैक्य(ता) स्थले फलमुखगौरवस्यापि दोषत्वात् । तुल्ययुक्त्या कपाल—कापालिकादेरपि नित्यत्वस्य सुवचतया तन्नाशेन घटादिनाशापत्त्यसंभवाच्च । किञ्च, एवमपि सुखादीनां नित्यत्वैकत्वयोरापत्तिर्दुर्वारा । तत्समवायिनो नित्यतया [1]उक्तरीत्या तत्तन्नाशापत्त्यसंभवादिति दिक् ।

तस्माद्वर्णानामनित्यत्वे सिद्धे, वेदनित्यत्वमूल एव निहितः कुठारः ॥

---

वेदस्य प्रवाहाविच्छेदरूपनित्यत्वशङ्का, तन्निरासश्च

अथ, मास्तु ध्वंसाप्रतियोगित्वरूपं नित्यत्वं वेदस्य । तथाऽपि परतन्त्रपुरुषपरम्पराधीनतया प्रवाहाविच्छेदरूपे नित्यत्वे बाधकाभावः । एवं च नित्यत्वेन निर्दोषतया च वेदप्रामाण्यसिद्धौ सर्वज्ञवेदवक्तरि ईश्वरे प्रमाणाभावेनोक्तरीत्या वेदस्य पौरुषेयत्वासिद्धिरिति चेन्न ।

---

1 उक्तरीत्या — स्वसमवायिनाशेन ।

[1]स्मृत्याचारानुमितवेदानामुच्छेददर्शनेन, तद्दृष्टान्तेन, सर्वे वेदाः उच्छिद्यन्ते, वेदत्वात्, स्मृत्याचारानुमितवेदवत् इत्यनुमानेन सर्ववेदानामुच्छेदे सिद्धे, सजातीयध्वंससमव्यापकप्रागभावप्रतियोगित्वरूपप्रवाहाविच्छेदस्यासंभवात् ।

---

## प्रत्यक्षवेदमूलकत्वरहितानां स्मृत्याचाराणां नित्यानुमेयो वेदः मूलमिति प्राभाकरमतनिरूपणम्

स्यादेतत् । स्मृत्याचारानुमितवेदानामुच्छेद एवासिद्धः । तेषां [2]नित्यानुमेयत्वात् । प्रवाहाविच्छेदोऽपि सर्वदा तुल्यरूपता । सा च कालोपाधित्वाव्यापकाध्ययनविषयत्वानवच्छिन्नत्वम् । तच्च सर्वदा अध्ययनविषये प्रत्यक्षवेदे, अध्ययनाविषये नित्यानुमेये वेदे चास्ति ।

---

1 स्मृत्याचारानुमितेति – प्रत्यक्षवेदप्रमाणरहित-अष्टकादिस्मृतिमङ्गलाद्याचारयोः वेदमूलकत्वेनैव धर्मे प्रमाणतया, ताभ्यां तन्मूलवेदः अनुमीयते । स च इदानीमध्ययनागोचरत्वात् उच्छिन्नः इति भावः ।

2 नित्यानुमेयः — नित्यं-सर्वदा अनुमेय एव, न कदापि अध्ययनगोचरः ।

## वेदानुमाननिरूपणम्

अनुमानं च, विवादपदमपूर्वबोधिका स्मृतिः, स्मृत्यर्थानुभवजनकवेदमूला, अविगीत–महाजनपरिगृहीतस्मृतित्वात् प्रत्यक्षवेदमूलकस्मृतिवत् । अत्र प्रत्यक्षवेदमूलकस्मृतौ [1]अंशतः सिद्धसाधनवारणाय विवादपदमिति । तदर्थस्तु इदानीं प्रत्यक्षवेदामूलकत्वम् । 'पितर्युपरते पुत्रान्प्राणे दधर्यथाशत'? इति न्यायमूलकस्मृतौ अंशतो बाधवारणाय [2]अपूर्वबोधकेति । वस्तुतः, विवादपदत्वं, उभयवादिसिद्धान्यतरकोटिकान्यत्वम् । एवंच न्यायमूलकस्मृतेरप्य[3]नेनैव वारणे अपूर्वबोधकत्वं न देयमेव ।

---

1 अंशतः सिद्धसाधनं — पक्षतावच्छेदकसामानाधिकरण्येन सिद्धसाधनम् । पक्षतावच्छेदकावच्छेदेन साध्यानुमितावपि सामानाधिकरण्येन सिद्धिः प्रतिबन्धिका इति अतिप्राचीनमताभिप्रायेणेदं सिद्धसाधनकथनं बोध्यम् । अत्र सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वं न संभवति । समनन्तरमेव न्यायमूलकस्मृतौ अंशतो बाधकथनस्यासंगतत्वापत्तेः । सामानाधिकरण्येनानुमितौ सामानाधिकरण्येन बाधज्ञानस्याविरोधित्वात् ।

2 अपूर्वबोधकेति — अत्रापूर्वपदं वेदार्थपरम् । तेन पक्षतावच्छेदकस्य नैयायिकमीमांसकोभयसिद्धत्वं बोध्यम् ।

3 अनेनैव — विवादपदत्वेनैव । वेदमूलकत्वाभावरूपान्यतरकोटेः स्मृतिविशेषे उभयवादिसिद्धत्वेन, उभयवादिसिद्धान्यतरकोटिकान्यत्वस्याभावादिति भावः ।

हेतौ अविगीतपदं, 'संक्रान्तौ यूपे यूपहस्तिनो बद्धव्याः' इत्यादिलोभमूलकस्मृतौ व्यभिचारवारणाय । [1]तच्च प्रमाणपरम् । प्रागुक्तन्यायमूलकस्मृतौ व्यभिचारवारणाय महाजनेत्यादि । तच्च लौकिकप्रमाणाविषयार्थकम् । वेद एव व्यभिचारवारणाय स्मृतीति । तच्च स्मृतित्वेन प्रसिद्धार्थकम् ।

वस्तुतः, मन्वादिप्रणीतत्वमेव स्मृतित्वम् । एवं च लोभमूलकस्मृतौ व्यभिचारवारणाय अविगीतेति न देयम् ।

साध्ये वेदमूलत्वं, स्वजन्यानुभवद्वारा वेदजन्यत्वम् । पटादौ [2]ज्ञानादिव्यवहितस्य कुविन्दादेरिव स्मृतावपि ज्ञानादिव्यवहितस्य वेदस्य जनकत्वात् न [3]बाधसंभावना । तादृशजनकत्वं चाज्ञातस्य न संभवतीति पक्षधर्मताबलात् नित्यानुमेयप्रच्छन्नवेदसिद्धिः । अध्ययनविषयवेदत्वस्य सार्वेदि-

---

1 तच्च – अविगीतपदम् । एवं समनन्तरयोः 'तच्च' इतिपदयोरपि तत्तत्पदविशेषार्थकता बोध्या ।

2 ज्ञानादिव्यवहितस्येति – पदाद्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतीनामेवाव्यवहितसाधनत्वादिति भावः ।

3 बाधसंभावनेति – साक्षात् वेदजन्यत्वाभावनिबन्धनेत्यादिः ।

काध्ययनविषयत्वव्याप्यत्वेन [1]व्यापकाभावादध्ययनविषयत्वस्य [2]तत्रासंभवात् ।

---

### मौनिश्लोकवदुपपत्तेः न पक्षधर्मताबलादपि नित्यानुमेयवेदसिद्धिः इत्याक्षेपः, तन्निरासश्च

अथ, यथा मौनिना (यथा) श्लोकादिकं कृत्वा लिप्यादिना अन्येभ्यः प्रतिपाद्यते, तथा ईश्वरेणापि स्वाभिप्रायस्थोऽपि वेदः स्मृतिकर्तृभ्यः मन्वादिऋषिभ्यः लिप्यादिना प्रतिपाद्यते । अनन्तरं च तैः, तस्मादर्थं प्रतीत्य स्मृतयः प्रणीयन्ते इति कदाप्यध्ययनविषयत्वाभावेऽपि वेदात् स्मृतिप्रणयनं संभवतीति न पक्षधर्मताबलादपि [3]नित्यानुमेयवेदसिद्धिः संभवतीति चेन्न ।

---

1 व्यापकाभावात् — सार्वदिकाध्ययनविषयत्वस्य व्यापकस्याभावात् ।

2 तत्र — अनुमिते मूलवेदे ।

3 नित्यानुमेयेति — उच्चारणेन लिप्यादिना वा कदाप्यविज्ञातानुपूर्वीविशेषः सर्वदा अनुमानमात्रगोचरो वेदइत्यर्थः ।

वेदस्य उच्चारणाद्यभिव्यक्तानुपूर्वीमत्त्व–तच्छून्यत्वाभ्यां द्विविधतया, तत्रानुपूर्वीकल्पने गौरवेण आद्यविधाया असंभवेन, [1]द्वितीयविधायामेव पर्यवसा(तीन)[नेन][2]मौनिश्लोकादिवैषम्यात्। न च तर्हि तस्य आनुपूर्वीहीनस्य कथं बोधकतासंभवः, आनुपूर्वी[म]त्वेन ज्ञानस्य शाब्दबोधसामग्रीघटकत्वात्। अन्यथा, नदी, दीन, जरा, राजा इत्यस्याविशेषेण बोधकतापत्तेरिति वाच्यम्। तदर्थज्ञापकत्वेन ज्ञानघटितसामग्र्या एव प्रकृते [3]शाब्दबोधजनकत्वोपगमेन, स्मृत्यर्थानुभावकत्वेन ज्ञातादेव वेदादर्थप्रतीतिसंभवेन बोधकतासंभवात्।

———

### स्मृत्यर्थज्ञापकत्वेनानुमितस्य वेदस्यानुवादकत्वशङ्का, तन्निरासश्च

नचैवं स्मृत्यर्थबोधकत्वेन वेदानुमितौ, स्मृत्यर्थस्य विषयतया तद्बोधकवेदस्यानुवादकतापत्तिरिति वाच्यम्। कार्येण

---

1 द्वितीयविधायामेव — उच्चारणाद्यभिव्यक्तानुपूर्वीशून्यत्वात्मकप्रकारे एव।

2 वैषम्यादिति— लिप्यादिना आनुपूर्वीविशेषस्य मौनिश्लोके ज्ञातत्वादिति भावः।

3 उपगमेनेति— इयं च विलक्षणा शाब्दसामग्री नित्यानुमेयवेदस्थले प्राभाकरकल्पितेति बोध्यम्।

कारणानुमाने, कारण- [1]कारणतावच्छेदकातिरिक्तस्य व्याप्तिज्ञानविषयव्यापकतावच्छेदकस्य विशेषणत्वेऽपि न विषयत्वमिति [2]तत्सिद्धान्तात्, पाककृतौ मानसप्रत्यक्षायां पाकस्य ज्ञानान्तरोपनीतस्य, संज्ञिज्ञाने संज्ञायाश्च ज्ञानान्तरोपनीताया विशेषणत्वेऽपि न विषयत्वमिति [3]तैरङ्गीकारात् । न च विशेषणत्वस्य विषयतात्मकत्वेन विषयत्वाभावात् कथं विशेषणत्वमिति वाच्यम् । विशेषणत्वस्य भासमानधर्मात्मकत्वरूपतया ज्ञानान्तरोपनीतस्य असंसर्गतया धर्मत्वभाने तद्विशेषणत्वस्य, ज्ञाने तद्विशिष्टज्ञानत्वस्य च संभवात् । न च ज्ञानान्तरोपनीतस्य वेदार्थस्यानुमितिविषयत्वे वेदस्यानुवादकतापत्तिरिति वाच्यम् ।

---

1 कारणतावच्छेदकेति — शक्तिः (अतिरिक्तःपदार्थः) एव सर्वत्र तन्मते कारणतावच्छेदिकेति बोध्यम् ।

2 तत्सिद्धान्तात् — प्राभाकरसिद्धान्तात् । तथाचोक्तानमितौ साध्ये वेदे विशेषणकोटिप्रविष्टस्य स्मृतित्वरूपहेतुव्यापकतावच्छेदकघटकस्मृत्यर्थस्य विषयत्वाभावात्, न मानान्तराधीनज्ञानविषयताश्रयबोधकत्वलक्षणमनुवादकत्वमनुमितवेदस्येति भावः ।

3 तैः — प्राभाकरैः । द्वित्वनाशकालीनायां द्वित्वादिविशेषणज्ञानजन्यत्वात् द्वित्वविशिष्टविषयिण्यां द्वे द्रव्ये इति बुद्धावविषयस्यापि द्वित्वस्य विशेषणत्वमिति आचार्यमतं निरूपितं विविधविशेषणोपलक्षणविवेचनावसरे व्युत्पत्तिवादे इत्यपि बोध्यम् ।

वेदार्थग्राहकस्य ज्ञानान्तरस्य स्मृतिजन्यतया प्रमाणान्तर (त्ववना) [त्वेन] प्रमाणान्तरगृहीतार्थकत्वरूपानुवादकत्वा-भावात् ।

---

## आनुपूर्वीहीनस्य कदाप्यपठितस्याबोधकत्वेन न वेदत्वमिति शङ्का, तत्परिहारश्च

अथ कदाप्यपठितस्य वेदत्वं न संभवति, उत्पत्तेः, अभिव्यक्तेः, मौनिश्लोकवदभिप्रायाद्वा [1]ततोऽर्थावगमासंभवात्। आनुपूर्वीहीनवर्णमात्रस्यैव निरर्थकत्वात् । न चानुपूर्वीसहितस्य वेदस्यानुमानान्न दोष इति वाच्यम् । [2]तस्य नानात्वेन विशिष्य ज्ञानासंभवादिति चेन्न ।

---

1 ततः — नित्यानुमेयवेदात् ।

2 तस्य नानात्वेनेति — आनुपूर्वीभेदेन वेदस्यानुमीयमानस्य नानात्वं बोध्यम् ।

हस्तकरादिपदानां, घटमानय, कलशमानय, आनय घटम् [1]इत्यादीनां च प्रत्येकं व्यभिचारेण, शाब्दबोधे पदानां वाक्यानां चानुपूर्वीज्ञानस्याहेतुत्वात् । किन्तु तत्तदर्थज्ञापकत्वेन ज्ञानमेव [2]तत्र हेतुः । तच्च [3]प्रकृतेऽप्यस्ति । [4]तदर्थमेव च क्वचित् वर्णस्वरक्रमविशेषाणामुपयोगः ।

[5]अत एव कुशमानयेत्यादौ (श) [स] कारसन्देहे, (लियानुच्चारणो वा) [लिपौ, उच्चारणे वा] हस्तकरादिसन्देहेऽपि शाब्दबोधः । अत एव दृष्टं च अस्त्यत्र वह्निलिङ्गम् इति श (श॒त्र्) [ब्दात्] [6]प्रतीतेन धूमेनालोकेन वा वह्नेरनुमा (नन्तु) [नम् ।]

---

1 इत्यादीनां चेति — वाक्यानामिति शेषः ।

2 तत्र — शाब्दबोधे ।

3 प्रकृतेऽपि — नित्यानुमेयवेदस्थलेऽपि ।

4 तदर्थमेव — शाब्दबोधहेतोः तदर्थज्ञापकत्वेन ज्ञानस्य संपादयर्थमेव ।

5 अत एव — आनुपूर्वीविशेषज्ञानं विनापि तदर्थज्ञापकत्वेन ज्ञानस्य शाब्दबोधजनकत्वाभ्युपगमादेव ।

6 प्रतीतेनेति–धूम–आलोकादिपदानुपूर्वीज्ञानं विनापीत्यादिः । एवमग्रेऽपि ।

[ननु] तदर्थज्ञापकत्वेन ज्ञानात् [1]पदार्थोपस्थितिमात्रं जन्यते, न तु वाक्यार्थबोधः, नामत्व–विभक्तित्वादिना ज्ञानं विना अकाङ्क्षादिज्ञानासंभवेन [2]तदसंभवात् । न च तदर्थज्ञापकत्वेन ज्ञानहेतुतामते, आकाङ्क्षादिज्ञानस्य न तत्र हेतुतेति वाच्यम् । घटः कर्मत्वम् आनयनम् कृतिः इत्यादिनिराकाङ्क्षवाक्यादपि घटकर्मत्व आनयनकृतिबोधकत्वेन ज्ञानेऽपि घटमानयेत्यादिवाक्यादिव शाब्दबोधापत्तेः । एवं च कर्मत्वाद्युपस्थापकविभक्त्यादिम [[3]त्पदवि] शेषत्वादिना ज्ञानं विना तदर्थज्ञापकत्वज्ञानमात्रात् कथं शाब्दबोधः । नचैवं कुशमानयेत्यादौ सकारादि सन्देहे कथं शाब्दबोध इति वाच्यम् । तत्रापि सामान्यतः तथाज्ञानसत्त्वात् । [4]अननुगमेन तत्तद्विभक्त्यादिम [त्पद] विशेषज्ञानत्वादिना हेतुत्वासंभवादिति चेन्न ।

---

1 पदार्थोपस्थितीति — पदार्थस्मरणेत्यर्थः ।

2 तदसंभवात् — वाक्यार्थबोधासंभवात् ।

3 पदविशेषत्वादिना — घट-कलशादिपदत्वेन ।

4 अननुगमेन — घट-कलशादिपदविशेषाणामननुगमेन ।

घटः कर्मत्वमित्या[1]द्यन्वयबोधविरोधिपदाजन्योपस्थितित्वादिनैव तत्र हेतुत्वात् ।

---

## अनुमितवेदस्थले आनुपूर्वीज्ञानाघटिता विलक्षणसामग्री वाक्यार्थबोधहेतुरिति निरूपणम्

वस्तुतस्तु, नानापदजन्यपदार्थोपस्थित्या यत्र शाब्दबोधः, तत्रैवानुपूर्वीज्ञानस्य हेतुतया, [2]तद्विनापि अनुमितवेदात् शाब्दबोधे बाधकाभावः । नचानुपूर्वीज्ञानघटितसामग्र्याः [3]अन्यत्र शाब्दबोधजनकत्वेन (उक्तप्रायाः) [उक्तसामग्र्याः] अत्राभावे कथं शाब्दबोध इति वाच्यम् । अत्र

---

1 अन्वयबोधविरोधीति इदं पदविशेषणम् । तच्च पदं घटः कर्मत्वमित्यादि निराकाङ्क्षम् । तादृशपदेनाजन्योपस्थितिः शाब्दबोधे हेतुरिति नोक्तापत्तिरिति समुदितार्थः ।

2 तद्विनापि — आनुपूर्वीज्ञानं विनापि ।

3 अन्यत्र — नित्यानुमेयवेदस्थलादन्यत्र ।

तदर्थज्ञापकत्वेन ज्ञानघटितायाः [1]धर्मिग्राहकमानसिद्धायाः विलक्षणसामग्र्या एव शाब्दबोधजनकत्वोपगमात् । न च क्लृप्तसामग्र्यभावेऽपि विलक्षणसामग्र्यन्तरेण कथं कार्योत्पत्तिः, (अदृष्टं गौरवत्वा) [[2]अदृष्टकल्पने गौरवा] दिति वाच्यम् । तथा सति तव घटादिकार्यकर्तुः शरीरापेक्षया जनकत्वस्य दृष्टतया, क्षित्यादिकार्ये ईश्वरस्याशरीरिणः शरीरापेक्षां विनैव जनकत्वस्यानुपपत्तेः । कार्यवैलक्षण्यात् सामग्रीवैलक्षण्याभ्युपगमे, प्रकृतेऽप्यदोषात् ।

एवं च नित्यानुमेयवेदस्थले वर्णपदविभक्त्यादि विशेषघटितत्वेनाज्ञातस्याखण्डस्य वाक्यार्थानुभावकत्वात् तत्र [3]पदार्थस्थानीयो वाक्यार्थः ।

---

1 धर्मिग्राहकमानसिद्धाया इति — धर्मी-वेदः, तद्ग्राहकमानं-स्मृतित्वहेतुकं वेदमूलकत्वानुमानम् । तदर्थज्ञापकत्वेनैव मूलवेदस्यानुमानप्रमाणेन सिद्धत्वात्, आनुपूर्वीज्ञानाभावाच्च. आनुपूर्वीज्ञानाभावघटिता वाक्यार्थबोधसामग्री तादृशानुमानप्रमाणसिद्धेति बोध्यम् ।

2 अदृष्टकल्पने — अन्यत्रादृष्टस्य विलक्षणसामग्र्यां शाब्दजनकत्वस्य कल्पने ।

3 पदार्थस्थानीय इति — पदार्थस्मृतौ यथा न पदान्तरापेक्षा, तथा नित्यानमेयादखण्डवेदात् वाक्यार्थज्ञानेऽपि न पदान्तरापेक्षेति भावः ।

अस्तु वा, सखण्डस्यैव वा [वक्या] र्थानुभावकत्वम्, [1]अखण्डत्वे अस्माकमाग्रहाभावात् । न च तर्हि आनुपूर्व्याः नानात्वात् विशिष्यानिश्चये कथं शाब्दबोधः इति वाच्यम् । अत्र [2]विलक्षणाया एव सामग्र्याः स्वीकारात् । न च क्लृप्तहेतुं विना न [3]सोऽनुभावक इति वाच्यम्। [4]तस्यासिद्धौ आश्रयासिद्धेः। सिद्धौ च(बाधनेन)[बाधः। [5]तेन]विनैव; सर्वानुपपत्तिं परिभूय [6]धर्मिग्राहकमानेन तदनुभावकत्वसिद्धेः। (श्रुत एवं) [[7]अत एव] स्तुतिनिन्दाभ्यां कल्पितविधिनिषेधकवाक्यान्तरार्थं प्रतीत्य प्रवृत्तिनिवृत्ती । अन्यथा विधिनिषेध-

---

1 अखण्डत्वे इति — नित्यानुमेयवेदस्येत्यादिः ।

2 विलक्षणायाः — तदर्थज्ञापकत्वेन ज्ञानरूपायाः ।

3 सः — नित्यानुमेयो वेदः ।

4 तस्यासिद्धौ — स्मृतिमूलवेदः(नित्यानुमेयः)नानुभावकः क्लृप्तकारणाभावादित्यत्रानुमाने पक्षस्य निरुक्तवेदस्य ।

5 तेन विनैव — क्लृप्तहेतुमानुपूर्वीज्ञानं विनैव ।

6 धर्मिग्रहकमानेन — स्मृतिमूलवेदानुमापकानुमानेन ।

7 अत एव — आनुपूर्वीज्ञानस्य वाक्यार्थज्ञानकारणत्वाभावादेव ।

(क) [कानां] नानाविधत्वेन विशेष [रूपे] [1]णानुमामासंभवान्न [2]ततोऽर्थधीः स्यात् ।

एवं मङ्गलाद्याचारे, अविगीतशिष्टाचारत्वेन कर्तव्यतामनुमाय, सा कर्तव्यता वेदबोधिता, अलौकिकाविगीतशिष्टाचारकर्तव्यतात्वादिति वेदानुमानम् । मङ्गलमाचरेत् इत्यादि विशेषाकारेण तु न वेदानुमानम्, तथा [3]व्याप्त्यभावात् । न चास्तु प्रत्यक्षवेदानुमानम् । प्रत्यक्षत्वे उच्छेदानुपपत्तेः प्रत्यक्षशाखावत् ।

यत्तु, अष्टकाः [कर्तव्याः], कार्या अष्टकाः इत्येवंरूपमेव वाक्यमनुमेयमिति ।

(तत्र) [तन्न] नानावेदकल्पने गौरवात् । मन्वादिस्मृतिमूलं हि नानेकविधं दृष्टमिति, कथमाधुनिकः कथ-

1 अनुमानासंभवादिति — आनुपूर्वीविशेषवत्त्वेन व्याप्तिज्ञानाभावादिति भावः ।

2 ततः — स्तुतिनिन्दाकल्पितेभ्यः विधि-निषेधकवाक्येभ्यः ।

5 व्याप्त्यभावात् — व्याप्तेरग्रहात् ।

मनेकवेदमनुमिनुयात् । न च स्मृत्यर्थबोधको वेदः [1]स्मृतिसदृश एवानुमेयः । स्मृतेर्नानाविधत्वात् ।

[2]तस्य च प्रदोषादावनुच्चरितस्यैव वेदत्वम्, श्रोत्रग्रहणार्हताया शाब्दत्वम्, वाक्यत्वमर्थबोधकत्वात् इति ।

अस्तु स्मृत्याचाराभ्यां चानुमितो वेदोऽर्थं बोधयतीति । [3]पूर्वपूर्वेणानुमितवेदात् तदुत्तरोत्तरस्मृत्याचाराविति (नाद्यः) [[4]नान्धपरम्परा, स्वतन्त्रप्रमाणमूलकत्वात् ।] तस्मात् वेदस्य नित्यानुमेयत्वं, न तूच्छेदः इति ।

इति नित्यानुमेयप्रच्छन्नवेदवादिमतनिरूपणम्

---

1 स्मृतिसदृश एवेति — तथाच स्मृतिवाक्यसमानानुपूर्वीक एव वेदः अनुमीयते इति न नानावेदकल्पनागौरवमिति शङ्काशयः ।

2 आसंसारमनुच्चारितस्य अश्रुतस्य आनुपूर्वीरहितस्य च मूलवेदस्य वेदत्वं शब्दत्वं वाक्यत्वं च समञ्जसयति–तस्यचेत्यादिना ।

3 पूर्वपूर्वेणेति — स्मृत्याचारेणेति शेषः ।

4 नान्धपरम्परा — नानाश्वासः, नाप्रामाण्यशङ्केति यावत् ।

## निरुक्तप्राभाकरमतनिराकरणं, उच्छिन्नः वेदः मूलमिति सिद्धान्तनिरूपणं च

अत्रोच्यते । उच्छिन्नवेदादर्थं प्रतीत्य (स्मृत्योः)[स्मृत्याचारयोः] उपपत्तेः, [1]सामग्र्यन्तरकल्पने मानाभावः । अत एव नान्यथासिद्धिः, न बाधः, स्मृत्याचारानुमितस्य [2]तस्यास्माभिरप्युपगमात् । (परा स्वतन्त्रप्रमाणमूलकत्वात् परेम) न च तस्मात् [3]कथं बोधः [इति शङ्कनीयम् । ] आनुपूर्वीसाहित्यात् । न च तत्र मानाभावः । यदि स वेदः आनुपूर्वीरहितः स्यात्, तदा अननुभावकः स्यादिति तर्कसहकृतानुमानस्यैव मानत्वात् ।

---

1 सामग्र्यन्तरकल्पने — आनुपूर्वीज्ञानघटितसामग्रीविलक्षणायाः तदर्थज्ञापकत्वेन ज्ञानघटितायाः शाब्दसामग्र्याः कल्पने।

2 तस्य — स्मृतिप्रणयनकाले अध्ययनविषयस्य इदानीमुच्छिन्नस्य मूलभूतवेदस्य ।

3 कथमिति — अनुमितवेदस्यानुपूर्वीराहित्येन सामग्र्यभावादिति भावः ।

एवं च स्मृत्याचारयोः वेदजन्यानुभवमूलकत्वानुमानादेव पक्षधर्मताबलात् प्रत्यक्षवेदमूलकत्वसिद्धिः। अन्यथा अनुभावकत्वाभावेन तस्य मूलत्वानुपप (न्नः) [त्तेः]। तस्मात् स्मृत्याचारानुमितो वेदः प्रत्यक्षाध्ययनविषयः, वेदत्वात् संमतवत्। उच्छेदस्तु आधुनिकानामहरहरपचीयमानशक्तिकत्वात्।

स्तुतिनिन्दावाक्याभ्यां च प्रवृत्तिनिवृत्तिपराभ्यां प्रवृत्तिनिवृत्ति[1]हेतु [भू] तार्थ एव कल्प्यते, न तु [2]विधायकनिषेधकवाक्यं, [3]गौरवा[4]दुक्तदोषाच्च। यत्र चार्थवादादेव तदर्थावगमः, तत्र न तत्कल्पना। यथा 'तरति मृत्युम्, तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यादौ। न च तस्याध्ययनविषयत्वे बहुभिर्मेधाविभिः धारणसंभवेन कथमुच्छेद इति

---

1 हेतुभूतार्थः —प्रवृत्तिहेतुः इष्टसाधनत्वरूपः विधायकवाक्यार्थः, निवृत्तिहेतुः अनिष्टसाधनत्वरूपः निषेधकवाक्यार्थः।

2 विधायकनिषेधकवाक्यं—विधायकवाक्यं निषेधकवाक्यं च।

3 गौरवादिति – वाक्यानुमानस्य तज्जन्यतदर्थज्ञानस्य च कल्पने गौरवात् अर्थज्ञानमात्रकल्पने लाघवादिति भावः।

4 उक्तदोषाच्च – आनुपूर्वीज्ञानघटितसामग्र्यभावेन शाब्दासंभवदोषाच्च।

वाच्यम् । एकस्य सकलशाखाध्ययने सामर्थ्याभावात्, एकेनैवापरेणापि तदनध्ययने शाखोच्छेदसंभवात् । [1]शाखात्वस्यैव प्रत्यक्षशाखात्वस्यापि सार्वदिकाध्ययनविषयत्वव्याप्यत्वे मानाभावात् । न च सहस्रशाखाविदां व्यासादीनां सत्त्वात् कथमुच्छेद इति वाच्यम् । अध्ययनाभावस्यैवोच्छेदपदार्थत्वात् ।

## शाखोच्छेदे, वैदिकव्यवहारलोपशङ्कापरिहारौ

अथ, शाखोच्छेदे वर्णपदवाक्यहानिशङ्कया प्रत्यक्षवेदादपि वाक्यार्थप्रयोगयोरनिश्चये वैदिकव्यवहारमात्रविलोपापत्तिरिति चेन्न ।

श्रूयमाणवेदस्यैव महाजनपरिग्रहेण तन्मूलकानुष्ठानसंभवात् ।

---

1 स्मृतिमूलवेदशाखायाः उच्छिन्नायाः स्मृतिप्रणयनकालीनप्रत्यक्षविषयत्वं न संभवति, तद्व्यापकस्य सार्वदिकाध्ययनविषयत्वस्याभावात् इत्याशङ्कायामाह—शाखात्वस्यैवेति । प्राभाकरमते नित्यानुमेयशाखास्वीकारात् दृष्टान्तसंगतिः ।

एतेन, सर्वत्रोच्छिन्नशाखाबोधिताङ्गकतासन्देहेन सर्वत्रानाश्वासप्रसङ्गः इत्यपि निरस्तम् ।

सन्ति चानेकशाखाबोधिते तत्तत्कर्मणि[इति] [1]कर्तव्यताबोधिकाः मन्वादिस्मृतयः । कालक्रमभाविनमेतादृशमनाश्वासनाशङ्क्यैव [2]तैः तत्तत्स्मृतिप्रणयनात् । न च स्मृत्याचारयोः महाजनपरिग्रहादेव प्रामाण्यमस्तु, किं वेदेनेति वाच्यम् । प्रलये स्मृत्याचारयोरुभयोरेव विच्छेदात् सर्गादौ नित्य–सर्वज्ञेश्वरप्रणीतवेदमूलकत्वस्य स्मृत्याचारयोरावश्यकत्वात् । अन्यथा मूलाभावेनान्धपरम्परापातप्रसङ्गात् । मन्वादीनां [3]तदा नातीन्द्रियदर्शित्वम्, [4]तदुपायश्रावणाद्यभावात् । पूर्वसर्गसिद्धसार्वज्ञ्यकल्पने प्रतिसर्गं तेषामन्यात्मत्वकल्पने च गौरवम् । एकस्यैव नित्यसर्वज्ञस्य कल्पनाया औचित्यात् । न चेश्वरप्रणीताः स्मृतय एव सन्त्विति वाच्यम् । तासां मन्वादिप्रणीतत्वेन, वेदमूलकत्वेन

---

1 इतिकर्तव्यता — कर्तव्यपरिपाटी ।
2 तैः — मन्वादिभिः ।
3 तदा — सर्गादौ ।
4 तदुपायेति — अतीन्द्रियार्थदर्शनोपायेत्यर्थः ।

[च] [1]स्मृति (ह्ये) [ष्वे] व स्मृतेः । तदुक्तं— 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इति । [2]अत्र विधानमेवान्यत् । (मन्वमेवा) [न त्वा] नुपूर्वीभेदः । तत्तददृष्टविशेषे तत्तदानुपूर्व्या एव जनकत्वेनानुपूर्वीभेदासंभवात् । तस्मात्, [3]पूर्वं प्रत्यक्षवेदमूलावेव स्मृत्याचारौ । [4]अग्रे च कालक्रमेण आयुरारोग्यबलश्रद्धाग्रहणधारणशक्तेरहरहरपचीयमानत्वात् तदध्ययनविच्छेदेन शाखोच्छेदात्, स्मृत्याचाराभ्यामेव कर्तव्यतामधिगम्य प्रवृत्तिः । न च तथापि स्मृतिरेवास्तु वेदमूला । मङ्गलाद्याचारस्तु ईश्व (र वादा) [राचारा]

---

1 स्मृतिष्वेवेति— 'वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः' इत्यादि स्मृतौ मन्वादिप्रणीतत्वस्य, 'यः कश्चित् कस्य चिद्धर्मः मनुना संप्रकीर्तितः। स सर्वोऽभिहितो वेदे'। इत्यादि स्मृतौ वेदमूलकत्वस्य च स्मरणादित्यर्थः।

2 'श्रुतिरन्या' इत्यत श्रुतेरानुपूर्वीभेदभ्रममपाकरोति—अत्रेत्यादिना।

3 पूर्वं — सर्गादौ।

4 अग्रे — सर्गानन्तरम्।

देव घटलिप्यादि [1]संप्रदायवदिति वाच्यम् । बहुव्यापारघटितस्य तत्तदाचारस्य गुरुत्वेन, 'मङ्गलमाचरेत्' इत्यादिवाक्यस्यैव लाघवेन कल्पनात् । न च मङ्गलादिपदशक्तिग्रहार्थमाचार आवश्यक इति वाच्यम् । [2]स्वर्गादिपदवत् वाक्यादेव तदुपपत्तेः । अत एव वचनमात्रात् यत्र न प्रवृत्तिः, तत्रैव परीक्षकाणामाचारापेक्षेति । न च प्रलयासिद्ध्या उच्छेदोऽसंभावित इति वाच्यम् । प्रलये, 'नाहो न रात्रिरासीत्' इत्यादिश्रुत्यनुगृहीतानामनुमानानां प्रमाणतायाः [3]पूर्वमेव व्यवस्थापनात् ।

तस्मात् उपदर्शितरीत्या ईश्वरकर्तृकत्वेन वेदप्रामाण्यसिद्धौ बाधकाभावेन वेदपौरुषेयतासिद्धिरविकलेति कृतमतिशयविस्तरेण ।

इति उच्छिन्नप्रच्छन्नवादार्थः

---

1 घटलिप्यादि संप्रदायवदिति — सर्गादौ ईश्वरः मायावीव नानाशरीराण्यधिष्ठाय घट-पटादिनिर्माणसंप्रदायं लिप्यादिव्यवहारं गवादिपदशक्ति ग्रहादिकं च प्रवर्तयतीति न्यायसिद्धान्तः 'मायावत्समयादयः' इत्यादिना कुसुमाञ्जलौ प्रपञ्चितः इति बोध्यम् ।

2 स्वर्गादिपदवदिति—'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्पदं स्वःपदास्पदम् ॥'
इति वाक्यात् स्वर्गादिपदशक्तिग्रहो बोध्यः ।

3 पूर्वमेव — वेदः अपौरुषेयः इति मीमांसकमतनिराकरणावसरे एव ।

## विधिविचारः

### कृतिसाध्यतादित्रितयस्य लिङर्थता

सोऽयं शब्दो द्विविधः, [1]विधिः अर्थवादश्च ।

विधित्वं च प्रवर्तनार्थकलिङादिघटितत्वम् । प्रवर्तनात्वं च प्रवृत्त्यनुकूलव्यापारत्वं, प्रवृत्तिजनकज्ञानविषयत्वपर्यवसितम् । इत्थं च प्रवर्तनाया लिङर्थत्वस्य सर्वसंमततया, कृतिसाध्यत्वं, बलवदनिष्टाननुबन्धित्वं, इष्टसाधनत्वं च लिङर्थः । समुद्रपारगमनादौ, कलञ्जभक्षणादौ, चैत्यवन्दनादौ च प्रवृत्त्यनुत्पत्त्या तत्त्रितयज्ञानस्यैव प्रवर्तकत्वात् । [2]पुष्पवन्तादिपदस्य [3]सूर्यचन्द्राद्योरिव लिङः त्रिषु एकशक्तेरुपगमात् नैकदा लिङः त्रितयबोधकत्वानुपपत्तिः ।

---

1 विधिरिति — शास्त्रेषु लिङाद्यन्तघटितं वाक्यं, लिङादिकम्, लिङर्थश्च विधिशब्देन व्यपदिश्यते ।

2 पुष्पवन्तपदस्येति — पुष्पवत्पदस्य इति समीचीनः पाठः ।

3 सूर्यचन्द्राद्योरिवेति—'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरकोशे. एकया उक्त्या-एकया शक्त्या दिवाकरनिशाकरौ पुष्पवन्तौ-पुष्पवत्पदप्रतिपाद्यौ इति प्रतिपादनात् पुष्पवत्पदस्य सूर्यचन्द्रयोः शक्तेरैकत्वात् न परस्परपरित्यागेन बोधः । एवं लिङः कृतिसाध्यत्वादिषु त्रिषु एकशक्तेः स्वीकारात् न परस्परपरित्यागेन बोधः, अपि तु युगपदेव इति भावः ।

## कृतिसाध्यत्वस्य लिङर्थतास्थापनम्

अथ, कृतिसाध्यत्वे लिङो न शक्तिः । लाघवेन साध्यतासंबन्धेन कृतिप्रकारकज्ञानस्यैव प्रवृत्तिजनकतोपगमेन आख्यातत्वेन आख्यातसामान्यशक्त्योपस्थापिताया कृतेः साध्यतासंबन्धेन पाकादावन्वयोपगमेनैव (भवे) [पचे] तेत्यादौ प्रवृत्तिसंभवात्, कृत्यसाध्ये तादृशज्ञानाभावेन वृत्त्यसंभवाच्चेति चेन्न ।

[1]आख्यातत्वस्यैकस्यानुगतस्याभावेन लिङ्त्वादेरेव शक्ततावच्छेदकतया, लिङ्त्वावच्छिन्नस्य कृतिसाध्यत्वत्वावच्छिन्ने एव शक्तिकल्पनात् । न च लिङ्त्वावच्छिन्नस्यापि लाघवात् कृतित्वमेव शक्यतावच्छेदकमास्तामिति वाच्यम् । (यदा) [पदात्] नियतोपस्थितेः [2]वृत्तिसाध्यत्वेन, यत्पदात् यादृशधर्मप्रकारेण नियतोपस्थितिः, तादृशधर्मस्यैव तत्पद-

1 आख्यातत्वस्येति—सकलतिङ्साधारणमाख्यातत्वमेकं नास्ति। तस्याखण्डत्वे मानाभावः। पाणिनिसंकेतसंबन्धेन आख्यातपदवत्त्वं तदित्युक्ते, व्याकरणान्तरप्रणेतृपुरुषान्तरीयसंकेतेन आख्यातपदवत्त्वं पदान्तरवत्त्वं चादाय विनिगमनाविरहः । अतः अनुगतमेकमाख्यातत्त्वं नास्तीति भावः ।

2 वृत्तसाध्यत्वेन — शक्तिरूप-पदपदार्थसंबन्धसाध्यत्वेन ।

शक्यतावच्छेदकतया, अनुभवानुरोधेन लिङः कृतिसाध्यत्वत्वाव (भि)[च्छि] न्ने शक्तिकल्पने गौरवस्याकिञ्चित्करत्वात्। [1]अन्यथा वेदपदस्वर्गपदादेरपि [2]गुरुधर्मावच्छिन्ने शक्तिविलोपापत्तेः। पचतीत्यादौ आख्यातसामान्यशक्त्युपस्थाप्यकृतेः धात्वर्थविशेष्यत्वेनैवान्वयस्य व्युत्पन्नतया पचेतेत्यादौ धात्वर्थविशेषण (म) [तया] अन्वयासंभवाच्च। न च व्युत्पत्तिभेदाश्रयणान्न दोष इति वाच्यम्। व्युत्पत्तिभेदस्य [3]शक्ति-

---

1 अन्यथा — अनुभवानादरेण गौरवस्य दोषत्वे।

2 गुरुधर्मावच्छिन्ने इति — वेदपदस्य शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वविशिष्ट-शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वरूपगुरुधर्मावच्छिन्ने, स्वर्गपदस्य दुःखासंभिन्नत्वानन्तरत्वाभिलाषोपनीतत्वादिविशिष्टसुखविशेषत्व-रूपगुरुधर्मावच्छिन्ने इति विभज्य योजनीयम्।

3 शक्तिभेदेति —कर्माख्याते धात्वर्थफलमुख्यविशेष्यकस्य, कर्त्राख्याते धात्वर्थव्यापारमुख्यविशेष्यकस्य च बोधस्य निर्वाहाय, धातोः फलावच्छिन्नव्यापारे, व्यापारावच्छिन्नफले च शक्तिद्वयं स्वीकुर्वन्ति नव्यवैयाकरणाः इतिध्येयम्।

भेदनिर्वाह्यतया शक्तिभेदस्यावश्यकत्वे, उक्तरीत्या कृतिसाध्यत्वावच्छिन्ने एव तदौचित्यात् ।

अथ, मास्तु कृतिसाध्यत्वे लिङः शक्तिः कृत्यसाध्ये प्र (कृ)[वृ]त्तिवारणं तु कृतिसाध्यत्वज्ञानस्य प्रवृत्तिहेतुत्वकल्पनादेव सुलभम् । (न च प्रवर्तकज्ञानस्य प्रवृत्तिहेतुत्वकल्पनादेव सुलभम्)

न च प्रवर्तकज्ञानस्य [1]विधिजन्यत्वनियमनिर्वाहाय लिङः तत्र शक्तिरावश्यकीति वाच्यम् । तत्र लिङः शक्त्यङ्गीकारेऽपि तादृशनियमानिर्वाहात् । तथाहि—इदानीन्तनकृत्यसाध्ये कालान्तरीयकृतिसाध्ये भावियौवराज्यादौ इदानीन्तनकृत्यसाध्यताज्ञानदशायामपि कालान्तरीयकृतिसाध्यताज्ञानसत्त्वात् प्रवृत्त्यापत्तिः । एवं स्वकृत्यसाध्ये हनुमदादिपुरुषान्त (रा साध्ये) [रीयकृतिसाध्ये]समुद्रोल्लङ्घनादौ स्वकृत्यसाध्यताज्ञानदशायामपि हनुमदादिपुरुषान्तरीयकृतिसाध्यता-

1 विधिः — लिङन्तघटितं वाक्यम् ।

ज्ञानात् प्रवृत्त्यापत्तिः, इति तत्तत्कालीनतत्तत्पुरुषीयप्रवृत्तिं प्रति, तत्तत्कालीनतत्तत्पुरुषीयकृतिसाध्यताज्ञानस्यैव हेतुत्वं वाच्यम् । तथाच तादृशज्ञानस्य न विधिजन्यत्वम्, तत्तत्काल—तत्तत्पुरुषान्तर्भावेण कृतिसाध्यत्वे लिङः [1]शक्त्यभावादिति चेन्न ।

प्रवर्तकज्ञानस्य विधिप्रयोज्यत्वनियमनिर्वाहायैव लिङस्तत्र शक्तिकल्पनात् । विधि [ना] [2]सामान्यतः कृतिसाध्यत्वे बोधिते, अनुमानादिना प्रवर्तकस्य तत्तत्कालीन तत्तत्पुरुषीयकृतिसाध्यताज्ञानस्य संभवात् ।

---

1 शक्त्यभावादिति — तत्तत्काल तत्तत्पुरुषभेदेन शक्तिनानात्वापत्तेरिति भावः ।

2 सामान्यतः — कृतिसाध्यत्वत्वेन ।

वस्तुतस्तु, [1]यद्विशेषयोरिति न्यायेन सामान्यतः प्रवृत्तौ कृतिसाध्यताज्ञानत्वेन [2]केवलकृतिसाध्यताज्ञानहेतुत्वस्याप्यावश्यकतया केवलकृतिसाध्यताज्ञानस्यापि प्रवृत्तिजनकतया, प्रवर्तकज्ञानस्य विधिजन्यत्वनिर्वाहायैव लिङः कृतिसाध्यत्वे शक्तिरावश्यकीति सारः ॥

---

## कृतिसाध्यताज्ञानस्य चिकीर्षाद्वारा प्रवृत्तिहेतुत्वम्

तच्च कृतिसाध्यत्वादिज्ञानं चिकीर्षाद्वारा प्रवृत्तिजनकम् । प्रवृत्तिजनकमुपायविषयकं ज्ञानं चिकीर्षाद्वारक मिति नियमात् । प्रवृत्त्यजनके उपायज्ञाने व्यभिचारवार-

---

1 यद्विशेषयोरिति — यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरपि इति न्यायः । कार्यतावच्छेदकावच्छिन्नाभावे कारणतावच्छेदकावच्छिन्नाभावस्यैव प्रयोजकत्वात् प्रवृत्तित्वावच्छिन्नाभावे कृतिसाध्यत्वज्ञानत्वत्वावच्छिन्नाभावस्य (सामान्याभावस्य) एकस्य प्रयोजकता । अन्यथा तत्तत्कालतत्तत्पुरुषभेदेनानन्तकृतिसाध्यताज्ञानाभावकूटस्य प्रयोजकत्वं कल्पनीयमिति गौरवं स्यादिति न्यायमूलं बोध्यम् ।

2 केवलेति — कृतिसाध्यताज्ञानस्य कैवल्यं कालविशेषपुरुषविशेषाविषयकत्वम् ।

णाय प्रवृत्तिजनकमिति। फलज्ञाने उपादानप्रत्यक्षे च व्यभिचारवारणाय उपायविषयकमिति। उपायत्वं च साध्यताख्यविषयताशालित्वम्। [1]अतो नोक्तस्थले व्यभिचारः। अत एव मणिकृतापि 'ज्ञानस्य कृतौ जन्यायां चिकिर्षातिरिक्तं न कर्तव्यमस्ति' इति ग्रन्थेन तथैवोक्तम्। अत्र चिकीर्षातिरिक्तं न कर्तव्यमस्ति इत्यस्य चिकीर्षाद्वारकत्वमेवार्थः, न तु चिकीर्षातिरिक्ताद्वारकत्वम्, अनुपयोगात्। चिकीर्षाद्वारकत्वसिद्ध्यैव चिकीर्षाजनककृतिसाध्यतादिज्ञानस्य प्रवर्तकत्वसिद्धेः।

---

1 नोक्तस्थले इति—जलाहरणाय कपालं घटं करोति इत्यत्र कृतेः उपादानताख्यविषयता कपाले, उद्देश्यताख्यविषयता जलाहरणे फले, साध्यताख्यविषयता घटे च वर्तते। फले,उपादाने च कृतिनिरूपितसाध्यताख्यविषयता नास्ति। अतः तादृशविषयताशालित्वरूपोपायत्वाश्रयविषयकत्वं न फलज्ञाने उपादानप्रत्यक्षे चेति न व्यभिचारः इत्यर्थः। उपादानताख्यविषयता विशेष्यतापदेनापि तान्त्रिकैः व्यवह्रियते इति बोध्यम्।

## 'ज्ञानस्य' इत्यादिमणिग्रन्थस्य मिश्राणां व्याख्यानम्

[1]मिश्रास्तु— ज्ञानस्येति [2]साक्षादसाधनस्योपायविषयस्य चेत्यर्थः । तेन [3]प्रवृत्तिविषयप्रत्यक्षे फलज्ञाने च न व्यभिचारः । प्रवृत्तिं प्रति उपादानप्रत्यक्षस्य हेतुतया तत्र व्यभिचारात् [4]साक्षादसाधनत्वम् । एवं फलज्ञानस्य प्रवृत्तिहेतुत्वनये तत्र व्यभिचारवारणाय उपायविषयस्येति विशेषणीयमिति तस्याशयः ।

नन्विदमसंगतम्—'चिकीर्षातिरिक्तं न कर्तव्यमस्ति' इत्यस्य चिकीर्षातिरिक्ताव्यापारकत्वं वा, चिकीर्षा अवश्यं व्यापारः, इति वा अर्थः । आद्ये, उपादानप्रत्यक्षस्य प्रवृतिं प्रति (फलज्ञानं फलेच्छा इष्टसाधनताज्ञानं चिकीर्षात्मिका उपा-

---

1 मिश्रास्त्विति — अस्य व्यवहितेन वदन्तीत्यनेन संबन्धः ।

2 साक्षादसाधनस्य — प्रवृत्तिं प्रति अन्यमद्वारीकृत्य (स्वातन्त्र्येण) यत् कारणं तद्भिन्नस्य ।

3 प्रवृत्तिविषयप्रत्यक्षे — प्रवृत्तिनिरूपितोपादानताख्यविषयताश्रयविषयकप्रत्यक्षे ।

4 साक्षादसाधनत्वमिति — विशेषणीयमिति संबन्धः ।

येच्छा ततः) साक्षात् साधनस्य [1]निर्व्यापारतया चिकीर्षातिरिक्ताव्यापारकत्वमस्त्येवेति व्यभिचाराभावात्, साक्षादसाधनस्येति व्यर्थम् । द्वितीये, फलज्ञानं, फलेच्छा, इष्टसाधनताज्ञानं, चिकीर्षात्मिका उपायेच्छा, ततः प्रवृत्तिरिति प्रणाल्य चिकीर्षा अवश्यं व्यापारो भवत्येवेति, तद्वारणाय उपायविषयस्येत्युपादानमनर्थकम्, फलज्ञानस्य प्रवृत्तिं प्रति हेतुत्ववादिना चिकीर्षाया [2]अवश्यं व्यापारत्वोपगमात् । [3]अत्र, उपादानप्रत्यक्षस्य निर्व्यापारकत्वादेव चिकीर्षारूपनियतव्यापारक (त्वात्) [त्वाभावात्] [4]तत्र व्यभिचारवारणाय साक्षादसा (क्ष्ये) [धने] त्यस्य सार्थक्यं संभवत्येव ।

---

1 निर्व्यापारतया — व्यापारसामान्यरहिततया ।

2 अवश्यं व्यापारत्वोपगमादिति — अन्यथा व्यवहितस्य फलज्ञानस्य प्रवृत्त्यव्यवहित पूर्ववृत्तित्वरूपकारणत्वासंभवात् । चिकीर्षाया व्यापारत्वे तु तस्याः प्रवृत्त्यव्यवहितपूर्ववृत्तित्वेन, कार्याव्यवहितपूर्ववृत्ति स्व-स्वव्यापारान्यतरकत्वरूपकारणत्वसंभवः इति भावः ।

3 अत्र — चिकीर्षातिरिक्तमित्यादिमणिवाक्येन. चिकीर्षारूपनियतव्यापारकत्वं विवक्षितमिति द्वितीयकल्पे ।

4 तत्र — उपादानप्रत्यक्षे ।

तथाच [1]एकतरार्थे क्रियमाणे, [2]अन्यतरपदवैयर्थ्यमेवेति कथमेतत् । सेयमुभयतः पाशा रज्जुरिति ।

अत्राहुः—चिकीर्षा अवश्यं व्यापारः इत्यस्य समानविशेष्यकचिकीर्षा अवश्यं व्यापारः इत्येवार्थः । उपादानप्रत्यक्षस्य निर्व्यापारकतया चिकीर्षारूपव्यापारकत्वाभावात् साक्षादसाधनस्येति, फलज्ञानस्य चिकीर्षाव्यापारकत्वेऽपि [3]स्वसमानविशेष्यकचिकीर्षाव्यापारकत्वाभावात् व्यभिचारवारणाय, उपायविषयस्येति सार्थकमिति ।

---

1 एकतरार्थे क्रियमाणे — चिकीर्षातिरिक्तव्यापारशून्यत्व — चिकिर्षारूपनियतव्यापारकत्वयोः एकतरार्थे मणिवाक्येन विवक्षिते ।

2 अन्यतरपदवैयर्थ्यम् — साक्षादसाधनस्य, उपायविषयस्येति च पदयोरन्यतरपदस्य वैयर्थ्यम् ।

3 स्वसामानविशेष्यकेति — फलज्ञाने जलाहरणादिकस्य फलस्य कृतिसाध्यत्वप्रकारिकायां चिकीर्षायां घटादेश्च विशेष्यत्वेन न फलज्ञानसमानविशेष्यकत्वं चिकीर्षाया इति बोध्यम् ।

[1]यद्वा, चिकीर्षातिरिक्ताव्यापारकत्वमेव तदर्थः । नवीन-नैयायिकनये चिकीर्षाविषयसाधनतया उपादानप्रत्यक्षस्य उपादानेच्छाव्यापारकत्वोपगमात्, चिकीर्षातिरिक्तोपादानेच्छाव्यापारकत्वात् [2]तत्र व्यभिचारवारणाय साक्षादसाधनस्येति । न च तस्य उपादानेच्छाव्यापारकत्वे साक्षादसाधनत्वमस्त्येवेति कथं व्यभिचारवारणमिति वाच्यम् । उपादानप्रत्यक्षशून्यकाले प्रवृत्त्यभावेन तस्य [3]स्वातन्त्र्येणापि हेतुत्वोपगमात् ।

इत्थं च तत्तत्कृतेः साक्षादसाधनत्वे सति तत्तत्कृतिजनकतत्तत्कृत्युपायविषयकज्ञानत्वस्य व्यापकं चिकीर्षातिरिक्त-

---

1 पूर्वपक्षे विकल्पितप्रथमकल्पस्यापि निर्दुष्टत्वमाह यद्वेति । सुखदुःखाभावेतरेच्छायामिष्टसाधनताज्ञानस्य हेतुत्वात् उपादानप्रत्यक्षभिन्नस्य तस्याभ्युपगमे उपादानेच्छाव्यवहितपूर्ववृत्तित्वानुपपत्त्या इष्टसाधनत्वप्रकारकोपादानप्रत्यक्षानुसरणमिति ज्ञेयम् ।

2 तत्र —उपादानप्रत्यक्षे ।

3 स्वातन्त्र्येणापि — उपादानेच्छामद्वारीकृत्य उपादानप्रत्यक्षत्वेनापि ।

तत्तत्कृतिव्यापाराजनकत्वमिति, [1]अस्मिन् कल्पे [2]मूलार्थः । [3]पूर्वकल्पे तु, स्वसमानविशेष्यकचिकीर्षाव्यापारकत्वं तादृश-ज्ञानत्वव्यापकमिति मूलार्थोऽवसेयः । तेन फलस्य [4]कदाचिदुपायत्वेऽपि न दोषः, इति दिगिति वदन्ति ॥

---

## उक्तमिश्रव्याख्यानानौचित्यनिरूपणम्

तच्चिन्त्यम्— [5]स्वसमानविशेष्यकत्वं प्रवेश्य फलज्ञाने व्यभिचारवारणाय [6]विशेषणान्तरोपादानस्य वैयर्थ्यात् ।

---

1 अस्मिन् कल्पे — चिकीर्षातिरिक्तव्यापारशून्यत्वमर्थः इति विकल्पित प्रथमकल्पे ।

2 मूलार्थः — 'ज्ञानस्य कृतौ जन्यायां चिकीर्षातिरिक्तं न कर्तव्यमस्ति' इति मणिग्रन्थस्यार्थः । एवमग्रेऽपि ।

3 पूर्वकल्पे तु — नियतचिकीर्षाव्यापारकत्वमर्थः इति कल्पे तु ।

4 कदाचित्—प्रकृतफलीभूतजलाहरणाधीनफलान्तरोद्देशेन जलाहरणचिकीर्षादशायाम् ।

5 नियतचिकीर्षाव्यापारकत्वमर्थः —इति कल्पं उपायविषयकत्वनिवेशवैयर्थ्येन दूषयति - स्वसमानविशेष्यकत्वं प्रवेश्येति । उपायविषयकत्वविशेषणेन निरसनीयस्य फलज्ञाने व्यभिचारस्योपपादनायैव चिकीर्षायां स्वसमानविशेष्यकत्वं दत्तम् । तन्निवेशे प्रयोजनान्तरं नास्ति । तथाच स्वसमानविषयकत्वविशेषणेन व्यभिचारं संपाद्य, तद्वारकस्य उपायविषयकत्वस्य निवेशनं प्रक्षालनाद्धि इति न्यायेन दुष्टमिति समुदायार्थः ।

6 विशेषणान्तरम् — उपायविषयकत्वरूपं विशेषण ।

एवं उपादानप्रत्यक्षस्य उपादानेच्छाव्यापारकत्वे प्रमाणाभावेन च [1]द्वितीयकल्पार्थोऽसंगत एवेति ॥

वस्तुतस्तु, अनन्यथासिद्धान्वयव्यतिरेकाभ्यामेव कृतिसाध्यत्वादिज्ञानस्य चिकीर्षाद्वारा प्रवृत्तिजनकत्वमिति सारम् ।

---

**कृत्यसाध्यतादिज्ञानाभावस्य हेतुत्वेनोपपत्तौ, कृतिसाध्यतादिज्ञानस्य चिकीर्षाप्रवृत्त्योः हेतुत्वे मानाभावः इति पूर्वपक्षः**

अथ, कृतिसाध्यतादिज्ञानस्य चिकीर्षा—प्रवृत्त्योर्हेतुत्वे मानाभावः । कृत्यसाध्यताज्ञानकाले चिकीर्षाप्रवृत्त्योर्वारणस्य, तत्तत्कृत्यसाध्यतादिज्ञानाभावस्य हेतुत्वेनैव निर्वाहात् । न च या यत्प्रकारिकेच्छा, सा तत्प्रकारकज्ञानसाध्येति नियमबलात् चिकीर्षां प्र [ति] कृतिसाध्यताज्ञानस्य हेतुत्वसिद्धौ, चिकीर्षाद्वारा कृतिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वसिद्धि-

---

1 द्वितीयकल्पार्थः — यद्वा इत्यादिनोक्तः चिकीर्षातिरिक्तव्यापारशून्यत्वार्थः ।

रिति वाच्यम् । कृतिसाध्यत्वेन पाकमिच्छामीति [1]चिकीर्षानुभवेन तस्याः कृतिसाध्यत्वप्रकारककृतिसाध्यपाकादिक्रियाविशेष्यकेच्छात्वेन [2]तत्रोक्तयुक्त्या कृतिसा [ध्यत्व] प्रकारकपाकादिविशेष्यकज्ञानस्य हेतुत्वसिद्धावपि, तत्र बलवदनिष्टाननुबन्धित्वप्रकारकज्ञानस्य, इष्टसाधनत्वप्रकारकज्ञानस्य च हेतुतायाः तथाप्यसिद्धेरिति चेन्न ।

---

1 चिकीर्षानुभवेनेति — एवमनुभवकथनं च] पाककृतिर्भवतु इत्याकारिका कृतिविशेष्यकेच्छा चिकीर्षापदार्थः इति सौन्दलोपायायमतानादरसूचनाय । इदन्तु बोध्यम् । पाकं कृत्या साधयानि इति शब्देन तत्र तत्र ग्रन्थेषु चिकीर्षा अभिलप्यते । तत्र तृतीयया प्रकारत्वं, द्वितीयया विशेष्यत्वं बोध्यते, द्रव्यत्वेन घटं जानाति इत्यादाविव । कृतिशब्दः कृतिसाध्यत्वपरः । साधधातोः न कृतिरर्थः । अपि तु इच्छालक्ष्यार्थः । लक्षणातात्पर्यग्राहकः साधयानि इति लोट् प्रत्ययः । तथाच कृतिसाध्यत्वप्रकारकपाकविशेष्यकेच्छा निरुक्तचिकीर्षा बोध्यते इति ।

2 उक्तयुक्त्या —या यत्प्रकारिकेच्छा सा तत्प्रकारकज्ञानसाध्येति नियमरूपया युक्त्या ।

**लाघवात्, जनकज्ञानविघटकस्यैव ज्ञानस्य प्रतिबन्धकत्वमिति नियमबलाच्च कृतिसाध्यतादिज्ञानस्य हेतुत्वव्यवस्थापनम्**

कृत्यसाध्यताज्ञानाभावादेः[1]तत्त्वेन [2]तत्र हेतुत्वे [3]तदवच्छेदकगौरवापत्त्या, कृतिसाध्यताज्ञानादेरेव [4]तत्त्वेन [5]तत्र हेतुताया उचितत्वात् । किञ्च, जनकीभूतज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकत्वमिति नियमबलात् तत्तत्कृतिसाध्यतादिज्ञानहेतुतासिद्धिः । तादृशनियमार्थस्तु, यत् यत्प्रतिबन्धकज्ञानं भवति, तत् तज्जनकज्ञानविघटकमपि भवति, यथा व्यभिचारज्ञानं अनुमितिप्रतिबन्धकज्ञानं भवति, तत् अनुमितिजनकव्याप्तिज्ञानविघटकमपि भवतीति । एवं च तादृशनियमेन कृत्यसाध्याताज्ञानादेः चिकीर्षाप्रतिबन्ध-

---

1 तत्त्वेन — कृत्यसाध्यताज्ञानाभावत्वेन ।

2 तत्र — प्रवृत्तौ ।

3 तदवच्छेदकेति — हेतुतावच्छेदकेत्यर्थः ।

4 तत्त्वेन — कृतिसाध्यताज्ञानत्वेन ।

5 तत्र — प्रवृत्तौ ।

[1]कज्ञानत्वेन हेतुना चिकीर्षाजनकज्ञानविघटकत्वसाधने, पक्षधर्मताबलात् कृतिसाध्यतादिज्ञानादेरेव चिकीर्षाजनकत्वसिद्धिः ।

यद्यपि [2]जनकज्ञानविघटकत्वे अन्यथासिद्धतया तदभावस्याहेतुत्वात्[3]स्वरूपासिद्धिः [4]दृष्टान्तासिद्धिश्च । तथापि, प्रतिबन्धकत्वं न कारणीभूताभावप्रतियोगित्वम् । किन्तु

---

1 प्रतिबन्धकज्ञानत्वेनेति — कृत्यसाध्यताज्ञानाभावस्य चिकीर्षायां हेतुत्वे, कारणीभूताभावप्रतियोगित्वरूप प्रतिबन्धकत्वं कृत्यसाध्यताज्ञानस्येति भावः ।

2 जनकज्ञानविघटकत्वे इति — प्रतिबन्धकस्य कृत्यसाध्यतादिज्ञानस्येत्यादिः । कृत्यसाध्यताज्ञानसत्त्वे चिकीर्षाजनकं कृतिसाध्यताज्ञानं न भवतीति कृत्यसाध्यताज्ञानाभावः जनकज्ञानसंपादकतयोपयुज्यते । अतः अन्यथासिद्धत्वात् न चिकीर्षां प्रति साक्षात् कारणमिति भावः ।

3 स्वरूपासिद्धिरिति—चिकीर्षाकारणीभूताभावप्रतियोगित्वरूपस्य चिकीर्षाप्रतिबन्धकत्वस्य कृत्यसाध्यताज्ञाने पक्षे विरहात् स्वरूपासिद्धिरित्यर्थः ।

4 दृष्टान्तासिद्धिः — दृष्टान्ते व्यभिचारज्ञाने हेतुतुल्यहेतोः अनुमितिकारणीभूताभावप्रतियोगित्वात्मकानुमिति प्रतिबन्धकत्वस्यासिद्धिः । एवमग्रेऽपि ।

प्रयोजकीभूताभावप्रतियोगित्वम् । प्रयोजकत्वं च कार (णात्) [ण तत्] कारणसाधारणमित्यदोषः । हेतौ ज्ञानपदोपादानं च विषयान्तरसञ्चारादौ व्यभिचारवारणाय । साध्ये ज्ञानप (दवत्) [दं] स्वरूपकथनम् । न तु साध्यप्रविष्टम्, प्रयोजनाभावात् । व्यापके व्यर्थविशेषण [1]स्यादोषत्वात् । विघटकत्वं च प्रतिबन्धकत्वम् ।

---

### जनकज्ञानविघटकस्यैव प्रतिबन्धकत्वमिति नियमे व्यभिचारशङ्का, नियमपरिष्कारेण तत्परिहारश्च

ननु तथापि [2]बाध-सिद्ध्यादौ व्यभिचारः । न च तद्व्यावृत्तप्रतिबन्धकता हेतौ निवेशनीयेति वाच्यम् ।

---

1 अदोषत्वादिति — हेतोरेव व्यर्थविशेषणत्वं व्याप्यत्वासिद्धिसंपादकतया, निग्रहप्रयोजकतया वा दोषः इति भावः ।

2 बाधसिद्ध्यादौ व्यभिचार इति — साक्षादनुमितिप्रतिबन्धके बाधनिश्चये, पक्षे साध्यनिश्चयात्मकसिद्धौ च अनुमितिजनकज्ञानविघटकत्वाभाववति, उक्तसामान्यमुखव्याप्तेः व्यभिचार इत्यर्थः ।

कृत्यसाध्यताज्ञान-व्यभिचारज्ञानाभावयोरपि [1]बाधाभावतयैव चिकीर्षानुमित्योः प्रयोजकतया स्वरूपासिद्धिदृष्टान्तासिद्ध्योरापत्तेरिति चेत् ।

मैवम्- यादृशज्ञानं संशयनिश्चयसाधारणज्ञानत्वेन यत्न प्रतिबन्धकं, तत् तज्जनकीभूतज्ञानं विघटयदेव प्रतिबन्धकमिति नियमः । बाध–सिद्ध्यादेः संशयसाधारणज्ञानत्वेनाप्रतिबन्धकत्वात् न [2]तत्र व्यभिचारः । [3]नापि सिद्धत्वज्ञानं संशयसाधारणज्ञानत्वेनेच्छाप्रतिबन्धकम्, तत्संशयेऽपीच्छादर्शनादिति, न [4]तत्रापि व्यभिचार: । न च सिद्धत्वसंशये बहुवित्तव्ययायाससाध्ये नेच्छेति, सिद्धत्वज्ञानस्य संश-

---

1 बाधाभावतयैव — ग्राह्याभावविधयैव । अनुमितिजनकव्याप्तिज्ञाने व्यभिचारज्ञानस्य ग्राह्याभावज्ञानविधया प्रतिबन्धकत्वेन तदभावस्य ग्राह्याभावज्ञानाभावविधयैव अनुमितिप्रयोजकत्वमिति भावः ।

2 तत्र — बाधनिश्चये सिद्धौ च ।

3 सिद्धे नेच्छाभवति । अतः सिद्धत्वज्ञानमिच्छाप्रतिबन्धकम् । तच्च नेच्छाजनकज्ञानविघटकमिति सिद्धत्वज्ञाने उक्तसामान्यव्याप्तेर्व्यभिचारमाशङ्क्य परिहरति –नापि सिद्धत्वज्ञानमिति ।

4 तत्रापि — सिद्धत्वज्ञानेऽपि ।

यसाधारणज्ञानत्वेन तत्र प्रतिबन्धकत्वात् तन्निश्चयस्याहेतुतया साध्यासत्त्वात् व्यभिचारोऽस्त्येवेति वाच्यम् । तत्रापि बलवदनिष्टाननुबन्धित्वनिश्चयविघटकतया साध्यसत्त्वात् । न चैवं कृत्यसाध्य (त्वात्) [त्व] संशयोऽपि न प्रतिबन्धक इति [1]स्वरूपासिद्धिरिति वाच्यम् । तस्य प्रवृत्तिमात्राप्रतिबन्धकत्वेऽपि निष्कम्पप्रवृत्तौ [2]तथात्वात् । नचैवं निष्कम्पप्रवृत्तौ [3]तस्य हेतुत्वसिद्धावपि प्रवृत्तिमात्रे हेतुत्वं न सिद्धमिति वाच्यम् । यद्विशेषयोरिति न्यायेन प्रवृत्तिसामान्ये तस्य हेतुत्वसिद्धेः । न च तात्पर्यसंशये शाब्दप्रतिबन्धके व्यभिचारः, मणिकारनये

---

1 स्वरूपासिद्धिरिति— संशयसाधारणज्ञानत्वावच्छिन्नप्रवृत्तिप्रतिबन्धकत्वरूपहेतोः कृत्यसाध्यताज्ञाने पक्षे विरहादिति भावः ।

2 तथात्वात् — प्रतिबन्धकत्वात् ।

3 तस्य — कृतिसाध्यताज्ञानस्य । निरुक्तानुमानेनेति शेषः ।

तात्पर्यनिश्चयस्य शाब्दबुद्धावहेतुत्वादिति वाच्यम् । [1]प्रतिबध्यसमानविशेष्यकत्वस्य ज्ञानविशेषणत्वेनादोषात् ।

---

जनकज्ञानेति मणिवाक्ये साक्षादविरोधिनः इति शेषपूरणेन मिश्राणां व्याख्यानम्, तदाशयनिरूपणं च

मिश्रास्तु जनकेति मणिप्रतीकमादाय, 'साक्षादविरोधिन इति शेषः, तेन बाधप्रतिरोधादौ न व्यभिचारः ।' इत्याहुः । तेषामयमाशयः—यत्कार्यं प्रति साक्षादविरोधि यत् ज्ञानं, तज्ज्ञानं तत्कार्यजनकीभूतज्ञानमवश्यं प्रतिबध्नातीति नियमः । तथाच बाधादौ साक्षादविरोधित्वाभावादेव हेत्वभावान्न व्यभिचारः इति ।

---

1 प्रतिबध्यसमानविशेष्यकत्वस्येति— तथा च यत्समानविशेष्यकं यादृशज्ञानं यत्र प्रतिबन्धकं, तत् तज्जनकज्ञानं विघटयदेव प्रतिबन्धकमिति व्याप्तिः । तत्र प्रथमयत्पदं यत्रपदघटकं यत्पदं चाभिन्नार्थकम् । तात्पर्यसंशये विशेष्यभूतं वाक्यं न प्रतिबध्यशाब्दबोधे विशेष्य इति तात्पर्यसंशयस्य प्रतिबध्यशाब्दसमानविशेष्यकत्वाभावात् न तत्र व्यभिचार इति भावः ।

स्वरूपासिद्धिशङ्का, मिश्रानुसारिनियमपरिष्करणेन तत्परिहारश्च

(नचैवं)[नन्वेवमपि] कृत्यसाध्यताज्ञाने चिकीर्षां [प्रति] साक्षादविरोधित्वेन हेतुना चिकीर्षाजनकज्ञानविरोधित्वसाधने, स्वरूपासिद्धिः, परैः कृत्यसाध्यताज्ञानस्य चिकीर्षां प्रति [1]साक्षादेव विरोधित्वाङ्गीकारात् । न च ज्ञानातिरिक्तकार्यविरोधित्वमेव साक्षादविरोधित्वम् । तथाच बाधादौ ज्ञानातिरिक्तकार्यविरोधित्वरूप—साक्षादविरोधित्वाभावान्न व्यभिचारः । न वा कृत्यसाध्यताज्ञाने स्वरूपासिद्धिः, तत्र ज्ञानाति[2]रिक्तेच्छाविरोधित्वसत्त्वादिति वाच्यम् । 'अनैकान्तिकज्ञानवत्' इति [3]दृष्टान्तस्य साधनविकलत्वापत्तेः । अनैकान्तिकज्ञाने [4]ज्ञानातिरिक्तकार्यविरोधित्वाभावादिति चेत् ।

---

1 साक्षादेव — अन्यमद्वारीकृत्य स्वातन्त्र्येण ।

2 इच्छेति —चिकीर्षेत्यर्थः ।

3 इति दृष्टान्तस्य—इति ग्रन्थेनोक्तस्य दृष्टान्तस्य व्यभिचारज्ञानस्य ।

4 ज्ञानातिरिक्तेति — व्यभिचारज्ञानस्य व्याप्तिज्ञानं प्रत्येव प्रतिबन्धकत्वादिति भावः ।

अत्रोच्यते—शेष [1]इत्यस्य ज्ञानस्येत्यस्य शेष इत्यर्थः। इत्थं च साक्षादविरोधिनं [2]प्रति ज्ञानस्य प्रतिबन्धकता जनकज्ञानविघटकत्वेनैवेति नियमः पर्यवस्यति। साक्षादविरोधित्वं च [3]स्वविषयविरुद्धविषयावगाहिज्ञानभिन्नत्वम्। [4]तथाच यत् ज्ञानं स्वविषयविरुद्धनिष्ठप्रकारतावच्छिन्न-ज्ञाननिष्ठ-

---

1 शेष इत्यस्येति — मिश्रग्रन्थस्येति शेषः।

2 ज्ञानस्य साक्षादविरोधिनः प्रतिबन्धकता जनकज्ञानविघटकतयेति वाक्ये साक्षादविरोधिनः इति न षष्ठ्यन्तज्ञानपदार्थे अभेदेन विशेषणम्। किन्तु ज्ञानस्येति षष्ठ्यन्तार्थज्ञाननिष्ठत्वान्वितायां प्रतिबन्धकतायाम्। निरूपितत्वं षष्ठ्यर्थः। तदेतदाह—साक्षादविरोधिनं प्रति ज्ञानस्य प्रतिबन्धकतेति।

3 स्वविषयेति — अत्र स्वपदं प्रतिबन्धकत्वाभिमतज्ञानपरम्।

4 पर्यवसितनियमशरीरं दर्शयति—तथाचेति। यत् ज्ञानं-व्यभिचारज्ञानं स्वविषयस्य धूमाभाववद्वृत्तित्वरूपव्यभिचारस्य विरुद्धं यत् धूमाभाववदवृत्तित्वं, तन्निष्ठप्रकारतावच्छिन्ना ज्ञाननिष्ठप्रतिबध्यता-धूमाभाववदवृत्तित्वप्रकारकबुद्धित्वावच्छिन्ना व्याप्तिज्ञाननिष्ठा प्रतिबध्यता, तद्भिन्ना यत्कार्यप्रतिबध्यता-धूमवानित्यनुमितिनिष्ठा प्रतिबध्यता, तन्निरूपितप्रतिबन्धकताश्रयीभूतं भवति। तत् ज्ञानं-व्यभिचारज्ञानं तत्कार्यजनकीभूतज्ञानविरोधि—अनुमितिजनकव्याप्तिज्ञानविरोधि भवतीति नियमार्थः।

प्रतिबध्यताभिन्न— यत्कार्यप्रतिबध्यतानिरूपितप्रतिबन्धकताकं भवति, तत् ज्ञानं तत्कार्यजनकीभूतज्ञानविरोधि भवति इत्येव नियमः । एवं च बाधादौ न व्यभिचारः, तत्र स्वविषयविरुद्ध[1]प्रकारतावच्छिन्न—ज्ञाननिष्ठप्रतिबध्यता भिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावात् । न वा स्वरूपासिद्धिः, कृत्यसाध्यताज्ञाने [2]तादृशप्रतिबध्यताभिन्ना या चिकीर्षानिष्ठा प्रतिबध्यता, तन्निरूपितप्रतिबन्धकताश्रयत्वात् । न वा दृष्टान्तस्य साधनवैकल्यम्, तादृशविरुद्धप्रकारतावच्छिन्न— ज्ञाननिष्ठप्रतिबध्यताभिन्नप्रतिबध्यतानिरू[3]पितप्रतिबन्धकत्वासत्त्वात् । स्वविषयविरुद्धत्वं च, ग्राह्याभावावगाहितया ग्राह्याभावव्याप्यावगाहितया वा या स्वनिष्ठप्रतिबन्धकता, तन्निरूपितप्रतिबध्य-

---

1 विरुद्धप्रकारतेति — विरुद्धनिष्ठप्रकारतेत्यर्थः ।

2 तादृशप्रतिबध्यताभिन्ना — स्वविषयविरुद्धनिष्ठप्रकारतावच्छिन्नज्ञाननिष्ठप्रतिबध्यताभिन्ना । भेदप्रतियोगिप्रतिबध्यतायां ज्ञाननिष्ठत्वनिवेशात् भिन्नप्रतिबध्यतेत्यनेन चिकीर्षानिष्ठप्रतिबध्यतासंग्रहः ।

3 प्रतिबन्धकत्वेति—अनुमितिप्रतिबन्धकतेत्यर्थः ।

तायाः प्रकारतासंबन्धेन अवच्छेदकतापर्याप्त्यधिकरणं यत् तत्त्वम् । [1]तेन व्यभिचारज्ञानविषयधूमत्वादिविरुद्धत्वस्य वह्न्यादौ सत्त्वात् तादृशविरुद्धनिष्ठप्रकारतावच्छिन्न—ज्ञाननिष्ठ-प्रतिबध्यताभिन्न प्रतिबध्यतानिरूपित प्रतिबन्धकत्वाभावात् न दृष्टान्तस्य साधनवैकल्यमिति ।

---

ननु अत्र प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वम्, तथाच [2]दृष्टान्तासिद्धिः, अनुमितिं प्रति व्यभिचारज्ञानाभाव-[3]स्याहेतुत्वादिति चेन्न ।

---

1 तेन — पर्याप्तिनिवेशेन ।
2 दृष्टान्तासिद्धिः — दृष्टान्ते हेतोरसिद्धिः ।
3 अहेतुत्वादिति — व्याप्तिज्ञानसंपादकतयोपयोगेनान्यथासिद्ध-त्वेनाकारणत्वादित्यर्थः ।

प्रतिबन्धकत्वस्यात्र [1]फलानुत्पत्तिनैयत्यरूपस्य ग्राह्यत्वात्। तथाच यत् ज्ञानं ग्राह्याभावावगाहितया ग्राह्याभावव्याप्यावगाहितया वा या स्वनिष्ठा प्रतिबन्धकता, तन्निरूपिता या ज्ञाननिष्ठप्रतिबध्यता, तदनाश्रय–यत्कार्यानुत्पत्तिप्रयोजकं भवति, तत् तत्कार्यजनकीभूतज्ञानविरोधि भवति, इति नियमः। प्रयोजकत्वं च एतज्ज्ञानप्रयुक्तः एतत्फलाभावः इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः। न च तथापि [2]सिद्ध–अवच्छेदक (भ्रम) [धर्म] दर्शनादौ व्यभिचार इति

---

1 फलानुत्पत्तिनैयत्यरूपस्येति-प्रतिबन्धं करोति इति प्रतिबन्धकः। प्रतिबन्धः-कार्यानुत्पादः (प्रागभावः)तज्जनकत्वमनुपपन्नमिति प्रयोजकत्वं ग्राह्यम्। तच्च नियतत्वे पर्यवसितमिति बोध्यम्।

2 सिद्ध-अवच्छेदकधर्मदर्शनादाविति–सिद्धेः अनुमितौ तदभावज्ञानविधया तदभावव्याप्यज्ञानविधया वा, न प्रतिबन्धकत्वम्। परन्तु साध्यप्रकारकनिश्चयत्वेन। तथाच निरुक्तोभयविधप्रतिबन्धकतानिरूपितप्रतिबध्यतानाश्रयानुमितिप्रतिबन्धकत्वरूपहेतुमति सिद्धौ अनुमितिजनकज्ञानविरोधित्वाभावात् व्यभिचारः। एवं जलवान् वह्न्यभाववानिति निश्चयकालीनस्य जलवान् ह्रदः इति तदभावावच्छेदकधर्मदर्शनस्यानुमितौ निरुक्तोभयविधप्रतिबन्धकता भिन्नप्रतिबन्धकताश्रयस्य अनुमितिजनकज्ञानविरोधित्वाभावाच्च व्यभिचार इत्यर्थः।

वाच्यम् । [1]तत्तद्भिन्नवृत्तित्वविशिष्ट– तत्तत्कार्यानुत्पत्ति-प्रयोजकत्वस्यैव निवेशादिति दिक् ॥

---

उक्तमिश्रव्याख्यानदूषणम्

अत्रेदं चिन्त्यम्—साक्षादविरोधित्वस्य प्रतिबन्धक-ज्ञानविशेषणतया निवेशेनैव बाधादौ व्यभिचारवारणसंभवे, साक्षादविरोधिनं प्रति इत्युक्त्वा साक्षादविरोधित्वस्य प्रतिबध्य-विशेषणतामुपगम्य, कृतिसाध्यताज्ञानस्य चिकीर्षा—प्रवृत्ति-हेतुत्वोपपादनमसंगतम् ।

---

अस्तु वा [2]तस्य प्रतिबध्यज्ञानविशेषणत्वम्, तथापि तस्य न स्वविषयविरोध्यवगाहिज्ञानभिन्नत्वरूपत्वम्, तत्र ज्ञान-

---

1 विशिष्टेति प्रयोजकत्वविशेषणम् ।

2 तस्य — साक्षादविरोधित्वस्य ।

त्वांशनिवेशस्य [1]व्यर्थत्वात् । किन्तु स्वविषयविरोध्यवगाहि-भिन्नत्वरूपत्वमेव । तथाच कृत्यसाध्यताज्ञानपक्षकोपदर्शितानुमाने स्वरूपासिद्धिर्दुर्वारा । चिकीर्षायाः कृत्यसाध्यताज्ञानविषयविरोधिकृतिसाध्यतावगाहित्वेन, कृत्यसाध्यताज्ञाने स्वविषयविरोध्यवगाहि भिन्ननिरूपितज्ञाननिष्ठप्रतिबन्धकतारूपहेतोरभावात् ।

[2]किञ्च एवं सति, 'वस्तुतः, असिद्धत्वधीः इच्छाहेतुः' इत्यादिप्रघट्टकेन असिद्धत्वज्ञानमुपक्रम्य, 'न च तन्नेच्छाहेतुः,

---

1 व्यर्थत्वादिति — कृत्यसाध्यताज्ञाने पक्षे चिकीर्षानिष्ठप्रतिबध्यतामादाय हेतुसंगमनायैव ज्ञाननिष्ठत्वस्य निवेशेन हेतुकोटिप्रविष्टस्य तस्यासिद्धिवारकत्वेऽपि व्यभिचारावारकतया व्यर्थत्वादित्यर्थः ।

2 साक्षादविरोधित्वस्य प्रतिबध्यविशेषणत्वे, प्रतिबन्धकविशेषणत्वाभिप्रायकोत्तर (मिश्र) ग्रन्थविरोधमापाद्य, तत्परिहारायोत्तरग्रन्थस्य स्वाभिमतार्थतात्पर्यवत्त्वे पूर्वापरयोः मिश्रग्रन्थयोर्विरोधं वक्तुमुपक्रमते किञ्चेति ।

सिद्धत्वज्ञानस्य तदविरोधितापत्तेः, [1]जनकज्ञानमिति न्यायात्। न च [2]बाधन्यायः, इच्छाया असिद्धत्वेनासिद्धाविषयतय सिद्धत्वज्ञानस्य विषयविरोधाभावात् ।' इत्यग्रेतन मिश्रग्रन्थस्यासंगतिः । तत्र विरोधाभावादित्यस्य बाधादेरिव साक्षात्प्रतिबन्धकत्वाभावादि[3]त्यर्थकतया तद्रू (पात्) [प] साक्षादविरोधित्वस्य [4]विशेषणतालाभात् । न च तत्र 'विषयविरोधभावात् ।' इत्यस्य निश्चयत्वेन प्रतिबन्धकताविरहात् इति शेषः । तथाच संशयसाधारणज्ञानत्वेन प्रतिबन्धकत्वं जनकीभूतज्ञानविघटकताव्याप्यम्, इत्यत्र पूर्वोपदर्शितास्मद्रीत्या

---

1 जनकज्ञानमिति — जनकज्ञानं विघटयत एव विरोधित्वमिति न्यायः । असिद्धत्वज्ञानस्य इच्छाहेतुत्वे एवं तद्विघटकतया सिद्धत्वज्ञानस्य इच्छाविरोधिता स्यात् । अतः असिद्धत्वज्ञानस्येच्छाहेतुत्वं सिद्ध्यतीति भावः ।

2 बाधन्यायः— ग्राह्याभावावगाहितया विरोधित्वम् । इच्छाया असिद्धत्वाविषयकत्वात् सिद्धत्वज्ञानस्य ग्राह्याभावावगाहित्वाभावात् बाधज्ञानस्येव साक्षाद्विरोधित्वस्याभावो विवक्षितः । प्रतिबन्धकत्वाभिमतस्य सिद्धत्वज्ञानस्य साक्षादविरोधित्वकथनात् एतद्ग्रन्थविरोधः प्रतिबध्यविशेषणत्वे इति भावः ।

3 इत्यर्थकतया — इत्यर्थे तात्पर्यवत्तया ।

4 विशेषणतालाभात् — प्रतिबन्धकविशेषणतालाभात् ।

नि (ष्टा) [रुक्ता] र्थे [1]तद्ग्रन्थस्य तात्पर्यमिति वाच्यम् । तथासति उपदर्शितनियमे साक्षादविरोधित्वस्यैव निवेशाभावं, 'साक्षादविरोधिन इति शेषः' इति मिश्रग्रन्थस्य अग्रेतन[2]तद्-ग्रन्थेन विरोधे पूर्वापरग्रन्थविरोधरूपदोषो दुरुद्धर एवेति ।

---

अनुमितिविशेषसामग्र्याः प्रतिबन्धकत्वाकल्पनलाघवेन कृति-साध्यताज्ञानस्य चिकीर्षाप्रवृत्तिहेतुतानिरूपणम्

[3]किंच, कृतिसाध्यतादिज्ञानस्य चिकीर्षाप्रवृत्ति-हेतुत्वमते, पाकादिगोचरचिकीर्षादौ, कृतिसाध्यत्वाभाववान् पाकः इत्याद्याकारकानुमितिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यते

---

1 तद्ग्रन्थस्य — अग्रेतनमिश्रग्रन्थस्य ।

2 तद्ग्रन्थेन — मिश्रग्रन्थेन ।

3 कृतिसाध्यताज्ञानस्य चिकीर्षाप्रवृत्तिहेतुत्वे — 1) कारणतावच्छेदकलाघवम् 2) जनकज्ञानविघटकस्यैव विरोधित्वनियमबलात् कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वादेव कृतिसाध्यताज्ञाने-जनकत्वसिद्धिः इति च युक्तिद्वयं निरूप्य, अनुमितिविशेषसामग्रीप्रतिबन्धकत्वाकल्पनलाघवयुक्तिमाह किंचेति ।

इति लाघवम् । चिकोर्षादिसामग्रीकाले पाकत्वादिधर्मितावच्छेदकक कृतिसाध्यतादिप्रकारकज्ञानस्यावश्यकतया तस्य [1]बाधमुद्रया [2]तादृशानुमितिप्रतिबन्धकत्वेन बाधाभावघटितानुमितिसामग्र्याः [3]चिकीर्षादिसामग्र्याश्च युगपत् मिलनासंभवात् । कृत्यसाध्यत्वादिप्रकारकज्ञानस्य तत्र प्रतिबन्धकतामते च तादृशज्ञानाभावघटितचिकीर्षादिसामग्र्याः तादृशानुमितिसामग्र्याश्च [4]मिलनसंभवेनोक्त[5]प्रतिबन्धकत्वकल्पने महागौरवापत्तिः ।

---

1 बाधमुद्रया — बाधज्ञानविधया ।

2 तादृशानुमितीति— पाकः कृतिसाध्यत्वाभाववानित्यनुमितीत्यर्थः ।

3 चिकीर्षादिसामग्र्याश्चेति — कृतिसाध्यत्वज्ञानघटिताया इत्यादिः ।

4 मिलनसंभवेनेति— यत्र न कृतिसाध्यताज्ञानं, तत्र कृत्यसाध्यताज्ञानाभावस्यापि संभवादिति भावः ।

5 प्रतिबन्धकत्वकल्पन इति — आपादकसामग्रीसत्वेन चिकीर्षापत्तिसंभवात् तद्वारणायानुमितिसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमिति भावः ।

## कृतिसाध्यत्वादित्रयस्य लिङर्थत्वे निषेधवाक्ये श्येनवाक्ये च अन्वयानुपपत्तिशङ्का, संप्रदायमतेन तत्परिहारश्च

अथ कृतिसाध्यत्वादित्रयस्य लिङर्थत्वे न कलञ्जं भक्षयेदित्यादौ नञः धात्वर्थकलञ्जभक्षणादौ लिङर्थाभावबोधकत्वानुपपत्तिः, कलञ्जभक्षणादौ कृतिसाध्यत्वेष्टसाधनत्वयोरभावासत्वात् । एवं श्येनेनाभिचरन्यजेतेत्यत्र धात्वर्थे श्येनयागे लिङर्थान्वयासंभवः । श्येनस्य [1]नरकानुबन्धित्वेन तत्र बलवदनिष्टाननुबन्धित्वान्वयासंभवादिति चेन्न ।

[2]आद्ये, अयोग्यतया(न तत्)कृतिसाध्यत्वेष्टसाधनत्वयोरभावबोधनासंभवेन बलवदनिष्टाननुबन्धित्वाभावमात्रबोधनात् । [3]द्वितीये, अयोग्यतया बलवदनिष्टाननुबन्धित्वान्वयासंभवेन, कृतिसाध्यत्वेष्टसाधनत्वयोरेवान्वयाङ्गीकारादिति संप्रदायः ।

---

1 नरकानुबन्धित्वेनेति — शत्रुवधफलकस्य श्येनयागस्य अभिचारकर्मत्वात् तस्य चोपपातकत्वेन स्मृतेः नरकसाधनत्वमिति भावः ।

2 आद्ये — न कलञ्जं भक्षयेत् इत्यादि निषेधस्थले ।

3 द्वितीये — श्येनेनाभिचरन् यजेत इति वाक्ये ।

## इष्टसाधनत्वमात्रं लिङर्थः इति निरूपणम्

वस्तुतस्तु, [1]इष्टसाधनत्वमात्रं लिङर्थः । [2]कृतिसाध्यत्वं न लिङर्थः । तस्य लिङर्थत्वाभावेऽपि कृतेराख्यातसामान्यार्थतया लिङोऽपि तदर्थकत्वेन पचेतेत्यादौ कृतेः पाकानुकूलत्वभानस्यावश्यकतया [3]तुल्यवित्तिवेद्यतया अर्थात् पाकादावपि कृतिसाध्यताभानात् । न च प्रत्यक्षे तुल्यवित्तिवेद्यतया भानोपगमेऽपि [4]परोक्षे तदनुपगमात् नोक्तरीत्या कृतिसाध्यताभानं संभवतीति वाच्यम् । तथापि साध्यतासंबन्धेन

---

1 इष्टसाधनत्वमात्रमिति — मात्रपदेन कृतिसाध्यत्वस्य बलवदनिष्टाननुबन्धित्वस्य च व्यवच्छेदः ।

2 आदौ कृतिसाध्यत्वस्य लिङर्थतां दूषयितुमारभते — कृतिसाध्यत्वमिति ।

3 तुल्यवित्तिवेद्यतयेति — तुल्या — एका, वित्तिः — ज्ञानं, वेद्यत्वं — विषयत्वम् । एकज्ञानविषयतयेत्यर्थः ।

4 परोक्षे तदनुपगमादिति — शाब्दबोधे शब्दसमभिव्याहारविशेषस्य विशेष्यविशेषणभावनियामकत्वादिति भावः ।

कृतिप्रकारकज्ञानस्यैव [1]लाघवेन प्रवर्तकतया, आख्यातसामान्यार्थकृतेः साध्यतासंबन्धेनैव क्रियायां विधिजन्य [बोधे] भानेन प्रवर्तकज्ञानसंपत्तेः। नचेच्छायाः स्वप्रकारप्रकारकज्ञानजन्यत्वेन [2]चिकीर्षायां कृतिसाध्यत्वप्रकारकज्ञानहेतुत्वस्यावश्यकत्वेन [3]तद्द्वारा प्रवृत्तावपि [4]तदावश्यकमिति वाच्यम्। साध्यतासंबन्धेन कृतिप्रकारकक्रियेच्छाया एव चिकीर्षात्वात्। न च पचतीत्यादौ आख्यातार्थकृतेः क्रियाविशेष्यतयैव भानमिति व्युत्पत्तेः क्लृप्ततया, पचेतेत्यादौ तस्याः क्रियाविशेषणतया भानासंभवइति वाच्यम्। व्युत्पत्तिवैचित्र्येण तदुपपत्तेः।

---

1 लाघवेनेति—कृतिसाध्यत्वप्रकारकज्ञाने तदीयसंसर्गस्य भानात् कृतिसाध्यत्वीयस्वरूपसंबन्धविषयताया अपि कारणतावच्छेदकप्रवेशेन गौरवम्। साध्यतायाः संवन्धत्वे संवन्धसंसर्गस्य विशिष्टबुद्धावभानात् तदीयविषयतायाः कारणतावच्छेदकत्वाभावेन लाघवमिति भावः।

2 चिकीर्षायामिति — कृतिसाध्यत्वप्रकारिकायामिति शेषः।

3 तद्द्वारा — चिकीर्षाद्वारा।

4 तदावश्यकम् — कृतिसाध्यत्वप्रकारकज्ञानहेतुत्वमावश्यकम्।

न च व्युत्पत्तिभेदस्य शक्तिभेदनिर्वाह्यतया शक्तिभेद आवश्यक इति वाच्यम् । शक्त्यभेदेऽपि व्युत्पत्तिभेदे बाधकाभावात् । अत एव, [1]प्राचीनैः आख्यातसामान्यार्थकृतेः शक्तिभेदं विनैव व्युत्पत्तिभेदेन, कर्तृप्रत्ययस्थले क्रियाविशेष्यतया भानं, कर्मप्रत्ययस्थले च क्रियाविशेषणतया भानमुपेयते । न च लिङ्प्रत्ययात् कृतिसाध्यत्वत्वावच्छिन्नस्य [2]नियतोपस्थितेरनुभवसिद्धतया [3]तत्र लिङः शक्तिरावश्यकीति वाच्यम् । तादृशानुभवे विवादात् ।

---

1 प्राचीनैरिति — चैत्रेण पच्यते तण्डुलः इति कर्माख्यातस्थले, चैत्रपदोत्तरतृतीयार्थः आधेयत्वम् । तच्चाख्यातसामान्यार्थे कृतावन्वेति । कृतेः जन्यतया धात्वर्थे पाके, पाकस्य जन्यतया कर्माख्यातार्थे (कर्मत्वे)फले, तस्य च तण्डुले अन्वयः । तथाच चैत्रवृत्तिकृतिजन्यपाकजन्यविक्लृत्त्यादिफलाश्रयः तण्डुलः इति बोधः इति प्राचीनमतं बोध्यम् ।

2 अनुभवसिद्धतयेति — तस्याश्च वृत्तिसाध्यत्वादिति शेषः ।

3 तत्र — कृतिसाध्यत्वे ।

एवं बलवदनिष्टाननुबन्धित्वमपि न लिङर्थः। बह्वाया-ससाध्ये कर्मणि बहुतरदुःखस्यापि [1]जायमानत्वेन तत्र प्रवृत्त्यनु-पपत्त्या तज्ज्ञानस्याप्रवर्तकत्वात्। (अन्य) [[2]अल्प] दुःख-स्यापि कुतश्चित् बलवत्त्वेनानुगतानतिप्रसक्तबलवत्त्वस्य दुर्व-चत्वात्।

एवं बलवदनिष्टाननुबन्धित्वस्य बलवद्द्वेषविषयदुःखा-ननुबन्धित्वमात्ररूपस्य ज्ञानं न प्रवर्तकम्। कालान्त-रीयबलवद्द्वेषविषयदुःखानुबन्धित्वज्ञानेऽपि, एतत्कालीनैत-त्पुरुषीयतादृशद्वेषविषयदुःखाननुबन्धित्वज्ञानेन प्रवृत्त्युत्पादात्। अतः [तत्कालीनतत्पुरुषीयप्रवृत्तिं प्रति तत्कालीनतत्पुरुषीयबल-

---

1 जायमानत्वेनेति — बलवदनिष्टाननुबन्धित्वज्ञानासंभवादिति शेषः।

2 बहुतरदुःखस्यापि बलवत्त्वाभावात् बलवदनिष्टाननुबन्धित्व-ज्ञानसंभवः इत्याशङ्क्याह—अल्पेति।

वद्द्वेषविषयदुःखाननुबन्धित्वज्ञानस्यैव हेतुत्वं वाच्यम् । तथाच यत्काले यत्पुरुषस्य क्वापि न तादृशो द्वेषः. [1]तदा-प्रसिद्ध्या [2]तज्ज्ञानासंभवेन प्रवृत्त्यनुपपत्तिः । प्रवर्तकज्ञान-विषयस्यैव लिङर्थतया [3]लिङो नानाशक्तिकल्पनापत्तिश्च ।

नचैवं कलञ्जभक्षणादौ [4]प्रवृत्त्यापत्तिरिति वाच्यम् । तत्तद्गोचरप्रवृत्तौ तत्तद्गोचरबलवद्द्वेषस्य प्रतिबन्धकत्वेनोक्ता-पत्त्यभावात् । अत एवान्तरालिकश्रमे यस्य बलवान् द्वेषः, सः ज्योतिष्टोमादौ न प्रवर्तते । अन्यस्तु प्रवर्तते एवेत्युप-पद्यते ।

अथैवं, न कलञ्जं भक्षयेदित्यादौ नञा लिङर्थाभाव-बोधनानुपपत्तिः, कलञ्जभक्षणादेः तृप्त्यादिरूपेष्टसाधनत्वेन तदभावस्य नञा बोधनासंभवादिति चेन्न ।

---

1 अप्रसिद्ध्या — तत्कालीनतत्पुरुषीयबलवद्द्वेषस्याप्रसिद्ध्या ।

2 तज्ज्ञानासंभवेन—प्रवृत्तिहेतोः तत्कालीनतत्पुरुषीयबलवद्द्वेष-विषयाननुबन्धित्वज्ञानस्यासंभवेन ।

3 नानाशक्तिकल्पनापत्तिरिति — अननुगतानां तत्तत्कालानां तत्तत्पुरुषाणां च शक्यतावच्छेदके प्रवेशादिति भावः ।

4 प्रवृत्त्यापत्तिरिति — बलवदनिष्टाननुबन्धित्वज्ञानस्यानपेक्षणा-दिति भावः ।

तत्र नञः [1]तात्पर्यग्राहकतया अनिष्टसाधनत्वस्यैव [2]निरूढलक्षणया लिङर्थत्वात् ।

न च [3]पूर्वोपदर्शितरीत्या सामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवेनैव कृतिसाध्यत्वादिप्रकारकज्ञानस्य प्रवृत्तिहेतुत्वसिद्धिरिति वाच्यम् । इच्छाया हेतुत्वकल्पे उत्तेजकत्वाभावेन [4]स्थलान्तरक्लृप्तप्रतिबन्धकतयैवोपपत्तौ ममापि तादृश-

---

1 तात्पर्यग्राहकतया — लिङः अनिष्टसाधनत्वलक्षणातात्पर्यग्राहकतया ।

2 निरूढलक्षणा — अनादितात्पर्यविषयीभूतार्थनिष्ठा लक्षणा । तात्पर्ये अनादित्वं च स्वप्रयोज्यशाब्दबोधध्वंसकालीनस्वप्रयोज्यशाब्दबोधसामान्यकत्वम् ।

3 पूर्वोपदर्शितरीत्येति — पाकः कृतिसाध्यत्वाभाववान् इत्यनुमितिसामग्र्याः कृतिसाध्यत्वज्ञानरूपबाधज्ञानाभावघटितायाः, चिकीर्षा प्रवृत्ति सामग्र्याश्च कृतिसाध्यताज्ञानघटितायाः मेलनासंभवेन तादृशानुमितिसामग्रीकाले चिकीर्षा-प्रवृत्त्याद्यापादानासंभवः इति रीत्येति यावत् ।

4 स्थलान्तरक्लृप्तप्रतिबन्धकतयेति—भिन्ने विषये अनुमितिसामग्री प्रबला प्रत्यक्षशाब्दादौ प्रतिबन्धिका । घटादिप्रत्यक्षेच्छायां प्रत्यक्षोदयात् घटादिप्रत्यक्षादीच्छाविरहविशिष्टायाः तस्याः तत्तत्प्रत्यक्षादौ प्रतिबन्धकत्वम् । अन्यादृशेच्छायां अन्यादृशप्रत्यक्षानुदयात् विषयविशेषं निवेश्य प्रतिबन्धकता वक्तव्या । इच्छाया हेतुत्वे, इच्छावदन्यत्वस्यानुगतस्य प्रतिबध्यतावच्छेदकत्वान्न प्रतिबन्धकताभेदः इति भावः ।

सामग्रीप्रतिबन्धकत्वाकल्पनेन लाघवसंभवात् । तस्मादिष्ट-साधनत्वमात्रस्य लिङर्थत्वे दोषाभावात् स एव लिङर्थः ॥

एतेन, कृतिसाध्यत्वादित्रयस्य लिङर्थत्वे, न कलञ्जं भक्षयेदित्यादि निषेधस्थले एकलिङभिहितानां कृतिसाध्यत्वा-दित्रयाणां मध्ये कृतिसाध्यत्वेष्टसाधनत्वयोः धात्वर्थे कलञ्ज-भक्षणादौ, एकस्य बलवदनिष्टाननुबन्धित्वांशस्य नञर्थे अन्व-येन एकलिङ्प्रत्ययाभिहितेषु व्युत्पत्तिवैचित्र्यकल्पनापत्तिः । एवं [1]तस्यैवांशस्य विधिस्थले धात्वर्थान्वयितया क्लृप्तस्य निषेधस्थले नञर्थान्वयेन [2]तत्कल्पनापत्तिः । एवं न पचति इत्यादौ नञर्थस्य प्रथमान्तपदार्थे [3]दृष्टान्वयस्य प्रकृते धात्वर्था-न्वयेन तत्कल्पनापत्तिरिति दूषणोद्भावनं परास्तम् ।

---

1 तस्यैवांशस्य — बलवदनिष्टाननुबन्धित्वस्य ।

2 तत्कल्पनापत्तिः — व्युत्पत्तिवैचित्र्यकल्पनापत्तिः । एवमग्रेऽपि ।

3 दृष्टान्वयस्येति — न पचति चैत्रः इत्यतः पाकानुकूलकृत्यभाव-वान् चैत्रः इति बोधात्, आख्यातार्थान्वितस्य नञर्थस्य विशेष्य-तया प्रथमान्तार्थस्य भानमनुभवसिद्धमिति भावः ।

निषेधस्थले नञः तात्पर्यग्राहकत्वेन [1]निरर्थकत्वात् ।

---

## प्रवर्तना-शब्दभावनादिपदव्यपदेश्या अभिधा लिङर्थः इति भाट्टानुयायि-प्राचीनमीमांसकमतस्य विस्तरेण निरूपणम्

अत्र प्राचीनाः भाट्टानुयायिनो मीमांसकाः—

अभिधैव [2]विध्यर्थः । तथाहि—प्रवृत्तिर्हि द्विविधा, स्वेच्छाधीना, पराधीना च । तत्र स्वेच्छाधीनप्रवृत्तौ स्वेष्टसाधनताज्ञानं, परप्रयोज्यप्रवृत्तौ [3]परनिष्ठप्रवर्तनं च हेतुः । अनिच्छतोऽपि पुत्रादेः राजाज्ञादितः पितृशिरश्छेदादौ प्रवृत्तिदर्शनेन, राजा मां प्रवर्तयति इत्याकारकज्ञानस्यान्वयव्यतिरेकानु-

---

1 निरर्थकत्वात् — पदार्थान्तरान्वितस्वार्थबोधकत्वाभावात् ।

2 विध्यर्थः — लिङर्थः ।

3 परनिष्ठप्रवर्तनं— परनिष्ठस्य प्रवर्तनस्य ज्ञानम् ।

विधानात् । प्रवर्तनात्वं चात्र प्रवृत्तिजनकत्व[1]मतिरिक्तं वा इत्यन्यदेतत् ।

एवं च स्वर्गकामो यजेत इत्यादिविधिप्रयोज्ययागादिगोचरप्रवृत्तेरपि [2]विधिरूपपरप्रयोज्यतया, विधिनिष्ठप्रवर्तनाज्ञानस्य हेतुत्वमवश्यमुपेयम्, [3]तत्र [4]तस्यैव कारणत्वेन क्लृप्तत्वात् । (तच्चोत्तरेण) [तच्चान्तरेण] अभिधायाः लिङ्निष्ठत्व—लिङर्थत्वे न संभवतीति अभिधाया लिङ्निष्ठत्वं लिङर्थत्वं चावश्यकम् । आज्ञादिरूपायाः राजादिचेतननिष्ठायाः प्रवर्तनायाः अचेतन-लिङ् [निष्ठत्वा]संभवादिति अभिधा [5]शब्दभावनापदवाच्यापि । भावनाया (त) [श्च] शब्दभावनार्थभावनाभेदेन द्वैविध्यात् ।

———

1 अतिरिक्तं वा — अखण्डोपाधिरूपं वा ।
2 विधिरूपेति — लिङ्प्रत्ययेत्यर्थः ।
3 तत्र — परप्रयोज्यप्रवृत्तौ ।
4 तस्यैव — परनिष्ठायाः प्रवर्तनाया ज्ञानस्यैव ।
5 शब्दभावना — लिङादिशब्दनिष्ठा भावना । भवनानुकूल-व्यापारः भावना ।

## भावना अंशत्रयवतीति प्रवादार्थनिरूपणम्

अथ भावनाया द्वैविध्ये, भावना अंशत्रयवतीति भाट्टप्रवादविरोधः, [1]त्रिविधस्यैवांशत्रयरूपत्वादिति चेन्न ।

भावनाज्ञाने, किं भाव्यम्, केन भाव्यम्, कथं भाव्यमिति आकाङ्क्षोदयेन कर्म–करण–इतिकर्तव्यतैतत्त्रितयाकाङ्क्षोत्थापकत्वस्यैवांशत्रयवत्त्वरूपत्वात् । न च भावनाज्ञानोत्तरं तादृशाकाङ्क्षोदये भानाभाव इति वाच्यम् । तथा सति लिङ्पदज्ञानजन्यार्थभावनाज्ञानानन्तरं, यागादिगोचरार्थभावनाविशेष्यकस्वर्गादिफलवत्त्वप्रकारकबोधस्यानुभवसिद्धस्यापलापापत्तेः । न चैवं फलाकाङ्क्षासिद्धावपि करणाद्याकाङ्क्षा असिद्धैवेति वाच्यम् । कर्माकाङ्क्षायाः करणाकाङ्क्षानियतत्वेन [2]तस्या अपि सिद्धेः ।

अत एव इतिकर्तव्यताकाङ्क्षापि सिद्धा, करणाकाङ्क्षायाः तन्नियतत्वात् ।

---

1 त्रिविधस्यैव — त्रैविध्यस्यैव

2 तस्या अपि — करणाकाङ्क्षाया अपि ।

अत एव विधिवादे पक्षधरमिश्रैरप्युक्तम्—

(यथा) '[अन्यथा]स्वर्गादिफलं न भावयेत्, तस्यैतत्त्रितयाधीनत्वात् ।' इति । अत्र [1]स्वर्गादिफलं न भावयेदित्यस्य विधिना स्वर्गादिफलकत्वेन अर्थभावना न बोध्येत इत्यर्थकतया, तस्यैतत्त्रितयाधीनत्वादित्यस्य च स्वर्गादिफलकत्वादिप्रकारकबोधस्य तादृशाकाङ्क्षात्रयाधीनत्वादित्यर्थकतयोक्तार्थलाभात् ।

---

## अर्थभावनापि लिङा बोध्यते, लिङर्थः अभिधैव शब्दभावना इति निरूपणम्

ननु लिङ्पदादर्थभावनोपस्थितौ, तदुत्तरं [2]निरुक्ताकाङ्क्षात्रयं भवति इत्युक्तमसंगतम् । भट्टमते अभिधाया

---

1 अर्थभावनायाः स्वर्गादिफलकत्वबोधानुभवात् भाव्याद्याकाङ्क्षात्रयसिद्धिरित्यर्थो. उपबृंहणतयोपन्यस्तेन मिश्रवाक्येन झटिति प्रकृतार्थोपपादकार्थानवबोधात्, तस्यार्थं विवृणोति-स्वर्गादिफलं न भावयेदित्यादिना ।

2 निरुक्ताकाङ्क्षात्रयं — भाव्य-करण-इतिकर्तव्यताकाङ्क्षात्रयम् ।

एव लिङ्पदवाच्यत्वेन ततः फलानुकूलव्यापाररूपार्थभावनो-पस्थितेरसंभवात् । एवमभिधायाः शब्दभावनात्वाभावेन तस्याः शब्दभावनात्वाभिधानमप्यसंगतमिति चेन्न ।

[1]तेषां [2]निरुक्तव्यापारस्य आख्यातसामान्यार्थत्वेन [3]लिङ्पदस्यापि शक्यतया, अभिधायाः [4]शब्दभावनात्वोपगमेन चोक्तासंगत्यभावात् । तदुक्तं भट्टपादैः—

---

1 तेषां — भाट्टानाम् । मते इति शेषः ।

2 निरुक्तव्यापारस्य — फलानकूलव्यापारस्य ।

3 लिङ्पदस्यापीति — निरूपितत्वं षष्ठ्यर्थः शक्यपदार्थैकदेश-शक्त्यन्वयी ।

4 शब्दभावनात्वोपगमेन — शब्दस्य भावना इति व्युत्पत्त्या शब्द-भावनापदव्यपदेश्यत्वोपगमेन ।

[1]'अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः' ॥ इति ।

अत्र अभिधाभावनामित्यस्य, [2]अभिधीयते इति अभिधा–शब्दः, तन्निष्ठां भावनामित्यर्थः । अन्यां—अर्थभावनातो भिन्नाम् । आहुः—स्वशक्त्योपस्थापयन्ति ।

अर्थात्मभावनेति—अत्रार्थः धात्वर्थो यागादिः, अर्थित्वादात्मा [3]वा । आत्मत्वं, जनकत्वरूपविषयित्वम्, वृत्तित्वं वा । एवं च यागादिविषयिणी आत्मवृत्तिर्वा भावना अर्थात्मभावना-

---

1 अभिधाभावनामिति — समस्तपदपाठः ग्रन्थकारसंमतः । क्वचित् न्यायग्रन्थेषु अभिधां भावनामिति पाठः दृश्यते । लिङादिपदनिष्ठस्य भावनापदेन व्यपदेश्यस्य प्रवर्तनरूपव्यापारस्य अभिधापदेन भाट्टैः व्यवहारात् अभिधात्मिकां भावनामिति व्याचक्षते । परन्तु भावनाद्वैविध्यस्यात्रोक्तेः, अर्थात्मभावनापदेन यागाद्यर्थविषयक-पुरुषरूपार्थनिष्ठभावनायाः प्रतिपादनात्, पूर्वार्धे शब्दनिष्ठभावनायाः अभिधाभावनापदेन प्रतिपादनमेवाञ्जसमिति बोध्यम् । न्यायमते पदशक्तिरभिधेति उच्यते, न लिङ्निष्ठः व्यापार इति ज्ञेयम् ।

2 अभिधीयते इति — अर्थः अनयेति शेषः ।

3 आत्मा वेति — वाशब्दश्चार्थः । एवमग्रेऽपि । अर्थद्वयस्यापि विवक्षितत्वात् ।

शब्दार्थो बोध्यः । अन्या—अभिधारूपशब्दभावनातो भिन्ना । सर्वाख्यातस्य गोचरः इत्यस्य [1]सर्वाख्यातशक्येत्यर्थः ।

---

## अर्थभावनाया अंशत्रयम्

अथ उक्ताकाङ्क्षात्रयसहकारेण अर्थभावना कर्म-करण-इतिकर्तव्यतैतत्त्रितयान्विता लिङ्पदेन बोध्यते इत्युक्तमसंगतम् । अर्थभावनायाः कर्मादीनां [2]विशिष्यापरिचयादिति चेन्न ।

तस्याः स्वर्गादिकं [3]कर्म, यागादिकं [4]करणम्, प्रयाजादिसहकार्येव [5]इतिकर्तव्यता इति प्रसिद्धत्वात् ।

---

1 शक्येत्यर्थं इति — गोचरशब्दस्य विषयोऽर्थः । आख्यातविषयता ज्ञानरूपव्यापारानुबन्धिनी। शब्दाधीननियतोपस्थितिविषयतायाः पदवृत्त्यधीनत्वात् आख्यातगोचरत्वमाख्यातशक्यत्वे पर्यवस्यति ।

2 परिचयः — ज्ञानम् ।

3 कर्मं — पुरुषप्रवृत्त्यधीनोत्पत्तिमत् ।

4 करणं — भावनाप्रयोज्यफलजनकम् ।

5 इतिकर्तव्यता — कर्तव्यपरिपाटी ।

## लिङर्थशब्दभावनायाः अंशत्रयनिरूपणम्

एवं शब्दभावनापि कर्म—करण—इतिकर्तव्यतैतत्त्रितयान्विता लिङा अभिधीयते। लिङ्शब्दात् शब्दभावनोपस्थितौ सत्यां, अस्याः किं भाव्यं, किं करणं, का इतिकर्तव्यता इत्याकारकजिज्ञासारूपाकाङ्क्षोदयात्।

अस्याश्च भाव्या, यागादिप्रवृत्तिः। करणं, लिङ्शब्दनिरूपितशक्तिज्ञानम्। 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स [1]एवैनं भूतिं गमयति।' इत्यादिस्तुत्यर्थवादः, सहकार्येव इतिकर्तव्यता, इति च न [2]भाव्याद्य-(प्रविषयः) [परिचयः] तदुक्तं भट्टाचार्यैः—

'लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः।
संबन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते॥' इति।

---

1 स एवैनमिति— सः – वायुः एनं भूतिं गमयत्येवेति योजना।
2 भाव्याद्यपरिचयः — भाव्यादित्रयस्याज्ञानम्।

अत्र लिङोऽभिधा इत्यस्य [1]लिङ्वृत्तिः अभिधेत्यर्थः । वृत्तित्वं च स्वरूपसंबन्धेन, [2]तैः समवायानङ्गीकारात् । शब्दभावना इत्यस्य शब्दनिष्ठा भावनेत्यर्थः, शब्दनिष्ठा भावना शब्दभावना इति व्युत्पत्तेः । भाव्या इत्यस्य फलमित्यर्थः । संबन्धबोधः इत्यस्य [3]शक्तिज्ञानमित्यर्थः । तदीयम् इत्यस्य शब्दभावनीयमित्यर्थः । प्ररोचना इत्यस्य 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिस्तुत्यर्थवाद इत्यर्थः । अङ्गतया इत्यस्य सहकारितयेत्यर्थः ।

---

1 लिङ्वृत्तिरिति — लिङ्निष्ठा इत्यर्थः ।

2 तैः — भाट्टैः । भाट्टमते धर्मधर्मिणोः तादात्म्याङ्गीकारात्, लिङ्वृत्तित्वं तादात्म्येन इत्यपि व्याचक्षते ।

3 शक्तिज्ञानमिति — लिङ्पदस्य अभिधारूपार्थस्य च बोधौपयिकः संबन्धः शक्तिरेवेति भावः ।

## भाट्टमतनिष्कर्षनिरूपणम्

### स्वर्गकामो यजेतेत्यत्र अर्थभावनाविशेष्यकावान्तरवाक्यार्थ-बोधवर्णनम्

तदयं भट्टमतनिष्कर्षः । स्वर्गकामो यजेतेत्यादौ लिङा आख्यातसामान्यशक्त्या अर्थभावना उपस्थाप्यते । तदुत्तरं, कर्म– करण– इतिकर्तव्यताकाङ्क्षा उपदर्शितजिज्ञासारूपा जायते । ततः, स्वर्गकर्मिका यागकरणिका प्रयाजादीति-कर्तव्यताका स्वर्गकामकर्तृका भावना, इत्याकारकार्थभावना-विशेष्यकबोध[1]पर्यवसायी, स्वर्गकामः प्रयाजादिसहकृतेन यागेन स्वर्गं भावयेत् इत्याकारको बोधः । अत्र यागकरण-कत्वं न यागनिष्ठकरणतानिरूपकत्वम्, यागे [2]अर्थभावना-करणत्वाभावात् । किन्तु यागनिष्ठविषयतानिरूपकत्वरूपं

---

1 पर्यवसायीति – आख्यातार्थभावनाया एव तन्मते शाब्दबोध-मुख्यविशेष्यत्वात्, तत्र तत्र ग्रन्थेषु शाब्दबोधाभिलापकेन 'भाव-येत्' इत्यादिनापि ईदृश एव बोधो विवक्षित इति भावः ।

2 अर्थभावनाकरणत्वाभावादिति — प्रत्युत भावनाया एव यागकारणत्वं बोध्यम् ।

[1]पारिभाषिकं तत् । विषयत्वं चात्र जन्यत्वम् । यद्वा, यागजन्यफलप्रयोजकत्वं प्रकृते यागकरणकत्वम् । वस्तुतस्तु, स्वर्गोत्पत्त्यनुकूलव्यापारसमूह एवात्र स्वर्गकर्मिका अर्थभावना । तत्र यागकरणकत्वं च यागघटितत्वमेवेति । एतादृशकरणकत्वं चात्र (भा) [या] गस्य [2]संसर्गमर्यादया भासते । न तु प्रकारतया, [3]तदुपस्थापकपदाभावात् । तादृशपदकल्पने गौरवात् ।

न चात्र प्रयाजादेः कथं शाब्दबोधे सहकृतत्वरूपेतिकर्तव्यताकत्वसंबन्धेन [4]भानं, तद्बोधकशब्दाभावादिति वाच्यम् । दर्शितसहकार्याकाङ्क्षायाः प्रकारान्तरेणानिवृत्तेः, अन्यथानुपपत्त्या प्रयाजादिपदाध्याहारेणैव तादृशबोधोपपाद-

1 पारिभाषिकं — तान्त्रिकसंकेतरूपपरिभाषया यागकरणकत्वपदेन बोध्यमिति यावत् ।
2 संसर्गमर्यादयेति — स्वकरणकत्वसंबन्धेन भावनायामन्वय इति भावः ।
3 तदुपस्थापकेति — करणत्वोपस्थापकेत्यर्थः ।
4 भानं — अर्थभावनायां प्रकारतया भानम् ।

नात् । एवं, व्युत्पत्तिवैचित्र्येण [1]कामनाविशेषणत्वेनोपस्थितस्यापि स्वर्गस्य [स्व] फलकतासंबन्धेनात्र यागे अन्वयो बोध्यः ।

---

## शब्दभावनाबोधः

एवं लिङा लिङ्त्वावच्छिन्ननिरूपितविशेषशक्तया शब्दभावनाया उपस्थितौ, किं भाव्यम्, केन भाव्यम्, कथं भाव्यमित्याकारकजिज्ञासारूपा आकाङ्क्षा जायते । ततः, [2]पुरुषप्रवृत्तिकर्मिका, लिङ्त्वा [वच्छिन्ननिरूपितशक्ति] ग्रहकरणिका, स्तुत्यर्थवादेतिकर्तव्यताका [3]विधिनिष्ठा शब्दभावना इत्याकारकशब्दभावनाविशेष्यकबोधपर्यवसायी, विधिः

---

1 कामनाविशेषणत्वेनेति — स्वर्गकामपदेनेत्यादिः । एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतया अन्वयो नेति व्युत्पत्तिसंकोचं कृत्वा अन्वय इति भावः ।

2 पुरुषप्रवृत्तिकर्मिका — आख्यातसामान्यार्थार्थभावनोत्पत्त्यनुकूलेति पर्यवसितार्थः ।

3 विधिनिष्ठा — लिङ्पदनिष्ठा ।

स्तुत्यर्थवादसहकृतेन लिङ्शक्तिग्रहेण पुरुषप्रवृत्तिं भावयेत् इत्याकारको बोधः । अत्र विधिवाक्ये यादृशार्थबोधकपदं न श्रूयते, [1]तदर्थकपदकल्पनयैव बोध उपपादनीयः ।

---

## विधिवाक्यजन्यस्य अर्थभावनाविशेष्यकमहावाक्यार्थबोधस्य निरूपणम्

ततः स्वर्गफलिका यागकरणिका प्रयाजादीतिकर्तव्यताका स्वर्गकामकर्तृका अर्थभावना लिङ्पदनिरूपितशक्तिग्रहकरणक–स्तुत्यर्थवादेतिकर्तव्यताक विधिनिष्ठशब्दभावनात्मक-प्रवर्तना [2]विषयः, इति महावाक्यार्थबोधः प्रवर्तको जायते । विध्युपरक्ता भावना लिङर्थः इति भट्टसिद्धान्तात् । विधिः—

---

1 पदकल्पनया -- पदाध्याहारेण ।

2 प्रवर्तनाविषय इति — प्रवर्तनाजन्येत्यर्थः । एतच्चाग्रे स्फुटीभविष्यति ।

[1]प्रवर्तना । तदुपरक्ता—तद्विशिष्टा अर्थभावना [2]लिङ्प्रतिपाद्येति तादृशसिद्धान्तार्थोऽवसेयः ।

न च तादृशसिद्धान्तो निर्युक्तिक इति वाच्यम् । पितुः शिरश्छेदं कुर्वीत इत्यादिराजाज्ञादिस्थले, राजाज्ञाविषयः तादृशशिरश्छेदानुकूलो व्यापारः इत्याकारकस्य अर्थभावनाविशेष्यक—[3]प्रवर्तनाप्रकारकस्य प्रवर्तकत्वस्य क्लृप्तत्वेन तदनुसारेण तादृशसिद्धान्तोपगमस्य निर्युक्तिकत्वाभावात् ।

---

1 प्रवर्तना — अभिधा शब्दभावनेति यावत् ।

2 विषयतया शब्दभावनाविशिष्टार्थभावनायां लिङ्पदशक्यत्वाभावात् लिङर्थं पदं लिङ्जन्यप्रतीतिविषयार्थकतया व्याचष्टे—लिङ्प्रतिपाद्येति । लिङ्त्वावच्छिन्ननिरूपितविशेषशक्त्युपस्थापितशब्दभावनायाः प्रयोज्यत्वपर्यवसितेन विषयत्वेन अख्यातसामान्यशक्तिबोध्यार्थभावनायामन्वयेन लिङ्प्रतिपाद्यत्वं संभवतीति भावः ।

3 प्रवर्तनाप्रकारकस्येति – राजाभिप्रायात्मिका राजाज्ञैवात्र प्रवर्तना ।

## निरुक्तसिद्धान्तविरोधेन, महावाक्यार्थबोधे शब्दभावनाया विशेष्यतावादिनां मतनिरासः

[1]एतेन, (न) निरुक्तार्थभावनाविषयिणी शब्दभावना इति शब्दभावनाविशेष्यकार्थभावनाप्रकारक एव महावाक्यार्थ-बोधः । (अन्यथा) [अ] वान्तरार्थभावनाविशेष्यकबोधे भाव्यस्य स्वर्गादेः [2]प्रकारतया-अन्वयस्य क्लृप्ततया [महा] वाक्यार्थबोधे [3]भाव्यार्थभावनायाः प्रकारतया भानस्यैवो-चित्यात् । इति केषां चिदुक्तिः [परास्ता] तथासत्युपदर्शित-सिद्धान्तविरोधापत्तेः ।

---

1 एतेन – विध्युपरक्तार्थभावना लिङर्थः इति सिद्धान्तविरोधेन ।

2 प्रकारतयेति —स्वफलकत्वसंबन्धेनार्थभावनायामित्यादिः ।

3 भाव्यार्थभावनायाः — शब्दभावनाफलीभूतार्थभावनायाः । शब्दभावनायामिति शेषः ।

सिद्धान्ताविरोधे, शब्दभावनाविशेष्यकमहावाक्यार्थबोधेऽपि न क्षतिः

यदि च, राजाज्ञादिस्थलेऽपि प्रवर्तनाविशेष्यकबोधस्यै-वोपगमेन [1]विधिसंबद्धा भावना लिङर्थः इति सिद्धान्ताविरोधः इत्युच्यते। तदा अस्तु प्रवर्तनाविशेष्यकबोधः। (का नोधः कालोद्धतिरिति) [का नो क्षतिरिति]

[2]अत्रापि शब्दभावनायां शक्तिग्रहकरणकत्वं, शक्ति-ग्रहप्रयोज्यप्रवृत्त्यादिफलप्रयोजकत्वरूपम्, पारिभाषिकमेव। यथाश्रुते, शक्तिग्रहे शब्दभावनाया जनकत्वरूपकरणत्वाभा-वेन तथाविधकरणतानिरूपकत्वरूप—तत्करणकत्वस्यासंभवेना-संगत्यापत्तेः। अत्रापि [3]पूर्ववत् करणकत्वादेः संसर्गविधयैव

---

1 विधिसंबद्धेति — विध्युपरक्तपदार्थकथनम्। उपरागः संबन्धः। स च विशेष्ये इव विशेषणेऽपि भवति। तथाच विधौ— शब्दभावनायां विशेषणतया संबद्धा अर्थभावना लिङ्प्रतिपाद्येति सिद्धान्तार्थः।

2 अत्रापीति — अर्थभावनायां यागकरणकत्वं यथा यागप्रयोज्य-फलप्रयोजकत्वरूपं पारिभाषिकं, तद्वदिति समुदायार्थः।

3 पूर्ववत् — यागादेः अर्थभावनायामिव।

भानमुपगन्तव्यम् । यत्पदं विधिवाक्ये न श्रूयते, तत्पदं [1]कल्पनीयमित्युक्तमेव । अत्रावान्तरबोधे अर्थभावनाया [2]फलकत्वभानेऽपि महावाक्यार्थबोधे तन्न भासते, प्रयोजनाभावात् ।

---

अर्थभावनाविशेष्यकावान्तरबोधानन्तरं विनैव शब्दभावनाविशेष्यकावान्तरबोधं महावाक्यार्थबोधः इति निरूपणम्

अथ वा, प्रथममुपदर्शितांशत्रयविशिष्टार्थभावनाविशेष्यक [3]एव अवान्तरबोधः । [4]तदुत्तरं शब्दभावनायामुपदर्शिताकाङ्क्षायामुत्प(त्या)[न्नाया] मुपदर्शितांशत्रयविशिष्टार्थभावनाविशेष्यक निरुक्तशब्दभावनान्वविशिष्ट प्रवर्तनाविषयत्वविषयकमहावाक्यार्थबोध उत्पद्यते । न तु शब्दभावनाविशेष्य-

---

1 कल्पनीयं — अध्याहर्तव्यम् ।

2 फलकत्वेति — स्वर्गादिफलकत्वेत्यर्थः ।

3 एवेति—अनेन शब्दभावनाविशेष्यकावान्तरबोधस्य व्यवच्छेदः ।

4 तदुत्तरमिति — लिङ्त्वावच्छिन्ननिरूपितविशेषशक्त्योपस्थितायामिति शेषः ।

कावान्तरबोधोऽपि प्रयोजनाभावात् । मध्ये तथा बोध-कल्पने गौरवाच्च । अत्र विषयत्वं [1]जन्यत्वम् । तदैव फलाकाङ्क्षानिवृत्तेरिति ।

अत्र महावाक्यार्थबोधे अर्थभावनायां स्वर्गादिफलकत्व-भानं तु घटेन जलमाहरेत्यादौ [2]छिद्रेतरत्वादिवत् अन्वय-प्रयोजकरूपवत्त्वरूपयोग्यताविधया । अर्थभावनायां प्रवर्तना-विषयत्वान्वये [3]तस्य तादृशयोग्यतात्वात् ।

---

1 जन्यत्वमिति — प्रयोज्यत्वमित्यर्थः । इदमपि पारिभाषिकमेव ।

2 छिद्रेतरत्वादिवदिति — छिद्रेतरत्वोपस्थापकपदाभावेऽपि घटकरणकजलाहरणविषयकशाब्दबोधे घटगतछिद्रेतरत्वज्ञानस्य योग्यताज्ञानविधया हेतुत्वात् तद्बलेन शाब्दबोधे घटे छिद्रेतरत्वं भासते । जलाहरणकरणत्वस्य सच्छिद्रे असंभवेन छिद्रेतरत्वस्य करणत्वान्वयप्रयोजकत्वम् । योग्यता च अन्वयप्रयोजकरूपवत्त्वम्, इत्येतन्मतं बोध्यम् ।

3 तस्य — स्वर्गादिफलकत्वस्य ।

## अर्थभावनानिष्ठस्वर्गफलकत्वज्ञानस्य योग्यताज्ञानविधया शाब्दहेतुत्वे पक्षधरमिश्रग्रन्थविरोधशङ्का, तत्परिहारश्च

अथ, अन्वयप्रयोजकरूपवत्त्वरूपयोग्यताज्ञानविधया अर्थभावनानिष्ठस्वर्गादिफलकत्वज्ञानस्य तत्र हेतुत्वे, [1]"अभिधापि न तत्त्वेन ज्ञाता, स्वरूपसती वा हेतुः अतिप्रसङ्गादिति, प्रवर्तनात्वेन ज्ञाता । न च निष्फले दुःखैकफले वा कर्मणि सा [2]तथा ज्ञातुं शक्यते । अपितु [3]भावनात्वेन ज्ञाता । न च भाव्यानुपस्थितौ [4]तत्संभवः । न च क्रिया भाव्या, कष्टत्वादिति [5]समभिव्याहृतफलं प्रति [6]भावनात्वेन ज्ञाता ।" इति पक्षधरमिश्रग्रन्थासंगतिः । तेन ग्रन्थेन प्रवर्तनात्वेनाभिधान्वये अभिधागतस्वर्गादिफलजनकत्वलक्षणान्वयप्रयोजकरूपवत्त्वरूपयोग्यताज्ञानस्य हेतुताया लाभादिति चेन्न ।

---

1 अभिधापि — लिङर्थशब्दभावनापि ।
2 तथा — प्रवृत्त्यनुकूलव्यापारत्वरूपप्रवर्तनात्वेन ।
3 भावनात्वेन — इष्टस्य भाव्यस्यानुकूलव्यापारत्वेन ।
4 तत्संभवः — भावनात्वज्ञानसंभवः ।
5 समभिव्याहृतफलं — समभिव्याहृतेन स्वर्गकामादिपदेनोपस्थापितं स्वर्गादिफलम् ।
6 भावनात्वेन — अनकूलव्यापारत्वेन ।

तत्र, 'भावनात्वेन ज्ञाता' इत्यनन्तरं, 'या तत्र' इति पूरयित्वा, 'सा तथा ज्ञातुं शक्यते' इत्यनेन सहान्वयाङ्गीकारेण, [1]यत्रार्थभावनात्वज्ञान तत्र सा–प्रवर्तना प्रवर्तनात्वेन ज्ञातुं शक्यते इत्यर्थकस्य [2]तथाविधग्रन्थस्योक्तार्थे एव विश्रामेणासंगतेरभावात् । न चात्रार्थभावनायाः अप्रस्तुतत्वेन कथमुक्तार्थलाभ इति वाच्यम् । 'दुःखैकफले कर्मणि' इत्यत्र [3]कर्मपदस्यार्थभावनार्थकत्वेन तस्याः प्रस्तुतत्वात् ।

एवं, प्रवर्तकज्ञानसंपत्त्यर्थमपि तद्ज्ञानमावश्यकम् । यागादेः निष्फलत्वज्ञानकाले प्रवृत्तिवारणाय स्वकरणकत्वसंबन्धेन यागादिविशिष्टायामर्थभावनायामिष्टसाधनताज्ञानस्य

---

1 यत्रेत्यादि — भावनात्वेन ज्ञाता या, तत्र सा तथा ज्ञातुं शक्यते इति योजनावाक्यम् । स्वर्गादिफलकत्वेन ज्ञाता या अर्थभावना, तत्र-तस्यां भावनायां तथा-प्रवर्तनात्वेन अनकूलत्वपर्यवसितेन सा–अभिधा ज्ञातुं शक्यते इति वाक्यार्थो बोध्यः ।

2 उक्तार्थे — अर्थभावनानिष्ठस्वर्गादिफलकत्वज्ञानस्य योग्यताज्ञानविधया शब्दबोधहेतुत्वे ।

3 कर्मपदस्येत्यादि — स्वर्गोत्पत्त्यनुकूलव्यापारसमूहः अर्थभावना । तत्र यागादि कर्म घटकमिति यागकरणकत्वं–यागघटितत्वरूपमिति पूर्वं कमनुसन्धेयम् ।

हेतुतायाः भट्टमतसिद्धत्वात् । यागादिविशिष्टभावनायामिष्टसाधनताज्ञानकाले, [1]विशेषणीभूतयागेऽपि इष्टसाधनताज्ञानस्यावश्यकतया, [2]तथाविधेष्टसाधनताज्ञानकाले यागादौ निष्फलत्वज्ञानासंभवात् । न चैवं सति न्यायमताविशेष इति वाच्यम् । न्यायमते क्रियागतेष्टसाधनताज्ञानस्य हेतुतया विशेषसंभवात् ॥

---

## मिश्रोक्तिमवष्टभ्य, अर्थभावनागतेष्टसाधनताज्ञानं न भट्टमते प्रवर्तकमिति केषांचिन्मतनिरूपणम्

केचित्तु, अर्थभावनागतेष्टसाधनताज्ञानं न भट्टमते प्रवृत्तिहेतुः । अपि तु अभिधागतेष्टसाधनताज्ञानम् ।

---

1 विशेषणीभूतेति — विशेष्यान्वय्यन्वयित्वे एव विशेषणत्वमिति यागविशेष्य—अर्थभावनान्वयीष्टसाधनतान्वयस्य यागे आवश्यकत्वादिति भावः ।

2 तथाविधेष्टसाधनताज्ञानकाले — यागविशिष्टार्थभावनागतेष्टसाधनताज्ञानकाले ।

अत एव पक्षधरमिश्रैरप्युक्तम्, 'क्रियागतेष्टसाधनत्व न विध्यर्थः, अपि तु अभिधागतमिति [1]विशेषः' इति। [2]अन्यथा तेषां [3]तत्र विध्यर्थत्वकथनस्या[4]संगतेरित्याहुः ॥

---

उक्तमतनिरासः, मिश्रग्रन्थार्थकथनं च

तन्न। तथा सति क्रियायां निष्फलत्वज्ञानकाले प्रवृत्तिवारणासंभवात्। अर्थभावनाविशेष्यकेष्टसाधनताज्ञानहेतुत्वे तु तद्वारणप्रकारस्यो[5]क्तत्वात्।

---

1 विशेष इति — न्यायमतादित्यादिः।

2 अन्यथा — अर्थभावनागतेष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वे।

3 तत्र — अभिधागतेष्टसाधनत्वे।

4 असंगतेरिति — प्रवर्तकज्ञानसंपत्त्यर्थमेव विधिवाक्यप्रयोगादिति भावः।

5 उक्तत्वादिति — यागादिविशिष्टार्थभावनायामिष्टसाधनताज्ञानकाले विशेषणीभूतयागेऽपि इष्टसाधनताज्ञानस्यावश्यकतया इति ग्रन्थेनोक्तत्वादित्यर्थः।

न चैवं सति 'अभिधागतम्' इति मिश्रग्रन्थ[1]विरोध इति वाच्यम् । लक्षणया तत्र अभिधापदस्यार्थभावनापरत्वात् । न चैवं सत्यपि मिश्रग्रन्थविरोधः, भट्टमते अभिधाया एव लिङर्थत्वेनार्थभावनागतेष्टसाधनत्वस्य [2]तदर्थत्वाभावादिति वाच्यम् । [3]तत्रत्य-विध्यर्थशब्दस्य विधिजन्यप्रतीतिविषयार्थकत्वेन, तथाविधशाब्दबोधे [4]फलकतासंबन्धेन स्वर्गादेरन्वये स्वर्गादिफलकत्वस्यापि निरुक्तविधिप्रतिपाद्यत्वेन विरोधाभावात् ।

---

1 विरोध इति — अभिधापदेन शब्दभावनाया एवोक्तत्वादिति भावः ।

2 तदर्थत्वाभावात् — लिङ्शक्यत्वाभावात् ।

3 तत्रत्येति — निरुक्तमिश्रग्रन्थघटकेत्यर्थः ।

4 फलकतासंबन्धेन — अनुकूलत्वपर्यवसितेन स्वफलकत्वसंबन्धेन ।

## अर्थभावनायां प्रवर्तनाविषयत्वभाने प्रयोजनकथनम्

अथैवं फलभावनात्वेनार्थभावनामात्रबोधोऽस्तु । अर्थभावनायां तथाविधप्रवर्तनाविषयत्वभानं निष्फलमिति चेन्न ।

तद्गोचरपरप्रयोज्यप्रवृत्तौ [1]तदनुकूल-परनिष्ठप्रवर्तनाज्ञानस्य कारणतायाः राजाज्ञादिस्थलानुरोधेनावश्यकतया [2]तत्संपत्त्यर्थमेव [3]तदुपगमात् । [न च ] तत्र तदुपगमेऽपि [4]कथं तादृशकारणसंपत्तिरिति वाच्यम् । कृ (त्य) [ति] साध्यताज्ञानविलम्बे यागादौ प्रवृत्तिवारणाय यागादिप्रवृत्तौ यागादिगोचरकृतिसाध्यताज्ञानस्य हेतुतया, तत्संपत्तये,

---

1 तदनुकूलेत्यादि —प्रवृत्त्यनुकूलतया परनिष्ठप्रवर्तनाया ज्ञानस्येत्यर्थः ।

2 तत्संपत्त्यर्थमेव— यागादिविषयकप्रवृत्तिकारणस्य यागानुकूलतया परनिष्ठप्रवर्तनाज्ञानस्य सिद्ध्यर्थमेव ।

3 तदुपगमात् — लिङर्थप्रवर्तनाविषयत्वभानोपगमात् ।

4 कथमिति — लिङर्थप्रवर्तनायां (अभिधायां) यागानुकूलत्वस्य विधिजन्यबोधे भानाभावादिति भावः ।

स्वजन्यत्व-स्वप्रयोज्यकृतिजन्यत्वान्यतररूप[1]स्वविषयत्वसंबन्धेन शब्दभावनायाः यागादिविशिष्टार्थभावनायामन्वयोपगमेन समानवित्तिवेद्यतया, शब्दभावनायामपि स्वजनककृतिप्रयोजकत्वरूप—यागाद्यनुकूलत्वबोधस्यावश्यकतया [2]तादृशकारणसंपत्तिः संभवति ।

---

प्रयाजादिसहकृतत्वस्य स्तुत्यर्थवादसहकृतत्वस्य च भानफलम्

न च तथापि अर्थभावनायां प्रयाजादिसहकृतत्वभाने मानाभाव इति वाच्यम् । प्रयाजादिसहकारिसन्देहसंपाद्यफलजनकत्वसन्देहाहितस्य प्रवृत्तिप्रतिबन्धकस्य (वृष) [द्वेष]

---

1 स्वविषयत्वसंबन्धेनेति — विषयत्वं, पारिभाषिकम् । अर्थभावनायां स्वजन्यत्वं, विशेषणीभूतयागे स्वप्रयोज्यकृतिजन्यत्वमिति विभागः ।

2 तादृशकारणसंपत्तिः — यागानुकूलतया लिङादिशब्दनिष्ठप्रवर्तना (अभिधा) ज्ञानस्य परप्रयोज्यप्रवृत्तिकारणस्य संपत्तिः ।

स्योत्सारणार्थं [1]तत्र तदन्वयोपगमात् । अत्रापि यागादिविशिष्टार्थभावनायां [2]तद्भाने यागादिविशेषणेऽपि तद्भानेनानुपपत्त्यभावात् ।

न चैवमपि प्रवर्तनायां स्तुत्यर्थवादसहकृतत्वस्य भानं किमर्थमिति वाच्यम् । बलवदनिष्टाननुबन्धित्वरूपप्रवर्तकज्ञानसंपत्त्यर्थं तदुपगमात् । न च स्तुत्यर्थवादेन कथं तत्संपत्तिरिति वाच्यम् । तद्घटकी[3]भूतयत्किञ्चित्पदस्य

---

1 तत्र तदन्वयोपगमात्— यागादिविशिष्टार्थभावनायां प्रयाजादिसहकृतत्वभानोपगमात् ।

2 तद्भाने — प्रयाजादिसहकृतत्वभाने । एवमग्रेऽपि ।

3 यत्किञ्चित्पदस्येति — शक्यसंबन्धो लक्षणा । अतः पदे एव लक्षणा, न वाक्ये इत्याशयेनेदम् । वस्तुतः मीमांसकमते बोध्यसंबन्धस्य लक्षणात्वात् अर्थवादवाक्येऽपि लक्षणा संभवति ।

[1]प्राशस्त्यरूप–बलवदनिष्टाननुबन्धित्वे लक्षणोपगमात् । अत एवार्थवादानां [2]स्वार्थे अप्रामाण्यमिति सिद्धान्तः ।

न च तथापि स्वकरणकत्वसंबन्धेन तत्र लिङ्शब्दनिरूपितशक्तिज्ञानभाने किं मानमिति वाच्यम् । करणाकाङ्क्षाबलेन तत्र तद्भानात् ।

---

1 प्राशस्त्यरूपेति — अर्थवादबोध्यं प्राशस्त्यं न गुणवत्त्वरूपम् । गुणत्वस्य निर्वक्तुमशक्यत्वात् । नापि वायोः क्षेपिष्ठत्वादिकं गुणः तज्ज्ञानस्य प्रवृत्तिकारणत्वाभावात् । किन्तु बलवदनिष्टाननुबन्धित्वम् । अनिष्टे बलवत्त्वं बलवद्द्वेषविषयत्वम् । यागजन्ये आन्तरालिकदुःखे प्राचीनकर्मवशात् यदा बलवान् द्वेषः, तदा न यागस्य बलवदनिष्टाननुबन्धित्वम् । अत एव तदा तज्ज्ञानाभावान्न यागे प्रवर्तते । तथाच विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वरूपं प्राशस्त्यमर्थवादैः बोध्यते । इति मीमांसकसिद्धान्तोऽनुसन्धेयः । स्पष्टश्चायमर्थः भाट्टरहस्ये ।

2 स्वार्थे — अर्थवादवाक्यबोध्ये ।

पक्षधरमिश्राणां शब्दभावनामुख्यविशेष्यकबोध एव संमतः
इति निरूपणम्

इदमत्रावधेयम् । पक्षधरमिश्राणां शब्दभावनाविशेष्यकार्थभावनाप्रकारकबोध एव संमतः । तथा सत्येव पूर्वोपदर्शित (तदर्थस्य) [1][तद्ग्रन्थस्य] 'भावना'वेन ज्ञाता' इत्यनन्तरं 'या तव' इति पूरणं विनैव, 'अभिधागतमिति विशेषः' [2]इत्यन्यत्र अभिधापदस्यार्थभावनायां लक्षणां विनैव यथाश्रुतग्रन्थस्य स्वरसत एव निर्वाहात् । न च शब्दभावनायां स्वर्गादिफलकत्वस्याभाने कथं स्वरसतः तन्निर्वाह इति वाच्यम् । स्वर्गादिफलकत्वविशिष्टायाः स्वविषयकत्वसंबन्धेन यागविशिष्टाया भावनायाः, [2]जनकत्वरूपविषयितासंबन्धेन शब्दभावनायामन्वये, विशिष्टान्वयमर्यादया अन्वयप्रयोजकरूपवत्त्वरूपयोग्यताविधया स्वर्गादिफलकत्वलाभसंभवात् । अर्थ-

---

1 तद्ग्रन्थस्य— 'अपि तु भावनात्वेन ज्ञाता' इति मिश्रग्रन्थस्य ।

2 अन्यत्रेति — मिश्रग्रन्थे इति शेषः ।

3 विषयितासंबन्धेनेति — विषयितापदं जनकतायां पारिभाषिकम् । एवमन्यत्रापि ।

भावनाविशेष्यकबोधाङ्गीकारे उपदर्शितरीत्या [1]पूरण—लक्षणयोरनुसरणक्लेशः स्फुट एव ।

[1]एवमेतन्मते शब्दभावनायां यागाद्यनुकूलत्वबोधे यागादौ कृतिसाध्यताज्ञानसंपत्तिः उक्तरीत्या समानवित्तिवेद्यतानुसरणं विनैव निर्वहति । शब्दभावनायां यागादिविशिष्टार्थभावनायाः [3]स्वजनकत्व—स्वजनककृतिप्रयोजकत्वान्यतररूप—स्वविषयत्वसंबन्धेनान्वयोपगमेन शब्दभावनायां स्वजनककृतिप्रयोजकत्वरूप—यागाद्यनुकूलत्वबोधस्य स्वरसत एव

---

1 पूरणलक्षणयोः — भावनात्वेन ज्ञाता इति मिश्रग्रन्थे 'या तत्र' इति पदद्वयपूरणस्य, 'अभिधागतम्' इत्यत्राभिधापदस्य शब्दभावनावाचकस्य अर्थभावनायां लक्षणयाश्च ।

2 एतन्मते — अर्थभावनाप्रकारक शब्दभावनाविशेष्यकबोधाङ्गीकर्तृमते ।

3 स्वजनकत्वेति — स्वजनकत्वं अर्थभावनायाः. स्वजनककृतिप्रयोजकत्वं विशेषणीभूतयागस्य शब्दभावनायां संबन्धः इति विभागः ।

लाभात् । [1]उक्तमते च समानवित्तिवेद्यत्वानुसरणक्लेशः, शाब्दबोधे [2]समानवित्तिवेद्यत्वाभावेन तदनुसरणेऽप्यनिर्वाहश्च स्फुट एव ।

एतन्मते, यागादौ सफलत्व–बलवदनिष्टाननुबन्धित्वयोर्लाभोऽपि [3]विशिष्टान्वयमर्यादया सुघट एव ।

न चैतन्मते विध्युपरक्ता भावना लिङर्थः इति [4]सिद्धान्तविरोध इति वाच्यम् । प्रकृते विधित्वस्य प्रवर्तकज्ञानप्रकारत्वरूपतया, उक्तमते शब्दभावनायामिव एतन्मतेऽप्यर्थ-

---

1 उक्तमते — अर्थभावनाविशेष्यकबोधमते ।

2 समानवित्तिवेद्यत्वाभावेनेति — शाब्दबोधे विशेषण विशेष्यभावनियामकसामग्र्याः क्लृप्तत्वादिति भावः ।

3 विशिष्टान्वयमर्यादयेति — यागविशिष्टभावनायां स्वर्गादिफलकत्वान्वये विशेषणयागेऽपि तदन्वयादिति भावः ।

4 सिद्धान्तविरोध इति-विधिः— अभिधा (शब्दभावना) तदुपरक्ता-तत्प्रकारकप्रतीतिविशेष्यभूता भावना-अर्थभावना लिङर्थः इति सिद्धान्तार्थादिति भावः ।

भावनायां [1]तत्सत्त्वेनाविरोधात् । विध्युपरक्तेत्यस्य [2]विधिसंबद्धेत्यर्थकतामुपेत्य तादृशसिद्धान्ताविरोधस्य पूर्वमुपदर्शितत्वाच्च ।

एवमेतन्मते, लिङर्थत्वं लिङ्त्वावच्छिन्न (शब्द) [शक्य] त्वरूपं यथाश्रुतमेव । उक्तमते तु लिङ्जन्यप्रतीतिविषयत्वरूपं वाच्यमिति वैषम्यमपि स्फुटमेवेति दिक् ।

— —

## शक्तिचतुष्टयम्

अत्र भट्टमते लिङ्त्वावच्छिन्ननिरूपितं शक्ति चतुष्टय बोध्यम् । एका, शब्दभावनात्वज्ञानानुकूला । तज्ज्ञान-

---

1 तत्सत्त्वेन — विधित्वसत्त्वेन । तथा च विधिना—अर्थं भावनया उपरक्ता-विशेषिता तत्प्रकारकप्रतीति विशेष्यभूता भावना -शब्दभावना लिङर्थः इति सिद्धान्तार्थ इति भावः ।

2 विधिसंबद्धेति — शब्दभावनारूपविधौ विशेषणतया संबद्धा अर्थभावना इति तदर्थवर्णनादित्यर्थः ।

स्योत्थापकत्वेन शब्दभावनात्वविशिष्टे [1]प्रवर्तनात्वज्ञानानुरोधेन चावश्यकत्वात् । अपरा च [2]प्रवृत्त्यनुकूला अभिधाख्या । साक्षात् प्रवृत्त्यजनकेन शाब्दप्रवृत्तिजननव्यापारत्वेन तस्या आवाश्यकत्वात् । अपरा च [3]अभिधात्वज्ञानानुकूला । तज्ज्ञानस्याप्यनुभवसिद्धत्वादिति [4]शक्तिचतुष्टयमिति वदन्ति ॥

---

1 प्रवर्तनात्वज्ञानानुरोधेनेति — प्रवर्तनात्वेन भावनात्वेन च ज्ञातैवाभिधा प्रवृत्तिहेतुः । अतः प्रवर्तनात्वज्ञानानुकूला, भावनात्वज्ञानानुकूला चेति शक्तिद्वयमप्येकीकृत्योक्तं बोध्यम् ।

2 प्रवृत्त्यनुकूलेति — परप्रयोज्यप्रवृत्तौ परनिष्ठस्य व्यापारस्य (प्रवर्तनारूपस्य) प्रवृत्त्यनुकूलत्वम् । स एव व्यापारः अभिधेति प्रवर्तनेति चोच्यते ।

3 अभिधात्वज्ञानानुकूलेति—लिङादिशब्दनिष्ठाभिधायाः लिङादिशब्दाद्बोधोपस्थितेः शाब्दबोधौपयिकतया तज्जनकीभूता पदपदार्थयोः (लिङादिशब्द—अभिधयोः) वाच्यवाचकभावसंबन्धरूपेयं शक्तिः ।

4 शक्ति चतुष्टयमिति — अत्र शक्तिपदं न पदतदर्थ संबन्धमात्रपरम् । परन्तु तादृशसंबन्ध-सामर्थ्य व्यपारादिसाधारणार्थबोधकमिति ज्ञेयम् ।

## उक्तमीमांसकमतनिरासः

अत्रोच्यते । [1]शक्तिभिन्नस्य अभिधापदवाच्यत्वे मानाभावेन कुत्र तथा शक्तिकल्पनम् । न च परप्रयोज्यप्रवृत्तिं प्रति परनिष्ठप्रवर्तनाज्ञानस्य हेतुतायाः राजाज्ञादिस्थलानुरोधेनावश्यकतया, विधिनिष्ठप्रवर्तनाज्ञानं विना न प्रवृत्तिरिति, तदुपपत्त्यर्थं विधिनिष्ठः अभिधाख्यातिरिक्तपदार्थः अवश्यं विधिशक्यः उपेय इति वाच्यम् । स्वेच्छाधीनप्रवृत्तिस्थले अवश्यक्लृप्त—स्वेष्टसाधनताज्ञानहेतुतयैव राजाज्ञादितः पित्रादिशिरश्छेदादौ पुत्रस्ये[2]ष्टसाधनताज्ञानकल्पनेन प्रवृत्तिनिर्वाहे तादृशकार्यकारणभावे मानाभावात् ।

---

1 शक्तिभिन्नस्येति — शाब्दबोधौपयिकपदार्थस्मृतिजनक-पद-तदर्थसंबन्धात्मकवृत्तिरेव शक्तिरिति अभिधेति च व्यवह्रियते इति भावः ।

2 इष्टसाधनताज्ञानकल्पनेन — राजाज्ञाकरणात् राजाधीन-स्वेष्टसाधनताज्ञान कल्पनेन ।

अथ तथापि [1]व्यापारभिन्नस्य कारणस्य परसमवेतव्यापारजनकत्वं स्वनिष्ठव्यापारद्वारैव इति नियमः(सत्त्वात्) [स्वनिष्ठ] स्पन्दादिद्वारा चक्रादिनिष्ठभ्रमिजनके दण्डादावधारितः इति, तादृशनियमबलेन लिङः अस्मदादिसमवेतप्रवृत्तिजनकत्वं स्वनिष्ठाभिधारूपव्यापारद्वारैव निर्वहतीति लिङ्निष्ठाभिधाख्यपदार्थसिद्धिरावश्यकीति चेन्न ।

अनुमितिकरणव्याप्तिज्ञानादौ [2]अस्मदादिसमवेतपरामर्शादिजनके स्वनिष्ठव्यापारद्वारकत्वाभावेन व्यभिचारात् तादृशनियमस्यैवासिद्धेः । न च परसमवेतव्यापारजनकत्वं स्वव्यधिकरणव्यापारजनकत्वरूपं नियमघटकमिति न व्याप्ति-

---

1 व्यापारभिन्नस्येति — चक्रनिष्ठभ्रमणव्यापारजनके दण्डनिष्ठस्पन्दरूपव्यापारे व्यापारशून्ये व्यभिचारवारणायेदं विशेषणं बोध्यम् ।

2 अस्मदादिसमवेतेति — व्याप्तिज्ञानभिन्ने अस्मदाद्यात्मनि समवेतेत्यर्थः ।

ज्ञानादौऽव्यभिचारः, असमदादिसमवेतपरामर्शस्य [1]तद्व्यधिकरणत्वाभावादिति वाच्यम् । तथापि गयाश्राद्धादौ स्वव्यधिकरण[2]पित्रादिनिष्ठादृष्टरूपव्यापारजनके स्वनिष्ठव्यापारद्वारकत्वाभावेन व्यभिचारस्य दुर्वारत्वात् । अनुकूलतर्काभावेनोपदर्शितनियमस्याप्रयोजकत्वाच्च । एवमुक्तरीत्येष्टसाधनताज्ञानस्य प्रवृत्तिसामान्ये हेतुत्वावधारणेन आवश्यकेष्टसाधनताज्ञानविषयेष्टसाधनत्वस्यैव विध्यर्थ(त्वात्तथाच्च) [त्वौचित्याच्च] ॥

---

### आप्ताभिप्रायो विध्यर्थः इति आचार्यमतनिरासः

[3]एतेन, (सा) [आप्ता] भिप्रायो विध्यर्थः । स

---

1 तद्व्यधिकरणत्वाभावादिति — व्याप्तिज्ञानव्यधिकरणत्वाभावादित्यर्थः । चक्रनिष्ठस्य भ्रमणव्यापारस्य तु दण्डव्यधिकरणत्वमस्तीति भावः ।

2 पित्रादि निष्ठेति—पुत्रकृतगयाश्राद्धफलस्य पितरि जननात् पुत्रकृतश्राद्धजन्यादृष्टमपि (व्यापारः) पितरि जायते । अतः पुत्रनिष्ठश्राद्धव्यधिकरणत्वं अदृष्टस्य व्यापारस्य बोध्यम् ।

3 एतेन — प्रवृत्तिसामान्ये इष्टसाधनताज्ञानस्य हेतुत्वेनावश्यकतादृशज्ञानविषयेष्टसाधनत्वस्यैव लिङर्थत्तौचित्येन ।

चेच्छा (द्विषय) [विशेष] रूपः प्रवर्तनात्मकश्च । इच्छा च लोके पुरुषनिष्ठा । वेदे (त्वाश्रय) [त्वीश्वर] निष्ठैवेति, [1]आचार्यमतमपि परास्तम् ॥

---

## अभिनवभाट्टमीमांसकमतनिरूपणम्

[2]अभिनव भाट्टमीमांसकाः— इष्टसाधनतारूपा प्रवर्तना लिङादिवाच्या इत्यस्यापि [3]वक्ष्यमाणदोषदुष्टतया अयमत्र प्रवर्ततामित्याकारक—प्रवृत्त्युद्देश्यकेच्छात्मकप्रेरणारूपा प्रवर्तना लिङादिवाच्या ।

---

1 आचार्यमतं — उदयनाचार्यमतम् ।

2 अभिनवेति — खण्डदेवाचार्या इत्यर्थः ।

3 वक्ष्यमाणदोषेति — 1) व्युत्पत्तिपञ्चकल्पन गौरवम्, 2) आचार्यादिः प्रवर्तकत्वव्यवहारानुपपत्तिः 3) स्वतः प्रवृत्तिदशायां लिङन्तप्रयोगापत्तिः 4) आप्तेच्छाहेतुकानुमानलभ्यत्वमिष्ट साधनत्वस्येति दोषाः वक्ष्यन्ते इति बोध्यम् ।

## न्यायमते व्युत्पत्ति भेदकल्पनागौरवम्

तथाहि— इष्टसाधनताया लिङो वाच्यत्वेऽपि[पचति] न पचतीत्यत्र कृतेः प्रथमान्तपदार्थ—नञर्थयोरन्वयाङ्गीकारनिमित्तं [1]व्युत्पत्तिद्वयं, न पचति, न पचेत् इत्यत्र [2]नञ्श्रवणतुल्यत्वेऽपि प्रथमान्तपदार्थ-धात्वर्थमुख्यविशेष्यकबोधाङ्गीकारेण [3]व्युत्पत्ति-द्वयं, 'नातिरात्रे' इत्यादिवाक्ये च नञर्थे विध्यर्थेष्टसाधनतान्व-याङ्गीकारात् व्युत्पत्तिः स्वतन्त्रेति [4]व्युत्प (त्र) [त्ति] पञ्चक-कल्पने गौरवम् ।

---

1 व्युत्पत्तिद्वयम्-नञसमभिव्याहारे आख्यातार्थकृतिः प्रथमान्त-पदार्थे अन्वेति, नञ् समभिव्याहारे, सा प्रथमान्तार्थान्वयिनि नञर्थे अभावे अन्वेति इति च व्युत्पत्तिद्वयम् ।

2 नञ् श्रवणतुल्यत्वेऽपीति – नञ् समभिव्याहारे सर्वत्र नानगत-व्युत्पत्तिरिति भावः ।

3 व्युत्पत्तिद्वयम् — लडन्तसमभिव्याहारे आख्यातार्थकृत्यन्वितः नञर्थः अभावः प्रथमान्तपदार्थे अन्वेति, लिङाद्यन्तसमभिव्या-हारे लिङर्थबलवदनिष्टाननुबन्धित्वान्वितः नञर्थः अभावः धात्वर्थे अन्वेति इति च व्युत्पतिद्वयम् ।

4 व्युत्पत्तिः स्वतन्त्रेति — लिङाद्यन्तसमभिव्याहारेऽपि नञर्थः न लिङर्थेनान्वितः धात्वर्थे अन्वेति, परन्तु धात्वर्थेनान्वितः लिङर्थेष्टसाधनत्वस्य विशेष्यः इति विलक्षणा व्युत्पत्तिः विकल्प-स्थले (विहितनिषेधस्थले) इति भावः ।

## स्वमते व्युत्पत्तिभेदाकल्पनेन लाघवम्

निरुक्तप्रेरणाया लिङ्वाच्यत्वे च पचेदित्यत्र पाकभावनायां स्वप्रयोज्यत्वसंबन्धेन लिङर्थप्रेरणान्वयात्, न पचेदित्यत्रापि स्वप्रयोज्याभावप्रतियोगित्वसंबन्धेन पाकभावनायामेव प्रेरणान्वयान्न [1]व्युत्पत्तिभेदकल्पनम् । पचतीत्यत्र च चैत्रादेः कृतौ आधेयत्वसंबन्धेनेव, न पचतीत्यत्रापि स्वाश्रिताभावप्रतियोगित्वसंबन्धेन कृतावेवान्वयान्न [2]तत्कल्पनमिति लाघवम् ।

---

## न्यायमते आचार्यादेः प्रवर्तकत्वानुपपत्तिः

किञ्च, आचार्याद्युक्त—गामानयेत्यादिवाक्यजन्येष्टसाधनताज्ञानादेव शिष्यादेः प्रवृत्तौ आचार्यप्रेरितोऽहं गामानया-

1 न व्युत्पत्तिभेदकल्पनमिति — न्यायमते नञ्समभिव्याहारतदभावस्थलभेदेन लिङर्थस्य धात्वर्थोऽन्वयिनि नञर्थे, धात्वर्थे चोन्वयभेदव्युत्पत्तिकल्पनमिव नास्मन्मते व्युत्पत्तिभेदकल्पनम् । संबन्धवैलक्षण्येऽपि उभयत्रापि लिङर्थस्य कृतावेवान्वयव्युत्पत्तेरिति भावः ।

2 न तत्कल्पनमिति — न व्युत्पत्तिभेदकल्पनमित्यर्थः ।

मीत्या(दावा)चार्यादेः प्रवर्तकत्वव्यवहारानुपपत्तिः। इष्टसाधनतारूपप्रवर्तनायाः आचार्यादावसत्त्वेन प्रवर्तनाश्रयत्वरूपप्रवर्तकत्वाभावात्। [1]अस्मन्मते च प्रेरणारूपप्रवर्तनाश्रयत्वस्य [2]तत्र सत्त्वात् न तद्व्यवहारा[नुप]पत्तिः। न च प्रवृत्तिजनकेष्टसाधनताबोधकलिङाद्युच्चारयितृत्वात् [3]तस्य प्रवर्तकत्वव्यवहार इति वाच्यम्। तथासति राजप्रेरितपदातेः तादृशलिङाद्युच्चारयितृत्वेन प्रवर्तकत्वापत्तौ, पदातिप्रेरितोऽहं न गामानयामि, किन्तु राजप्रेरितः इति पदातौ प्रवर्तकत्वाभावव्यवहारानापत्तेः। न चान्याप्रेरितत्वे सति [4]तादृशलिङाद्युच्चारयितृत्वं प्रवर्तकत्वमिति नोक्तदोष इति वाच्यम्। तथा सति

---

1 अस्मन्मते च — अयमत्र प्रवर्ततामित्याकारिकाया आप्तेच्छारूपप्रेरणाया लिङर्थतामते च।

2 तत्र — आचार्यादौ।

3 तस्य — आचार्यादेः।

4 तादृशेति — प्रवृत्तिजनकेष्टसाधनताबोधजनकेत्यर्थः।

पिशुनप्रेरिते राज्ञि [1][प्रवर्तकतानापत्तेः] ।

न्यायमते स्वतः प्रवृत्तिदशायां लिङन्तप्रयोगस्य प्रामाण्यापत्तिः

किञ्च, भवन्मते येन स्वत एव पाकादाविष्टसाधनत्वादि बुद्ध्वा प्रवृत्तम्, तस्य [पाक] वर्तमानतादशायां चैत्रः पचेदिति प्रयोगापत्तिः । इष्टसाधनत्वादिविशिष्टपाकानुकूलकृतिमत्त्वस्य चैत्रे अबाधितत्वात् । [2]मन्मते तु [3]तादृशप्रवृत्तेः प्रेरणा-योज्यत्वाभावाद्विषयबाधेनाप्रामाण्योपपत्तिः ।

---

1 प्रवर्तकतानापत्तेरिति — तथाच्चायमत्र प्रवर्ततामितीच्छाश्रय-त्वमेव प्रवर्तकत्त्वम् । तच्चाचार्यादौ न्यायनये नोपपद्यते इति भावः ।

2 मन्मते तु — प्रेरणाया विध्यर्थं तावादिमते तु ।

3 तादृशप्रवृत्तेः — अप्रयोज्यायाः स्वाभाविकप्रवृत्तेः ।

## स्वमते प्रेरणाप्रयोज्यप्रवृत्तिदशायां लिङन्तप्रयोगापत्तिः, तद्वारणं च

अथ [1]भवन्मतेऽपि, यत्रान्यप्रेर (णाज्ञानं तच्च) [णया चैत्रस्य प्रवृत्तिः, तत्र पाकवर्तमानतादशायां चैत्रः पचेत् इति प्रयोगस्य प्रामाण्यापत्तिः, पाकानुकूलायाः चैत्रनिष्ठकृतेः प्रेरणाप्रयोज्यत्वस्याबाधादिति चेन्न ।

स्वज्ञानजन्यानुमितिप्रयोज्यत्वसंसर्गेणाख्यातार्थप्रवृत्तौ प्रेरणायाः प्रकारता स्वीक्रियते । तत् प्रेरणाज्ञानं]तत्तत्प्रवृत्ति-प्राक्कालवृत्ति—तत्तल्लिङादि पदज्ञानोत्पादितव्यक्तत्वात्मना संबन्धे प्रवेश्यते इति [2]तादृशव्यक्तिजन्येष्टसाधनत्वानुमितिजन्यत्व-

---

1 भवन्मतेऽपि — लिङर्थप्रेरणायाः प्रयोज्यतासंसर्गेण आख्यातार्थं कृतावन्वयवादिमतेऽपि ।

2 तादृशव्यक्तीति — तथा च लिङर्थः प्रेरणा स्वविषयकतज्ज्ञान-जन्यानुमिति जन्यत्वस्वरूपयोग्यत्वसंबन्धेन आख्यातार्थभावनायां (कृतौ) अन्वेति । प्रेरणाज्ञानव्यक्तेः परिचायकं रूपं, तत्तत्प्रवृत्ति-प्राक्कालीनं यत् तत्तल्लिङादिपदज्ञानं तदुत्पादितत्वम् । आचार्य-वाक्यघटकलिङादिपदेन जातं यत्प्रेरणाज्ञानं प्रवृत्तिपूर्वकालिकं, तत्प्रयोज्यप्रवृत्तिरेव वाक्यार्थः । प्रवृत्तिवर्तमानतादशायां आपाद्यमानवाक्यघटक तल्लिङादिपदज्ञानाधीन प्रवृत्तिप्राक्कालीन-प्रेरणाज्ञानव्यक्तिप्रयोज्यतायाः तस्यां कृतौ बाधात् न तादृशप्रयोग-पत्तिरिति भावः ।

स्वरूपयोग्यत्वं, लिङर्थप्रेरणाया भावनान्वये संसर्गः इति तादृशसंसर्गेण लिङर्थप्रेरणावत्त्वस्य भावनावर्तमानतादशायां [1]तस्यां बाधात् न पचेदिति प्रयोगापत्तिः ।

---

### प्रेरणयाआक्षेपलभ्यमिष्टसाधनत्वं न लिङर्थः

किञ्च, अन्यलभ्यत्वादिष्टसाधनत्वस्य न लिङ्वाच्यत्वम्, प्रवृत्तिविषये यागादौ इष्टसाधनत्वानुमानेनैवेष्टसाधनताबोधसंभवात् । भवति हि अयमत्र प्रवर्ततामित्याकारकाप्तेच्छाविषयत्वमिष्टसाधनत्वव्याप्यम् । अतः [2]तेन तदनुमानम् । अलासुखे सुखत्वभ्रमेण, सुख एव वा सुखं मे जायतामित्युदासीनेच्छाविषयत्वेऽपि इष्टसाधनत्वाभावात् तत्र व्यभिचारवारणाय हेतावाकारकपर्यन्तानुधावनम् । प्रतारकतादृशेच्छा-

---

1 तस्यां – भावनायां-आख्यातार्थकृतौ ।

2 तेन तदनुमानम् — आप्तेच्छाविषयत्वेन धात्वर्थे इष्टसाधनत्वानुमानम् ।

विषये व्यभिचारवारणाय आप्तेति । अत्र इच्छाविषयत्वं, इच्छाविषयीभूतप्रवृत्तिविषयत्वं बोध्यम् । तेन प्रवृत्तौ, तदाश्रये पुरुषे इच्छाविषये इष्टसाधनत्वाभावेऽपि न व्यभिचारः । यागादावेव हेतुसत्त्वादिष्टसाधनत्वानुमानमिति वदन्ति ॥

---

## अभिनवभाट्टमीमांसकमतनिरासः
### व्युत्पत्तिभेदकल्पनगौरवं न दोषः

तदसत् । लाघवेन व्युत्पत्तिभेदकल्पनमनादृत्य, [1]संबन्धभेदमात्रमाश्रित्य पचति, न पचति इत्यादौ [2]समाना-

---

1 संबन्धभेदमात्रमाश्रित्येति –नञसमभिव्याहारे आधेयत्वं, नञः सत्त्वे स्वाश्रिताभावप्रतियोगित्वमिति चैत्रादेः भावनायां विभिन्नसंबन्धमाश्रित्येत्यर्थः ।

2 समानाकारेति – चैत्रवती पाककृतिरित्याकारकेत्यर्थः ।

कारबोधाङ्गीकारे, चैत्रः पचति, न पचति इत्यादि वाक्य-जन्यशाब्दबोधानन्तरं वर्तमानकालीनपाककृति—तदभावयोः चैत्रवृत्तित्वसंशयनिरासस्यानुभविकस्या[1]नुपपत्तेः । पाककृतिः कीदृशी इति प्रश्ने, चैत्रः पचति, न पचतीत्युत्तरयो[2]रौचित्यापत्तेश्च । [3]भवन्मतेऽपि संसर्गभेदेन व्युत्पत्तिभेदकल्पन-प्रयुक्तगौरवस्यावश्यकत्वाच्च ।

किञ्चैवं, चैत्रः पचति, चैत्रेण पच्यते इत्यादौ लाघवात् (तत्तद्व्यक्तीनां) [तत्तद्विभक्तीनां] तत्तदर्थसंसर्गकबोधजनने

1 अनुपपत्तेरिति— वर्तमानपाककृतित्वावच्छिन्ने चैत्रवृत्तित्वावगाहिनिश्चयस्यैव चैत्रवृत्तित्वसंशये, वर्तमानपाककृत्यभावत्वावच्छिन्ने चैत्रवृत्तित्वविषयकस्यैव निश्चयस्य तत्र चैत्रवृत्तित्वसंशये ग्राह्याभावज्ञानविधया विरोधित्वेन चैत्रवती पाककृतिः इति बोधस्याताद्दशस्य तादृशसंशयाप्रतिबन्धकत्वादिति भावः ।

2 औचित्यापत्तेरिति — चैत्रवती कृतिः इति वाक्यस्येव पचति, न पचति इति वाक्ययोरपि कृतौ जिज्ञासितचैत्रत्त्वरूपधर्मावच्छिन्नबोधकत्वेनौत्तरत्वमुचितं स्यादिति भावः ।

3 भवन्मतेऽपि — प्रेरणाया लिङर्थतावादिमतेऽपि ।

4 संसर्गभेदेनेति—संबन्धानां संबन्धत्वेन संसर्गतयाभानस्याप्रामाणिकत्वात् आधेयतात्वादिना विशिष्यैव कृतौ संसर्गतया भानात् नञः सत्वासत्वस्थलयोः आधेयत्व-स्वाश्रिताभावप्रतियोगित्वयोः विशिष्य निवेशं स्वीकृत्य, व्युत्पत्तिभेदस्वीकार अवर्जनीयः इति भावः ।

तात्पर्यग्राहकतामङ्गीकृत्य, चैत्रप्रकारक [1]क्रियाविशेष्यकैकरूप-बोधाङ्गीकारसंभवेन, प्रतिसमभिव्याहारं नामार्थसुबर्थयोः सुबर्थ-क्रिययोश्चान्वयनिर्वाहाय [2]व्युत्पत्तिभेदाङ्गीकारप्रयुक्तगौरवत्यागापत्तिः ।

[3]एतेन, पचेत्, न पचेत् इत्यत्रापि व्युत्पत्तिभेदकल्पनाभावप्रयुक्तलाघवोक्तिर्निरस्ता ।

---

1 क्रियाविशेष्यकेति — भावनाविशेष्यकेत्यर्थः ।

2 गौरवत्यागापत्तिरिति — नामार्थः सुबर्थे अन्वेति 'सुबर्थः क्रियायां (भावनायां) अन्वेति इति च व्युत्पत्तिभेदः तत्कल्पन-गौरवं च स्वीक्रियते अनुभवानुरोधात् मीमांसकैः । चैत्रादि-नामार्थस्य स्वकर्तृ कपाककरणकत्वादिसंबन्धेन, तण्डुलादि नामार्थस्य च स्वकर्मकपाककरणकत्वसंबन्धेन, एवंमितरविभक्ति-समभिव्याहारेऽपि नामार्थस्यैव तत्तद्विभक्त्यर्थ घटित परम्परा-संबन्धेन भावनायामन्वयः इत्येकव्युत्पत्तिकल्पने लाघव संभ-वेन व्युत्पत्तिभेदकल्पनगौरवाङ्गीकारः मीमांसकानामयुक्तः स्यादिति भावः ।

3 एतेन — अनुभवानुरोधात् व्युत्पत्तिभेदकल्पन गौरवस्य मीमांसकैरपि स्वीकारेण ।

पचेदिति शब्दजन्यबोधात्, प्रवर्तयति निवर्तयति वेति संशय[1]निरासासंभवाच्च । तादृशबोधादेव कृतिः प्रेरणावती न वेति संशयनिरासापत्तेश्च । कीदृशी कृतिः इति प्रश्ने, पचेत्, न पचेत् इत्यनयो[2]रुत्तरतापत्तेश्च ।

---

## आचार्यादेः प्रवर्तकत्व निर्वाहः

किञ्चेत्यादिनोक्ता आचार्यादेः प्रवर्तकत्वव्यवहारानुपपत्तिरप्यसंगता । स्वातन्त्र्ये सति प्रवृत्तिजनकेष्टसाधनताबोधजनकलिङाद्युच्चारयितृत्वस्यैव प्रवर्तकत्वरूपत्वात् । राज-

---

1 निरासासंभवाच्चेति — पचेदिति वाक्यादिव न पचेदिति वाक्यादपि प्रेरणावती पाककृतिरित्येव बोधाङ्गीकारादिति भावः । न च संबन्धविशेषभानेन निर्वाह इति शङ्कनीयम् । तथा सति संवन्धभेदेनव्युत्पत्ति भेदस्यापत्तेः ।

2 उत्तरतापत्तेरिति — न च लिङ्गविशेष विशिष्टकृतिविषयकप्रश्नस्य लिङ्गानालिङ्गितकृतिबोधकं तिङन्तं नोत्तरमिति वाच्यम् । प्रश्ने लिङ्गविवक्षायां तादृशोत्तरापत्तेर्दुर्वारत्वात् ।

प्रेरितपदातेः स्वातन्त्र्याभावात्, पिशुनप्रेरितराजादेः स्वातन्त्र्याच्चाप्रवर्तकत्व--प्रवर्तकत्वव्यवहारोपपत्तेः ।

---

प्रवृत्तेः वर्तमानत्वे लिङन्तप्रयोगवारणम्

पाकभावनावर्तमानतादशायां पचेदिति प्रयोगापत्तिरप्यसंगता ।

तादृशप्रयोगवारणे भवतां [1]यद्याग्रहः, तदा भावनानिष्ठस्य तत्तत्प्रवृत्ति प्राक्कालीनतत्तल्लिङादिपदज्ञानोत्तरत्वस्य तादृश-

---

1 यद्याग्रह इति —अन्यदीयवाक्यावोध्यप्रेरणाप्रयोज्य प्रवृत्तिप्राक्काले अन्यस्य पचेदिति वाक्यं प्रमाणतया यथा मीमांसकैः स्वीक्रियते । तथा पाकभावनावर्तमानतादशायामपि पचेदिति प्रयोगस्य प्रामाण्यं स्वीकर्तुमुचितमिति भावः ।

[1]प्रयोगोपाधित्वमङ्गीकृत्य, [2]स्वानुकूलत्व–स्वप्रतिपादकधातु-समभिव्याहृत तत्तत्प्रवृत्तिप्राक्कालीनतत्तल्लिङादिपदज्ञानोत्तरत्वोभयसंबन्धेन पाकस्य कृतावन्वयमङ्गीकृत्य वा [3]स वारणीयः ।

---

## इष्टसाधनत्वेनाक्षेपलभ्या प्रेरणा न लिङर्थः

प्रेरणयेष्टसाधनत्वस्याक्षेपेणान्यलभ्यत्वं, तस्य लिङ्वाच्यत्वाभावे प्रयोजकतया यदुपन्यस्तं, तदपि न सत् ।

---

1 प्रयोगोपाधित्वमिति — धानकर्मबोधकमपि धेनुपदं तादृशमहिषे न प्रयुज्यते । अतः तत्र गोत्वं प्रयोगोपाधिः । तद्वत् अत्रापाद्यमानलिङन्त प्रयोगोपाधिभूतस्य पाककृतिवर्तमानतादशायामभावात् न तथा प्रयोग इति भावः ।

2 खण्डदेवाचार्योक्तसरणिमनुसृत्यैव धात्वर्थस्य संबन्धविशेषेणाख्यातार्थकृतावन्वयस्वीकारेण भावनावर्तमानतादशायां लिङन्तप्रयोगं वारयति । स्वानुकूलत्वेत्यादिना — अत्र द्वितीयसंबन्धः कृतौवर्तमानतादशायां धात्वर्थस्य बाधित इति पचेदित्यस्य तदा न प्रामाण्यापत्तिरिति भावः ।

3 सः — प्रयोगः ।

इष्टसाधनत्वेन प्रेरणाया अप्याक्षेपसंभवेन प्रेरणाया अप्यन्यलभ्यतया लिङ्वाच्यत्वासंभवात् ।

तथाहि—दृश्यते हि कुलालसमीपे घट[1]सामग्रीं कृतवति पुरुषे [2]कुलालस्य घटनिर्माणप्रवृत्त्युद्देश्यकेच्छानुमानम् । ततः प्रवृत्तस्य च कुलालस्य एतत्प्रेरितेन मया घटः कृतः इत्यादि-व्यवहारः । भवति चेष्टसाधनत्वादिज्ञानं प्रवृत्ति सामग्री-घटकम् । [3]भवद्भिरपि प्रवर्तनया [4]तदाक्षेपाङ्गीकारात् । एवं च इष्टसाधनताबोधकशब्दोच्चारणमहिम्नैव प्रवृत्त्युद्देश्य-केच्छारूपप्रेरणाया अन्यलभ्यत्वान्न लिङ्वाच्यत्वम् । न च

---

1 सामग्रीं कृतवति — मृच्चक्रसलिलादिसाधनकलापसंविधानं कृतवति ।

2 कुलालस्येति — घटनिर्माणप्रवृत्तावन्वेति । कुलालः घट-निर्माणे प्रवर्ततामितीच्छा सामग्रीसंविधातरि पुरुषे अनुमीयते इति भावः ।

3 भवद्भिरपि — प्रेरणाद्यादिभिरपि ।

4 तदाक्षेपेति — इष्टसाधनत्वाक्षेपेत्यर्थः ।

पूर्वोक्तरीत्या [1]वैपरीत्यस्यापि संभवात् विनिगमनाविरह इति वाच्यम् । शब्दनिरपेक्षस्वतः प्रवृत्तौ (वा) तस्य स्वेष्टसाधनताज्ञानजन्यत्वस्य, प्रेरणाज्ञानाजन्यत्वस्य चावगमेन, शब्दसमनन्तरभाविप्रवृत्तिहेतुत्वेन इष्टसाधनताज्ञानानुमानसंभवस्यैव विनिगमकत्वात् । शब्दापेक्षपरप्रयोज्यप्रवृत्तौ इष्टसाधनताज्ञानमनपेक्ष्य प्रेरणाज्ञानजन्यत्वस्य काप्यनवगमात् । तत्र प्रेरणया इष्टसाधनत्वाक्षेपस्य भवतोऽपि संमतत्वात् ।

[2]गुरुतरा (न्यत्वाघटित)[सत्वघटित] तदिच्छया प्रेरणया इष्टसाधनत्वाक्षेपमपेक्ष्य, इष्टसाधनत्वेन प्रेरणाक्षेपे [3]लाघवाच्चेति दिक् ।

किञ्च, इच्छारूपप्रेरणाया लोके पुरुषनिष्ठत्वसंभवेऽपि वेदस्य भवन्मते अपौरुषेयतया, सा किन्निष्ठेति [4]वक्तव्यम् ।

---

1 वैपरीत्यस्य — प्रेरणया इष्टसाधनत्वाक्षेपस्य ।

2 गुरुतरेति — अपौरुषेयवेदसाधारणस्य प्रतारणाद्यजन्यहिताहितोपदेशकत्वरूपस्याप्तत्वस्य गुरुत्वादिति भावः ।

3 लाघवाच्च — हेतुतावच्छेदकलाघवाच्च ।

4 वक्तव्यमिति—तथाच वेदे लिङर्थः प्रेरणा दुर्निरूपेति भावः ।

न च वेदे सा लिङादि निष्ठैवेति वाच्यम् । गुणे गुणानङ्गीकारात् । जन्यसत्त्वावच्छिन्नं प्रति [द्रव्यत्वेन] समवायिकारणताया वाच्यत्वेन [1]लिङः इच्छायां समवायिकारणत्वासंभवाच्च । न च शब्दस्य [2]द्रव्यत्वान्न दोष इति वाच्यम् । स्पन्दसमवायिकारणतावच्छेदकतया सिद्धस्य मूर्तत्वस्य [3]तत्राभावेन मूर्तद्रव्यत्वस्य, विभुत्वं विना अमूर्तद्रव्यत्वस्य च [4]तत्रासंभवात् । न च भवतां जीवातिरिक्तेश्वरे नित्येच्छाङ्गीकारवत् वैदिकशब्देऽपि नित्येच्छाङ्गीकारे बाधकाभावः, गुणे गुणस्यास्माभिरुपगमादिति वाच्यम् । ईश्वरस्य चेतनत्वेन शब्दस्य चाचेतनत्वेन वैषम्यात् । अनुभवविरुद्धयत्किञ्चित्कल्पने उपेक्षणीयतापत्तेश्च ।

---

1 लिङ इति — शब्दात्मकस्य गुणस्येति शेषः ।

2 द्रव्यत्वात् — द्रव्यत्वोपगमात् ।

3 तत्राभावेन — स्पन्दरहिते लिङादिशब्दे अभावेन ।

4 तत्र — विभुत्वाभाववति लिङादिशब्दे ।

## प्रवर्तकज्ञानविचारः

### तत्र द्वेधा विप्रतिपत्तिप्रदर्शनम्

अत्रेदं विचार्यते । इष्टसाधनत्वं विषयितया प्रवृत्तिजनकतावच्छेदकत्वपर्याप्त्यधिकरणं, न वा, इष्टसाधनत्वज्ञानकालीन कृतिसाध्यत्वज्ञानं प्रवर्तकं, न वा इति वा विप्रतिपत्तिः । तत्र प्रथमे, विधिकोटिः नैयायिकानाम् । निषेधकोटिर्गुरूणाम् । द्वितीये, विधिकोटिर्गुरूणाम् । निषेधकोटिर्नैयायिकानाम् ।

---

## गुरुमतपरिष्कारः

अत्र गुरवः—कृतिसाध्यताज्ञानं चिकीर्षाद्वारा प्रवृत्तिहेतुः । नेष्टसाधनताज्ञानमुपायेच्छाद्वारा प्रवृत्तेर्हेतुः । उपायेच्छायाः स्वातन्त्र्येण प्रवृत्तौ हेतुतायां मानाभावात् । न च कृति साध्यता (ज्ञानेनास्य) [ज्ञानस्य] प्रवृत्तौ हेतुतायां मानाभावः, कृत्यसाध्यताज्ञानकाले प्रवृत्तिवारणाय कृत्यसाध्यत्वज्ञानाभावस्यैव हेतुत्वमस्त्विति वाच्यम् । या यत्प्रकारकेच्छा

सा तत्प्रकारकज्ञानसाध्या इति व्याप्तिबलात्, [1]चिकीर्षां प्रति कृतिसाध्यताज्ञानस्य हेतुत्वसिद्धौ, चिकीर्षाद्वारा कृतिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वसिद्धिः । (अनया) [अन्यथा] कृत्यसाध्यताज्ञानाभावस्य [2]सर्वदा सत्त्वेन सर्वदा चिकीर्षापत्तेः । कृत्यसाध्यताज्ञानाभावस्य हेतुत्वे [3]अवच्छेदकगौरवापत्तेश्च । न च भवन्मते कृतिसाध्यताज्ञानस्य हेतुत्वे निश्चयत्वनिवेशेन गौरवमिति वाच्यम् । कृत्यसाध्यताज्ञानत्वेन [4]प्रतिबन्धकतायां

---

1 चिकीर्षामिति — पाकं कृत्या साधयानि इत्यनुभवात् कृतिसाध्यत्वप्रकारिका चिकीर्षा न तु पाककृतिर्भवतु इत्याकारिकेति बोध्यम् ।

2 सर्वदेति — यदा न कृति साध्यता ज्ञानं, नापि कृत्यसाध्यताज्ञानं तदापीति यावत् । एवमग्रेऽपि ।

3 अवच्छेदकगौरवापत्तेरिति — कृतिसाध्यताज्ञानत्वापेक्षया कृत्यसाध्यताज्ञानाभावत्वस्य गुरुशरीरत्वादित्यर्थः । कृत्यसाध्यताज्ञानाभावस्येव. कृत्यसाध्यत्वव्याप्यवत्ताज्ञानाभावकृत्यसाध्यत्वावच्छेदकधर्मवत्ताज्ञानाभावादीनां कारणत्वकल्पनागौरवमपि बोध्यम् ।

4 प्रतिबन्धकतायामिति — कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकतारूपत्वात् कृत्यसाध्यत्वज्ञानाभावस्य कारणत्वे, कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वं सिद्धम् ।

[1]भ्रमत्वनिश्चयाना (खादि) [स्कन्दि] तत्वनिवेशे महागौरवापत्तेः । कृतिसाध्यत्व[2]निश्चयापेक्षया भ्रमत्वनिश्चयस्य [3]गुरुशरीरत्वात् ।

---

## कृत्यसाध्यताज्ञानाभावस्य स्वातन्त्र्येण न हेतुत्वं कल्प्यते इति केषां चिन्मतनिरूपणम्

अत्र केचित्—कृतिसाध्यताज्ञाने कृत्यसाध्यताज्ञानाभावस्य [4]हेतुत्वे कल्पनीये, तत्र कृत्यसाध्यताज्ञाना-

---

1 भ्रमत्वनिश्चयेति—संशयसाधारणज्ञानत्वेन प्रतिबन्धकतायां अप्रामाण्यनिश्चयस्यैवोत्तेजकत्वादिति भावः ।

2 निश्चयापेक्षयेति — भावप्रधानो निर्देशः । निश्चयत्वापेक्षयेत्यर्थः ।

3 गुरुशरीरत्वादिति — कृतिसाध्यत्वतदभावप्रकारकज्ञानान्यज्ञानत्वरूप-कृतिसाध्यतानिश्चयत्वमपेक्ष्य, कृत्यसाध्यत्वाभाववति कृत्यसाध्यत्वप्रकारकत्वरूपभ्रमत्व-तदभावप्रकारकज्ञानान्यज्ञानत्वरूपं-कृत्यसाध्यताज्ञानगतभ्रमत्व निश्चयत्वं गुरुशरीरमित्यर्थः ।

4 हेतुत्वे इति — बाधज्ञानताभावविषयेत्यादिः ।

[1]भावविशिष्टं प्रति कृत्यसाध्यताज्ञानाभावत्वेन हेतुत्वकल्पनात् [2]प्रवृत्तेरपि कृत्यसाध्यताज्ञानाभावविशिष्टतया क्लृप्तकार्यकारणभावेनैव निर्वाहसंभवात् न प्रवृत्तौ कृत्यसाध्यताज्ञानाभावस्य स्वातन्त्र्येण हेतुत्वमिति प्राहुः ।

---

सामग्रीविशेषस्य प्रतिबन्धकताकल्पनप्रयुक्तगौरवेण कृत्यसाध्यताज्ञानाभावस्य प्रवृत्तिहेतुतानिरासः, प्रतिबन्धकत्वाकल्पनलाघवेन कृतिसाध्यताज्ञानस्य प्रवृत्तौ हेतुत्वसाधनं च

तदसत्-कृतिसाध्यताज्ञानस्य हेतुत्वे भवदुक्तपूर्वोपदर्शितरीत्या पाकगोचरप्रवृत्तिं प्रति कृतिसाध्यत्वाभाववान् पाकः[इत्ये] तादृशानुमितिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यते । प्रवृत्तिसामग्रीकाले पाकत्वधर्मितावच्छेदककृतिसाध्यताज्ञानस्या-

---

1 अभावविशिष्टमिति — वैशिष्ट्यमव्यवहितोत्तरत्वसंबन्धेन बोध्यम् ।

2 प्रवृत्तेरपीति-अव्यवहितोत्तरत्वनिवेशे प्रयोजनविरहेण कृतिसाध्यत्वादिविषयतायाः कार्यतावच्छेदके अनिवेशात् प्रवृत्तेरपि तदाक्रान्तत्वमिति भावः ।

वश्यकत्वेन [1]बाधमुद्रयैव तादृशानुमितिप्रतिबन्धकत्वेन बाधाभावघटितानुमितिसामग्र्याः प्रवृत्तिसामग्र्याश्च युगपत् मिलनासंभवेनै[2]वोपपत्तेः । [3]भवन्मते कृत्यसाध्यत्वप्रकारकज्ञानाभावघटितप्रवृत्तिसामग्रीसत्वकालीन तादृशानुमिति सामग्रीकाले पाकगोचरप्रवृत्तिवारणाय तादृशानुमितिसामग्र्याः प्रतिबन्धकत्वकल्पनेन महागौरवापत्तेः ।

न च कृतिसाध्यत्वाभाव(वत्पाकपक्षे) [वान् पाकः प्रमेयः इति]एतादृश[4]विशिष्टविषयताशालिमानसं प्रति पाकगोचरप्रवृत्तिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यते । तत्र तादृशमानस-

---

1 बाधमुद्रयैव — तदभाववत्ताज्ञानविधयैव ।

2 उपपत्तेरिति — पाक कृतिसाध्यत्वाभाववानित्यनुमिति सामग्रीकाले पाकगोचरप्रवृत्तिसामग्र्याः असत्वेनापादकाभावात् प्रवृत्त्यापत्तेरसंभवेन तद्वारकप्रतिबन्धकताकल्पनं नास्ति । सामग्रीविरहादेव पाकप्रवृत्ति विरहस्योपपत्तिरिति भावः ।

3 भवन्मते — कृत्यसाध्यताज्ञानस्य प्रतिबन्धकतामते ।

4 विशिष्टविषयतेति — विशिष्टे वैशिष्ट्यविषयताशालिमानसेत्यर्थः ।

सामग्रीकाले पाकविशेष्यककृतिसाध्यत्वाभावप्रकारकज्ञान[1]स्यावश्यकत्वे [न] [2]प्रवृत्तिसामग्र्या [3]एवाभावात् [इति] कृतिसाध्यत्वाभाववान् [इति] एतादृशज्ञानाभावस्य हेतुत्वे लाघवमिति वाच्यम् । (कृतिसाध्यत्वप्रकारक)कृतिसाध्यत्वाभावप्रकारकपाकविशेष्यक[4]ज्ञानपरम्पराऽसत्त्वेन तादृशमानसं प्रति तादृश सामग्र्याः प्रतिबन्धकत्वं मयापि न कल्प्यते इति [5]लाघवाभावात् ।

एवं, कृतिसाध्यताज्ञानस्य हेतुत्वे, कृतिसाध्यत्व-

---

1 आवश्यकत्वेनेति — विशिष्टे वैशिष्ट्यावगाहिबुद्धौ विशेष्यतावच्छेदकप्रकारक निर्णयस्य हेतुत्वादिति भावः ।

2 प्रवृत्तिसामग्र्या इति — कृत्यसाध्यताज्ञानाभावघटितायाः इत्यादिः ।

3 अभावादिति — तथाचापादकाभावादापत्तिरेव न संभवतीति भावः ।

4 ज्ञानपरम्पराऽसत्त्वेनेति — तथाच तादृशज्ञानाननुभवेन तत्सामग्री नास्तीति भावः ।

5 लाघवाभावादिति — तव मते मन्मतापेक्षया प्रतिबन्धकत्वाकल्पनप्रयुक्तस्य लाघवस्याभावादित्यर्थः ।

प्रकारक पाकविशेष्यक ज्ञानत्वावच्छिन्नाभावमानसं प्रति पाकगोचरप्रवृत्ति सामग्र्याः प्रतिबन्धकत्वं न कल्प्यते । तादृशप्रवृत्तिसामग्रीकाले पाकविशेष्यककृतिसाध्यत्वप्रकारकज्ञानस्यावश्यकत्वेन, कृतिसाध्यत्वप्रकारकज्ञानाभावमानसे [1]स्वरूपसत्कृतिसाध्यत्वप्रकारकज्ञानप्रतिबन्धकत्वेनोपपत्तिरिति । भवन्मते तादृशमानसं प्रति तादृशसामग्र्याः प्रतिबन्धकत्वकल्पने महागौरवापत्तिरिति ।

एवं, अप्रामाण्यविशिष्ट कृतिसाध्यत्वप्रकारकपाकविशेष्यकज्ञानवानहम् इति मानसे पाकगोचरप्रवृत्तिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यते इति । तादृशविशिष्टविषयताशालि मानससामग्रीघटकत्वेन अप्रामाण्यप्रकारक—कृतिसाध्यत्वप्रकारकज्ञानस्या[2]वश्यकत्वेन, अप्रामाण्यज्ञानानास्कन्दितकृतिसाध्यत्वप्रकारकज्ञानघटितप्रवृत्तिसामग्र्यसत्त्वेन, न तादृश-

---

1 स्वरूपसदिति — घटज्ञानाभाववानहम् इति बुद्धौ घटज्ञानमेव विरोधि, न तु घटज्ञानस्य ज्ञानमिति भावः ।

2 आवश्यकत्वेनेति — विशिष्टस्य वैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुत्वादिति भावः ।

सामग्र्याः प्रतिबन्धकत्वमिति । [1]भवन्मते कृत्यसाध्यत्वप्रकारकज्ञानाभावघटितप्रवृत्तिसामग्री—तादृशमानससामग्र्योः एककालसत्त्वे बाधकाभावात् तादृशमानसं प्रति तादृशप्रवृत्तिसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवापत्तिरिति । न च पाके कृतिसाध्यताज्ञानं न प्रमेति ज्ञानाभावस्य [2]स्वातन्त्र्येण [हे] तुत्वं मयापि वाच्यमिति वाच्यम् । तर्हि एतादृशकार्यकारणभावकल्पनेन लाघवा [भावा] दिति ।

एवं (इच्छाविशिष्ट) कृति साध्यत्ववत्पाकवानयं देशः इति, [3]विशिष्टवैशिष्ट्यबोधसामग्र्याः प्रवृत्तिप्रतिबन्धकत्वे, विशेषणतावच्छेदकप्रकारकज्ञानस्य निवेशोऽपि न क्रियते । प्रवृत्तिसामग्रीमुद्रया [4]तस्यावश्यकत्वादित्यलम (सङ्ग) [सद्ग्र] हेण ।

— —

1 भवन्मते — कृत्यसाध्यताज्ञानस्य प्रतिबन्धकतामते ।

2 स्वातन्त्र्येण — उत्तेजकत्वमानादृत्येति यावत् ।

3 विशिष्टवैशिष्ट्यबोधसामग्र्याः — विशिष्टस्य वैशिष्ट्यबोधसामग्र्याः ।

4 तस्य — कृतिसाध्यत्ववान् पाकः इति ज्ञानस्य ।

## कृतिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वे, प्राणपञ्चकसञ्चारे प्रवृत्त्यापत्तिरिति आक्षेपः

अथ कृतिसाध्यताज्ञानस्य हेतुत्वे जीवनयोनिकृतिसाध्यताज्ञानात् प्राणपञ्चकसञ्चारे [1]कथं न प्रवृत्तिः । न चेष्टापत्तिः । तस्य सुखदुःखादिवत् प्रवृत्तिस्वरूपायोग्यत्वात् । न च प्रवृतिसाध्यताज्ञानत्वेन हेतुत्वात्, तत्र प्रवृत्तिसाध्यताज्ञानाभावान्न प्रवृत्तिरिति वाच्यम् । पाको न कृति साध्यः (पाकः प्रवृत्तिसाध्यः) इति ज्ञानानन्तरं प्रवृत्त्याप(त्तेरतो) [त्तिः । अतः] कृतिसाध्यताज्ञानत्वेन कृतिसाध्यताज्ञानस्यैव प्रवर्तकत्वं स्वीकरणीयम् । तथा च जीवनयोनिकृतिसाध्यताज्ञानात् प्राणपञ्चकसञ्चारे प्रवृत्त्यापत्तिरिति चेत् ।

---

1 कथं न प्रवृत्तिरिति प्रवृत्त्यापत्तिरिति भावः ।

## कृतौ चिकीर्षाधीनत्वविशेषणेनाक्षेपपरिहारः

न, चिकीर्षाधीनत्वस्य कृतौ विशेषणत्वात्, [1]तत्र [2]चिकीर्षाधीनकृतिसाध्यताज्ञानाभावान्न प्रवृत्तिः । न चसाध्यत्वाख्यविषयतासंबन्धावच्छिन्नप्रतियोगिताकप्रवृत्त्यभावत्वावच्छिन्नप्रतियोगिताका[3]भावविशिष्टविशेष्यतासंबन्धेन कृतिसाध्यताज्ञानस्य हेतुत्वात् तादृशसंबन्धेन कृतिसाध्य-[ताज्ञान]स्य प्राणपञ्चकसञ्चारेऽ[4]भावात् प्रवृत्त्यभावोपपत्तौ [5]कथं चिकीर्षाधीनत्वविशेषणमिति वाच्यम् । घटे जीवन-

---

1 तत्र — प्राणपञ्चकसञ्चारे ।

2 चिकीर्षाधीनेति — प्राणसञ्चारजनकजीवनयोनिकृतेः अस्मदादि-चिकीर्षाधीनत्वाभावादिति भावः ।

3 अभावविशिष्टविशेष्यतेति — वैशिष्ट्यं सामानाधिकरण्यरूपं बोध्यम् ।

4 अभावादिति — घटादाविव प्राणपञ्चकसञ्चारे प्रवृत्तियत्न-निरूपित साध्यतारूपविषयत्वं नास्ति । अतः साध्यतारूपविषय-तासंबन्धावच्छिन्नप्रतियोगिताकप्रवृत्त्यभावो वर्तते । ततश्च तदभावस्य प्राणसञ्चारे विरहात्, तन्निष्ठायाः कृतिसाध्यता-ज्ञानविशेष्यतायाः तदभावसामानाधिकरण्यं नास्तीति कारण-तावच्छेदकसंबन्धेन कृतिसाध्यताज्ञानं नास्तीति भावः ।

5 कथं — किमर्थम् ।

योनि [1]कृतिसाध्यताज्ञानात् प्रवृत्त्यापत्तेः तादृशसंबन्धेन कृतिसाध्यताज्ञानस्य [2]तत्र सत्त्वात् । [3]तद्विशेषणस्यावश्यकत्वादिति ।

---

विधान्तरेण कृतौ विशेषणदानस्य वैयर्थ्याक्षेपः, तन्निरासश्च

एतेन, [4]धर्मितावच्छेदकमिश्रितकृतिसाध्यताज्ञानस्य हेतुत्वकल्पनात्, प्राणपञ्चकसञ्चारत्वं धर्मितावच्छेदकीकृत्य

---

1 कृतिसाध्यताज्ञानादिति — घटे जीवनयोनिकृतिसाध्यताज्ञानं भ्रमरूपं बोध्यम् । स्पष्टीभविष्यति चेदमग्रे ।

2 तत्र — घटे । घटस्य प्रवृत्तिनिरूपितसाध्यतारूपविषयतावत्त्वेन, साध्यतारूपविषयतासंबन्धावच्छिन्नप्रतियोगिताकप्रवृत्त्यभावस्याभावेन घटनिष्ठायाः कृतिसाध्यताज्ञानविशेष्यतायाः तादृशाभावविशिष्टत्वादिति भावः ।

3 तद्विशेषणस्य-चिकीर्षाधीनत्वस्य ।

4 धर्मितावच्छेदकमिश्रितेति — धमतावच्छेदकतत्तद्धर्मावच्छिन्नविशेष्यताकेत्यर्थः । घटत्वावच्छिन्नविषयकप्रवृत्तिं प्रति घटत्वावच्छिन्नविशेष्यताककृतिसाध्यत्वप्रकारकज्ञानत्वेन हेतुतेत्यर्थः ।

कृतिसाध्यताज्ञानस्य हेतुत्वाकल्पनात्, [1]तत्र प्रवृत्त्यापत्तेर-भावात् [2]कथं तादृशविशेषणमिति निरस्तम् ।

[जीवनयोनि] कृतिसाध्यताज्ञानात् घटे प्रवृत्तिवारणाय तदावश्यकत्वात् । घटत्वं धर्मितावच्छेदकीकृत्य घटगोचर-प्रवृत्त्यनुरोधेन [3]तादृशज्ञानस्य हेतुत्वकल्पनादिति ।

---

### प्रकारान्तरेण चिकीर्षाधीनत्वविशेषणवैयर्थ्याक्षेपस्य निरासः

अत एव, प्रवृत्तिं प्रति कृतिसाध्यताज्ञानस्य धर्मितावच्छेद-कताप्रत्यासत्त्यैव हेतुता, [4]लाघवात् । तथाच प्राणपञ्चक-सञ्चारत्वे, चिकीर्षाधीनकृतिसाध्यत्वप्रमातः प्रवृत्तिवारणाय, प्रकारतासंबन्धेन प्रवृत्तिं प्रति प्राणपञ्चकसञ्चारत्वभेदस्यावश्यं

---

1 तत्र — प्राणसञ्चारत्वावच्छिन्ने ।

2 कथं — किमर्थम् ।

3 तादृशज्ञानस्य— घटत्वधर्मितावच्छेदककृतिसाध्यताज्ञानस्य ।

4 लाघवात् — धर्मितावच्छेदकभेदेन प्रवृत्तौ कृतिसाध्यताज्ञानस्यानन्तहेतुत्वाकल्पनप्रयुक्तलाघवात् ।

[1]हेतुताकल्पनापत्त्या कृतौ चिकीर्षाधीनत्वविशेषणं व्यर्थमेव इत्यपि परास्तम् । [2]उक्तदोषवारणाय तादृशविशेषणस्यावश्यकत्वात् ।

---

## स्वेच्छाधीनत्वं कृतिविशेषणम्

न च भोजनसाध्ये(भ्रमादौ)[[3]श्रमादौ]प्रवृत्त्यापत्तिः, तत्रापि [4]चिकीर्षाधीनकृतिसाध्यताज्ञानसत्त्वादिति वाच्यम् । स्वेच्छाधीनत्वस्यैव कृतौ विशेषणीयत्वात् । तत्त्वं च स्वावच्छिन्नविशेष्यताकेच्छाधीनत्वम् । स्वपदं प्रवृत्तिविशेष्यतावच्छेद-

---

1 हेतुताकल्पनेति—घटत्वादौ प्राणसञ्चारत्वभेदसत्त्वात् प्रकारतया प्रवृत्तिर्जायते । प्राणसञ्चारत्वे तद्भेदाभावात् न प्रवृत्तिरिति भावः ।

2 उक्तदोषवारणाय — घटे जीवनयोनिकृतिसाध्यताज्ञानात् प्रवृत्तिवारणाय ।

3 श्रमादाविति — श्रमत्वं दुःखत्वव्याप्यधर्मविशेषः । भोजनकृत्या भोजने जायमाने श्रमोऽपि जायते । स च श्रमः नियमेनोत्पद्यते इति नान्तरीयक इत्युच्यते । प्रवृत्तिः भोजननिष्ठसाध्यताख्यविषयतानिरूपिका, न श्रमवृत्तितादृशविषयताका इति ज्ञेयम् ।

4 चिकीर्षाधीनेति — भोजनचिकीर्षाधीनेत्यर्थः ।

कत्वेनाभिमततत्तद्धर्मपरम् । उक्तस्थले च(भ्र)[श्र] मत्वादेः तादृशधर्मतया भोजनादिकृतेश्च तदवच्छिन्नविशेष्यताकेच्छाना-धीनतया (भ्र) [श्र] मो न स्वेच्छाधीनकृतिसाध्यः, किन्तु भोजनेच्छाधीनकृतिसाध्यः इत्यतः(भ्रमो)[श्रमो] [1]नान्तरीयकः इत्यु (त्प) [पप] न्नम्, अन्येच्छाधीनकृतिसाध्यत्वात् । तथाच स्वेच्छाधीनकृतिसाध्यताज्ञानाभावान्न (तत्तत्) [2][तत्र] प्रवृत्तिरिति ।

---

### स्वेच्छाधीनत्वविशेषणस्य वैयर्थ्यशङ्का, तन्निरासश्च

(न वा) [न च](भ्रमो) [श्रमो] न कृतिसाध्यः, किन्तु भोजनसाध्यः । तथा च कृतिसाध्यताज्ञानाभावादेव प्रवृत्तिवारणसंभवे किमर्थं कृतौ तादृशविशेषणमिति वाच्यम् ।

---

1 नान्तरीयकः — नियततोत्पत्तिकः ।

2 तत्र — भोजनसाध्ये श्रमे ।

क्रियां विनापि [1]गुरुतरभारोत्तोलनादौ (भ्र) [श्र] मस्यानुभवेन कृति [साध्यत्वात्। न च कृति] साध्यत्वेऽपि (भ्रमेस) [श्रमस्य] [2]धर्मितावच्छेदकमिश्रितकृतिसाध्यताज्ञानस्य हेतुत्वात् (भ्र) [श्र] मत्वं धर्मितावच्छेदकीकृत्य कृतिसाध्यताज्ञानस्य हेतुत्वाकल्पनात् न तत्र प्रवृत्त्यापत्तिरिति वाच्यम्। धर्मितावच्छेदकताप्रत्यासत्त्या कृतिसाध्यताज्ञानस्य [3]लाघवेन हेतुत्वकल्पनात् (अनेक) [उक्तश्रमे] प्रवृत्त्यापत्तिसंभवात् विशेषणस्यावश्यकत्वादिति ।

---

1 गुरुतरभारोत्तोलनादाविति — तत्र क्रियाया अभावेन न तया कृतेरन्यथासिद्धिरिति भाव। एवं निगडनिश्चलदेहोऽपि भ्रमात् चलनाय प्रवर्तते। तत्र चलनक्रियानुत्पादेऽपि श्रमो जायते। एवं आमवातजडीकृतदेहः उत्थातुकामः प्रयतमानोऽपि नोत्तिष्ठति, परन्तु श्रममनुभवति। तथाच निरुक्तस्थलयोः क्रियाया अनुत्पत्तेः क्रियया कृतेरन्यथासिद्धिर्न भवतीत्यपि बोध्यम्।

2 धर्मितावच्छेदक मिश्रितेति — धर्मितावचछेदकीभूतघटत्वादि तत्तद्धर्मावच्छिन्नविशेष्यताकेत्यर्थः।

3 लाघवेन धर्मितावच्छेदकभेदेनानन्तहेतुत्वाकल्पनलाघवेन।

## इच्छाधीनत्वमात्रं कृतौ निवेशनीयम्

अत्रेदमवधेयम-तादृशविशेषणदानेऽपि यत्र अन्नपरिपाकादिप्रयोजक (भ्र)[श्र] मस्येच्छया गमनादिकं कृतम्, तत्र गमनादिकृतेः फलेच्छामुद्रया (भ्र) [श्र] [1]मेच्छाधीनत्वेन तादृशकृतिसाध्यताज्ञानात् (तद्भ्रमे) [तच्छ्रमे], तादृशकृतिसाध्यत्वभ्रमाच्च भोजनादिनान्तरीयक (भ्रमे) [श्रमे] प्रवृत्तिवारणाय, प्रकारतासंबन्धेन, विशेष्यतावच्छेदकतासंबन्धेन वा प्रवृत्तिं प्रति (भ्र) [श्र] मत्वभेदस्यावश्यहेतुतया स्वेच्छाधीनत्वविशेषणं [2]व्यर्थमेव । परन्तु घटादौ जीवनयोनिकृतिसाध्यताभ्रमात् प्रवृत्तिवारणाय इच्छाधीनत्वमात्रं कृतौ निवेशनीयम् ।

न च गुरुमते अन्यथाख्यात्यस्वीकारान्न दोष इति वाच्यम् । [3]विसंवादिप्रवृत्त्यनुरोधेन तादृशकृतिसाध्यत्वा-

---

1 श्रमेच्छाधीनत्वेनेति — गमनकृतेः अन्नपरिणामप्रयोजकश्रमः फलम् । तदिच्छा फलेच्छाविधया गमनकृतिकारणम् । अतः तादृशश्रमविशेषेच्छाधीनत्वं भोजनकृतेरिति भावः ।

2 व्यर्थमेवेति — श्रमत्वभेदरूपकारणाभावादेव भोजननान्तरीयकश्रमे प्रवृत्तिवारणसंभवादिति भावः ।

3 विसंवादिप्रवृत्तिः — विफलप्रवृत्तिः ।

संसर्गा [न] वगाहित्वेन हेतुताया आवश्यकत्वात् । अन्यथाख्यातिस्थानाभिषिक्त[1]ज्ञानद्वयस्वीकारेऽपि [2]तादृशकारणबलादुक्तापत्तिवारणासंभवादिति ।

---

श्रमः न कृतिसाध्यः इति केषांचिन्मतनिरूपणम्

केचित्तु (भ्र) [श्र] मो न कृतिसाध्यः । किन्तु क्रियासाध्य इति । तथाच कृतिसाध्यताज्ञानाभावादेव प्रवृत्त्यापत्तिवारणसंभवात् न कृतौ तद्विशेषणमिति । न च गुरुतरभारोत्तोलनादौ क्रियाविरहात् कथं (भ्रम) [श्रमः] इति वाच्यम् । तत्रापि नाडीक्रियाधीन (भ्रम) [श्रम] संभवात् । शेषं पूर्ववदित्याहुः ।

---

1 ज्ञानद्वयेति— स्वरूपतः विषयतश्चागृहीतभेदस्य ज्ञानद्वयस्येत्यर्थः ।

2 तादृशकारणबलात् — अन्यथाख्यातिस्थानापन्नात् जीवनयोनियत्नसाध्यः घटः इति ज्ञानद्वयात् ।

## तत्तत्कालीन कृतिसाध्यताज्ञानं प्रवर्तकम्

न च केवलकृतिसाध्यताज्ञानस्य हेतुत्वे, तृप्तोऽपि भोजने प्रवर्तेतेति वाच्यम् । तत्तत्कालीन कृतिसाध्यताज्ञानस्यापि हेतुतया तृप्तिकालीन कृतिसाध्यताज्ञानस्याहेतुत्वान्न तत्र प्रवृत्त्यापत्तिसंभ (वात्) [वः ।] न च तत्तत्कालीन कृतिसाध्यताज्ञानस्य हेतुत्वे किं मानमिति वाच्यम् । इदानीं कृत्यसाध्यं कदाचित् कृतिसाध्यमितिज्ञानकाले प्रवृत्त्यापत्तेरेव मानत्वात् ।

---

## केवलकृतिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वाक्षेपः

अथ इदानीं कृतिसाध्यं नेष्टसाधनमिति ज्ञानकाले प्रवृत्त्यापत्तिः । न च तत्तत्कालीन कृतिसाध्यताज्ञानस्य हेतुताकल्पनेनैव [1]तद्वारणमिति वाच्यम् । अत्र तत्तत्काल-

---

1 तद्वारणमिति— नेष्टसाधनमितिज्ञानकाले कृतिसाध्यताज्ञानसत्त्वादिति भावः ।

पदेन दण्डात्मकः कालो ग्राह्यः । (णत्वस्यापरिवेषत्वात्) [[1]क्षणत्वस्यापरिज्ञेयत्वात् ।] तथाच दण्डात्मककालमध्ये तृप्तस्य [2]तदन्तर्गतपूर्वक्षणे प्रवृत्तिदर्शनात् [3]तत्कालीनकृतिसाध्यताज्ञानस्य हेतुताया आवश्यकत्वे, [4]द्वितीयक्षणेनेष्टसाधनमिति ज्ञाने सति, [5]सति च कृतिसाध्यताज्ञाने तदुत्तरक्षणं प्रवृत्त्यापत्तेर्वज्रलेपत्वादिति चेत् ।

---

स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य हेतुत्वेन परिहारः

न । स्वविशेषणवत्ताप्रतिसन्धानजन्य कार्यताज्ञानस्य हेतुत्वात् । (न च) [तत्र] [6]स्वं पुरुषः । तत्र विशेषणं

---

1 क्षणत्वस्येति — अतिसूक्ष्मत्वादिति भावः ।

2 तदन्तर्गत पूर्वक्षणे — दण्डात्मककालान्तर्गते नेष्टसाधनमितिज्ञानोदयात्पूर्वक्षणे ।

3 तत्कालीनेति — दण्डात्मककालीनेत्यर्थः ।

4 द्वितीयक्षणे — तृप्त्यनन्तरक्षणे ।

5 सति चेति—पूर्वप्रवृत्तिकारणस्य कृतिसाध्यताज्ञानस्य विनश्यदवस्थस्य सत्त्वादिति भावः ।

6 स्वं पुरुषः — स्वपदार्थः प्रवर्तमानः पुरुषः ।

कामना, शुचि तत्कालजीवित्वं च। तथाच नेष्टसाधनमिति ज्ञानकाले तल्लिङ्गक कार्यताज्ञानविरहान्न प्रवृत्तिः। न च सामान्यतः स्वविशेषणवत्ताप्रतिसन्धानजन्य कार्यताज्ञानस्य प्रवर्तकत्वेऽपि शौचलिङ्गक कार्यताज्ञानसत्त्वे, नेष्टसाधनमिति ज्ञानसत्त्वे तृप्तस्य प्रवृत्त्यापत्तिरिति वाच्यम्। काम्यगोचर-प्रवृत्तित्वावच्छिन्नं प्रति [1]इष्टसाधनतालिङ्गक कार्यताज्ञानस्य हेतुत्वात्। नित्यगोचरऽवृत्तित्वावच्छिन्नं प्रति [2]शुचितत्काल-जीवित्वलिङ्गक कार्यताज्ञानस्य हेतुत्वात्। तथाच नेष्ट-साधनमिति ज्ञानकाले इष्टसाधनत्वलिङ्गक कार्यताज्ञानविरहात् न प्रवृत्त्यापत्तिरिति।

---

1 इष्टसाधनतालिङ्गकेति — पाकः मत्कृतिसाध्यः मत्कृतिं विना असत्त्वे सति मदिष्ट साधनत्वादित्यनुमानं बोध्यम्। काम्य-साधनताज्ञानस्यापि कामनासंबन्धज्ञानत्वात्, स्वविशेषणवत्ते-त्यत्र विशेषणसंबन्धस्यैव विवक्षितत्वादिति भावः।

2 शुचितत्कालजीवित्वलिङ्गकेति — अहमिदानीन्तन कृतिसाध्य-सन्ध्यावन्दनः, द्विजातित्वे सति विहितसन्ध्याकालीनशौचादि-मत्त्वादित्यनुमानं बोध्यम्।

अथ बालस्य स्तनपानगोचरप्रवृत्तिर्न स्यादिति इष्टसाधनतालिङ्गक कार्यता[1]ज्ञानापेक्षया शुष्ककण्ठतया बालो म्रियेतेति चेन्न ।

एककालीनैकात्मवृत्तित्वसंबन्धेन इष्ट साधनताज्ञानविशिष्ट कृति साध्यताज्ञानत्वेन हेतुत्वात् । स्तनपानगोचरप्रवृत्तिस्थले तादृशसंबन्धेन स्मरणात्मकेष्टसाधनताज्ञानविशिष्टतादृशज्ञानसंभवान्न व्यभिचारः ।

---

इष्टसाधनताविषयक कार्यताज्ञानत्वेन हेतुत्वाक्षेपः

न चेष्टसाधनताज्ञान [विशिष्ट] कृतिसाध्यताज्ञानत्वेन, कृति साध्यताज्ञानविशिष्टतादृशज्ञानत्वेन वा विनिगमनाविरहात् कार्यकारणभावद्वयम् । तदपेक्षया इष्टसाधनताविषयक कार्य-

---

1 ज्ञानापेक्षयेति — परामर्शादि कारणसमवधानस्य विलम्बसाध्यतयेति भावः ।

ताज्ञानत्वेनैव हेतुतास्तु, [1]एककालीनत्वानिवेशेन लाघवमिति वाच्यम् ।

---

## तादृशज्ञानसंभवेन तत्परिहारः

तादृशेष्टसाधनताविषयक कृतिसाध्यताज्ञानस्यासंभवात् । एकत्र एककालावच्छेदेन साध्यत्व साधनत्वयोर्विरोधेन गृहीतुमशक्यत्वात् । तथाहि—[2]साध्यत्वं-कृत्युत्तराद्यक्षणवृत्तित्वम् । इष्टसाधनत्वं च इष्टाव्यवहितपूर्वक्षणवृत्तित्वे सति [3]इष्टकालवृत्तित्वम् । तयोरेकत्र एकज्ञाने, न गृह्य-

---

1 ज्ञानद्वयस्यैव इष्टसाधनत्वविषयकत्व– कृतिसाध्यताविषयकत्वयोरपि विशेषण विशेष्यभावे विनिगमनाविरहेण कारणताद्वयापत्तिर्भवतीति मत्वा, लाघवान्तरमाह — एककालीनत्वानिवेशेनेति ।

2 इदानीं कृत्यधीनोत्पत्तिकस्य अग्रे इष्टसाधनत्व संभवेन तयोर्विरोधाभावात् एकज्ञानविषयत्वसंभवः इति शङ्कानिरासेन तयोरेकज्ञानविषयत्वासंभवमुपपादयति — साध्यत्वमित्यादिना ।

3 इष्टाव्यवहितपूर्वक्षणवृत्तित्वं कृत्यधीनाद्यक्षणसंबन्धिनोऽपि एकक्षणावच्छेदेन न विरुद्धमिति कृतिसाध्यत्व विरोधाय इष्टकालवृत्तित्वमपि इष्टसाधनताशरीरे — इष्टकालवृत्तित्वमिति क्रमेण तयोरेकत्र संभवेऽपि एकक्षणावच्छेदेन न संभव इति भावः ।

माणता । [1]ज्ञानसामान्यसामग्रीवशात् विशेष्यविशेषणयोः एक (तरा) [क्षण] वृत्तित्वं भासते । तथाच एकस्य आद्यक्षणवृत्तित्वं इष्टकालवृत्तित्वं च [2]एकक्षणेऽप्रसिद्धम् । अतो ज्ञानेन गृहीतुमशक्यतया इष्टसाधनताविषयककृति साध्यताज्ञानासंभवेन, इष्टसाधनताज्ञानविशिष्ट कृतिसाध्यताज्ञानत्वेनावश्यं हेतुत्वं स्वीकरणीयमिति ।

[3]यद्वा, कृतिसाध्यत्वं–प्रतियोगितासंबन्धेन कृतिकालीनप्रागभावविशिष्टत्वम् । इष्टसाधनत्वं–इष्टाव्यवहितपूर्वक्षणवृत्तित्वम् । तथाच एकक्षणे प्रागभावविशिष्टत्वं पूर्वक्षणवृत्तित्वं च विरुद्धम् । अतो ज्ञानेन गृहीतुमशक्यतया अन्यथानुपपत्त्या तादृशज्ञानविशिष्टज्ञानत्वेन हेतुत्वमिति । न

---

1 ज्ञानसामान्येति — रक्तदण्डवान् पुरुषः इत्यादि ज्ञाने, रक्तत्वदण्डयोः, दण्डपुरुषयोश्च एकक्षणावच्छिन्नत्वभानस्यानुभविकत्वादिति भावः ।

2 एकक्षणे — एकक्षणावच्छेदेन ।

3 इष्टकालवृत्तित्वमनन्तर्भाव्यैव इष्टसाधनत्वस्य एकक्षणावच्छेदेन कृतिसाध्यतासमावेशासंभवमुपपादयितुं कृतिसाध्यत्वमन्यथा निर्वक्ति — यद्वेति ।

च इष्टसाधनताज्ञानविशिष्ट कृतिसाध्यताज्ञानत्वेन हेतुत्वे, इष्टसाधनताज्ञान-कृतिसाध्यताज्ञानाप्रामाण्यज्ञानाभाव-निश्चयत्वादीनामेकत्र निवेशे [1]विनिगमनाविरहेणानन्त कार्यकारणभावापत्त्या, तदपेक्षया वरं इष्टसाधनताज्ञानत्वेन, कृतिसाध्यताज्ञानत्वेन हेतुत्वमस्तु लाघवादिति वाच्यम् । पाकमुख्यविशेष्यकेच्छात्वावच्छिन्नं प्रति पाकविशेष्यकेष्टसाधनताज्ञानत्वेन हेतुत्वं न कल्प्यते । [2]मन्मते (मुख्यविशेष्यक) पाकसाध्यसुखत्वप्रकारकेच्छाया एवोपगमेन पाकमुख्यविशेष्यकेच्छाविरहेणोक्तहेतुत्वाकल्पनात् । [3]भवन्मते तत्कल्पने गौरवमिति । एवं, पाकमुख्यविशेष्यकेच्छां प्रति पाकमुख्यविशेष्यकसिद्धत्वज्ञानाभावस्य [4]हेतुत्वाकल्पनादिति लाघवाच्च ।

---

1 विनिगमनाविरहेणेति — विशेष्यविशेषणभावे इत्यादिः ।

2 मन्मते — प्रभाकरमते ।

3 भवन्मते — न्यायमते ।

4 हेतुत्वाकल्पनादिति — सिद्धे इच्छाविरहेण सिद्धत्व ज्ञानस्येच्छाप्रतिबन्धकत्वे तदभावस्य कारणत्वं कल्पनीयम् । कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकतारूपत्वात् । पाकमुख्यविशेष्यकेच्छानङ्गीकारे न तत्कल्प्यते इति भावः ।

न [च] सुखविशेष्य (वदि) [के] च्छां प्रति सुखत्व-प्रकारक ज्ञानत्वेन हेतुत्वे लाघवात्, भवन्मते पाकसाध्यसुखत्व प्रकारकेच्छास्वीकारेण पाकसाध्यसुखत्वप्रकारक ज्ञानत्वेन हेतुत्वे [1]शरीरगौरवमिति वाच्यम् । पाकसाध्यसुखत्वप्रकारकेच्छायाः उभयवादिसिद्धत्वेन भवन्मतसिद्ध कार्य कारणभावकल्पनेनैव निर्वाहसंभवात् । परं तु सुखत्वप्रकारकेच्छां प्रति सुखत्व-प्रकारकज्ञानत्वेन हेतुत्वं न कल्प्यते, तादृशेच्छाविरहात् । भवन्मते तत्कल्पने महागौरवापत्तिः । न च पाकगोचर चिकीर्षां प्रति पाकसाध्यसुखेच्छात्वेन हेतुत्वे गौरवम् । मन्मते सुखेच्छात्वेन हेतुत्वे लाघवमिति वाच्यम् । पाकसाध्यसुखे-च्छाया एव सुखेच्छात्वेन हेतुत्वादिति ।





1 शरीरगौरवम् — कारणतावच्छेदकगौरवम् ।

## विजातीयानुमितित्वेन प्रवृत्तिकारणत्वमिति निरूपणम्

वस्तुतस्तु, इष्टसाधनतालिङ्गककार्यतानुमितिनिष्ठवैजात्यमवश्यं [1]व्यभिचारभिया स्वीकरणीयम् । तथाच विजातीयानुमितित्वेनैव प्रवृत्तौ कारणत्वमस्तु, लाघवात् । भवन्मते कृतिसाध्यताज्ञाने इष्टसाधनताज्ञाने च निश्चयत्वं निवेश्य स्वातन्त्र्येण प्रवृत्तौ इष्टसाधनताज्ञानस्य कारणत्वकल्पने, एकत्र अप्रामाण्यप्रकारकज्ञानाभाव— निश्चयत्वादिनिवेशप्रयुक्त[2]विनिगमनाविरहेणानन्तकार्यकारणभावकल्पने च महागौरवापत्तिः । [3]मन्मते, अनुमितौ संशयत्वाहार्यत्वाभावेन निश्चयत्वाद्यनिवेशात् ।

---

1 व्यभिचारभिया— प्रवृत्तौ इष्टसाधनताज्ञानजन्यकार्यताज्ञानत्वेन हेतुत्वे, तादृशकार्यताज्ञानाभावेऽपि नित्यकर्मणि प्रवृत्तेः, विहितकालशुचिर्जीवित्वज्ञानजन्यकार्यताज्ञानादुत्पत्तेः प्रसक्तव्यभिचारवारणाय ।

2 विनिगमनाविरहेणेति — अप्रमाण्यज्ञानाभाव-संशयान्यत्व-अनाहार्यत्वादीनां विशेषणविशेष्यभावे विनिगमनाविरहेणेत्यर्थः ।

3 मन्मते — प्रवृत्तौ विजातीयानुमितित्वेन कार्यताज्ञानस्य हेतुत्ववादिमते ।

एवं, स्तनपानगोचरप्रवृत्तिस्थले च [1]स्मरणात्मकपरामर्शजन्यानुमितेः स्वीकारान्न [2]दोषः । एवं च प्रत्यक्षादौ प्रवृत्तिसामग्रीप्रतिबन्धकतायां इष्टसाधनत्वप्रकारकत्वानामनिवेशे लाघवम् । भवन्मते तत्प्रवेशे महागौरवापत्तेः । एवं, सामग्रीप्रतिबन्धकतायां निश्चयत्वादिनिवेशप्रयुक्त[3]विनिगमनाविरहनिबन्धनानेकप्रतिबध्यप्रतिबन्धकभावकल्पनेनात्यन्तगौरवमिति ।

---

### विजातीयानुमितित्वेन प्रवृत्तिहेतुत्वासंभव इत्याक्षेपः

अथ शुचिविहितकालजीवित्वलिङ्गक कार्यताज्ञानहेतुत्वकल्पनागौरव (एव) [मिति] [4]तत्रापि लाघवेन विजातीयानुमितित्वेन नित्यगोचरप्रवृत्तित्वेन च कार्यकारणभावः कल्प-

---

1 स्मरणात्मकपरामर्शेति — फलबलेन तत्संस्कारोद्बोधकल्पनमिति भावः ।

2 न दोषः — शुष्ककण्ठतया बालो म्रियेतेत्युक्तदोषः न ।

3 विनिगमनाविरहेति — विशेष्यविशेषणभावविषयकेत्यादिः ।

4 तत्रापि — नित्यगोचरप्रवृत्तिस्थलेऽपि ।

नीयः । तथाच [1]उभयपरामर्शजन्यानुमितौ उभयजातिसत्त्वेन प्रत्येकमात्रजन्यानुमितौ परस्परात्यन्ताभावसमानाधिकरणप्रत्येकजातिसत्त्वेन जातिसांकर्यात् कथं विजातीयानुमितित्वेन हेतुत्वमिति चेन्न ।

---

तत्परिहारः

प्रवृत्तिजनकतावच्छेदकत्वेन [2]तदुभयपरामर्शजन्यानुमितौ एका जातिः स्वीक्रियते । तादृशजातेरेव कारणतावच्छेदकत्वात् । न च यत्र इष्टसाधनमिति ज्ञानाविषये घटत्वादिलिङ्गका, इष्टसाधनताज्ञानविषये इष्टसाधनत्वादिलिङ्गक कार्य-

---

1 उभयपरामर्शेति — मत्कृतिसाध्यत्वव्याप्येष्टसाधनत्ववत्तापरामर्शः, इदानींतनमत्कृतिसाध्यसन्ध्यावन्दनत्वादिव्याप्यशुचिविहितकालजीवित्ववत्तापरामर्शश्चेत्युभयपरामर्शेत्यर्थः ।

2 तदुभयपरामर्शेति — इष्टसाधनतालिङ्गकपरामर्शेन शुचिविहितकालजीवित्वलिङ्गकपरामर्शेन च जन्यायामनुमितावित्यर्थः ।

त्वानुमितिः घटपाकौ विषयीकृत्य [1]समूहालम्बनात्मिका जाता, तत्र ताद्दशवैजात्यस्यावश्यकत्वेन इष्टसाधनमिति [2]ज्ञानाविषये प्रवृत्तिः स्यात्, [3]ताद्दशवैजात्यावच्छिन्नानुमितिसत्त्वादिति वाच्यम् । भवन्मतेऽपि इष्टसाधनताज्ञानाधीनेच्छोत्तरं उपादानविषयकानिष्टसाधनताज्ञानो (त्तरं) [त्पत्तौ] प्रवृत्त्यापत्तेः । तत्रेष्टापत्तौ मन्मतेऽपि तुल्यमिति ।

न च विसंवादिप्रवृत्तौ स्वतन्त्रोपस्थितमत्कृति[4]साध्यत्वासंसर्गाग्रहस्य हेतुत्वकल्पने गौरवमिति वाच्यम् । [5]एकदेशिनः अन्यथाख्यातिस्वीकारे क्षतिविरहात् । न च [6]गुण-

---

1 समूहालम्बनात्मिकेति — घटो मत्कृतिसाध्यः घटत्वात्, पाकश्च मत्कृतिसाध्यः मत्कृतिं विना असत्त्वे सति मदिष्टसाधनत्वादित्याकारकानुमितिरित्यर्थः ।

2 ज्ञानाविषये — घटादौ ।

3 अनुमितिसत्त्वात् — कार्यतानुमितेः सत्त्वात् ।

4 कृतिसाध्यत्वासंसर्गाग्रहस्येति— भवन्मते अन्यथाख्यात्यनङ्गीकारेणेत्यादिः ।

5 एकदेशिनः — प्राभाकरैकदेशिनः ।

6 गुणगतजाताविति्यादि — जातिव्यञ्जिकायाः आकृतेः अवयवसंस्थानात्मिकायाः निरवयवे गुणे अनुमितावभावादिति भावः ।

गतजातौ मानाभावे कथं विजातीयानुमितित्वेन हेतुत्वमिति वाच्यम् । अत्रापि एकदेशिमताश्रयणादिति वदन्ति ।

---

## गुरुमतनिरासिनैयायिकमतनिरूपणम्

अत्र नैयायिकाः- यदुक्तं इष्टसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानत्वेन हेतुत्वम्, तत्र [1]विनिगमनाविरहेण कार्यकारणभावद्वयस्यावश्यकत्वेन अवच्छेदके गौरवेण गौरवापत्तेः, तदपेक्षया स्वातन्त्र्येण इष्टसाधनताज्ञानत्वेन कृतिसाध्यताज्ञानत्वेन [च] हेतुत्वमेव लघीयः । एवं, तव इष्टसाधनताज्ञान कृतिसाध्यताज्ञान निश्चयत्वानाहार्यत्वाप्रामाण्यग्रहाभावादीनामेकत्र निवेशे विनिगमनाविरहेणानन्तकार्यकारणभावकल्पनापत्तेश्च । मन्मते स्वतन्त्रहेतुत्वेन एकत्वाप्रामाण्यग्रहाभावादीनामनिवेशेन लाघवादिति ।

---

1 विनिगमनाविरहेणेति — इष्टसाधनताज्ञान-कृतिसाध्यताज्ञानयोः विशेषणविशेष्यभावे इत्यादिः । एवमग्रेऽपि ।

यदप्युक्तं, पाकमुख्यविशेष्यकेच्छां प्रति इष्टसाधनताज्ञानत्वेन हेतुत्वे गौरवम् । तदपि न । भवन्मते चिकीर्षां प्रति इष्टसाधनताज्ञानविशिष्ट कृतिसाध्यताज्ञानत्वेन हेतुत्वे [1]पूर्वोक्तदोषापत्तिभीत्या उपायेच्छात्वावच्छिन्नं प्रति इष्टसाधनताज्ञानत्वेन हेतुत्वे लाघवात् । [2]स्वीयविशेष्यतावच्छेदकत्वं कार्यतावच्छेदकसंबन्धः । इष्टसाधनत्वनिष्ठप्रकारता निरूपितविशेष्यतावच्छेदकत्वप्रत्यासत्त्या हेतुत्वमिति ।

यच्च पाकेच्छां प्रति पाकः सिद्धः इति ज्ञानस्य प्रतिबन्धकत्वाकल्पनेन लाघवम् । तदपि न । स्वप्रकारतानिरूपितविशेष्यतावच्छेदकत्वसंबन्धेन [3]क्लृप्तप्रतिबन्धकत्वेनैव निर्वाहसंभवादिति ।

---

1 पूर्वोक्तदोषापत्तिभीत्या — इष्टसाधनताज्ञान- कृतिसाध्यताज्ञानयोः विशेषण विशेष्यभावे विनिर्गमनाविरहप्रयुक्त-गुरुधर्मावच्छिन्नकारणताद्वयस्य कल्पनागौरवेणेति यावत् ।

2 स्वीयविशेष्यतावच्छेदकत्वमिति— स्वपदार्थः उपायेच्छा ।

3 क्लृप्तेति— विशेष्यतावच्छेदकधर्मान् निवेश्य, तद्भेदेन अनेकप्रतिबन्धकताकल्पने गौरवात् सिद्धत्व ज्ञानस्य विशेष्यतावच्छेदकनिष्ठप्रत्यासत्त्या इच्छाप्रतिबन्धकत्वमिति भावः ।

## विजातीयानुमितित्वेन हेतुतानिरासः

यत्तु विजातीयानुमितित्वेन हेतुत्वान्नेष्टसाधनत्वज्ञानस्य हेतुत्वम् । तन्न ।

विजातीयानुमितित्वेन हेतुत्ववत् इष्टसाधनताज्ञानोद्बोधित[1]विजातीयस्मृतित्वेनापि कारणत्वमस्तु, विनिगमनाविरहात् । न चेष्टसाधनताज्ञानस्य स्मृतावुद्बोधकत्वाकल्पनात् न स्मृतित्वेन हेतुत्वमिति वाच्यम् । जन्यमात्रस्य कालोपाधित्वेन कालस्योद्बोधकत्वेन तस्य कालत्वेनोद्बोधकत्वकल्पनादिति । न च विनिगमनाविरहादुभयस्यापि[2]कारणत्वमिति वाच्यम् । अनुमितिमात्रसत्त्वे प्रवृत्तिः न स्यात् । एवं, इष्टसाधनतालिङ्गककार्यतानुमितौ इष्टसाधनताज्ञानविशिष्टकृतिसाध्यतामानसे वा[3]तादृशवैलक्षण्यमङ्गीकार्यमित्यत्रापि विनि-

---

1 विजातीयस्मृतित्वेनापीति— वैजात्याश्रयीभूता वस्तुतः कृतिसाध्यता विषयिणी या स्मृतिः तत्त्वेनापीत्यर्थः ।

2 कारणत्वमिति — इष्टमिति शेषः ।

3 वैलक्षण्यं — वैजात्यम् ।

गमनाविरहः । [1]नचानाहार्यत्वादिनिवेशे गौरवमेव विनिगमकमिति वाच्यम् । [2]तादृशज्ञानव्यावृत्ताया एव तादृशजातेः स्वीकारात् । किं च प्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुत्वाकल्पने लाघवमित्यपि न युक्तम् ।

इष्टसाधनताज्ञानस्य हेतुत्वे पाकविशेष्यकेष्टसाधनत्वप्रकारकज्ञानत्वावच्छिन्नाभावमानसे प्रवृत्तिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यते । ज्ञानाभावग्रहे स्वरूपसज्ज्ञानस्यैव प्रतिबन्धकत्वात् । अत एव आकांक्षाग्रन्थे 'अन्वयानुभवे सति अन्वयानुभवाभावज्ञानं नास्ति' इत्योवोक्तं पक्षधरमिश्रैः । भवन्मते इष्टसाधनताज्ञानजन्यविलक्षणानुमित्युत्तरं तादृशमानसवारणाय तादृशसामग्र्याः प्रतिबन्धकत्वे महागौरवापत्तेः । न च [3]लिङ्गोपहितलैङ्गिकभानाङ्गीकर्तृनैयायिकानां नये विल-

1 अनाहार्यत्वादिनिवेशे गौरवमिति — आहार्यरूपाया संशयात्मिकायाश्चानुमितेरस्वीकारेण, वैजात्यस्यानुमितावङ्गीकारे अनाहार्यत्वं संशयान्यत्वं च न निवेशनीयम् । मानसे वैजात्याङ्गीकारे तु आहार्य-संशयादि मानसवारणाय अनाहार्यत्वादिकं निवेशनीयमिति गौरवमिति भावः ।

2 तादृशज्ञानव्यावृत्तायाः — आहार्य-संशाद्यवृत्तेरेव ।

3 लिङ्गोपहितेत्यादि — लिङ्गोपधानमते अनुमितौ पक्षविशेषणतया साध्यव्याप्यहेतोः भाननियमेन प्रकृते इष्टसाधनताव्याप्याकः मत्कृतिसाध्यः इत्येवानुमिति स्वीकारादिति भावः ।

क्षणानुमितिकाले इष्टसाधनताज्ञानावश्यकत्वेन मयापि तादृशसामग्र्याः प्रतिबन्धकत्वं [न] कल्प्यते इति वाच्यम् । [1]अन्यत्र तथा स्वीकारेऽपि [2]अत्र तथाऽस्वीकारात् । साध्यत्वसाधनत्वयोरेकत्र [3]भानस्यास्वीकारात् ।

एवं, इष्टसाधनत्वाभाववान् पाकः इति एतादृशानुमितिसामग्र्याः पाकगोचरप्रवृत्तिं प्रति प्रतिबन्धकत्वं न कल्प्यते । [4]तादृशसामग्रीकाले इष्टसाधनताज्ञानसत्त्वेन तस्य बाधमुद्रयैव प्रतिबन्धकत्वसंभवादिति । अपि च, अप्रामाण्यव्याप्यवदिदमिष्टसाधनताज्ञानं कार्यत्वव्याप्येष्टसाधनत्ववानयं पाकः इत्याकारकसमूहालम्बनरूपपरामर्शानन्तरं, यत्र

---

1 अन्यत्र तथा स्वीकारेऽपि — इष्टसाधनतालिङ्गक कृति साध्यतानुमितेरन्यत्र लिङ्गस्य अनुमिति विशेष्यतावच्छेदकतया भानस्वीकारेऽपि ।

2 अत्र — कार्यतानुमितौ । तथाऽस्वीकारात्- कार्यताविशेष्यतावच्छेदकतया लिङ्गस्येष्टसाधनत्वस्य भानास्वीकारात् ।

3 अस्वीकारादिति — साध्यत्वसाधनत्वयोरेकक्षणावच्छेदेन विरोधादिति भावः ।

4 तादृशसामग्रीकाले — पाकप्रवृत्तिसामग्रीकाले ।

इष्टसाधनताज्ञानमप्रमा पाकश्च कार्यः इत्यनुमितिः, तदनन्तरं चिकीर्षाकाले प्रवृत्तिकाले वा अप्रामाण्यविशिष्टेष्टसाधनताज्ञान-मानसवारणाय तत्र चिकीर्षासामग्री प्रवृत्तिसामग्रीं वा प्रति-बन्धिका वाच्या। अतो गौरवापत्तेः। मन्मते तादृशसाम-ग्रीकाले प्रवृत्तिसामग्र्या एवाभावात्, अप्रामाण्यप्रकारक-ज्ञानानास्कन्दितेष्टसाधनताज्ञानरूपकारणविरहादिति।

न चेष्टसाधनताज्ञानस्याहेतुत्वे प्रवृत्तिसामग्रीप्रति-बन्धकतायां इष्टसाधनताज्ञानस्य वैशिष्ट्यानिवेशे लाघवमिति वाच्यम्। (इच्छाविशिष्ट) इष्टसाधनीभूतपाकवानयं देशः इत्याकारकविशिष्टविषयताशालिप्रत्यक्षसामग्र्याः प्रवृत्तौ प्रति-बन्धकतायां विशेषणतावच्छेदकप्रकारकज्ञाननिवेशो न क्रियते, [1]असंभवादिति।

एवं, इष्टसाधनीभूत—कृतिसाध्यीभूतपाककालीनज्ञान-वानहमिति विशिष्टविषयताशालिमानसे घटादिचाक्षुषसामग्री-घटाद्यनुमितिसामग्री-घटादिशाब्दसामग्र्यादीनां प्रतिबन्धकत्वं

1 असंभवादिति—इष्टसाधनीभूतः पाकः इति ज्ञानस्य पाक प्रवृत्ति-कारणत्वेन प्रवृत्तिप्रतिबन्धककोटिप्रवेशासंभवादित्यर्थः।

न कल्प्यते । (विषयतावच्छेदक) [[1]विशेषणतावच्छेदक] प्रकारकज्ञानमुद्रया व्यापकप्रवृत्तिसामग्रीप्रतिबन्धकत्वेनैवोपपत्तेः । भवन्मते इष्टसाधनत्वादिलिङ्गक कार्यतानुमिति घटितसामग्र्या [2]अव्यापकत्वेनानन्तघटादिचाक्षुषादिसामग्र्याः तादृशमानसे प्रतिबन्धकत्वकल्पने महागौरवापत्तेः । न च सिद्धत्वज्ञानकाले सिद्धत्वज्ञानाभावघटितप्रवृत्तिसामग्र्यसत्त्वे, घटादिचाक्षुषादिसामग्रीकाले तादृशमानसापत्तिवारणाय तादृशसामग्र्याः प्रतिबन्धकत्वं त्वयापि वाच्यमिति वाच्यम् । उप-

---

1 विशेषणतावच्छेदकप्रकारकेत्यादि—इष्टसाधनत्व-कृतिसाध्यत्व-विशिष्टपाकविशिष्टज्ञानप्रकारकमानसे पाकविशेष्यकस्य इष्टसाधनत्व-कृतिसाध्यत्वप्रकारकज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानविधया हेतोः तादृशमानससामग्रीकाले सत्त्वनियमेन तस्य न्यायनये प्रवृत्तिकारणत्वात्, पाकप्रवृत्तिसामग्र्याः तादृशमानससामग्रीव्यापकत्वात्, प्रवृत्तिसामग्रीप्रतिबन्धकतयैवोपपत्तेः चाक्षुषादिसामग्र्याः न मानस प्रतिबन्धकत्वं कल्प्यते इति समुदायार्थः ।

2 अव्यापकत्वेनेति — इष्टसाधन-कृतिसाध्यीभूतपाककालीनज्ञानवानहमिति मानसे इष्टसाधनतालिङ्गककार्यतानुमितेरनपेक्षणादिति भावः ।

दर्शितमानसे [1]असिद्धत्वेन पाकस्य विशेषणीयतया असिद्धत्वज्ञानकाले सिद्धत्वज्ञानासंभवादिति । न चेष्टसाधनत्वाभाववान् पाकः इति बाधसत्त्वे, तादृशमानसं जायतामितीच्छासत्त्वे घटादिचाक्षुषसामग्रीसत्त्वे, तादृशमानसवारणाय तस्याः प्रतिबन्धकत्वमावश्यकमिति वाच्यम् । बाधकाले मानसेच्छासत्त्वे आहार्यमानसोदयेन तादृशमानसापत्तिविरहान्न तादृशसामग्र्याः प्रतिबन्धकत्वमिति ।

एवं, इष्टसाधनत्ववत्कृतिसाध्यीभूतवह्निव्याप्यधूमवान् इष्टसाधनत्ववत्कृतिसाध्यीभूतपर्वतः [इति] एतादृशपरामर्शघटितानुमितिसामग्र्याः घटादिप्रत्यक्षे प्रतिबन्धकत्वं न कल्प्यते । वह्निपर्वतविषयकप्रवृत्तिसामग्रीभूततादृशसाध्यज्ञानविशिष्टतादृश-

---

1 असिद्धत्वेनेति—इष्टसाधन-कृतिसाध्य-असिद्धपाककालीनज्ञानवानहमिति मानसे विशेषणतावच्छेदकप्रकारकज्ञानविधया पाके असिद्धत्वज्ञानमपि हेतुः । तथा च तादृशमानससामग्रीकाले सिद्धत्वज्ञानासंभवात् तदभावघटितप्रवृत्तिसामग्र्याः नियमेन सत्त्वात्, तत्प्रतिबन्धकतयैव मानसवारणसंभवेन चाक्षुषादि सामग्रीणां प्रतिबन्धकत्वं न कल्पनीयमिति भावः ।

पक्षज्ञानत्वेनैव प्रतिबन्धकत्वं कल्प्यते लाघवात् । भवन्मते तादृशपरामर्शस्थले प्रवृत्तिसामग्र्याः अनावश्यकत्वेन तादृशपरामर्शघटिततादृशसिद्ध्यभावघटितानुमितिसामग्री घटादिप्रत्यक्षेच्छाविरहविशिष्टा प्रतिबन्धिका वाच्या । अतो गौरवापत्तेः । अस्मन्मते परामर्श–सिद्ध्यभावाद्यनिवेशे लाघवसंभवात् । न च सिद्धत्वज्ञानकाले [1]प्रवृत्तिसामग्रीविरहेण प्रत्यक्षाद्यापत्तिवारणाय तादृशानुमितिसामग्री प्रतिबन्धिका [इति] भवतापि वाच्येति वाच्यम् । [2]असिद्धत्वस्यापि साध्यपक्षकोटौ निवेशादिति ।

एवं, इष्टसाधनत्ववत्कृति साध्यीभूतपाककालीनज्ञानवानहमिति मानसे प्रवृत्तिसामग्रीप्रतिबन्धकतायां कृतिसाध्यताज्ञानस्य निवेशो न क्रियते । विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया तस्यावश्यकत्वादिति । भवन्मते कृति-

---

1 प्रवृत्तिसामग्रीविरहेणेति— सिद्धत्वज्ञानाभावघटितत्वात्प्रवृत्तिसामग्र्या इति भावः ।

2 असिद्धत्वस्यापीति—इष्टसाधनत्ववत्कृतिसाध्यीभूतासिद्धवह्निव्याप्यधूमवान् इष्टसाधनत्ववत्कृतिसाध्यासिद्धपर्वतः इत्येतादृशपरामर्शघटितानुमितिसामग्र्याः घटादिप्रत्यक्षे प्रतिबन्धकत्वं न कल्प्यते इति लाघवमक्षुण्णमिति भावः ।

साध्यतानुमितेरेव हेतुत्वात् तस्य निवेशस्यावश्यकत्वात् इत्यलमसद्ग्रहेणेति, सिद्धमिष्टसाधनताज्ञानस्य प्रवृत्तौ हेतुत्वमिति ॥

---

## पाके प्रवृत्तौ पाककृतिगतेष्टसाधनताज्ञानं हेतुः, न पाकगतेष्टसाधनताज्ञानमिति नैयायिकैकदेशिनां सौन्दलोपाध्यायानां मतनिरूपणम्

अत्र सौन्दलोपाध्यायाः—

पाकगतेष्टसाधनताज्ञानं [1]न हेतुः, चिकीर्षां प्रति [2]तस्याहेतुत्वात् । अचिकीर्षितस्य प्रवृत्त्यविषयत्वेन [3]तस्य चिकीर्षाद्वारैव [4]हेतुत्वात् । चिकीर्षापदस्य सन्नन्तत्वेन, सनो

---

1 न हेतुः — न पाकप्रवृत्तिहेतुः ।

2 तस्य — पाकगतेष्टसाधनताज्ञानस्य ।

3 तस्य — इष्टसाधनताज्ञानस्य ।

4 हेतुत्वात् — प्रवृत्तौ हेतुत्वात् ।

[1]धात्वर्थमुख्यविशेष्यकेच्छावाचित्वेन, धात्वर्थमुख्यविशेष्यकेच्छां प्रति धात्वर्थमुख्यविशेष्यकेष्टसाधनताज्ञानत्वेन हेतुत्वात् कृतिगतेष्टसाधनताज्ञानत्वेन हेतुत्वमिति ।

न च कृतिर्न पाकार्था, कृतिरिष्टसाधनमिति ज्ञानकाले प्रवृत्त्यापत्तिरिति वाच्यम् । पाकानुकूला कृतिरिष्टसाधनमिति ज्ञानस्यैव हेतुत्वात् ।

एतेन, (पाकादिसाध्यः) [पाको न कृति साध्यः] इति ज्ञानकालेऽपि प्रवृत्त्यापत्तिरिति निरस्तम् । पाकानुकूलत्वं कृतौ [विषयीकुर्वत् ज्ञानं] पाकादावपि कृतिसाध्यत्वं विषयीकरोति, [2]सामानसंवित्संवेद्यत्वात् ।

---

1 धात्वर्थेत्यादि — कृञर्थ कृतेः-स्वसमानकर्तृकत्व –स्वविशेष्यकत्वोभयसंबन्धेन सन्नर्थेच्छायामन्वयः इति बोध्यम् ।

2 समानसंवित्संवेद्यत्वादिति — समानया-एकया संविदा-ज्ञानेन वेद्यत्वात्-विषयीकरणादित्यर्थः। तथा च पाकानुकूलकृतिरिष्टसाधनमिति ज्ञानस्य पाके कृतिसाध्यताविषयकत्वात्, पाको न कृतिसाध्यः इति बाधज्ञानकाले असंभवान्न प्रवृत्त्यापत्तिरिति भावः ।

न च पाको नेष्टसाधनमिति ज्ञानकाले पाकानुकूला कृतिरिष्टसाधनमिति ज्ञानकाले प्रवृत्त्यापत्तिरिति वाच्यम् । [1]साक्षादिष्टसाधनत्वस्य कृतौ विरहात् पाके [2]इष्टसाधनत्वमेवेष्टसाधनत्वम् । तथाच कृताविष्टसाधनत्वज्ञानकाले पाकादावपि इष्टसाधनत्वज्ञानावश्यकत्वेन तादृशज्ञानकाले पाको नेष्टसाधनमिति ज्ञानविरहान्नापत्तिरिति । न च पाकानुकूला कृतिरिष्टसाधनमिति ज्ञानस्य हेतुत्वे, पाकानुकूला कृतिरित्यंशे अप्रामाण्यग्रहाभाव–अनाहार्यत्व–निश्चयत्वनिवेशे गौरवमिति वाच्यम् । भवन्मतेऽपि कृतिसाध्यताज्ञानस्य स्वतन्त्रहेतुत्वे, अप्रामाण्यज्ञानाभावनिर्णयत्वानाहार्यत्वादिनिवेशे [न] साम्यादिति । न च साक्षात्साधनत्वाज्ञानात् परम्परासाधनत्वज्ञानादपि प्रवृत्तिदर्शनात् कथं कृतीष्टसाधनताज्ञानस्य एकरूपेण हेतुत्वम्, [3]उभयसाधारणानुगतसाधनत्वस्यैवाभावादिति वाच्यम् । उभयसाधारणसाधनत्व[4]स्यातिरिक्तस्य स्वीकारादिति वदन्ति ।

---

1 साक्षात् — पाकक्रियामद्वारीकृत्य ।

2 इष्टसाधनत्वमिति—पाककृतिगतेष्टसाधनताघटकमिति यावत् ।

3 उभयसाधारणेति — साक्षात्कारण- परम्पराकारणोभयानुगतेत्यर्थः । एवमग्रेऽपि ।

4 अतिरिक्तस्य – क्लृप्तपदार्थातिरिक्तस्य ।

## सौन्दलोपाध्यायसंमतस्य कृतीष्टसाधनताज्ञानस्य हेतुत्वनिरासः

तन्न । पाकेष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वे समानविशेष्यताप्रत्यासत्त्यैव कार्यकारणभावः [1]कल्प्यते । कृतीष्टसाधनताज्ञानहेतुतावादिमते तु [2]प्रवृत्तेर्भिन्नविशेष्यकत्वान्न तथेति विषयभेदेन कार्यकारणभावकल्पने गौरवादिति ।

न च तन्मतेऽपि विशेष्यतासंबन्धेन प्रवृत्तिं प्रति [3]स्वीयेष्टसाधनत्वनिष्ठप्रकारतानिरूपित कृतिनिष्ठविशेष्यतानिरूपितानुकूलत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वसंबन्धेन

---

1 कल्प्यतेइति — तथा च न विषयभेदेन कार्यंकारणभावकल्पनागौरवमिति भावः ।

2 भिन्नविशेष्यकत्वात् — इष्टसाधनताज्ञानविशेष्यकृतेर्भिन्न-पाकविशेष्यकत्वात् ।

3 स्वीयेष्टसाधनत्वेत्यादि – पाकानुकूलकृतिरिष्टसाधनमिति ज्ञाने इष्टसाधनत्वं प्रकारः । निरूपकतया पाकविशिष्टानुकूलत्वविशिष्टकृतिः विशेष्यः । कृतिनिष्ठविशेष्यतायामवच्छेदकीभूतानुकूलत्वनिष्ठावच्छेदकतायां निरूपकतया अवच्छेदकः पाकः इति बोध्यम् ।

कृतीष्टसाधनताज्ञानस्य हेतुताकल्पने, न विषयभेदेन कार्यकारणभावकल्पनगौरवमिति वाच्यम्। अन्यथासिद्धिपञ्चकराहित्यविशिष्टनियतपूर्ववृत्तित्वघटितानुकूलत्वविषयतां निवेश्य कार्यकारणभावकल्पने, अन्यथासिद्धि[1]पञ्चकाभावानां मिथो विशेष्यविशेषणभावे विनिगमनाविरहात् कार्यकारणभावबाहुल्याद्गौरवम्। तदपेक्ष्य प्रवृत्तिं प्रति पाकेष्टसाधनताज्ञानस्य हेतुत्वस्यैव सम्यक्त्वात्। न च भवन्मतेऽपि अनन्यथासिद्धनियतोत्तरवृत्तित्वरूपकृतिसाध्यत्वविषयतां निवेश्य कृतिसाध्यताज्ञानस्य स्वतन्त्रहेतुताकल्पने महद्गौरवमिति वाच्यम्। तत्र [2]कृत्यभाववदवृत्तित्वस्य कृतिसाध्यतापदार्थत्वेन गौरवानवकाशात्।

न च तथापि भवन्मते [3]कार्यकारणभावद्वयकल्पने गौरव-

---

1 अन्यथासिद्धिपञ्चकाभावानामिति — अन्यथासिद्ध्यभावानां पञ्चानामित्यर्थः। तेन एकान्यथासिद्धिसत्त्वेऽपि पञ्चकाभावसत्त्वेऽपि न क्षतिः।

2 कृत्यभाववदवृत्तित्वस्येति — कारणत्वस्य कार्यत्वाभिमतव्यापकत्वरूपत्वात्, तत्कार्यत्वं तद्व्याप्यत्वमिति भावः।

3 कार्यकारणभावद्वयेति — प्रवृत्तौ पाके इष्टसाधनता ज्ञानस्य, कृतिसाध्यताज्ञानस्य च कारणताद्वयेत्यर्थः।

मिति वाच्यम् । तन्मते उक्तानुकूलत्व विषयतानिवेशेन कार्य-कारणभावकल्पने, अन्यथासिद्धिपञ्चकाभावानां विशेषण-विशेष्यभावे विनिगमनाविरहात् पञ्चकार्यकारणभावकल्पना-गौरवम्, कारणतावच्छेदकगौरवं च । तदपेक्ष्य कार्य-कारणभावद्वयकल्पने लाघवस्यातिस्फुटत्वात् । न च अनु-कूलत्व[1]मतिरिक्तमेव । तथा च प्रवृत्तिं प्रति कृतीष्टसाधनता-ज्ञानस्य हेतुत्वे, एक एव कार्यकारणभावः, भवन्मते तु कार्य-कारणभावद्वयमिति गौरवमिति वाच्यम् । ज्ञानस्थले कारणता-ग्राहकप्रमाणावतारे समानविशेष्यकत्वमेव सहकारि, न तु भिन्न-विशेष्यकत्वम्, तस्य कारणताग्रहे प्रतिबन्धकत्वात् । (तथापि) [तथा च] पाकेष्टसाधनताज्ञानस्य पाकः कृति साध्यः [इति] एतादृशज्ञानस्य च समानविशेष्यकतया तयोरेव प्रवृत्तिकारण-ताग्राहकप्रमाणावतारो भवति । (ननु) [न तु] कृतीष्टसाधन-

---

1 अतिरिक्तमेवेति — एवेन अन्यथासिद्धिराहित्यपञ्चकविशिष्टनिय-तपूर्ववर्तित्वस्य व्यवच्छेदः । एवं च न कार्यकारणभावबाहुल्यं, न वा कारणतावच्छेदकगौरवमिति भावः ।

ताज्ञाने, तस्य भिन्नविशेष्यकत्वात् (ज्ञानमपि कारणं) इत्यवधेयमिति ।

---

## सनः धात्वर्थप्रकारकेच्छावाचित्वमिति निरूपणम्

यदपि, धात्वर्थमुख्यविशेष्यकेच्छावाचित्वेन इत्याद्युक्तम् । तन्न चारु । [सनः] [1]धात्वर्थप्रकारकेच्छावाचकत्वात् । तथाहि-पाकं चिकीर्षतीत्यादौ पाकादिमुख्यविशेष्यकत्वेनैव, पाकः क्रियतां, पाकं कृत्या साधयानीत्याद्याकारकेच्छारूपा चिकीर्षा अनुभूयते । द्वितीयादिविभक्तेर्मुख्यविशेष्यतार्थकत्वात् । न च विषयतामात्रमेव द्वितीयार्थोऽस्त्विति वाच्यम् । तथा सति पाकत्वमिच्छति, पाकत्वं चिकीर्षति, शत्रुनाशेच्छाकाले [2]शत्रुमिच्छति इत्यादेरपि प्रयोगस्यापत्तेः ।

---

1 धात्वर्थप्रकारकेच्छावाचकत्वादिति — सनर्थः इच्छा । तत्र धात्वर्थं कृतेः समानकर्तृकत्व सहित-प्रकारितासंबन्धेनान्वयः इति भावः ।

2 शत्रुमिच्छतीति — शत्रुनाशविशेष्यकेच्छायां विशेष्यनाशांशे प्रतियोगिता सबन्धेन शत्रोः प्रकारतया विषयत्वादिति भावः ।

न च कृतेर्मुख्यविशेष्यत्व[1]मनुभूयते । पाकादिमुख्यविशेष्यकचिकीर्षायां तस्याः तादृशविशेष्यत्वासंभवात् । न च तर्हि कृतेः कीदृशं विषयत्वं सन्प्रत्ययार्थेच्छायां प्रतीयते इति वाच्यम् । धातोरिच्छाप्रकारवाचित्वेन इच्छायां प्रकारितासंबन्धेनान्वितार्थबोधकतया प्रकारिताया एव सनर्थेच्छायां कृतेः संसर्गतया भानात् ।

अथैवं पाकदिदृक्षादिरूप (परादि) चिकीर्षास्थले पाकं चिकीर्षतीत्यादिप्रयोगापत्तिः । न च द्वितीयार्थ पाकादि विशेष्यकत्वेन कृति संसर्गतया भासमानस्य प्रकारित्वस्यावच्छे[2]द्यावच्छेदकभावभानान्न दोष इति वाच्यम् । कृतिसाध्यतया

---

1 अनुभूयते इति— पाकं कृत्या साधयानीत्याद्याकारेच्छाया अनुभवे कृतिः इच्छांशे प्रकारतयैव भासते, न मुख्यविशेष्यतयेति समुदितार्थः ।

2 अवच्छेद्यावच्छेदकभावभानादिति — यथोर्विषयतयोः निरूप्यनिरूपकभावः तन्निरूपितविषयितयोरेवावच्छेद्यावच्छेदकभावात्, उक्तचिकीर्षायां पाके कृतेःप्रकारतया भानाभावेन कृतिविषयतापाकविषयतयोः निरूप्यनिरूपकभावविरहेण पाकविशेष्यकत्वकृतिप्रकारित्वयोरवच्छेद्यावच्छेदकभावः नास्तीति भावः ।

पाकेच्छायामपि साध्यत्वप्रकारिताया [1]एव पाकविशेष्यकत्वावच्छिन्नतया [2]तत्रापि तादृशप्रयोगानुपपत्तेः ।

वस्तुतः, [3]संबन्ध संबन्धभानानुपगमात् कृतिसंबन्धतया भासमानप्रकारित्वे विशेष्यतयावच्छिन्नत्वस्य प्रकारतया संबन्धतया च [4]भानासंभवः । एतेन, चिकीर्षायां साध्यतासंबन्धेन कृतेः प्रकारत्वेऽपि न निस्तारः इति चेन्न ।

द्वितीयान्तसमभिव्याहारस्थले द्वितीयार्थस्य पाकादि-

---

1 एवकारेण कृतिप्रकारितया व्यवच्छेदः । कृति साध्यत्वप्रकारकेच्छायां कृतिसाध्यत्वप्रकारता–पाकविशेष्यतयोरेव निरूप्यनिरूपक भावात्, कृतिविषयत्वे पाकविशेष्यता निरूपितत्वाभावात् कृतिप्रकारितायां न पाकविशेषयकत्वावच्छिन्नत्वमित्यर्थः ।

2 तत्रापि — कृतिसाध्यत्वेन पाकेच्छास्थलेऽपि ।

3 संवन्धसंवन्धभानानुपगमादिति — अनवस्थाभियेत्यादिः ।

4 भानासंभव इति – धात्वर्थकृतेः सनर्थेच्छाशां संसर्गतया भासमान प्रकारित्वे पाकमिति द्वितीयान्तार्थस्य पाकविशेष्यत्वस्य अवच्छिन्नत्वसंबन्धेन, पाकविशेष्यत्वावच्छिन्नत्वस्य वा अन्वयो न संभवतीति भावः ।

विशेष्यत्वस्य इच्छायां प्रकारतयैव [1]आकाङ्क्षाबलात् तदवच्छिन्नत्वस्य प्रकारितानिष्ठसंबन्धतावच्छेदकतया भानोपगमेनादोषात् ।

---

### प्रकारतैव द्वितीयार्थः, धात्वर्थ विशेष्यकेच्छैव सना प्रतिपाद्यते इत्याक्षेपः

ननु, पाकं चिकीर्षतीत्यादौ प्रकारतैव द्वितीयार्थोऽस्तु, धात्वर्थविशेष्यतैवेच्छायां भासताम् । [2]पूर्ववत् प्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभावभानोपगमात्, पाकादि चिकीर्षायां कृत्यादिविषयकत्वस्य पाकत्वादिप्रकारत्वानवच्छिन्नतया न पाकत्वं चिकीर्षतीत्यादिप्रयोगः । न चैवं गृहादिप्रकारक-

---

1 आकाङ्क्षाबलादित्यादि–धात्वर्थकृतेः पाकविशेष्यकत्वावच्छिन्नप्रकारितासंबन्धेन सनर्थेच्छायामन्वयः इति समुदायार्थः ।

2 पूर्ववदिति — पाक प्रकारकत्वावच्छिन्नविशेष्यितासंबन्धेन धात्वर्थकृतेरिच्छायामन्वय इत्यर्थः ।

[1]स्थित्यादिगोचरेच्छादशायां गृहं तिष्ठासतीत्यादि प्रयोगापत्तिरिति वाच्यम् । [2]भवतामपि स्थित्यादिप्रकारेण गृहादिगोचरेच्छादशायां तादृशप्रयोगापत्तेर्दुर्वारत्वात् । न च सकर्मकधातूत्तरसन्प्रत्ययोपस्थापितेच्छायामेव [3]कर्मप्रत्ययस्य स्वार्थान्वयबोधौपयिकाकाङ्क्षास्वीकारान्न दोष इति वाच्यम् । [4]ममापीत्थं सुवचत्वात् ।

वस्तुतस्तु, कर्मतासंबन्धावच्छिन्नप्रकारता द्वितीयादिरूपकर्मप्रत्ययेन सनर्थेच्छायां प्रतिपाद्यते इति व्युत्पत्तेः, गृहादिस्थितिगोचरेच्छायां चा [5]धेयतासंबन्धेनैव गृहादेः स्थित्याद्यंशे प्रकारतया न गृहं तिष्ठासतीत्यादयः प्रयोगाः ।

---

1 स्थित्यादि गोचरेच्छा — गृहे स्थितिर्भवतु इत्याकारकेच्छा ।

2 भवतामपि — धात्वर्थ प्रकारकेच्छा सनर्थः । तदन्वयि विशेष्यत्वं द्वितीयाबोध्यमिति वादिनामपि ।

3 कर्मप्रत्ययस्य — कर्मत्वार्थकद्वितीयादेः ।

4 ममापि — धात्वर्थविशेष्यकेच्छा सना बोध्यते इति वादिनोऽपि ।

5 आधेयतासंबन्धेनैवेति— अकर्मकस्थितौ कर्मतासंबन्धेनान्वयासंभवादिति भावः ।

यत्तु सन्प्रत्ययसमभिव्याहारस्थले प्रकृत्यर्थें एव द्वितीयादिकर्मप्रत्ययार्थान्वयः, (न नु) [न तु] सनर्थेच्छायामेवान्वयः इति व्युत्पत्तेः न गृहं तिष्ठासतीत्यादिप्रयोगापत्तिः, [1]प्रकृत्यर्थस्य तत्राकर्मकत्वात् । पाकं चिकीर्षतीत्यादौ च साध्यतया विषयत्वरूपं कृतिकर्मत्वं द्वितीयार्थः । अतो न पाकं चिकीर्षतीतिवत् पाकत्वं चिकीर्षतीत्यादयः प्रयोगाः इति ।

तन्न । गगनदर्शनं भवतु इत्यादीच्छाबोधकस्य गगनं दिदृक्षते इत्यस्य [2]विशेषदर्शिवाक्यस्य प्रामाण्यानुपपत्तेः, दर्शने [3]गगनकर्मकत्वबाधात् । (पन्न) [यत्र] पटविषयकत्वेन वस्तुगत्या घटविषयकदर्शनस्येच्छाविषयता, तत्र घटं दिदृक्षते

---

1 प्रकृत्यर्थस्य – सन्प्रत्ययप्रकृति-स्थाधात्वर्थस्थितेः ।

2 विशेषदर्शिवाक्यस्य — दर्शनं न गगनकर्मकमिति विशेषदर्शनवता प्रयुक्तवाक्यस्य ।

3 गगनकर्मकत्वबाधादिति — उपनीतकालविषयकचाक्षुषदशायां कालं पश्यतीति प्रयोगाभावेन लौकिकविषयताया एव द्वितीयार्थकर्मतारूपत्वात्, गगननिष्ठलौकिकविषयताशालिचाक्षुषाप्रसिद्धेरिति भावः ।

इति प्रयोगापत्तेश्च । न च तत्र घटकर्मकत्वविशिष्टदर्शनविषयता इच्छायां भासते इति नियमात्, उक्तेच्छायां च तादृशविशिष्टविषयकत्वस्य बाधान्नातिप्रसङ्ग इति वाच्यम् । एवमपि तत्र घटो दिदृक्ष्यते इति प्रयोगस्य दुर्वारत्वात्, इच्छाविषयीभूतदर्शनकर्मत्वस्य घटे प्रतीयमानस्याबाधात् । [1]इत्युक्तप्रकार एव रमणीयः इति चेत् ।

---

## सनः धात्वर्थ प्रकारकेच्छावाचिता, पाकं कृत्या साधयानीतीच्छायाः चिकीर्षापदार्थता चेति सिद्धान्तनिरूपणम्

मैवम् । पाकं चिकीर्षतीत्यादि[2]वाक्यजन्यशाब्द-

---

1 उक्तप्रकार इति — धात्वर्थ विशेष्यकेच्छा सनर्थः । तत्रैव कर्मप्रत्ययार्थः कर्मतासंबन्धावच्छिन्नप्रकारतारूपविषयत्वमन्वेति । गगनं दिदृक्षते इत्यत्र लौकिकविषयतारूपकर्मतासंबन्धावच्छिन्ना–या गगननिष्ठप्रकारता तच्छालिचाक्षुषविशेष्यकेच्छाश्रयः इति बोधः । कर्मतया गगनवत् दर्शनं भवत्विति इच्छतीति सारार्थः ।

2 वाक्यजन्यशाब्दबोधे — वाक्यजन्ये कृतीच्छाविषयके शाब्दबोधे ।

बोधे पाकादिविशेष्यत्वावगाहिताया अनुभवसिद्धत्वेन सनो धात्वर्थप्रकारकेच्छावाचित्व[1]स्यावश्यकत्वात् । धात्वर्थविशेष्यकेच्छाबोधकत्वसंभवेऽपि तत्प्रकारकेच्छावाचित्वे बाधकाभावेन पाकं कृत्या [2]साधयानीतीच्छायाः चिकीर्षापदार्थत्वनिराकरणायोगाच्च । न च पाकं कृत्या साधयानीति कथं चिकीर्षाकारोऽपि, तादृशशब्देन इच्छाविषयस्य कृतिसाध्यताविशिष्टपाकस्याबोधनात्, आत्मनि कृतिकरणकपाकसिद्ध्यनुकूलव्यापारस्यैव ततः प्रतीतेरिति वाच्यम् । आत्मनि पाकसिद्ध्यनुकूलकृतिरूपव्यापारबोधे पाकेऽपि स्वकृत्यधीनसिद्धिकत्वरूपस्वकृतिसाध्यत्वस्य तुल्यवित्तिवेद्यतया भानेन तादृशवाक्यस्य चिकीर्षाविशिष्टबोधकत्वात् । कृतिरूपव्यापारस्य

---

1 आवश्यकत्वादिति – पाकविशेष्यक-कृतीच्छाया कृतिप्रकारकत्वादिति भावः ।

2 साधयानीतीच्छायाः — साधयानीति वाक्याभिलप्येच्छायाः । एवं चाभिलापजन्यप्रतीतिसमानविषयत्वमिति भावः ।

[1]णिजर्थतालाभाय कृत्येति कथनात् ।

---

### कृतीच्छायाः कृतिहेतुत्वे प्रतिबन्धकत्वकल्पनालाघवमिति सौन्दलोपाध्यायानुयायि मतनिरूपणं, तन्निरासश्च

एतेन, कृतीच्छायाः कृतिहेतुत्वे कृतिं प्रति [2]जिज्ञासाविशिष्टज्ञानसामग्र्याः प्रतिबन्धकत्वाकल्पने लाघवम् । तादृशसामग्रीकाले कृतीच्छाया असत्त्वे तादृशकारणाभावादेव तदनुत्पत्तेः । तत्सत्त्वे कृतिसामग्र्याः इच्छाघटितायाः जिज्ञासासहितज्ञानसामग्रीतोऽपि बलवत्तया कृतेरेवोत्पत्तेः । न च ज्ञान (प्रवृत्त्या)[प्रवृत्त्योः] युगपदुत्पादोपगमे क्षतिविरहात्

---

1 णिजर्थतालाभायेति ।— णिजन्तधातोः सिद्ध्यनुकूल कृतिरूपव्यापारविशेषे तात्पर्यग्राहकतया कृत्या इति पदं प्रयुक्तम्, न तु तदर्थस्यान्वयबोधः इति भावः । अत्र साधयतिरिच्छायां लाक्षणिकः । लोट् तात्पर्यग्राहकः । इदं रजतत्वेन जानातीत्यत्रेव द्वितीयायाः विशेष्यत्वं, तृतीयायाः प्रकारत्वं चार्थः । कृतिपदस्य कृतिसाध्यत्वे लक्षणा । ततश्च पाकविशेष्यक कृतिसाध्यत्वप्रकारकेच्छानुभवरूपत्वमस्योपपन्नमिति सुबोधिनीकाराः ।

2 जिज्ञासाविशिष्टेति — जिज्ञासासहितार्थकं सामग्रीविशेषणम् ।

तादृशसामग्रीप्रतिबन्धकत्वं कृतिसाध्यत्वप्रकारकेच्छायाः प्रवर्तकतावादिना (प्येतत्) [पि न] स्वीक्रियते इति न लाघवमिति वाच्यम् । जिज्ञासानन्तरं ज्ञानस्यैवानुभवेन तदुत्पत्त्यनुभवसिद्धतया [1]तदनुरोधेन प्रवृत्तौ तादृशसामग्रीप्रतिबन्धकत्वकल्पनस्यावश्यकत्वात् । अनुभवानादरे ज्ञानं प्रति [2]विजातीयज्ञान सामग्री प्रतिबन्धकताया अपि विलयप्रसङ्गात्, इति सौन्दलोपाध्यायानुयायिमतमपि निरस्तम् ।

अनुभवानुरोधादरे, पाकं कृत्या साधयानीति कृतिसाध्यत्वप्रकारकपाकविशेष्यकेच्छाया अपि प्रवर्तकत्वस्यानुभवानुरोधेनावश्यकत्वात् । तदनादरे चोक्तरीत्या कृतीच्छाया अपि हेतुत्वासिद्धेरिति संक्षेपः ॥

— ——

1 तदनुरोधेन — जिज्ञासानन्तरं ज्ञानोत्पत्त्यनुभवानुरोधेन ।

2 विजातीयज्ञानसामग्रीप्रतिबन्धकताया इति — समाने विषये अनुमितौ प्रत्यक्षसामग्रीप्रतिबन्धकतायाः, विभिन्ने विषये प्रत्यक्षादौ अनुमितिसामग्रीप्रतिबन्धकतायाश्चेत्यर्थः ।

## इष्टसाधनत्वस्य लिङर्थत्वे ज्योतिष्टोमेन न यजेत इति लौकिकवाक्यप्रामाण्यापत्तिरिति आक्षेपः, तत्प्रतिक्षेपश्च

यत्तु, [1]इष्टसाधनत्वस्य [2]विध्यर्थत्वे, न कलञ्जं भक्षयेदित्यादौ लिङः अनिष्टसाधनत्वे लक्षणा, नञ्पदं तात्पर्य-[3]ग्राहकमित्येव वाच्यम् । तच्चासंगतम्, तथासति ज्योतिष्टोमेन न यजेत इति लौकिकवाक्यस्यापि प्रामाण्यापत्तेः । श्रुत्या स्वर्गसाधनत्वावगमेऽपि तात्कालिकानिष्टसाधनत्वस्य यागे बाधकाभावादिति ।

तदप्यसत् । न कलञ्जमित्यादौ लिङः अनिष्ट-साधनत्वे निरूढलाक्षणिकत्वात् । ज्योतिष्टोमेन स्वर्गकामो [न] यजेतेत्यत्र निषिद्धलक्षणाङ्गीकारस्यायुक्तत्वात् । अन्यथा घटे पटत्वमित्यादिवाक्यस्यापि, घटादिपदस्य पटादिलाक्षणिक-तया प्रामाण्यापत्तेस्तत्रापि दुर्वारत्वात् ।

---

1 इष्टसाधनत्वस्य — इष्टसाधनत्वमात्रस्य । मात्रपदेन बलवद-निष्टाननुबन्धित्व-कृतिसाध्यत्वयोर्व्यवच्छेदः ।

2 विध्यर्थत्वे – लिङर्थत्वे ।

3 इत्येव वाच्यमिति— इष्टसाधनत्वाभावस्य बाधेन नञा धात्वर्थे बोधासंभवादिति भावः ।

## लिङः इष्टसाधनत्वशब्दस्य च पर्यायतया प्रयोगापत्तिः तन्निरासश्च

(यद्यपि) [यदपि] लिङः इष्टसाधनत्वार्थकत्वे, लिङ्शब्देष्टसाधनताशब्दयोः [पर्यायतया] प्रयोगापत्तिरिति ।

तदप्यसत् । लिङः पदत्वात् इष्टसाधनताशब्दस्य [1]वाक्यत्वात् । लिङ्शब्दादिष्टसाधनत्वत्वेनेष्टसाधनताबोधात्, इष्टसाधनताशब्दाच्च [2]इष्टसाधनवृत्तिधर्मत्वेन तद्बोधात् [पर्यायतया] प्रयोग (त्व) स्य प्रसक्त्यभावाच्च ।

---

1 वाक्यत्वादिति — इष्टशब्दसाधनशब्दभावप्रत्ययसमुदायस्य परस्परसाकांक्षपदसमुदायस्य 'मिथः साकाङ्क्षशब्दस्य व्यूहो वाक्यम्' इति वाक्यलक्षणलक्षितत्वादिति भावः ।

2 इष्टसाधनवृत्तिधर्मत्वेनेति — इष्टसाधनशब्दोत्तर भावप्रत्ययस्य धर्मोऽर्थः । प्रकृतिजन्योपस्थिति प्रकारी भूतधर्मस्यैव भावत्वात् । तत्र च प्रकृत्यर्थस्याधेयतयान्वयः । तथाच इष्टसाधनताशब्दात् इष्टसाधनवृत्ति धर्मः इत्यन्वयबोधः इति भावः ।

### प्रवृत्तिजनकज्ञानविषयस्यैव लिङर्थत्वात् सामान्यतः इष्टसाधनत्वं न लिङर्थः इति आक्षेपः

यदपि, अन्येष्टसाधने अन्यस्य प्रवृत्त्यभावेन [1]मदिष्टसाधनताज्ञानस्यैव प्रवृत्तिजनकत्वस्य वाच्यतया च नेष्टसाधनत्वं लिङर्थः । प्रवृत्तिजनकज्ञानविषयस्यैव लिङर्थत्वात् । प्रवृत्तिजनकस्य मदंशान्तर्भावेण [2]तादृशज्ञान (स्येव) [स्य] [3]विधिवाक्याद्संभवात् । मदन्तर्भावेण शक्तौ शक्त्यानन्त्यापत्तेरिति ।

---

### उक्ताक्षेपप्रतिक्षेपः

तदप्यसत् । [4]प्रवृत्तिप्रयोजकज्ञानविषयस्यैव लिङर्थतया विधितः इष्टसाधनत्वोपस्थितौ, प्रवर्तकस्य मदन्तर्भावेण

---

1 मदिष्टसाधनतेति — अत्र अस्मदर्थः प्रवर्तमानः पुरुषः ।
2 तादृशज्ञानस्य — इष्टसाधनताज्ञानस्य ।
3 असंभवादिति — मदंशस्य शक्यकोटावनिवेशादिति भावः ।
4 प्रवृत्तिप्रयोजकज्ञानविषयस्यैवेति — एवेन प्रवृत्तिजनकज्ञानविषयस्य निरासः ।

तज्ज्ञानस्य [1]मनसा संभवात् । किं च, यद्विशेषयोरिति न्यायेन इष्टसाधनताज्ञानत्वेन प्रवृत्तित्वेन हेतुहेतुमद्भावस्यावश्यकतया प्रवृत्तिजनकस्य [2]सामान्यतः इष्टसाधनताज्ञानस्य विधिजन्यत्वसंभवेन प्रवृत्तिजनकज्ञानविषयस्य लिङर्थत्वेऽपि, [3]तत्र शक्तौ बाधकाभावात् । तस्मादिष्टसाधनत्वं [4]विध्यर्थः इति सिद्धम् ।

---

## लिङर्थघटकमिष्टं, क्वचित् साक्षात् कर्तुः, क्वचित् परम्परयेति केषांचिन्मतम्

अत्र इष्टं क्वचित् साक्षात् कर्तुरेव । क्वचिच्च परम्परया । अत एव अन्यप्रेरणया प्रवृत्तौ, [5]आचार्येष्टस्य परम्परयापि

---

1 मनसेति — अत एव विधिवाक्यजन्यज्ञानजन्यं ज्ञानं प्रवर्तकमिति मणिकारा वदन्ति ।

2 सामान्यतः — मदंशमनन्तर्भाव्य ।

3 तत्र — इष्टसाधनत्वे ।

4 विध्यर्थः — लिङर्थः ।

5 आचार्येष्टस्य — दुग्धपानादेः ।

 

शिष्येष्टतया तत्साधनताज्ञानात् शिष्यादेः गवानयनादौ प्रवृत्तिः । आचार्यप्रेरणया अहं गामानयामि, न किञ्चिन्ममेष्टमिति व्यवहारश्च न मे साक्षात् किंचिदिष्टमित्येवं (परम्परया) [परतया] संगमनीयः, इति केचित् वदन्ति ।

---

### सर्वत्रेष्टं साक्षात् कर्तुरेवेति स्वाशयवर्णनम्

वस्तुतस्तु, [1]सर्वत्रेष्टं साक्षात् कर्तुरेव । आचार्यप्रेरणया प्रवृत्तावपि, आचार्यप्रसादादिकं साक्षात् शिष्यादेः इष्टमस्तीति न दोषः । [2]उपदर्शितव्यवहारश्च आचार्यप्रसादाद्यतिरिक्तं दुग्धपानादिकमिष्टं मे (त्वा) [ना] स्तीत्येवंपरतया संगमनीयः । गुर्वादिप्रेरितबालादेः बलात्कारे[3]णाध्ययनेऽपि

---

1 सर्वत्रेति — स्वतन्त्रप्रवृत्तौ प्रेरणाधीनप्रवृत्तौ चेत्यर्थः ।

2 उपदर्शितव्यवहारः— आचार्यप्रेरणया गामानयामि, न किञ्चिन्ममेष्टमिति व्यवहारः ।

3 अध्ययनेऽपीति— तत्स्थले बालस्य साक्षादिष्टस्य आचार्यप्रसादादेरभावेऽपीति ।

तदभावप्रयुक्तगुर्वादिकर्तृकवधजन्यताडनाभाव एवेष्टः इति [1]तत्साधनताज्ञानात् प्रवृत्तिः ।

---

### इष्टसाधनताज्ञानस्य प्रवर्तकत्वाक्षेपः तत्परिहारश्च

यत्तु इष्टसाधनताज्ञानं न प्रवर्तकम्, अनिष्टसाधने इव इष्टसाधनेऽपि कष्टं कर्मेति न्यायेन द्वेषादेव प्रवृत्त्यभावोपपत्तेरिति ।

तन्न । आन्तरालिकप्रद्वेषाभावदशायां प्रवृत्त्यापत्तेः न च चिकीर्षाया असत्त्वे तदभावादेव न प्रवृत्तिः, तत्सत्त्वे चेष्टापत्तिरिति वाच्यम् । इष्टसाधनताज्ञानस्योपायेच्छां प्रति हेतुतया इष्टसाधनत्वाज्ञानात् चिकीर्षाया एवासंभवात् ।

---

1 तत्साधनताज्ञानात् —ताडनप्रागभावे क्षेमसाधारणसाधनताज्ञानात् ।

इष्टसाधनताज्ञानस्य उपायेच्छां प्रति हेतुत्वासंभवाक्षेपः

(तद्ध) [ननु] उपायेच्छां प्रति इष्टसाधनताज्ञानस्य हेतुत्व (मसंभवाभिप्रायत्वस्य) [मसंभवि। उपायत्वस्य] इच्छाविषयत्वस्य [1]चाननुगमात् । न च पाकेच्छां प्रति इच्छाविषयसुखसाधनताज्ञानं हेतुः इत्येवं रीत्या तत्संभव इति वाच्यम् । कालान्तरीय पुरुषान्तरीयेच्छामादायातिप्रसङ्गवारणार्यं तत्तत्कालीनत्व–तत्तत्पुरुषीयत्वनिवेशस्यावश्यकतया अननुगमतादवस्थ्यात् ।

इच्छाविषयत्वाज्ञानेऽपि [2]स्वरूपसत्सुखेच्छा – सुखसाधनता [ज्ञाना] भ्यां पाकेच्छोत्पत्तेश्च । न च पाकेच्छां प्रति सुखेच्छात्वेन सुखसाधनताज्ञानत्वेन च हेतुत्वा-

1 अननुगमादिति — उपायत्वस्य उपेयभेदेन, पुरुषभेदभिन्नेच्छाभेदेन इच्छाविषयत्वस्य चाननुगतत्वादित्यर्थः ।

2 स्वरूपसदिति — तथाच इच्छाविषयत्वप्रकारतायाः पाकेच्छाकारणतावच्छेदककोटावप्रवेशात् इच्छाविषयसुखसाधनताज्ञानत्वेन न पाकेच्छां प्रति हेतुत्वमिति भावः ।

त्वोक्तदोष इति वाच्यम् । दुःखाभावेच्छा—दुःखाभावसाधनता-ज्ञानाभ्यामपि पाकेच्छोत्पत्त्या व्यभिचारप्रसङ्गादिति चेत् ।

---

## निरुक्ताक्षेपपरिहारः

नैवम् । सामानाधिकरण्य स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसंबन्धेन सुखेच्छा—सुखसाधनं पाकः इति ज्ञानोभयविशिष्टेच्छां प्रति सुखेच्छात्वेन सुखसाधनताज्ञानत्वेन च हेतुत्वोपगमात् । एवं दुःखाभावेच्छा—दुःखाभावसाधनताज्ञानादीनामपि हेतुत्वं [1]बोध्यम् । न च सुखेच्छावैशिष्ट्यं सुखेच्छाजन्यतावच्छेदके निवेश्यताम् । तस्य सुखसाधनताज्ञानजन्यतावच्छेदके निवेशे प्रयोजनाभावः । एवं [2]वैपरीत्येना-

---

1 हेतुत्वमिति — स्वसामानाधिकरण्य-स्वाव्यवहितोतरक्षणोत्पत्तिकत्वोभयसंबन्धेन दुःखाभावेच्छा-दुःखाभावसाधनताज्ञानोभयविशिष्टेच्छां प्रति हेतुत्वमित्यर्थः ।

2 वैपरीत्येनापीति — सुखसाधनताज्ञानवैशिष्ट्यं सुखसाधनताज्ञानजन्यतावच्छेदके निवेश्यताम्, तस्य सुखेच्छाजन्यतावच्छेदके निवेशे प्रयोजनाभावः इत्यपीत्यर्थः ।

पीति वाच्यम् । कार्यतावच्छेदकयोः [1]व्याप्यव्यापकभाव एव कारणानां परस्परसहकारितास्वीकारेण परस्परजन्यतावच्छेदक-कोटौ परस्परवैशिष्ट्यनिवेशस्यावश्यकत्वात् ।

---

अन्येषां मतेन हेतुहेतुमद्भावः

अन्ये तु [2]तादृशसंबन्धेन (सुख) [स्व-स्व] वैशिष्ट्य-मेव स्व-स्वकार्यतावच्छेदककोटौ निवेशनीयम् । कार्य-तावच्छेदकयोः व्याप्यव्यापकभावविरहेऽपि सामानाधिकरण्य-मात्रेणैव कारणानां परस्परसहकारित्वस्वीकारादित्याहुः ।

---

1 व्याप्यव्यापकभाव एवेति—प्रत्यक्षत्वज्ञा—नत्वयोः व्याप्यव्यापक-भावोऽस्ति । प्रत्यक्षज्ञाने जननीये प्रत्यक्षसामग्र्याः ज्ञान-सामान्यसामग्री सहकारिणी भवतीति भावः ।

2 तादृशसंबन्धेनेत्यादि— स्वसामानाधिकरण्य-स्वाव्यवहितोत्तर-क्षणोत्पत्तिकत्वोभयसंबन्धेन सुखेच्छावैशिष्ट्यं सुखेच्छायाः, सुखसाधनताज्ञानवैशिष्ट्यं सुखसाधनताज्ञानस्य च जन्यता-वच्छेदकमित्यर्थः ।

तत्र स्वतन्त्राणां मतम्, तन्निरासश्च

स्वतन्त्रास्तु, फलसाधनत्वस्यापि स्वजानजन्येच्छायां प्रकारत्वाभ्युपगमात्, सुखसाधनत्वप्रकारतानिरूपिता या पाकत्वावच्छिन्नोद्देश्यता, तच्छालीच्छां प्रति सुखेच्छात्वेन सुखसाधनताज्ञानत्वेन च हेतुत्वम् । यद्वा, सुखसाधनताज्ञानस्यैवैतादृशेच्छात्वावच्छिन्नं प्रति हेतुत्वम् । सुखेच्छायास्तु सुखसाधनताधीजन्येच्छात्वावच्छिन्नं प्रति, इत्याहुः ।

(तत्व) [तन्न], फलसाधनत्वस्य [1]स्ववि (शेष्य) [षय] कज्ञानजन्येच्छायां प्रकारत्वे (न) मानाभावात् ।

---

जातिविशेषाणां जन्यतावच्छेदकत्वं स्वीकृत्य नवीनानां कार्यकारणभावकथनम्, तन्निरासश्च

यदपि, [2]सुखेच्छादिजन्यतावच्छेदका जातिविशेषा एव

---

1 स्वविषयकेति — स्वप्रकारकेत्यर्थः ।
2 सुखेच्छादीति — आदिना दुःखाभावेच्छादिपरिग्रहः ।

स्वीक्रियन्ते । सुखदुःखाभाव (परीक्षा) [योरिच्छा] तत्तत्साधनताज्ञानं च यदा, (वन्नन्तं दुर्धरं) [तदनन्तरं] [1]इच्छाद्वयमेव स्वीक्रियते । [2]प्रयत्नयागेच्छावदिच्छायौगपद्यस्वीकारात् । अतस्तत्र न [3]सांकर्यमिति नवीनैरुक्तम् ।

तदपि चिन्त्यम् । एतादृशानन्तजातौ मानाभावात् । अन्यथा, तत्तत्स्मृतिजनकतावच्छेदक [4]नानाजातिसंस्कारयौगपद्ययोः स्वीकारेणैवोपपत्तौ संस्कारसविषयकत्वासिद्धिप्रसङ्गात् । किञ्च, यदा शतफलव्यक्तिषु इच्छा, तत्फलो-

---

1 इच्छाद्वयमेवेति — सुखेच्छा–सुखसाधनताज्ञानाधीना एका, दुःखाभावेच्छादुःखाभावसाधनता ज्ञानाधीना चापरा इच्छा बोध्या ।

2 यागेच्छावदिति — त्यागात्मकयागरूपेच्छावदित्यर्थः ।

3 न सांकर्यमिति—सुख-दुःखाभावयोरिच्छानन्तरं यदैकैवेच्छा, तदा सुख-दुःखाभावयोरेकैकेच्छाधीनाथामेकैकेच्छायां परस्परपरिहारेण विद्यमानयोः जातिविशेषयोः तत्रैकस्यामिच्छायां समावेशेन सांकर्यं स्यादिति भावः ।

4 नानाजातीत्यादि — घट-पटादिस्मृतिजनकस्य संस्कारस्य घट-पटादि विषयकत्वं मास्तु, तत्तस्मृतौ विजातीयसंकारस्य हेतुत्वं, घट-पटाद्यनुभवेन घटसंस्कारः पटसंस्कारश्चेति संस्कारद्वयोत्पत्त्या न संस्कारगतजातिसांकर्यमिति भावः ।

पायभूत—तत्तत्सुखं तत्तद्व्यक्तित्वेन विषयीकृत्य अश्वमांस-स्वत्वध्वंसेच्छात्मकत्यागरूपाश्वमेधसामग्री च, तत्र तादृशेच्छोत्पत्त्या विनिगमनाविरहेण [1]सर्वासामेवाश्वमेधत्वात् तत्कर्तुः शतक्रतुत्वापत्तिः ।

---

## अपरेषां मतेन हेतुहेतुमद्भावनिरूपणम्

अपरे तु, [2]प्रकारतासंबन्धेन इच्छाविशिष्टावच्छिन्नकार्यतानिरूपितसाधनत्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेद-

---

1 सर्वासामेव—शतफलानि तत्तद्व्यक्तित्वेन विषयीकृत्य जातानां त्यागरूपेच्छानां सर्वासामपि ।

2 प्रकारतासंवन्धेनेत्यादि— यदा सुखस्य दुःखाभावस्य वा इच्छा, तत्साधनत्वेन पाकस्य, यागस्य वा ज्ञानं, तदा प्रकारतासंवन्धेन इच्छाविशिष्टं यत् सुखत्वं, दुःखाभावत्वं वा, तदवच्छिन्नकार्यतानिरूपितसाधनत्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकता-संवन्धेन ज्ञानं पाकत्वे, यागत्वे वा वर्तते । तत्र प्रकारता-संवन्धेन इच्छा पाकत्व प्रकारिका यागत्वप्रकारिका वा इच्छा जायते इति कार्यकारणभावसमन्वयो बोध्यः ।

 

कतासंबन्धेन ज्ञानत्वेन कारणता, प्रकारतासंबन्धेनेच्छात्वेन कार्यता, इति न [1]व्यभिचारः, न वा यागत्वादि भेदेन भिन्नकारणता । अत्र च इच्छा [2]विषये विशेषणं, ज्ञाने (नु) [नू] पलक्षणम् । तेन फलेच्छाविरहदशायां नोपायेच्छापत्तिः, न वा इष्टसाधनताज्ञानेन इच्छाया अविषयीकरणेऽपि उपायेच्छानुपपत्तिः । इत्थं च उपायेच्छायां फलेच्छायाः स्वातन्त्र्येण कारणत्वोपगमो निरस्तः । कारणतावच्छेदकविशिष्टकारणस्य कार्योत्पत्तिपूर्वकाले अपेक्षणीयतया फलेच्छाविरहकाले उपायेच्छापत्त्यभावात् । न चोक्तविशेष्यतावच्छेदकतासंबन्धेन ज्ञानं विनापि प्रकारतासंबन्धेन सुखत्व-दुःखाभावत्वयो[3]रिच्छोत्पत्त्या व्यभिचार इति वाच्यम् । सुखत्व-दुःखाभावत्वान्यवृत्तित्वविशिष्ट प्रकारताया एव कार्यतावच्छेदकसंबन्धत्वोपगमेन व्यभिचाराभावात् । नचैवं यत्र सुखत्व-

---

1 न व्यभिचारः — सुखसाधनताज्ञानकाले दुःखाभावसाधनताज्ञानाभावप्रयुक्तः व्यतिरेकव्यभिचारो न ।

2 विषये — प्रकारीभूतधर्मे । प्रकारतासंबन्धेनेति शेषः ।

3 इच्छोत्पत्त्येति – 'निर्दुःखत्वे सुखेचेच्छा तज्ज्ञानादेव जायते' इत्युक्तेरिति भावः ।

दुःखाभावत्वे धर्मितावच्छेदकीकृत्य इष्टसाधनताज्ञानं दृष्टं, तत्र सुखत्व–दुःखाभावत्वयोः सुखत्व-दुःखाभावत्वान्यवृत्तित्वविशिष्टप्रकारतासंबन्धेनेच्छापत्तिरिति वाच्यम् । सुख सुखम् इत्यादितः [1]शाब्दबोधवारणाय सुखत्वाद्यन्यवृत्तिविषयतासंबन्धेन ज्ञानं प्रति सुखत्वादिभेदत्वेन कारणताकल्पने, [2]गुणत्वस्यैव कार्यतावच्छेदकत्वोपगमेनोक्तापत्त्यभावादिति प्राहुः, इति दिक् ॥

---

## इष्टतावच्छेदकत्वोपलक्षित स्वर्गत्वादिविशिष्टसाधनत्वे विधेः शक्तिरिति निरूपणम्

(स च) [तच्च] इष्टसाधनत्वं स्वर्गादिसाधनत्वत्वेनैव लिङः शक्यम्, तेन रूपेण ज्ञानादेव प्रवृत्त्या तस्यैव [3]प्रवर्त-

---

1 शाब्दबोधवारणायेति — उद्देश्यतावच्छेदकस्य विधेयतावच्छेदकस्य च ऐक्ये अभेदान्वयबोधस्याव्युत्पन्नत्वादिति भावः ।

2 गुणत्वस्यैवेति— तथाच इच्छारूपगुणः सुखत्वान्यवृत्तिप्रकारतासंबन्धेन सुखत्वे न जायते इति भावः ।

3 प्रवर्तकत्वात् — प्रवृत्तिजनकज्ञानविषयत्वात् ।

कत्वात् । न तु इष्टसाधनत्वत्वेन, इच्छायाः स्वरूपसत्या एव हेतुत्वेन तज्ज्ञानानपेक्षणात् । बहुवित्तव्ययायाससाध्ये आमुष्मिके च [1]विशिष्य तज्ज्ञानं विना प्रवृत्त्यभावाच्च । नचैवं लिङो नानार्थत्वापत्तिरिति वाच्यम् । तदादिपदे बुद्धिविषयतावच्छेदकत्वस्येवात्रापि शक्यतावच्छेदकानां स्वर्गादीनां इच्छा (याविषया) [2]विषयताया अनुगमकत्वात् । तथाहि– यथा, तदादिपदे तदादिपदं बुद्धिविषयतावच्छेदकवति शक्तमित्याकारकः शक्तिग्रहः । बुद्धिविषयतावच्छेदकत्वमुपलक्षणतया घटत्वादीनामनुगमकम्, न तु तदंशे शक्तिः । पदार्थोपस्थितिस्तु प्रकरणादिमहिम्ना घटत्वादिनैव । न तु बुद्धिविषयतावच्छेदकत्वस्योपस्थितौ शाब्दबोधे वा भानम् । तथा प्रकृतेऽपि लिङादिपदमिच्छाविषयतावच्छेदकवत्साधनत्वे शक्तमित्याकारकः शक्तिग्रहः । इच्छाविषयतावच्छेदकत्वं स्वर्गत्वादीना-

---

1 विशिष्य तज्ज्ञानं — स्वर्गत्वादिना इष्टज्ञानम् ।

2 विषयतायाः — इच्छाविषयतावच्छेदकतायाः । विषयतावच्छेदकताया विषयतारूपत्वात् विषयतापदेन तदभिधानम् ।

मुपलक्षणतया अनुगमकम्, न तु (दश) [तव] शक्तिः। पदार्थोपस्थितिस्तु समभिव्याहृत स्वर्गादिपदमहिम्ना स्वर्गसाधनत्वत्वेनैव, न तु इच्छाया (नु) [उ] पस्थितौ शाब्दबोधे वा भानम्। इत्थं च (विशिष्ट) [इष्ट] तावच्छेदक स्वर्गत्वादिप्रकारेण शाब्दबोधोत्पत्त्या विधिवाक्यात् प्रवर्तकज्ञाननिर्वाहः। एवं च इच्छाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे [1]विधेः शक्तिरिति पर्यवसन्नम्। (नवैतत्) [न चैतस्य] स्वर्गकामादिपदाल्लाभेनान्यलभ्यतया न तत्र शक्तिरिति वाच्यम्। तस्मात् स्वर्गाद्युपस्थितावपि साधनत्व बो (धका)[धा] भावात्। न चैवं [2]साधनत्वे एव शक्तिरास्तामिति वाच्यम्। तस्य कार्यतावच्छेदकविशिष्टकार्यनियन्त्रितत्वेन सामान्यतस्तस्यैकस्याभावात्।

———

1 विधेः — लिङः।

2 साधनत्वे एवेति — स्वर्गस्यान्यलभ्यत्वादिति भावः।

## इष्टसाधनत्वस्य लिङर्थत्वे, ज्योतिष्टोमेनेति वाक्ये तृतीयानुपपत्ति-शङ्का, तन्निरासश्च

ननु इष्टसाधनत्वस्य विध्यर्थत्वे ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ तृतीयानुपपत्तिः। तद्विधायक 'कर्तृ करणयोः' (पा.सू) इति सूत्रस्य अनभिहिताधिकारीयत्वेन करणत्वानभिधाने एव तद्विधानेन, लिङा [1]तदभिधाने तृतीयाया असंभवात्। न च यज्यर्थयागगतसाधनत्वे लिङाभिधानेऽपि तद्विशेषज्योतिष्टोमादि प्रातिपदिकार्थगतस्य तस्यानभिधानान्न तृतीयानुपपत्तिरिति वाच्यम्। ज्योतिष्टोम–यज्यर्थयागयोर[2]भेदादिति चेन्न।

लिङा साधनत्वमात्राभिधानेऽपि [3]तद्विशेषकरणत्वस्यानभिधानात्।

---

1 तदभिधाने – साधनत्वाभिधाने। साधनत्वमेव करणत्वमित्यभिमानेन शङ्का बोध्या।

2 अभेदादिति — वस्तुतः– प्रातिपदिकार्थगतस्याभिधानादिति भावः।

3 तद्विशेषकरणत्वस्य — साधनत्वविशेषस्य व्यापारवत्कारणत्वरूपसाधकतमत्वस्य।

स्वर्गत्वविशिष्टसाधनत्वस्य ज्योतिष्टोमे बाधान्न बोधः
इति शङ्का, विजातीयतत्तत्साधनत्वस्य बोधाभ्युपगमेन
तत्परिहारश्च

नन्वेवमपि लिङादिना ज्योतिष्टोमादौ स्वर्गत्वविशिष्ट-साधनत्वं कथं बोधनीयम्, स्वर्गत्वादेः गङ्गास्नान वाजपेयादि-जन्यस्वर्गादिसाधारण्येन ज्योतिष्टोमादिजन्यतावच्छेदकत्वासंभ-वेन तत्र स्वर्गत्वादिविशिष्टसाधनत्वबाधादिति चेन्न ।

विजातीयतत्तत्साधनत्वस्यैव विधिना बोधनात् । [1]वैजात्यं च विधेः तथा शक्तिस्वीकारादेवोपस्थितम् । एत-दर्थमेव च लिङादेः तत्तत्साधनत्वे शक्तिस्वीकारात् ।

---

1 वैजात्यं चेति — इदमेव यागादिजन्यतावच्छेदकम् । शुद्ध-समवायः कार्यतावच्छेदकसंबन्धः ।

## स्वर्गत्वावच्छिन्नं प्रत्येव ज्योतिष्टोमादेः कारणता, संबन्ध-विशेषस्य कार्यतावच्छेदकत्वान्न व्यभिचारः इति वदतां केषांचिन्मतनिरूपणम्

केचित्तु, स्वर्गत्वादिकमेव ज्योतिष्टोमादिजन्यतावच्छेदकम् । अतिप्रसक्तस्याप्यवच्छेदकत्वे बाधकाभावात् ।

[1]नन्वेवं, स्वर्गत्वावच्छिन्नस्य ज्योतिष्टोमादिरूपकारणाभावे गङ्गास्नानादिना अनुत्पत्तिप्रसङ्गः । उत्पत्तौ च घटादौ रासभवत् व्यभिचारात् ज्योतिष्टोमादेरकारणत्वप्रसङ्गः । एवं गुणसमवायिकारणतावच्छेदकत्वस्य द्रव्यत्वेऽनङ्गीकारेण (सन्तापमिव) [[2]सत्तायामेव] अङ्गीकारे, गुणादावपि रूपाद्यापत्तिः इति नातिप्रसक्तमवच्छेदकमिति चेन्न ।

ज्योतिष्टोमादिजन्यापूर्वविशिष्टसमवायसंबन्धेन स्वर्गत्वावच्छिन्नं प्रति ज्योतिष्टोमादेः कारणत्वोपगमेनादोषात् । एवं तृणादेरपि तृणत्वाद्यवच्छिन्नसंयोगसंबन्धेन वह्नित्वावच्छिन्नं प्रति

---

1 अतिप्रसक्तस्य कार्यताकारणतयोरवच्छेदकत्वे बाधकं शङ्कते — नन्वेवमिति ।

2 सत्तायामेवेति – गुणसमवायिकारणतातिप्रसक्तायामित्यादिः ।

तृणत्वादिना हेतुतेति [1]न तत्रापि वैजात्यकल्पना । अत एव व्रीहिभिर्यजेत यवैर्यजेतेत्यादौ पर (स्या)[स्पर] व्यतिरेकेण प्रत्येकमुक्तजनकत्वेऽपि न दोषः । व्रीहिभिर्यक्ष्ये इति संकल्पापूर्वावच्छिन्नसमवायसंबन्धस्यैव व्रीहिकार्यतावच्छेदकत्वेनादोषात् । संकल्पापूर्वं च फलापूर्वोत्पत्तौ नष्टमिति प्रयोगान्तरे यवादीनामुपादानं नानुपपन्नम् । न चैवं रासभादेरपि घटहेतुत्वापत्तिः, रासभाद्यवच्छिन्नसंयोगस्य कार्यतावच्छेदकत्वोपगमेन व्यभिचाराभावादिति वाच्यम् । यवादेः श्रुत्या, तृणादेरन्वयव्यतिरेकाभ्यां हेतुतासिद्धावपि रासभादेः हेतुत्वे मानाभावात् । किन्तु अवश्यकल्पनीयदण्डादिभिरन्यथासिद्धिरेव । एवं, गुणादौ रूपापत्तिरपि न, तत्तद्रूपे तत्तद्द्रव्यस्य समवायि-

1 न तत्रापि वैजात्यकल्पनेति— तृणं विनापि अरणिनिर्मन्थनादिसंयोगेन वह्नेरुत्पत्त्या व्यभिचारपरिहाराय तृणजन्यवह्नौ वैजात्यं कल्पयित्वा विजातीयवह्निं प्रति तृणस्य कारणत्वमित्येवं कारणत्वकल्पना नेति भावः ।

कारणताया आवश्यकत्वेन विशेषसामग्र्यभावादेव [1]तदभावोपपत्तेरित्याहुः । (अपरे तु कम्बुग्रीवादिमान् नास्तीत्यादौ गुरुधर्मानवच्छेदकत्वपक्षे घटत्वसामग्र्यभावात्तदभावोपपत्तेरित्याहुः ।)

---

प्रतियोगिताविशेषसंबन्धेन स्वर्गसमानाधिकरणाभाव-
प्रतियोगितावच्छेदकत्वविशिष्टाभावघटितं
साधनत्वं प्रतीयते इति अपरेषां मतनिरूपणम्

अपरे तु, कम्बुग्रीवादिमान्नास्तीत्यादौ गुरुधर्मानवच्छेदकत्वपक्षे घटत्वावच्छिन्नप्रतियोगिताया एव संबन्धत्ववत्, अत्रापि विजातीयस्वर्गसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन [2]स्वर्गसमानाधिक-

---

1 तदभावोपपत्तेः — गुणादौ रूपाभावोपपत्तेः ।

2 स्वर्गसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वीय इति — लिङः, कामनाविषयतावच्छेदकत्वोपलक्षित स्वर्गत्व विशिष्टसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं अभावश्च खण्डशोऽर्थः । प्रतियोगितावच्छेदकत्वस्य उक्तप्रतियोगिताकत्वसंबन्धेन लिङर्थाभावे अन्वयः इति बोध्यम् ।

रणाभावप्रतियोगितावच्छेदकत्वीयोऽभावः प्रतीयते इति नानुपपत्तिः। अन्वयितावच्छेदकावच्छिन्न प्रतियोगिताकत्वव्युत्पत्तिश्च [1]नञ्समभिव्याहारस्थले एवेति [न] तद्विरोधः इति प्राहुः इति दिक्।

---

साध्येष्टकत्वं लिङर्थ इति नव्यानां मतम्

नव्यास्तु, अनन्यथासिद्धतदभाववदवृत्तित्वरूपतत्साध्यत्वघटित साध्येष्टकत्वज्ञानमेव लाघवात् प्रवृत्तिहेतुरिति [2]साध्येष्टकत्वमेव साध्यस्वर्गादिकत्वपर्यवसितं लिङाद्यर्थः। युज्यते चैतत्। अन्यथा उपदर्शितरीत्या ज्योतिष्टोमादिकं विनापि गङ्गास्नानादितः स्वर्गादिकमिति व्यभिचारज्ञानसत्त्वेन लिङादिना इष्टसाधनताया बोधनासंभवात्। साध्येष्टकत्वस्य

---

1 नञ्समभिव्याहारस्थल एवेति — नीलघटवति, घटो नास्तीति प्रयोगवारणायेत्यादिः।

2 साध्येष्टकत्वमेवेति — प्रवृत्तिकारणज्ञानविषयस्यैव लिङर्थत्वमिति भावः।

लिङाद्यर्थत्वे तु इष्टत्वसामानाधिकरण्येन ज्योतिष्टोमादिमदन्यावृत्तित्वग्रहे बाधकाभावः । द्रव्यं गन्धवदिति ग्रहेऽपि सामानाधिकरण्येन द्रव्यं गन्धाभाववदिति [1]ग्रहादिति वदन्ति ।

---

नित्यनैमित्तिकयोः निष्फलयोः विधौ इष्टसाधनत्वबोधासंभवात् नेष्टसाधनत्वं लिङर्थः इति शङ्का, तयोः सफलत्वेन तत्परिहारश्च

अथ इष्टसाधनत्वं साध्येष्टकत्वं वा न लिङाद्यर्थः, नित्यनैमित्तिकयोः (मू) [फ] लाभावेन तदसंभवादिति चेन्न ।

प्रत्यवायपरिहाररूपफलस्य तत्रापि सत्त्वात् । शास्त्रबलेन तदकरणे प्राप्तस्य प्रत्यवायस्य तत्करणे परिहारावश्यंभावात् । न च वेदबोधितत्वेन निष्फलयोरेव तयोः प्रवृत्ति-

---

1 ग्रहादिति सामानाधिकरण्येन तद्वत्ताबुद्धौ सामानाधिकरण्येन तदभावज्ञानस्याप्रतिबन्धकत्वादिति शेषः ।

रिति वाच्यम् । वेदसहस्रैरपि बोधिते, निष्फलत्वज्ञानदशायामप्रवृत्तेः । नचैवं,

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ (भ. गी-17-11)

इति भगवद्वचनविरोध इति वाच्यम् ।

1 'यज्ञो दानं तपःकर्म पावनानि मनीषिणाम् ॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥' (भ.गी-18-5-6)

2इत्यष्टादशे भगवतैव पावनत्वोक्तेः । तस्मादनुद्दिष्टोऽपि प्रत्यवायपरिहारः फलमिति, फलं त्यक्त्वापि क्रियमाणस्य पावनत्वमिति तदाशयः ।

'सन्ध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥'

---



1 'यज्ञो दानं तपश्चैव' इति भगवद्गीतापाठो दृश्यते ।

2 [illegible] इति — अध्याये इति शेषः ।

इति कश्चित् नित्येऽपि फलश्रवणाच्च । नचार्थवादात्मकमुक्त-वचनं स्तावकम् । स्तुतिश्च प्ररोचनार्था । सा च पुरुष-प्रवृत्त्यर्थेति वाच्यम् । तथासति सर्वेभ्यः कामेभ्यो दर्श-पूर्णमासौ इत्यादेरपि [1]तथात्वापत्तेः । चतुर्थी तु, 'ऊर्जोऽव-रुध्यै' इत्याद्यर्थवादे चतुर्थीवत् नार्थसाधिका । दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजेतेत्यादिभिः फलाकाङ्क्षानिवृत्तेश्चेत्यलं पल्लवेन ।

---

**कालान्तरभाविस्वर्गसाधनत्वस्य यागे बाधात् बोधासंभवशङ्का, साक्षात्परम्परासाधारणस्य साधनत्वस्य सामान्यतः स्वर्गसाधनत्व-त्वेन बोधोपगमेन तत्परिहारश्च**

ननु, तथापि स्वर्गकामो यजेतेति विधिना यागे स्वर्ग-साधनत्वबोधोऽनुपपन्नः । देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्येच्छारूपतया कालान्तरभाविस्वर्गपर्यन्तमसत्त्वेन स्वर्गा-

---

1 तथात्वापत्तेः — स्तावकत्वापत्तेः ।

व्यवहितपूर्वकालवृत्तित्वघटितस्य स्वर्गसाधनत्वस्यासंभवात् । न च यागस्य साक्षात् स्वर्गसाधनत्वासंभवेऽपि अपूर्वरूपव्यापारद्वारा स्वर्गसाधनत्वं संभवत्येवेति वाच्यम् । [1]तदानीं तादृशव्यापारानुपस्थित्या तद्द्वारापि स्वर्गसाधनत्वस्य बोधासंभवादिति चेन्न ।

साक्षात्परम्परासाधारणसाधनत्वस्य स्वरूपसंबन्धरूपतया, कार्यनियतपूर्ववृत्तित्वरूपतया, पदार्थान्तररूपतया वा विधिना यागे सामान्यतः स्वर्गसाधन [त्व] त्वेन स्वर्गसाधनत्वे बोधिते, पश्चात् तन्नियामकस्य स्वर्गाव्यवहितपूर्वकालवृत्तित्वस्य बाधप्रतिसन्धानेन स्वर्ग साधनत्वानुपपत्तिप्रतिसन्धाने, तदुपपादकतया स्वर्गपर्यन्तस्थाय्यपूर्वरूप व्यापारकल्पनेनादोषात् ।

---

1 तदानीं — विधिवाक्यजन्यबोधदशायाम् ।

## विधेरपूर्वबोधकतेति गुरुमतनिराकरणम्
### तत्र विप्रतिपत्तिः

अत्रेदं विचार्यते । विधेरपूर्वबोधकता अस्ति, न वेति । तत्रापूर्व कल्प्यमिति वादिनां न्यायविदां सा नास्तीति सिद्धान्तः । अपूर्वं न कल्प्यं, किन्तु वाच्यमिति वदन्तः प्राभाकरास्तु स्वर्गकामो यजेतेत्यादि- कालान्तरभाविफलकामसमभिव्याहृतवैदिक[1] विधेर-पूर्वबोधकतां स्वीकुर्वन्ति ।

---

### वैदिकविधेरपूर्वबोधकतावादिनां प्राभाकराणामाशयवर्णनम्

तेषामित्थ (स्यसा) [मा] शयं वर्णयन्ति अभियुक्ताः ।

फलकामना क्रियायां कामिनं नियोजयति—प्रवर्तकधी-मन्तं करोति इति व्युत्पत्त्या कामी नियोज्यः इत्युच्यते ।

---

1 विधेरिति — लिङादिप्रत्यये, प्रवर्तके लिङाद्यन्तघटितवाक्ये, लिङाद्यर्थे च विधिपदं शास्त्रकारैः प्रयुज्यते इत्यवधेयम् ।

नियोज्यत्वं च तस्य, ममेदं कार्यमिति (धर्म) [धी] मत्त्वमेव। यागादिक्रियायां च [1]तेन रूपेण स्वर्गादिफलकामस्यान्वयः।

---

## कामिनः नियोज्यतया क्रियान्वयाक्षेपः

अथ, किमर्थं नियोज्यतया कामिनोऽन्वयः स्वीक्रियते, कर्तृत्वेनै[2]वासौ भासताम्। आवश्यकं च कृतिविशेष्यतया तज्ज्ञानम्। भावनाया विशेष्यतयान्वयित्वस्य संख्यान्वयनियामकत्वात्। आख्यातोपात्तभावनाविशेष्ये एव [3]प्रथमायाः साधुत्वात्। न च स्वर्गकामकार्यत्वस्य क्रियायामन्वये स्वर्गकामनियोज्यकत्वं प्रयोजकम्। स्वर्गकामकार्यताज्ञाने विषयत्वं

---

1 तेन रूपेण — नियोज्यत्वेन।
2 असौ – स्वर्गकामः।
3 प्रथमाया इति — प्रथमान्तपदोपस्थाप्ये एवाख्यातार्थसंख्यान्वयादिति भावः।

त्रिना यागादेः तत्कृतिसाध्यत्वानिर्वाहात् इति [1]अन्वयप्रयोजक-रूपलक्षणयोग्यताज्ञानविधया स्वर्गकामनियोज्यकत्वबोधः स्वर्ग-कामकार्यत्वबोधे अपेक्षित इति । मणिकारेणापि [2]'नाहत्य क्रिया कार्यतया लिङा बोधयितुं शक्यते, स्वर्गकामनियोज्यत्वा-न्वययोग्यताज्ञान विरहात्' इत्यनेन प्रथमतः कार्यनाबोधनासंभवे हेतुविधया नियोज्यत्वबोधसामग्रीविरहोऽभिहितः [3]एतदभिप्रेत्यै-वेति वाच्यम् । यतः कर्तृत्वबोधे योग्यताज्ञानविधया नियोज्य-त्वभानापेक्षा प्रभाकरैः नाभ्युपेयते । पचतीत्यादौ लडाख्याते-ऽपि [4]तत्स्वीकारापत्तेः । एवं च क्रियायां कामिकार्यताबोधो-ऽपि कामिनः कर्तृत्वबोधपर्यवसितः, विशेष्यविशेषणभावमात्र-वैलक्षण्यादिति तुल्ययुक्त्या तत्रापि कामिनो नियोज्यतया भान-मनपेक्षितमेवेति चेत् ।

---

1 अन्वयप्रयोजकरूपलक्षणयोग्यतेति — घटेन जलमाहरेत्यादौ जलाहरणकरणत्वान्वयबोधे छिद्रेतरत्वस्य घटांशे भानं निरुक्त-योग्यताज्ञानवशादिति वदन्ति ।

2 आहत्य — साक्षात् ।

3 एतदभिप्रेत्य — स्वर्गकामकार्यताबोधे स्वर्गकामनियोज्यकत्व-बोधस्यापेक्षितत्वमभिप्रेत्य ।

4 तत्स्वीकारापत्तेः — नियोज्यत्वभानस्वीकारापत्तेः ।

### वेदे विशिष्टान्वयपरताया औत्सर्गिकत्वेन कामनाविशिष्टस्य कर्तृत्वेनान्वयासंभवात् नियोज्यत्वेनान्वय आवश्यक इति निरुक्ताक्षेपपरिहारः

स्वर्गकामनाविशिष्टस्य हि कर्तृतान्वयो न संभवति, कामनारूपविशेषणांशे तदन्वय[1]स्यौत्सर्गिकस्यासंभवात् । अथ चैत्रः पचतीत्यादौ अन्वयितावच्छेदकचैत्रत्वादेः कर्तृत्वबाधेऽपि, यथा [2]तदुपलक्षिते धर्मिणि कर्तृत्वान्वयः, तथा प्रकृतेऽपि कामनोपलक्षिते पुंसि तदन्वयो निष्प्रत्यूह एव । [3]विशेष्यान्वय्यनन्वयित्वरूपोपलक्षणत्वेऽपि [4]तस्याः ब्राह्मणत्वादिवत् [5]स्वतः कर्तृव्यावर्तकता संभवत्येवेति निष्कामसाधारणकर्तृत्वान्वयप्रसङ्गो वारणीय इति चेन्न ।

---

1 औत्सर्गिकस्येति — घटः प्रमेयः इत्यादौ घटत्वविशिष्टस्य प्रमेयत्वान्वये घटत्वेऽपि तदन्वयस्यानुभविकत्वादिति भावः ।

2 तदुपलक्षिते — चैत्रत्वाद्याश्रये ।

3 विशेष्यान्वय्यनन्वयित्वेति - विशेष्यस्य — कामनाविशेष्यस्य कामिनः, अन्वयि - यत् कर्तृत्वं तदनन्वयित्वेत्यर्थः ।

4 तस्याः — कामनायाः ।

5 स्वतः कर्तृव्यावर्तकता — निष्कामकर्तृव्यावर्तकता ।

विशिष्टान्वयपरतायाः वेदस्यौत्सर्गिकतया, संभवन्त्यां कथञ्चित् विशेषणतायामुपलक्षणताभ्युपगमस्यानौचित्यात् । न च विशेष्यान्वयिना कर्तृत्वेन कामनाया आश्रयत्वेनानन्वयेऽपि तत्समानकालतया तस्या विशेषणत्वमास्ताम्, दण्डी गच्छतीत्यादौ गमनकर्तृत्वाद्यन्वये दण्डादेर्विशेषणत्ववदिति वाच्यम् । विशेष्यपदार्थाश्रयत्वेनान्विते विशेषणस्याश्रयतयैव विशेषणत्व-[1]स्यौत्सर्गिकतया त्यागायोगात् । कृतिक्षणे उपायचिकीर्षयाऽन्तरितायाः फलकामनायाः असत्त्वेन तत्समानकालताया अपि [2]तस्यासंभवात् । नियोज्यत्वेन कामिनोऽन्वये च ममेदं कार्यमिति ज्ञानप्रयोजकत्वरूपनियोज्यत्वस्य कामनांशेऽपि सत्त्वात् [3]विशिष्टान्वयो निराबाधः, काम्यसाधनताज्ञानस्य कर्तव्यतानुमापकतया कामनायास्तत्प्रयोजकत्वात् ।

---

1 औत्सर्गिकतयेति — प्रमेयवान् घटः इत्यादौ घटे विशेषणप्रमेयत्वस्यापि आश्रयतयान्वयादिति भावः ।

2 तस्य — कर्तृत्वस्य । एवं च कामिनि आश्रयतया विशेषणकामनायां समानकालतया कर्तृत्वान्वयेनापि दण्डी गच्छतीत्यत्रेव विशिष्टान्वयपरतानिर्वाहो न संभवतीति भावः ।

3 विशिष्टान्वयः — कामनाविशिष्टस्य नियोज्यत्वेनान्वयः ।

कामिनः नियोज्यत्वेनान्वयो व्यर्थः, कामनाविशिष्टे कृतेः
प्रयोजकतया अन्वयसंभवादित्याक्षेपः

अथैवमाख्यातार्थकृतेरपि प्रयोजकतासंबन्धेन (कार्यता) [कामना] विशिष्टे अन्वयसंभवात् नियोज्यत्वेन कामिनः अन्वयो विफलः, कृतिसाध्यताज्ञानस्य कामनाप्रयोज्यत्वे, तद्द्वारा कृतेरपि कामनाप्रयोज्यत्वादिति । न च विनिगमनाविरहेण नियोज्यतयाप्यन्वयः निष्प्रत्यूह इति वाच्यम् । नियोज्यत्वेनान्वयेऽपि कर्तृत्वेनान्वयस्य प्रथमायाः साधुत्वनियामकत्वेनावश्यकत्वमिति प्रागेवोक्तत्वादिति चेत् ।

---

कर्तृतया कामिनोऽन्वयानुरोधेनैव नियोज्यत्वभानमावश्यकमिति
तत्परिहारः

आस्तां प्रथमासाधुतानिर्वाहकत्वेन कर्तृतया कामिनोऽन्वयः । तथापि [1]तदनुरोधेनैव नियोज्यत्वभानमावश्यकम्,

---

1 तदनुरोधेनैव — कामिनः कर्तृतयाऽन्वयानुरोधेनैव ।

[1]विशिष्टान्वयानुरोधात् । प्रयोजकतासंबन्धेन हेतोरन्वयबोधोपगमे, [2]तादृशान्वयप्रयोजकनियोज्यताज्ञानमपि योग्यताज्ञानत्वेन तादृशान्वयबोधहेतुः । तथाहि—परम्परासाधनस्थले हि तदंशे [3]तत्प्रयोजकत्वज्ञानस्य योग्यताज्ञानविधया तदंशे [4]तत्कार्यप्रयोजकताबोधहेतुत्वं गुरूणामनुमतम् । अत एव तन्मते यागस्य स्वर्गसाधनताबोधे अपूर्वसाधनताबोधापेक्षा । कामनायाश्च न साक्षात् कृतिप्रयोजकता । अपि तु कार्यताज्ञानसंपादनेनैवेति, कामनाविशिष्टे कृतिप्रयोजकत्वान्वयस्वीकारे [5]नियोज्यत्वोपस्थितिर्ध्रुवा । अभिहितं [6]चैतदालोककृतापि 'एतज्ज्ञानद्वारा कृतिजनकत्वमिति बोधजनकज्ञान ध्रौव्येनान्वयाङ्गीकारात्' इति ग्रन्थेन ।

---

1 विशिष्टान्वयेति — उत्सर्गसिद्ध कामनाविशिष्टान्वयेत्यर्थः ।

2 नियोज्यताज्ञानमपि — स्व कार्यताज्ञानमपि ।

3 तत्प्रयोजकत्वज्ञानस्य — द्वारीभूतापूर्वादिप्रयोजकत्वज्ञानस्य ।

4 तत्कार्यप्रयोजकतेति — अपूर्वादिकार्यं स्वर्गादिप्रयोजकतेत्यर्थः ।

5 नियोज्यत्वोपस्थितिः — कार्यताज्ञानवत्त्वोपस्थितिः ।

6 आलोककृता — आलोकनामकस्य चिन्तामणिव्याख्यानस्य कर्त्रा पक्षधरमिश्रेण ।

एवं, कार्यत्वैकदेशे कृतावपि कामनाविशिष्टस्यैव पुंसः अन्वयः [1]उक्तयुक्त्या स्वीकरणीयः । स चाधेयतासंबन्धेन [2]न संभवतीति प्रयोज्यतासंबन्धेनैव वाच्यः इति, कामिका (र्थ) [र्य] त्वभानान्तर्गत–कृतिवृत्ति [3]कामनाप्रयोज्यत्वनिर्वाहक नियोज्यत्वभानानुरोधेनापि कामनाविशिष्टे निरुक्तनियोज्यत्वबोधापेक्षेति, 'नाहत्य क्रियाकार्यता' इत्यादि चिन्तामणिग्रन्थसंगतिः । न च गुरूणां क्रियाकार्यताबोधः न शाब्दः, किन्तु [4]औपादानिक एवेति तत् कथं तत्र योग्यतापेक्षेति वाच्यम् । शाब्दसामग्रीसहकृतानुपपत्तिज्ञानस्यैवोपादानत्वात् । तदुक्तम् 'उपादानं तावदनुपपत्तिसहकृतः शब्दः' इति ।

---

1 उक्तयुक्त्या — वेदे विशिष्टान्वयपरताया उत्सर्गसिद्धत्वयुक्त्या ।

2 न संभवतीति — विशेषणीभूतकामनावृत्तित्वस्य कृतौ बाधादिति भावः ।

3 कामनाप्रयोज्यत्वनिर्वाहकेति - कार्यताज्ञानद्वारैव कृतेः कामनाप्रयोज्यत्वात्, कार्यताज्ञानवत्त्वस्यैव नियोज्यत्वरूपत्वात् इति भावः ।

4 औपादानिकः — यागकार्यतां विना अपूर्वकार्यता अनुपपन्नेति अनुपपत्तिज्ञानजन्यः इत्यर्थः । शाब्दे एव योग्यताज्ञानं कारणमिति भावः ।

कामनाया एव कार्यताज्ञानोपयोगो न साक्षात् । अपि तु स्वविषय (क) काम्यसाधनतात्मक—कार्यत्वानुमापकलिङ्ग-ज्ञानसंपादनेन । तदुक्तम् 'स च कामनानन्तरं काम्यसाधन-ताबोधात् कार्यताज्ञाने सति स्यात्' इति । एवं च कामनायां कार्यता (ज्ञानाद्य) [ज्ञान] प्रयोजकत्वरूपनियोज्यत्वभाने, उक्त-युक्त्या क्रियानिष्ठेष्टसाधनताज्ञानप्रयोजकत्वम् । तच्च गुरूणां क्रियानिष्ठेष्टसाधनत्वं विना न तत्र काम्यसाधनताभानमिति, स्वर्गसाधनताज्ञानं विना न नियोज्यत्वान्वयबोधसंभवः ।

---

## योग्यताज्ञानात्मकं नियोज्यत्वज्ञानमपि शाब्दमेवेति तत्रापि योग्यताज्ञानापेक्षा

अथ योग्यताज्ञानात्मकं नियोज्यत्वज्ञानं मानसमेवोप-गन्तव्यम्, (न नु)[न तु]शाब्दम्, नियोज्यत्वस्य पदादनुपस्थि-तेरिति न [1]तत्र योग्यताज्ञानापेक्षेति चेन्न । ज्ञानप्रत्यासत्ति-

---

1 तत्र — मानसज्ञाने । शाब्दसामग्र्यामेव योग्यताज्ञानस्य अपेक्षेति भावः ।

मनभ्युपगच्छतां गुरूणां मनसो बहिरस्वातन्त्र्येण नियोज्यत्वज्ञानस्य शब्दप्रयोज्यस्यैवोपगन्तव्यत्वात् । [1]तच्च शाब्दत्वजातिमत्, औपादानिकं वा । फलतो न विशेषः । पदजन्यनियोज्यत्वोपस्थितिविरहश्चा[2]र्थाध्याहारमते अप्रयोजकः । अस्तु वा नियोज्यत्वमपि विध्यर्थः ।

स्वर्गकामयागयोः संसर्गो नियोज्यत्वमिति तु, नामार्थधात्वर्थयोः साक्षादन्वयस्या[3]व्युत्पन्नत्वादनुपादेयम् ।

---

मिश्रसंमतः कार्यताबोधः यागविशेष्यक एवेति निरूपणम्

कार्यताबोधो यागविशेष्यक एव मिश्राणां संमतः ।

---

1 तच्च — शब्दप्रयोज्यं नियोज्यत्वज्ञानम् ।

2 अर्थाध्याहारमते इत्यादि — द्वारमित्यादौ पिधेहीति पदजन्योपस्थित्यभावेऽपि मानान्तरोपस्थितपिधानान्वयबोधस्य तन्मतेऽङ्गीकारादिति भावः ।

3 अव्युत्पन्नत्वादिति — तण्डुलस्य कर्मतासंबन्धेन पाकान्वयतात्पर्येण तण्डुलः पचतीत्यादिप्रयोगस्याप्रामाणिकत्वादिति भावः ।

यस्तु स्वर्गकामः [1]स्वनियोज्यककार्ययागकः इत्याकारकबोधः तैरभिहितः, स्वर्गकामकृतिसाध्ययागनियोज्यः स्वर्गकामः इति [2]तदर्थः । [3]तत्र स्वर्गकामस्य विशेष्यतया भानं, [4]तत्राख्यातोपात्तसंख्यान्वयानुरोधेन यदभिहितम्, तत्तु न सम्यक् । चरमभाविनि औपादानिककर्तृत्वबोधे कर्तरि संख्यान्वयेनैवोपपत्तेः ।

कार्यताबोधे संख्यान्वयाङ्गीकारेऽपि, औपादानिकबोधे संख्यान्वय एव तत्र प्रथमासाधुत्वनिर्वाहकः, कार्यताबोधस्याप्यौपादानिकत्वात् । अत एव कार्यत्वपक्षक समभिव्याहृतक्रियान्वयित्वविप्रतिपत्तिसंगतिः । कार्यत्वबोधस्य शाब्दत्वजातिमत्त्वे तादृशजातिमति बोधे क्रियासंसृष्टतया भासमानत्वरूपक्रियान्वयित्वाभावस्यै[5]वाप्रसङ्गात् ।

---

1 स्वनियोज्येत्यादि – स्वपदार्थः स्वर्गकामः । तन्नियोज्यकः स्वर्गकामकार्यश्च यागः, तत्संबन्धी स्वर्गकामः इति अक्षरार्थः ।

2 तदर्थः – उक्तबोधपर्यवसितार्थः ।

3 तत्र – अभिहिते बोधे ।

4 तत्र – स्वर्गकामे ।

5 अप्रसङ्गादिति – तथाच क्रियान्वयित्वाभावरूपकोटयन्तराप्रसिद्ध्या कार्यत्वे विरुद्धभावाभावरूपकोटिद्वयप्रतिपादकविप्रतिपत्तिरेवासंगतेत्यर्थः ।

अपूर्वकार्यताबोधीय क्रियान्वयित्वाभावः विप्रतिपत्तिविषय (क) इति चेन्न । 'अपूर्वकार्यतायाः क्रियाकार्यतां विनाऽज्ञेयत्वात्, [1]सापि लिङा अनुपपत्तिद्वारा परम्परया बोध्यैव' इति मिश्रग्रन्थासंगतेरशक्यपरिहारत्वात् । न [2]चोक्तबोध एव कर्तृत्वबोधः, न तु चरमं कर्तृत्वावगमः इति मिश्राशयः इति वाच्यम् । अनुपदमेव, 'नन्वेवं नियोज्यत्वेनैव स्वर्गकामाद्यन्वये अधिकारिणोऽलाभे प्रवर्तकत्वायोगः इति चेन्न । चरमभाविनि औपादानिकबोध एव कर्तृत्वाधिकारित्वयोरपि लाभात् ।' इति [3]तैरेव वक्ष्यमाणत्वात् ।

तथाच [4]स्वर्गकामनियोज्यो यागः स्वर्गकामकार्यः इत्याकारकः तदन्वितकार्यता (बोधाश्रयात्) [बोधः] यागनियोज्य-

---

1 सापि — क्रियानिष्ठकार्यतापि ।

2 उक्तबोध एव — 'स्वर्गकामः स्वनियोज्यक कार्ययागकः' इति बोध एव । अस्यैव कर्तृबोधत्वे कर्तरि संख्यान्वयानुरोधेन स्वर्गकामस्य विशेष्यत्वं मिश्राभिमतं, न यागस्येति शङ्कितुराशयः ।

3 तैरेव — मिश्रैरेव ।

4 स्वर्गकामनियोज्य इति — स्वर्गकामनियोज्यक इत्यर्थः । बहुव्रीहिरत्र समासः ।

स्वर्गकामकार्यो याग: इति तदर्थः । [1]यागविशेष्यकस्वर्ग-कामकार्यताज्ञानप्रयोजकस्वर्गकामनाविशिष्टप्रयोज्यकृतिसाध्यो याग: इति निगर्वः ।

न च योग्यताज्ञानत्वेन नियोज्यत्वज्ञानस्य पूर्वापेक्षणीयत्वेऽपि फलीभूतज्ञाने तद्भानमनर्थकमिति वाच्यम् । तदन्वय-प्रयोजकरूपविशिष्टे एव तदन्वयः इति नियमात् । तदुक्तं मिश्रैरेव 'योग्यतावच्छेदकप्रकारेणैवोपस्थित एव इतरान्वय इति घटे छिद्रेतरत्ववत् स्वर्गकामनियोज्यत्वस्य योग्यताबलादुपस्थितेः ।' इति । तत्र च योग्यता यागा (दि) [दावि] ति योग्येतरत्र यागादिकर्तृत्वबाधः । [2]इतरबाधबुद्धेः अनुमितौ

1 यागविशेष्यकेत्यादि — यागविशेष्यकं यत् स्वर्गकामकार्यता-ज्ञानं, तत्प्रयोजिका या स्वर्गकामना, तद्विशिष्टप्रयोज्या या कृतिः, तत्साध्यो याग इत्यर्थः ।

2 इतरबाधबुद्धेरित्यादि — महानसीयवह्निव्याप्यवानिति परामर्शं विनापि वह्निव्याप्यधूमवान् इति परामर्शात्, जायमानानुमितिः महानीयवह्नीतरवह्न्यभाववानिति इतरबाधबलात् महानसीयवह्नित्वप्रकारिका यथा जायते इति दृष्टान्तार्थः ।

व्यापकतानवच्छेदकप्रकारभासकत्ववत् शाब्दबोधेऽपि पदानुपस्थितप्रकारभासकतायाः तुल्ययुक्तिसिद्धत्वात् ।

वस्तुतस्तु अर्थाध्याहारवादिनां तेषां योग्यताज्ञानात्मकनियोज्यताबोध इव फलीभूततद्भानेऽपि नेतरबाधापेक्षेति ।

विषयाबाध एव योग्यता । अन्वयप्रयोजकरूपस्य फलीभूतबोधे भानं मणिकृतोऽप्य (नुपात्तं) [नुमतम् ।] 'कार्यताविधिपक्षे अन्वयप्रकारतया साधनत्वं शाब्दम्' इति [1]तदुक्तेः । शाब्दं—शाब्दज्ञानविषयः । अन्वयप्रकारतया—अन्वयितावच्छेदकतया । न चान्वयप्रयोजकरूपस्यान्वयितावच्छेदकतया भाननियमे, अन्वयप्रयोजकरूपस्य यदन्वयप्रयोजकं रूपान्तरं, तस्यापि भानप्रसङ्गेनानवस्थेति वाच्यम् । पदार्थतावच्छेदकरूपस्यान्वयप्रयोजकस्यान्वयितावच्छेदकान्तरानपेक्षणेनानवस्थापरिहारात् ।

---

1 तदुक्तेः — मणिकृदुक्तेः ।

कार्यताबोधे इष्टसाधनताभानस्याक्षेपः, मतभेदेन तत्परिहारश्च

अथ यदि कार्यताबोधेऽपीष्टसाधनत्वं भासते, तदा गतं [1]तेषां काम्यसाधनताविषयककृतिसाध्यताज्ञानस्य प्रवर्तकत्वासंभवबीजभूतेन साध्यत्वसाधनत्वयोः विरोधनिबन्धनैकधीविषयत्वासंभवेन इति चेत्। साध्यत्वसाधनत्वयोः विरोधेनैकज्ञानाविषयत्वं पूर्वानुयायिनां केषां चिदेवानुमतम्, न तु सर्वेषामिति मतभेदेन सर्वसामञ्जस्यात्। [2]अत एव यजेतेत्यादौ इष्टसाधनयागरूपधात्वर्थे कार्यत्वान्वयः इति मतं, [3]साधनत्वस्याभिधात्मकतावादिनः नरसिंहस्य संगतम्। अत एव 'यागस्य स्वर्गसाधनत्वमुपादानेनावगम्यम्, काम्यमानस्वर्गसाधनं यागः स्वर्गकामकार्यः इति उपादानसचिवात् शब्दादवैति'। इति (णालिका) [नलिक] नाथग्रन्थोऽप्युपपादितः।

---

1 तेषां — प्राभाकराणाम्।

2 अत एव — गुरुमतानुयायिनां सर्वेषां साधनत्वसाध्यत्वयोरेक ज्ञानविषयत्वासंभवस्य अनुमतत्वाभावादेव।

3 साधनत्वस्येति — लिङर्थः अभिधा। सा च इष्टसाधनत्वरूपा इति प्रभाकरानुयायिनो नरसिंहस्य मतम्।

## कार्यताविधिपक्षे इत्यादि मणिवाक्यस्य कार्यताबोधे इष्टसाधनत्वाभानेऽपि द्वेधा संगतिः

'साधनत्वं शाब्दम्' इति [1]मूलं कार्यताबोधजनकनियोज्यताबोधे अन्वयितावच्छेदकतया साधनत्वभानाभिप्रायकं [वा] ।

वस्तुतस्तु, अन्वयप्रकारतया—अन्वयप्रयोजकरूपलक्षणयोग्यतात्वेन, साधनत्वं शाब्दं—शब्दसहकारि इति मूलार्थकरणात् अन्वयप्रयोजकरूपस्य फलीभूतज्ञानविषयत्वानियमोऽपि उपपद्यते । अत एव दीधितिकृतापि 'स च [2]तेषामन्वयप्रयोजकरूपवत्त्वम् । तेन तज्ज्ञानं प्रथममु (पि) [त्पद्य] ते । न च शाब्दबोधे तदनुप्रवेशोऽपि नियतो मानाभावात् ।' इत्यभिहितं प्रत्यक्षमणिदीधितौ इत्यवधेयम् ।

— ——

1 मूलं — मणिकृतो वाक्यम् । मण्युक्तार्थविशदीकरणायैवास्य ग्रन्थस्य करणात् मणिवाक्यं मूलपदेन व्यवहृतं बोध्यम् ।

2 तेषां — प्राभाकराणाम् ।

## मिश्रानुसारीयाणां अपूर्वे विधिशक्तिस्वीकाराशयवर्णनम्

एवं च यथामतं कार्यबोधतज्जनकबुद्धयोः, तत्तज्जनकबुद्धावेव [वा] काम्यसाधनता (ज्ञा) [भा] नस्यावश्यकत्वे साक्षात् स्वर्गासाधनस्य यागादेरपूर्वद्वारैव स्वर्गसाधनत्वं गृहीतव्यम् । तच्च [ना] पूर्वोपस्थितिं विनेति अपूर्वे विधिशक्तिरुपेयते इति मिश्रानुसारीयाः ।

---

## विध्यधीनबोधे नियोज्यत्वभानमनङ्गीकुर्वतां केषांचिन्मतनिरूपणम्

केचित्तु, कामनाविशिष्टस्य कार्यत्वान्वयितया भानान्तर्गतस्य [1]कामनाधीनकार्यत्वभानस्य [2]साक्षादेव निर्वाहकं काम्यसाधनताज्ञानम् । कृतेः कामनाधीनत्वं कृतिप्रयोजककाम्यसाधनत्वशरीरे कामनान्तर्भावादेवेति, काम्यसाधनत्वस्य काम-

---

1 कामनाधीनकार्यत्वभानस्य – कामनाधीना या कृतिः तत्साध्यताभानस्य ।

2 साक्षादेव नियोज्यताज्ञानमनपेक्ष्यैव ।

नाधीनकार्यत्वान्वयप्रयोजकतया [1]तदन्वये एव तस्य योग्यतात्वोपगमात्, नियोज्यत्वज्ञानमनपेक्ष्यैव काम्यसाधनताज्ञानेन कार्यताज्ञानमुत्पाद्यते । 'यागस्य स्वर्गसाधनत्वमुपादानेनावगम्य, काम्यमानस्वर्गसाधनं यागः स्वर्गकामकार्यः इत्यवैति ।' इति [2]प्राचीनग्रन्थस्यापि [3]अत्रैव स्वरसोऽवसीयते । तत्र नियोज्यत्वज्ञानापेक्षायाः, कार्यताबोधे अन्वयितावच्छेदकतया नियोज्यत्वभानस्य चाप्रदर्शनात् ।

कामनाविशिष्टस्य नियोज्यत्वमपि, तद्विशिष्टस्य कृतिप्रयोजकतानिर्वाहकमिति तज्ज्ञानसंभवस्यापेक्षणीय [त्व] मिति चेत् । किं यावन्निर्वाहकज्ञानमेव शाब्दबोधेऽपेक्षितम् ।

---

1 तदन्वये एव — कामनाविशिष्टकार्यताभानान्तर्गतस्य कामनाधीन कृतिसाध्यत्वस्यान्वये एव । एवेन नियोज्यत्वान्वयस्य व्यवच्छेदः ।

2 प्राचीनग्रन्थेति — अयं नलिकनाथग्रन्थतया पूर्वमुक्तः ।

3 अत्रैव — विधिजन्यबोधे नियोज्यत्वस्य भानाभावे एव ।

तथा सति चिकीर्षाप्रयोजकत्वादेरपि कृत्युपयोगितानिर्वाहकतया [1]ज्ञानमप्यपेक्षेतेति बहवोऽनर्थाः प्रसज्येरन् ।

— ——

## नियोज्यत्वभानानभ्युपगमे स्वर्गकामः चैत्यं वन्देत इति वाक्यप्रामाण्यापत्तिरित्याक्षेपः

अथ विध्यधीनबोधे नियोज्यत्वभानानभ्युपगमे स्वर्गकामः चैत्यं वन्देत इत्यादि वाक्यमपि प्रमाणं स्यात् । भ्रान्तस्य स्वर्गकामनयापि चैत्यवन्दनसंभवेन स्वर्गकामनाधीनकृतिसाध्यत्वस्यापि तत्राबाधात् । [2]मम तु स्वर्गकामनाधीनस्य कृतिसाध्यत्वज्ञानस्य विषयो न चैत्यवन्दनम् । अन्यथाख्यात्यनभ्युपगमेन चैत्यवन्दनादौ काम्यस्वर्गसाधनत्वरूपलिङ्गस्य विशिष्टज्ञानासंभवेन भ्रान्तस्य पुंसः [3]तादृशलिङ्गासंसर्गाग्रहात्

---

1 ज्ञानमपि — चिकीर्षाप्रयोजकत्वादिज्ञानमपि ।

2 मम तु — नियोज्यत्वस्य शाब्दे भानाङ्गीकर्तुः मम तु ।

3 तादृशलिङ्गासंसर्गाग्रहादिति — अख्यातिवादिनां प्रभाकराणां मते सर्वत्र भ्रमस्थाने असंसर्गाग्रहः— भेदग्रहाभाव एवाभिषिक्त इति बोध्यम् ।

कार्यत्वासंसर्गाग्रहमात्रोपगमात्, [1]स्वर्गकामनाविशिष्टनियोज्यत्वस्य तत्र बाधः इति तादृशवाक्याप्रामाण्योपपत्तिरिति चेत् ।

---

## निरुक्ताक्षेपनिरासः

न । स्वर्गकामसमभिव्याहृतविधिजन्यकार्यताबोधे स्वर्गसाधनत्वस्यान्वयप्रयोजकस्यान्वयितावच्छेदकतया भाननियमोपगमेनैव [2]तदप्रामाण्योपपत्तेः । साध्यत्वसाधनत्वयोरेकधर्मिणि एकज्ञानाविषयत्वे तु [3]स्वर्गसाधनताज्ञानविषयत्वस्यैव योग्यतात्वमुपेयते । तत् (अन्वय) कार्यताबोधे अन्वयितावच्छेदकतया भासते इति, अन्यथाख्यात्यनभ्युपगमेन [4]तदपि बाधितं चैत्यवन्दनादाविति न किञ्चिदनुपपन्नम् ।

---

1 स्वर्गकामनाविशिष्टनियोज्यत्वस्येति — बहुव्रीहिरत्र समासः । तादृशविशिष्टनियोज्यकत्वस्येत्यर्थः ।

2 तदप्रामाण्योपपत्तेः — चैत्यं वन्देत इति वाक्यस्य बाधितस्य चैत्यवन्दने स्वर्गसाधनत्वस्य भासकत्वेनाप्रामाण्योपपत्तेरित्यर्थः ।

3 स्वर्गसाधनताज्ञानविषयत्वस्यैवेति — एवेन स्वर्गसाधनत्वस्य व्यवच्छेदः ।

4 तदपि — स्वर्गसाधनत्वप्रकारकज्ञानविशेष्यत्वमपि ।

### कामनाविशिष्टस्य कर्तृत्वभाने तदन्तर्गतनियोज्यत्व भानमापतितमित्याक्षेपः, तन्निरासश्च

अथ कामनायाः कृतिप्रयोजकत्वं कार्यताज्ञानसंपादनद्वारैवेति कृतिजनक कार्यताज्ञानप्रयोजकत्वरूपमेत्र तत् । तच्च कार्यताधीप्रयोजकत्वरूपनियोज्यत्वघटितमिति कामनाविशिष्टस्य कर्तृत्वभानान्तर्गतं नियोज्यत्वमिति चेत् ।

तर्हि अपूर्वस्य कृतिसाध्यत्वं यागद्वारैवेति कृतिसाध्ययागसाध्यत्वात्मकमेव । (तत्रान्वयस्य)[तच्च यागस्य] कार्यतया घटितमिति, यागस्य कार्यताभानमपूर्वकार्यताभानान्तर्गतमिति किं [याग] कार्यत्वमा[1]भिधानिकमेव स्यात् । तथाच अपूर्वकार्यत्वानुपपत्त्या यागकार्यतालाभः इति क्रियाकार्यत्वमौपादानिकमिति [2]तत्सिद्धान्तो भज्येत । यदि च अपूर्वकृत्योः साध्यसाधनभावः स्वरूपसंबन्धविशेषः, पदार्थान्तरमेव वेति नासौ कृतियागयोः साध्यसाधनभावघटितः । अपि

---

1 आभिधानिकं — विधिशक्त्यधीनशाब्दबोधविषयः ।

2 तत्सिद्धान्तः — प्राभाकरसिद्धान्तः ।

तु तन्नियतः इत्युच्यते । तदा कृतिकामनयोः प्रयोज्यप्रयोजकभावोऽपि न कामना—कार्यताज्ञानयोः प्रयोज्यप्रयोजकभावघटितः इत्यपि [1]तुल्यम् ।

'स्वर्गकामनियोज्यान्वय योग्यता [ज्ञान] विरहात्' इत्यपि न नियोज्यत्वरूपेणान्वयाबोधपरम् । अपि तु स्वर्गकामरूपो योनियोज्यः तत्कार्यतान्वयपरमेव । 'कामनाविशिष्टस्यहि' इत्यादिना कार्यताज्ञानस्य काम्यसाधनताबोधाधीनतायाः विशिष्टनियोज्यतानिर्वाहकत्वेन (कमपि) [कथनमपि] काम्यसाधनतायाः कार्यताधीद्वारा कामनाधीनकार्यत्वनिर्वाहकत्वमिति [2]तदन्वये [3]सा योग्यतेति सूचयितुमित्याहुः ।

---

1 तुल्यमिति — यथा यागकार्यत्वभानं नापूर्वकार्यत्वभानान्तर्गतम्. तथा कार्यताज्ञाने कामनाप्रयोज्यभानमपि कामनाविशिष्टस्य कर्तृत्वभानान्तर्गतमिति न नियोज्यत्वभानं विधिजन्ये शाब्दे इति भावः ।

2 तदन्वये — कामनाविशिष्टकार्यत्वान्तर्गतस्य कामनाधीनकार्यत्वस्यान्वये ।

3 सा — काम्यसाधनता । "अत्र गुरवः, नाहत्य क्रिया कार्यतया लिङा बोधयितुं शक्यते, स्वर्गकामनियोज्यान्वय योग्यताज्ञान विरहात् । कामनाविशिष्टस्य हि ममेदं कार्यमिति बोद्धृत्वं नियोज्यत्वं, तत् कामनायाः तद्बोधोपयोगे सति भवति । स च कामनानन्तरं काम्यसाधनताबोधात् कार्यताबोधे सति स्यात् । एवं च स्वर्गसाधनताबोधे सति स्वर्गकामनियोज्यान्वययोग्यता ।" इति चिन्तामणिग्रन्थः अनुसन्धेयः ।

## गुरुमतेन लिङर्थस्य, वैदिकलिङा जायमानबोधत्रयस्य च निरूपणम्

तदयं निष्कर्षः । यागादिरूप—कालान्तरभाविफल-साधनीभूतक्रियायां व्यापारघटितस्य तादृशफलसाधनत्वस्य ज्ञानं व्यापारोपस्थितिं विना [न संभवति । ] अपूर्वरूपव्यापारस्य चोपस्थापकान्त [रा] भावात् विधेरेवोपस्थापकत्वमङ्गीकार्यम् । तच्च वृत्तिं विना न निर्वहतीति वैदिकलिङः कार्यत्वेन [1]तत्र शक्तिः कल्प्यते । यदि च साधनत्वं स्वरूपसंबन्धविशेषः, पदार्थान्तरं वा । (तदन्वय) [तच्च] परम्परासाधनस्यापि न व्यापारघटितम् । एवं च व्यापारानुपस्थितावपि साधनतात्वेन सामान्यधर्मेण परम्परासाधनत्वमपि सुग्रहम् । परम्परासाधनत्व-त्वेन च ज्ञानमनपेक्षितमित्युच्यते । तदापि साक्षादसाधनत्वेन गृहीते साधनत्वान्वयबुद्धौ फलसमयपर्यन्तस्थायिव्यापारजन-कत्वरूपान्वयप्रयोजक धर्मज्ञानमपेक्षितम्, योग्यताधियः शाब्द-धीजनकत्वादिति यागादौ स्वर्गसाधनत्वान्वयबोधे हेतुभूतस्य

---

1 तत्र — अपूर्वे ।

स्वर्गपर्यन्तस्थायिव्यापारजनकत्वज्ञानस्य निर्वाहाय [1]तादृशव्यापारे (विशिष्ट)[विधेः] शक्तिकल्पनमावश्यकम् । तथाच विधिप्रत्ययात् कार्यत्वावच्छिन्नोपस्थितौ, तत्र यागस्य जन्यतासंबन्धेन, तदेकदेशे कृतौ च कामनाविशिष्टस्य प्रयोज्यतासंबन्धेनान्वयोपगमात्, स्वर्गकामो यजेत इत्यादितः [2]यागविषयकं स्वर्ग [कामि प्रयोज्यं] (काम) [कार्यम्] इत्याकारकः [3]प्राथमिकोऽन्वयबोधः ।

---

## प्राथमिक बोधविवरणम्

विषयपदस्य जनकार्थकतया यागविषयकमित्यस्य यागजन्यमित्यर्थः । तत्र च कामनाविशिष्टस्य कृतौ प्रयोज्यत्वे-

---

1 तादृशव्यापारे — स्वर्गपर्यन्तस्थायिनि अपूर्वरूपे व्यापारे ।

2 यागविषयकं — यागजन्यम् ।

3 प्राथमिकोऽन्वयबोध इति — अत्र, विधिवाक्यात् बोधपञ्चकं जायते । तेषु बोधद्वयं अन्वयप्रयोजकरूपवत्वात्मकयोग्यताज्ञानरूपम् । तस्य मानान्तराधीनत्वेपि न विरोधः । तस्य शाब्दत्वनियमो न । बोधत्रयस्य शाब्दत्वं नियतमिति, बोधत्रयं मिश्राणां अभिमतमिति प्रवादः । तथाच बोधत्रयस्य शाब्दत्वनियमाभिप्रायकः तादृशप्रवादः इति प्रघट्टकार्थोऽवसेयः ।

नान्वये कार्यताज्ञानवत्त्वरूपस्य नियोज्यत्वस्यान्वयप्रयोजकतया घटेन जलमाहरेत्यादौ घटे छिद्रेतरत्ववत् भानोपगमे, क्रियायां कामिकार्यताबोधे कामिनः क्रियानियोज्यत्ववत्, उक्तबोधेऽपि कामिनः अपूर्वनियोज्यतया भानमावश्यकम् । तथाच काम्यसाधनताज्ञानजन्य कार्यताधीमत्पुरुषकार्यं यागविषयकम् इत्याकारोऽपूर्वकार्यताबोधः ।

इत्थं च याग—पुरुष—कामनानां स्वर्गार्थतया प्रतीतिः, स्वर्गार्थता च यागस्योपायत्वेन, स्वर्गहेतुभूतापूर्वनियोज्यतया पुरुषस्य, स्वर्गहेतुभूतपुरुषप्रवृत्तिजनककार्यताज्ञानजनककाम्यसाधनताज्ञाननिर्वाहकतया च कामनायाः इति तत्सिद्धान्तोऽपि संगच्छते ।

एवं [1]अपूर्वस्वर्गपर्यन्तस्थायित्वमपि प्राथमिकबोधे भासते । तावतैव फलसमयपर्यन्तस्थायिव्यापारजनकत्वरूपयोग्यताज्ञाननिर्वाहात् । [2]तच्च छिद्रेतरत्वादिवत् पदानुपस्थितमपि भासते । अस्तु [वा] तदपि विध्यर्थः ।

---

1 अपूर्वेति — अपूर्वनिष्ठं स्वर्गपर्यन्तस्थायित्वमित्यर्थः ।
2 तच्च — अपूर्वस्य स्वर्गपर्यन्तस्थायित्वं च ।

## द्वितीयतृतीयबोधौ

अपूर्वकार्यतायां प्रतीतायां, अपूर्वकार्यत्वं यागस्य कार्यतां विना नोपपद्यते, यागद्वारैवापूर्वस्य कृतिसाध्यत्वात् इत्यनुपपत्ति-ज्ञानसहित[1]सामग्रीतः स्वर्गकामकार्यः इति द्वितीयो बोधः । तत्र काम्यसाधनत्वरूपयोग्यता पदानुपस्थितापि अन्वयितावच्छे-दकतया भासते । ततश्च यागस्य स्वर्गकामकृतिसाध्यत्वं स्वर्गकामस्य यागकर्तृत्वं विनाऽनुपपन्नम् इत्यनुपपत्तिधीघटि-तशब्दात्, स्वर्गकामो यागकर्ता इति तृतीयो बोधः ।

---

## बोधपञ्चकजननेऽपि बोधत्रयमिति प्रवादस्योपपत्तिः

यद्यपि क्रियाकार्यताबोधात् पूर्वमौपादानिकः क्रियायाः काम्यसाधनताबोधोऽप्यवश्यमङ्गीकरणीयः, तं विना योग्यता-ज्ञानविरहेण क्रियाकार्यत्वबोधासंभवात् । तदुक्तम्—"एवम-

---

1 सामग्रीतः — शाब्दसामग्रीतः ।

पूर्वकार्यताबोधे, बोद्धा (विंशति) [विमृशति], अपूर्वजनिका तावत् कामिकृतिः । सा यदि [1]यागविषया भवति, तदैवापूर्वं जनयितुं शक्नोति, नत्वन्यथा, अन्यतस्तदनुत्पत्तेः । कामिकृतिश्च यागविषया तदा भवति, यदि यागः काम्यमानसाधनं स्यात्, काम्यसाधनतया ज्ञाते एव कामिनः कार्यताधीनियमात् । एवं यागस्य स्वर्गसाधनत्व[2]मुपादानेनावगम्य, काम्यमानस्वर्गसाधनयागः स्वर्गकामकार्यः इति उपादानसचिवाच्छब्दादवैति ।" इति । एवं मिश्रमते कामिनः क्रियानियोज्यतया बोधोऽप्यवश्यमन्तरा स्वीकरणीयः । तेन नियोज्यत्वस्य कार्यत्वबोधौपयिकयोग्यतात्वस्वीकारादिति बोधपञ्चकमेव, न तु त्रयम् ।

तथापि योग्यताज्ञानविधया अपेक्षितस्य तादृशबोधद्वयस्य शब्दजन्यत्वमनियतम्, प्रमाणान्तराधीनबोधेनापि

---

1 यागविषया — यागनिष्ठसाध्यताख्यविषयतानिरूपिका ।

2 उपादानेन — अनुपपत्तिज्ञानेन ।

[1]निर्वाहादिति [2]बोधत्रयस्यैव तन्मते शब्दजन्यत्वनियमात् बोधत्रयप्रवादः ।

---

## केषां चित् मतेन शाब्दज्ञानपञ्चकनिरूपणम्

केचित्तु, स्वर्गकामकार्यत्वेनापूर्वबोधानन्तरम्, मयेदं यागविषयकं कार्यमिति द्वितीयो बोधः । काम्यसाधनत्वेन स्वर्गकामकार्यत्वेन च क्रियाया बोधः तृतीयः । स्वर्गकामो यागकर्ता इति चतुर्थः । स्वर्गकामकार्यमिदम्, अहं च स्वर्गकामः । अतो ममेदं कार्यम्, इति यागे यष्टुः प्रतिसन्धानं पञ्चममिति पञ्चैव ज्ञानानि शाब्दानीत्याहुः ।

---

1 निर्वाहात् — योग्यताज्ञानघटितशाब्दसामग्रीनिर्वाहात् ।

2 बोधत्रयस्यैवेति (1) यागविषयकं स्वर्गकामिप्रयोज्यं कार्यम् इति, (2) स्वर्गसाधनयागः स्वर्गकामकार्यः इति, (3) स्वर्गकामो यागकर्ता इति च पूर्वोक्तं मिश्रमतसिद्धं बोधत्रयं बोध्यम् ।

## परेषां मतेन ज्ञानपञ्चकोत्पत्ति निरूपणम्

परे तु, यागविषयकं स्वर्गसाधनत्वेन ज्ञायमानस्यापि कार्यं नियोज्यस्वर्गकामीयम्, इति प्राथमिकोऽन्वयबोधः। नियोज्यत्वं [1]योग्यतात्वेन स्वर्गकामे प्रकारतया भासते। [2]विशिष्टान्वयनिर्वाहकत्वेन स्वर्गकामस्य संसर्गतयापि भासते। ततः, अतीन्द्रियत्वेन मूलत्वेन च साक्षात् कृत्यसाध्यस्यापूर्वस्यावगतं कार्यत्वं, यागस्य स्वर्गकामिकार्यत्वं विनाऽनुपपन्नम् इत्यनुपपत्तिज्ञानसहकृत—प्रतीतापूर्वद्वारककाम्यसाधनत्वज्ञानात्, नियोज्यस्वर्गकामीयः स्वर्गसाधनत्वेन ज्ञायमानो यागः इति द्वितीयो बोधः। ततः, यत्कृतिसाध्यत्वेन यागो ज्ञातः, सा कृतिः आश्रयव्यतिरेकेणानुपपन्ना इत्यनुपपत्तिज्ञाने, स्वर्गकामः स्वनियोज्यक—स्वर्गसाधनत्वेन ज्ञायमान—कार्य—यागानुकूलकृतिमान्, स्वर्गकामः स्वनियो-

---

1 योग्यतात्वेन — स्वर्गकामस्य कार्यत्वप्रयोजकरूपवत्त्वात्मकयोग्यतात्वेन।

2 विशिष्टान्वयनिर्वाहकत्वेनेति — नियोज्यत्वविशिष्टस्वर्गकामस्य कार्ये वैशिष्ट्यभानं विना विशिष्टस्य प्रकारत्वायोगात् भासमानवैशिष्ट्यप्रतियोगिन एव प्रकारत्वादिति भावः।

ज्यकस्वर्गसाधनत्वेन ज्ञायमान–कार्ययागानुकूलव्यापारवान्, इति वा तृतीयो बोधः । क्रियानुकूल[1]व्यापारवत्त्वमेव कर्तृत्वम् । अत एव, यागे स्वर्गकामकृतिसाध्यत्वे अवगते, तत्कर्तृत्वमपि [2]लब्धमिति [3]तृतीयबोधो व्यर्थः, इत्यपि परास्तम् । [4]सामान्यतः शक्त्या आख्यातोपस्थापितस्य व्यापारस्य कर्तृसाकाङ्क्षतया प्रथमान्तपदोपस्थाप्यान्वयित्वनियमेन च तृतीयबोधस्यावश्यकत्वात् ।

ततः, नानधिकृतः कर्तेति न्यायेन, स्वर्गकामस्यावगतं कर्तृत्वं यागजन्यफलभोक्तृत्वात्मकाधिकारित्वं विनाऽनुपपन्नमित्यनुपपत्तिज्ञाने, स्वर्गकामो यागजन्य[5]फलस्वामीति चतुर्थो बोधः ।

ततश्च (एतद्व्याप्यस्य) [एतद्वाक्यस्य] प्रवृत्तिपरत्वे अवगते, द्वारीभूतज्ञानजननं विना तदनुपपन्नमित्यनुपपत्ति-

---

1 व्यापारवत्त्वमेवेति — एवेन तादृशकृतिमत्त्वस्य व्यवच्छेदः
2 लब्धमिति — तुल्यवित्तिवेद्यतयेत्यादिः ।
3 तृतीयो बोधः —स्वर्गकामः यागकर्ता इत्यत्र पर्यवसितो बोधः ।
4 सामान्यतः — आख्यातत्वेन ।
5 फलस्वामी — फलभोक्ता ।

ज्ञानसहितेन [1]तेन, स्वर्गकामस्य यागः कार्यः, स्वर्गकामो यागस्य कर्ता [2]भोक्ता च, अहमपि स्वर्गकामः, इति प्रतिसन्धानेन, यागो मत्कृतिसाध्यः अहं च यागकर्ता तदधिकारी चेति प्रवर्तकं पञ्चमज्ञानमुत्पद्यते इति प्राभाकरसंप्रदायः इति प्राहुः ।

---

## आग्नेयादिजन्यकलिकापूर्वाणामपि प्रधानापूर्वस्येव वाच्यत्वमस्तु, न कल्प्यत्वमित्याक्षेपः

ननु, आशुविनाशिनः कालान्तरभाविफलसाधनतान्वये यदि फलसमयस्थायिव्यापारवत्त्वं योग्यता, तदा आग्नेयादिषु षड्यागेषु परमापूर्वसाधनतान्वयबोधानुरोधेन (क्षणा) [षण्णां] [3]कलिकापूर्वाणामपि वाच्यत्वमङ्गीकरणीयम्, [4]तत्रापि [5]तस्यैव

---

1 तेन — स्वर्गकामो यजेतेति वाक्येन ।
2 भोक्ता — फलभोक्ता ।
3 कलिकापूर्वाणां — उत्पत्त्यपूर्वाणाम् । परमापूर्वसाधनत्वेन उत्पत्त्यपूर्वाणि कलिकापूर्वपदेन न्यायग्रन्थेषु व्यवह्रियन्ते ।
4 तत्रापि — परमापूर्वसाधनतान्वयेऽपि ।
5 तस्यैव — परमापूर्वसमयपर्यन्तस्थायि (कलिकापूर्वात्मक) व्यापारवत्त्वस्यैव ।

योग्यतात्वात् । तथाच आग्नेयोऽष्टाकपालो भवत्यमावास्यायाम्, ऐन्द्रं दधि भवत्यमावास्यायाम्, [ऐन्द्रं पयोऽमावास्यायाम्,] आग्नेयोऽष्टाकपालो भवति पौर्णमास्याम्, ताभ्यामग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्, उपांशुयाजमन्तरा यजति, इति षट् द्रव्यदेवतासंबन्धरूपयागस्य प्रथमप्रतीतिरूपोत्पत्तिबोधकतया [1]उत्पत्तिवाक्यानि, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति प्रधानविध्यर्थभूतं परमापूर्वं विधिप्रतिरूपकीभूतेन अन्तर्भावितणिच्केन [2]भवति इत्यादिना अनूद्य, तद्धेतुत्वं षड्यागात्मकदर्शपूर्णमासस्वरूपे प्रतिपादयन्ति । तदनन्तरं च [3]तत्प्रतीतसाधनत्वानुपपत्त्या [आग्नेयादि] षडुत्पत्त्यपूर्वाणि कलिकापूर्वव्यपदेश्यानि कल्प्यन्ते । इति प्राभाकरसिद्धा-

---

1 उत्पत्तिवाक्यानि — उत्पत्तिवाक्यशब्दव्यपदेश्यानि ।

2 भवतीत्यादिना – भवति – प्रायच्छत् – यजति पदैः ।

3 तत्प्रतीतसाधनत्वानुपपत्त्येति — उत्पत्तिवाक्येभ्यः प्रतीतं यत् आग्नेयादीनां षण्णां परमापूर्वसाधनत्वं, तदनुपपत्त्येत्यर्थः। एककर्तृकानां क्रमिकाणां षण्णां यागानां षष्ठयागानन्तरभाविपरमापूर्वपर्यन्तस्थायित्वाभावादिति भावः ।

न्तभङ्गप्रसङ्गः । यागे विना व्यापारोपस्थितिं स्वर्गहेतुत्वस्यैव, परमापूर्वहेतुत्वस्यापि [1]गृहीतुमशक्यत्वात् । [2]तस्मादुभयत्रापि अपूर्वकल्पनाऽभावः, वाच्यता वा अस्तु. न तु वैषम्येणार्धजरतीयम् । एवमङ्गापूर्वेऽपि ।

---

### सामान्यतो योग्यतानिश्चयसत्त्वेन उत्पत्तिवाक्यानां परमापूर्वसाधनताबोधकत्वमिति मतनिरूपणं, तन्निरासश्च

[यत्तु]अङ्गादौ प्रधानविधिप्रवृत्त्या तदुपस्थापितपरमापूर्वमनूद्य, तत्साधनत्वमाग्नेयादीनां बोध्यते । तदानीं सामान्यतः यागः फलपर्यन्तस्थायिव्यापारवान् इति योग्यतानिश्चयोऽस्त्येव । प्रधानविधिनैवापूर्वस्योपस्थितत्वात् । एवं च परमापूर्व साधनतान्वयबोधजनकत्वमिति ।

तदसत् । तादृशनिश्चयस्य आग्नेयत्वादिरूपान्वयितावच्छेदकाप्रकारकत्वेन परमापूर्वसमयपर्यन्तस्थायिव्यापाराविषय-

1 ग्रहीतुमशक्यत्वादिति — क्रमिकषड्यागात्मकत्वात् दर्शपूर्णमास स्वरूपस्येति भावः ।

2 उभयत्रापि — प्रधानविधौ उत्पत्तिवाक्येषु च ।

कत्वेन [1]चोक्तान्वयबोधजनकत्वासंभवात् । न च परमापूर्वस्योपस्थितौ त (ज्ज्ञानी) [2][ज्जाती]यद्वारसंभवात्तथान्वयबोधसंभव इति वाच्यम् । शाब्दबोधे अन्वयप्रयोजकरूपवत्त्वरूपयोग्यता[3]निश्चयस्यैव जनकत्वात् । अन्यथा, रोगनाशकौषधभक्षणादौ फलपर्यन्तस्थायिव्यापारस्य धातुसाम्यादेर्दर्शनेन, तत्संभावनया स्वर्गसाधनत्वधीसंभवेन [4]अपूर्वमात्रस्यैव वाच्यता न स्यात् ।

---

### उपाध्यायमतेन कलिकापूर्वाणां कल्प्यत्वनिरूपणं, तन्निरासश्च

यदपि, षड्भिः पुरुषैः एकदानुष्ठितानामाग्नेयादीनां

---

1 अन्वयबोधजनकत्वासंभवादिति— आग्नेयः दर्शपूर्णमासपरमापूर्वपर्यन्तस्थायिव्यापारवान् इत्यादेरेव योग्यताज्ञानस्यान्वयबोधजनकत्वमिति भावः ।

2 तज्जातीयद्वारसंभवादिति— परमापूर्वजातीयस्य द्वारस्य अपूर्वात्मकव्यापारस्य संभवात्-संभावनयेति यावत् ।

3 निश्चयस्यैवेति — एवकारेण संभावनादिसंशयविशेषव्यवच्छेदः ।

4 अपूर्वमात्रस्यैव — परमापूर्वसाधारणापूर्वसामान्यस्यैव ।

 

(क्षणा) [षण्णां] यौगपद्यसंभवेन साक्षात् साधनत्वबाधनवारणेन प्रथमं तेषां परमापूर्वसाधनत्वधीः सुघटैवेति न कलिकापूर्वोपस्थित्यपेक्षा । (यदत्व)[तद] नन्तरं [एक] कर्तृकत्वात्रधारणेन साक्षात् [1]साधनत्वबाधप्रतिसन्धाने साधनत्वसामान्यरक्षार्थमुत्पत्त्यपूर्वकल्पनेति तेषां कल्प्यत्वमिति [2]उपाध्यायैरुक्तम् ।

तदप्यसमञ्जसम् । प्रथममेककर्तृकत्वस्य पाणिविहितत्वाभावेन योग्यतानिर्णयासंभवात् । अमावास्यापौर्णमासीविहितयोः यौगपद्यसंभावनाया असंभावितत्वाच्च ।

---

### प्रकारान्तरेण कलिकापूर्वकल्पन शङ्का, तन्निरासश्च

अथ क्रमेणाग्नेयादीनामेकैकस्य परमापूर्वसाधन (पौर्णमासीं यजते इति विद्वद्वाक्याभ्यां पौर्णमासयोः क्रियाकलापस्व)

---

1 बाधप्रतिसन्धाने इति — अग्रिमाग्रिमनाशादनुपपत्त्येति आदिः ।
2 उपाध्यायैः — चिन्तामणेः प्रकाशव्याख्याकर्तृभिः रुचिदत्तोपाध्यायैः ।

त्वमवगम्यते । तत्र च नानुपपत्तिः, साक्षात् साधनत्व-बोधात् । अनन्तरं च य एवं विद्वानमावास्यायां यजते, एवं वद्वान् पौर्णमासीं यजते इति [1]विद्वद्वाक्याभ्यां पौर्णमा (स्यमा-वास्य] योः [2]क्रियाकलापस्वरूपतावगमे [3]साक्षात्त्वबाधेऽपि, पर्य-वसितस्य परम्परासाधनत्वस्य रक्षणार्थं कलिकापूर्वकल्पनमिति चेन्न ।

एवं सति कलिकापूर्वाणामविज्ञमात्रकल्प्यताया उप-पादने अभिज्ञकल्पनाया अनुपपादनात् ।

---

### उत्पत्तिवाक्यानां परमापूर्वसाधनत्वाबोधकत्वात् न कलिकापूर्वाणां वाच्यत्व प्रसङ्गः, इति शङ्का तन्निरासश्च

अथ उत्पत्तिवाक्यानि यदि (सङ्गा) [षड्ङ्गा) गानां परमा-पूर्वसाधनतां बोधयेयुः, तदैवोक्तरीत्या कलिकापूर्वाणां वाच्यत्वं

---

1 विद्वद्वाक्याभ्यां — विद्वत्पदघटिताभ्यां वाक्याभ्याम् ।

2 क्रियाकलापस्वरूपतावगमे — आग्नेयादियागत्रयममावास्या-स्वरूपम्, यागत्रयं च पौर्णमासस्वरूपमित्यवगमे ।

3 साक्षात्त्वबाधेऽपि — परमापूर्वसाधनत्वे साक्षात्त्वस्य बाधेऽपि ।

स्यात्। तदेव न। किन्तु तेषां दर्शपूर्णमासस्वरूपमात्र-बोधकत्वमुपेयते इति नोक्तरीत्या तेषां वाच्यतेति चेन्न।

तथापि दर्शपूर्णमासाभ्यां यजेतेति प्रधानविधेः दर्श-पूर्णमासे परमापूर्वसाधनताबोधकतया, दर्शपूर्णमासाभ्यामिति द्विवचनेन, प्रथमपठितैरुत्पत्तिवाक्यैश्च [1]कारणकलापस्वरूप-तया अवगत [त] या [2]यागे परमापूर्वसाधनताबोधस्याति-स्फुटतया च तदनुरोधेनैव कलिकापूर्वाणां वाच्यताभ्युपगमस्या-वश्यकत्वादिति चेत्।

---

## कलिकापूर्वाणां वाच्यत्वप्रसङ्ग महापूर्वपक्षस्य केषां चिन्मते समाधानम्

अत्र केचित्, कलिकापूर्वाणामपि तन्मते वाच्यत्वमेव, न कल्प्यत्वम्। कल्प्यताप्रवादस्तु परमापूर्वसाधनत्वप्रत्य-

1 कारणकलापरूपतया — षड्यागसमुदायरूपतया।

2 यागे — दर्शपूर्णमासस्वरूपयागत्वावच्छिन्ने।

यान्यथानुपपत्त्या तद्बोधाप्राथम्योपगमंमात्रनिबन्धनः इति वदन्ति ।

---

## उक्तमहापूर्वपक्षस्य कलिकापूर्वाणां कल्प्यत्वसमर्थनेन अपरेषां समाधानम्

अपरे त्वाहुः । यद्रूपावच्छेदेन कालान्तारभावित्वप्रतिसन्धानं, तेनैव रूपेण भासमानफलं प्रति(फल) साधनतान्वये फलपर्यन्तस्थायिव्यापारवत्त्वं योग्यता । तादृशं च रूपं स्वर्गत्वादिकमेव । न तु कार्यत्वं, [1]कार्यस्या[2]व्यवहितक्षणेऽपि संभवात् । एवं च कार्यसाधनतात्वेन परमापूर्वसाधनतान्वये द्वारोपस्थितेर[3]पेक्षाविरहेण कलिकापूर्वाणां न (बाध्यता)

---

1 कार्यस्य — कार्यत्वाक्रान्तस्य यस्य कस्य चित् ।

2 अव्यवहितक्षणेऽपि — यागाद्यव्यवहितोत्तरक्षणेऽपि ।

3 अपेक्षाविरहेणेति — उत्पत्तिवाक्यभ्यः कार्यसाधनतात्वेनैव परमापूर्वसाधनताबोधः । तत्र कार्यसाधनत्वस्य साक्षादेवाबाधितत्वात्, साधनत्वनिर्वाहकव्यापारोपस्थितेरनावश्यकत्वात्, तदुपस्थापकत्वं उत्पत्तिवाक्यस्य नेति भावः ।

[वाच्यता] परन्तु, अग्रे स्वर्गपर्यन्तस्थायिकार्यान्तराजनकानामाग्नेयादीनां तादृशकार्यजनकत्वं परमापूर्वमादायैव पर्यवस्यति। तच्च सर्वोदीच्यं कालान्तरभावीति, व्यापारं विना तज्जनकत्वानुपपत्त्या कलिकापूर्वाणि कल्प्यन्ते इति तेषां कल्प्यत्वमिति । एवमङ्गापूर्वेऽपि उक्तरीत्या कल्पनाच्चेति दिक् ।

---

यजेतेत्यत्रेव यो ब्राह्मणायावगुरेदित्यत्रापि अपूर्वस्य वाच्यत्वस्यावश्यकत्वात् तत्र दुरितापूर्वकल्पनमिति सिद्धान्तविरोधः इत्याक्षेपः

नन्वेवं यागे स्वर्गसाधनतानिर्वाहायापूर्वं वाच्यमिति यद्यङ्गीक्रियते, तदा यो ब्राह्मणायावगुरेत्तं शतेन यातयेदि(त्यस्या) [त्यत्रावगोरणस्य] [1]हेतुत्वग्रहार्थं दुरितापूर्वस्यापि वाच्यत्वमावश्यकं विशेषाभावात् । यो ब्राह्मणवधोद्यम (प्रागभाव) वान् सः शतयातनारूपनरकविशेषवानित्यर्थकात् ब्राह्मणावगोरणस्य शतयातनाहेतुत्वग्रहार्थं दुरितापूर्वस्यापि वाच्यत्वमावश्यकं

---

1 हेतुत्वग्रहार्थं — नरकविशेषहेतुत्वग्रहार्थम् ।

विशेषाभावात् । तथाच तत्र शतयातनाहेतुत्वमवगम्य तन्निर्वाहकं दुरितापूर्वं कल्प्यते इति प्राभाकरसिद्धान्तविरोधो दुर्वारः इति चेत् ।

---

### यजेतेति स्थलाद्वैलक्षण्यं निरूप्य तत्रापूर्वकल्पनव्यवस्थापनेन परिहारः

अत्राहुः । [1]नहि अवगुरेत्, यातयेदित्यनेनावगोरणयातने विधीयेते । तयोः कार्योपदेशानौचित्यात् । एवं च स्वर्गकामो यजेतेत्यत्र विधिलिङा स्वर्गकामकार्यत्वं यागे प्रतिपाद्यते । (तवच) [[2]तत्र च] स्वर्गसाधनत्वं योग्यता । तद्ग्रहश्च [न] [3]तद्द्वारोपस्थितिं विनेति युक्तं तदपूर्वस्य वाच्यत्वम् ।

प्रकृते तु 'हेतुहेतुमतोर्लिङ्' (पा. सू. 3–3–156)

---

1 अवगोरणकार्यस्यावोधात् नात्रापूर्वबोध इत्याशयेनाह–नहीत्यादिना ।

2 तत्र च स्वर्गकामकार्यत्वान्वये च ।

3 तद्द्वारोपस्थितिम् — अपूर्वात्मक यागव्यापारोपस्थितिम् ।

इत्यनुशासनबलेनावगोरणशतयातनयोः नियतपौर्वापर्यमात्रं प्रतिपाद्यते । तत्र च [न] तद्द्वारोपस्थितिरपेक्षितेति [1]द्वारं विनैव पौर्वापर्यनिश्चयसंभव इति न दुरितापूर्वस्य वाच्यत्वम् । नचैवं दुरितापूर्वं कल्प्यमिति न स्यादिति वाच्यम् । कारणान्तरकल्पनायां गौरवेण अन्यथासिद्धिपञ्चकरहितस्यैवावगोरणस्य नियतपूर्ववर्तितयोपस्थितस्य कारणत्वं कल्प्यते । अन्यथा, [2]नियमबीजभूताकाङ्क्षाया अप्यशान्तेश्चेति दुरितापूर्वकल्पनाया आवश्यकत्वादिति प्राभाकरमतनिगर्व इति ।

इति प्राभाकरमतसिद्धलिङर्थनिरूपणम्

---

1 द्वारं विनैवेति — नरकविशेषाव्यवहितपूर्ववर्तित्वग्रहे एवं नरकविशेषसमयपर्यन्तस्थायिव्यापारोपस्थितेरपेक्षितत्वादिति भावः ।

2 नियमबीजेति — पौर्वापर्यनियमे निमित्तेत्यर्थः ।

## शाब्दबोधौपयिकयोग्यतानिरूपणेनापूर्वस्य लिङ्वाच्यतानिरासः

अत्र न्यायविदः । अन्वयप्रयोजकरूपवत्त्वं यदि योग्यता स्यात्, तदैवोक्तरीत्या अपूर्वस्य वाच्यत्वं संभाव्यते । तदेव न । अन्वयप्रयोजकरूपवत्त्वस्य योग्यतात्वे [1]स्थूल-जलाभिप्रायकस्य पयसा सिञ्चतीति वाक्यस्यापि योग्यतापत्तिः, सेकान्वयप्रयोजकरूपस्य द्रवद्रव्यत्वस्य स्थूलजलेऽपि सत्त्वात् । (तवा) [नचा] [2]नन्वितवृत्तित्वेनानुपस्थितधर्मवत्त्वमेवान्वयप्रयो-जकरूपवत्त्वमिति नोक्तातिप्रसङ्ग इति वाच्यम् । तथासति [3]अनन्वयनिश्चयविरहस्यैव योग्यतात्वमुपेत्य; स्वरूपसत[4]स्तस्या-न्वयबोधहेतुत्वौचित्यात् । तस्य च यागेऽपि स्वर्गसाधनत्व-बाधधीविरहेण सत्त्वात् ।

---

1 स्थूलजलाभिप्रायकेति — करकाद्यभिप्रायकेत्यर्थः ।

2 अनन्वितवृत्तित्वेन — सेककरणत्वानन्वितकरकादिवृत्तित्वेन ।

3 अनन्वयेत्यादि — लाघवेनेत्यादिः ।

4 तस्य – बाधनिश्चयाभावस्य ।

 

वस्तुतस्तु, एकपदार्थे तात्पर्यविषयीभूतापरपदार्थसंसर्गवत्त्वमेव योग्यता, लाघवात् । तस्याश्च संशयनिश्चयसाधारणज्ञानमात्रमेव हेतुः । तत्तु यागेऽपि, स्वर्गसाधनत्वसंशयस्य तत्र सत्त्वात् । अपूर्ववाच्यत्ववादिनापि [1]तथैव वाच्यत्वात् । नहि अपूर्वे स्वर्गसाधनत्वस्य तद्योग्यतारूपस्य फलपर्यन्तस्थायिव्यापारवत्त्वस्येव पूर्वं निश्चयः संभवति । एवं च अपूर्ववाच्यत्वं विनैव यागे स्वर्गसाधनत्वादिशाब्दबोधसंभवे अपूर्ववाच्यत्वे मानाभावः ।

---

### यागे स्वर्गं प्रति परम्परासाधनत्वत्वेन साधनत्वज्ञाननिर्वाहायापूर्वस्य वाच्यत्वमित्याक्षेपः

ननु सामान्यज्ञानजनकसामग्र्याः एकविशेषबाधे तदितरविशेषप्रकारकज्ञानजनकत्वं क्लृप्तम् । अत एव घटेन जलमाहरेत्यादौ [2]सच्छिद्रघटबाधे छिद्रेतरघटस्य सच्छिद्रेतरत्वेन

---

1 तथैव — संशयनिश्चयसाधारणयोग्यताज्ञानत्वेनान्वयबुद्धिहेतुत्वस्यैव ।

2 सच्छिद्रघटबाधे — घटविशेषे सच्छिद्रघटे जलाहरणकरणत्वबाधज्ञाने ।

भानम् । एवं च यागे साक्षात् साधनत्वबाधे परम्परासाधनत्वत्वेन भानमुपेयते । [1]परम्पराघटकापूर्वोपस्थितिः (ना) [वाच्यत्वं विना] न संभवतीति तद्वाच्यत्वमावश्यकमिति चेत् ।

---

साधनत्वत्वेन स्वर्गसाधनताबोधाङ्गीकारेणाक्षेपपरिहारः

न, साक्षात्परम्परोदासीन [2]साधनत्वत्वेनैव परम्परासाधनत्वभानोपगमात् । घटेन जलमाहरेत्यादावपि घटत्वादिनैव सच्छिद्रेतरघटादिभानम् । सच्छिद्रेतरघटत्वादिना [3]पदाद्युपस्थितस्यैव शाब्दबोधविषयत्वेन सच्छिद्रेतरत्वस्य पदानुपस्थिततया शाब्दबोधविषयत्वासंभवात् । न च घटपदस्य सच्छिद्रेतरघटत्वावच्छिन्नलक्षणया सच्छिद्रेतरत्वमपि पदोपस्थितमेवेति

---

1 परम्पराघटकापूर्वोपस्थितिरिति — स्वर्गसाधनापूर्वसाधनत्वस्यैव परम्परासाधनत्वरूपत्वादिति भावः ।

2 साधनत्वत्वेनेति — सामान्यरूपेण विशेषभानात्, तत्रापूर्वोपस्थितेरनपेक्षितत्वादिति भावः ।

3 पदाद्युपस्थितस्यैवेति — द्वारमित्यादौ अर्थाध्याहारानङ्गीकारादिति भावः ।

वाच्यम् । अन्वयानुपपत्तिज्ञानादिविरहेण निर्बीजलक्षणायां मानाभावात् । लक्षणाप्रतिसन्धानाभावेऽपि शाब्दबोधस्यानुभवसिद्धत्वाच्च ।

---

## शक्तिग्रहजन्यसंस्कारोपस्थितस्य छिद्रेतरत्वस्य शाब्दे भानमस्तु इत्याक्षेपः

अथ घटादिपदस्य घटादौ[1]व्यवहारादिना शक्तिग्रहे सच्छिद्रेतरत्वादेर्भानात्, शक्तिग्रहजन्यसंस्कारोपस्थितस्य तस्य शाब्दबोधे भानमस्तु । आकाशशब्दाशक्यस्यापि शब्दाश्रयत्वस्य शब्दाश्रयत्वविषयकाकाशशब्दशक्तिग्रहजन्यसंस्कारोपस्थितशब्दाश्रयत्वस्य आकाशशब्दजन्यशाब्दबोधे भानदर्शनादिति चेत् ।

---

1 व्यवहारादिना—घटेन जलमाहरेति उत्तमवृद्धवाक्यं श्रुतवतः मध्यमवृद्धस्य सच्छिद्रेतरघटकरणकजलानयनादि व्यवहारादिना ।

## निरुक्ताक्षेपप्रतिक्षेपः, आक्षेप्तुरभिमतदृष्टान्तानभ्युपगमश्च

न । (दृश्या) [वृत्त्या] पदजन्योपस्थितिविषयस्यैव शाब्दबोधविषयत्वेन सच्छिद्रेतरत्वादौ (दृश्या) [वृत्त्या] घट-[1]पदजन्योपस्थितिविषयत्वाभावात् । अन्यथा, संस्कारोपस्थितस्यैव फलपर्यन्तस्थायिव्यापारवत्त्वस्योपस्थितिसंभवे [2]त्वन्मतसिद्धमपूर्ववाच्यत्वमपि दुर्घटं स्यात् । विशिष्यापूर्वानुभवाभावेन [3]तथाऽस्मरणेऽपि शाब्दबोधं प्रति समानप्रकारकत्वेनैव पदार्थोपस्थितेर्हेतुतया सामान्यतः स्मरणेन गवादिपद इव अत्रापि [4]विशेषस्य शाब्दबोधविषयत्वसंभवात् ।

आकाशपदस्य तु शब्दाश्रयत्वविशिष्टे एव शक्तेरुप-

---

1 पदजन्योपस्थिति विषयत्वाभावादिति – तथाच सामान्यज्ञानजनकसामग्र्याः एकविशेषबाधे तदितरविशेषप्रकारकज्ञानजनकत्वं न क्लृप्तम् । उक्तदृष्टान्तस्यैवानङ्गीकारादिति भावः ।

2 त्वन्मतेति – प्राभाकरमतेत्यर्थः ।

3 तथा अस्मरणेऽपि — अपूर्वघटितपरम्परासाधनत्वत्वेन पदादस्मरणेऽपि ।

4 विशेषस्य — स्वर्गं प्रति परम्परासाधनत्वस्य ।

गमात्। [1]न चाष्टद्रव्यातिरिक्तद्रव्यत्वेनापि आकाशस्य अकाशपदादुपस्थित्या नियतोपस्थितिकत्वाभावात् न शब्दाश्रयत्वविशिष्टे शक्तिसंभव इति वाच्यम्। कदाचित् गुरुधर्मविशिष्टस्य शक्तिभ्रमात् बोधसंभवेऽपि लघुविशिष्टे एव शक्तिकल्पनाया उचितत्वात्। अन्यथा कदाचित् गवयादिसादृश्यविशिष्टस्य शक्तिभ्रमात् गवादिपदेन बोधने, गोत्वादिविशिष्टे शक्तिविलोपापत्तेः।

[2]शब्दाश्रयः आकाशः इत्यादि सहप्रयोगस्तु आकाशपदस्य आकाशपद[3]वाच्यादिपरतयोपपादनीयः।

---

1 अष्टद्रव्यातिरिक्तेति — आकाशं विहाय पृथिव्यादिकमष्टकं परिगणनीयम्।

2 आकाशशब्दस्य शब्दाश्रयत्वविशिष्टवाचकत्वे, घटो घटः इति वाक्यवत् शब्दाश्रयः आकाशः इति वाक्यं निराकाङ्क्षं स्यात्, उद्देश्यतावच्छेदक-विधेयतावच्छेदकयोः भेदाभावेनाभेदान्वयासंभवात् इत्याशङ्क्याह — शब्दाश्रय इति।

3 वाच्यादिपरतयेति — तथाच विधेयतावच्छेदकस्य आकाशपदवाच्यत्वस्य उद्देश्यतावच्छेदकात् शब्दाश्रयत्वाद्भिन्नत्वेन नानुपपत्तिरिति भावः।

## आकाशपदस्य स्वरूपे शक्तिः आकाशपदान्निर्विकल्पकस्मरणमिति मतान्तरम्

केचित्तु, आकाशपदादाकाशस्य निर्विकल्पकस्मरणम् । शाब्दबोधस्तु [1]समभिव्याहृतेतरपदार्थप्रकारक एवेति न तस्य निर्विकल्पकत्वापत्तिरित्याहुः ।

---

## तन्मतं निराकुर्वतामन्येषां मतनिरूपणम्

अन्ये तु, आकाशे निर्धर्मितावच्छेदकतया आकाशो द्रव्यमित्यादिवाक्यजन्यशाब्दबोधस्य [2]संशयनिवर्तकत्वं न स्यात् । तदंशे विविकल्पात्मकोपस्थितिस्वीकारे तत्प्रयुक्तातिरिक्तकार्यकारणभावकल्पनागौरवमिति नोक्तमतं सम्यगित्याहुः ॥

---

1 इतरपदार्थप्रकारकेति — आकाशः इत्यत्रापि सुबर्थसंख्याप्रकारकः शाब्दबोधः ।

2 संशयनिवर्तकत्वम् — आकाशो द्रव्यं न वेति संशयनिवर्तकत्वम् ।

इतरबाधस्थले अनुमितौ व्यापकतानवच्छेदकस्येव शाब्दे पदानुपस्थितस्यापि परम्परास्वर्गसाधनत्वत्वस्य भानादपूर्वस्य वाच्यत्वमिति शङ्का, तन्निरासश्च

अथ साक्षात् स्वर्गसाधनत्वबाधसहकृतायाः स्वर्गसाधनत्वत्वेन स्वर्गसाधनत्वबोधसामान्यसामग्र्याः तदितरपरम्परास्वर्गसाधनत्वत्वेन परम्परास्वर्गसाधनत्वप्रकारकबोधजनकत्वमनुभवसिद्धं दुरपह्नवं, यौक्तिकं च। अन्यथा पर्वतीयवह्नीतरवह्निबाधसहकृत [1]वह्न्याद्यनुमितिसामग्र्या अपि पर्वतीयवह्नित्वेन पर्वतीयवह्निप्रकारकानुमित्यजनने, तदनन्तरं पर्वतः पर्वतीयवह्निमान्नवेति [2]संशयापत्तेः। इतरबाधस्थले अनुमितौ व्यापकतानवच्छेदकस्येव शाब्दे पदानुपस्थितस्यापि भानात्। तथाचापूर्ववाच्यत्वं दुर्वारमिति चेत्।

1 वह्न्याद्यनुमितिसामग्र्या — वह्निव्याप्यधूमवान् पर्वतः इति परामर्शघटितसामग्र्या।

2 संशयापत्तेरिति — पर्वतीयवह्नित्वप्रकारकस्य पर्वतीयवह्निमानिति निश्चयस्यैव प्रतिबन्धकत्वादिति भावः।

न । साक्षात्साधनत्वबाधे [1]साक्षादन्यसाधनतात्वेन परम्परासाधन (त्वोपगमेन) [त्वबोधोपगमेन] अदोषात् । तस्मादपूर्वस्यावाच्यतया कल्प्यत्वेन, लिङः अपूर्वबोधकता नास्तीत्यलं विस्तरेण ।

इति अपूर्वस्य लिङ्वाच्यतानिराकरणम्

---

## अपूर्वविचारः

### यागस्यैव स्वर्गपर्यन्तस्थायित्वं कल्प्यते, नापूर्वं यागव्यापारः इति भट्टमतनिरूपणम्

(अन्नभट्टाः) [अत्र भट्टाः]यागव्यापारतया स्वर्गपर्यन्त-स्थायिनः अपूर्वस्य कल्पनमपेक्ष्य, यागादेरेव स्वर्गपर्यन्तस्था-

---

1 साक्षादन्यसाधनतात्वेन — साक्षात्साधनतान्यसाधनतात्वेन । तथाचापूर्वघटितपरम्परासाधनत्वत्वेनाबोधात् नापूर्वोपस्थित्यपेक्षेति भावः ।

यित्वकल्पनमुचितम्, धर्ममात्रकल्पने लाघवात् । तावतैव स्वर्गसाधनत्वोपपत्तेश्च ।

अथ, विभुसमवेतयोग्यविशेषगुणनाशत्वावच्छिन्नं प्रति स्वानन्तरोत्पन्नस्वसमानाधिकरणविशेषगुणत्वेन हेतुतायाः ज्ञानादिस्थले क्लृप्ततया [1]इच्छारूपयागस्य तृतीयक्षणे नाशावश्यंभावेन स्वर्गपर्यन्तस्थायित्वं न संभवतीति चेन्न ।

स्वत्वाननुगमेन कारणतावच्छेदकस्य तत्तद्व्यक्तिविश्रान्ततया कार्यतावच्छेदकस्यापि [2]तत्तद्व्यक्तिविश्रान्तत्वावश्यकतया, यागादिनाशे [3]स्वजन्यचरमस्वर्गव्यक्तेरेव तद्व्यक्तित्वेन हेतुताया उपगमेन यागस्य स्वर्गपर्यन्तस्थायित्वसंभवात् । न च यागस्य स्वर्गपर्यन्तमवस्थाने चतुर्थादिक्षणेऽपि यजेऽहम् इत्याकारकयागप्रत्यक्षापत्तिरिति वाच्यम् । विषयतासंबन्धेन आत्म-

---

1 इच्छारूपयागेति— देवतोद्देश्यकस्य स्वस्वत्वध्वंसानुकूल परस्वत्वप्रकारकेच्छारूपत्वाद्यागस्येत्यर्थः ।

2 तत्तद्व्यक्तिविश्रान्तत्वावश्यकतयेति —कारणस्याननुगमे कार्यतावच्छेदकस्यानुगतत्वे व्यतिरेकव्यभिचारादिति भावः ।

3 स्वजन्येत्यादि — स्वपदं यागादिपरम् । चरमस्वर्गव्यक्तिः-चरमा दुःखासंभिन्नसुखविशेषव्यक्तिः ।

विशेषगुणप्रत्यक्षे स्वाधिकरणक्षणोत्पत्तिकत्वसंबन्धेन कृतेः हेतुत्वोपगमेनोक्तापत्त्यसंभवात् । नचैतादृशहेतुताकल्पने गौरवमिति वाच्यम् । अनन्तातिरिक्तापूर्वकल्पनापेक्षया एतादृशहेतुतायामेव लाघवादिति वदन्ति ।

---

## अपूर्वं साधयतां नैयायिकनव्यानां मतनिरूपणम्

अत्र नैयायिकधुरन्धरा नव्याः, योग्यविशेषगुणवृत्तिप्रतियोगितासंबन्धेन नाशत्वावच्छिन्नं प्रति [1]स्वपूर्वत्व स्वसामानाधिकरण्योभयसंबन्धेन विशेषगुणत्वेन सामान्यतः एककारणताकल्पने बाधकाभावे [न] ज्ञानसुखादेरिव यागस्यापि तृतीयक्षणे नाशस्या (त्तद्द्वारकतया)[वश्यकतया]स्वर्गपर्यन्तमवस्थानासंभवेन तावत्पर्यन्तस्थाय्यपूर्वात्मकव्यापारकल्पनमावश्यकम् ।

---

1 स्वपूर्वत्वेति - ज्ञानपूर्वत्वे ज्ञानान्यसंबन्धत्वं न संभवति, तत्प्रतियोगिकत्वाभावात् तत्प्रतियोगिकत्वस्यैव तत्संबन्ध रूपत्वात् । अतः अतिप्रसङ्गासंभ वेन संबन्धकोटौ स्वत्वं न निवेश्यते । केवलं परिचायकतया स्वपदं प्रयुज्यते । तेन नाननुगमतादवस्थ्यशङ्केति बोध्यम् ।

किंच, अपूर्वस्वीकारे लाघवात् तदुपगम आवश्यकः । तथाहि-अपूर्वानङ्गीकारे, प्रधानफलहेतुत्वमङ्गानां वाच्यम् । (तद्वाच्यस्य) दशविधफलहेतोर्यागविशेषस्य अङ्गानि शतम् । [1]तस्य [2]फलं प्रति हेतुत्वानि दश । अङ्गानां च दशशतं हेतुत्वानि । अपूर्वोपगमे तु, प्रधानस्य एकं परमापूर्वहेतुत्वम्, फलेषु दश हेतुत्वानि । परमापूर्वस्यापि फलेषु दश हेतुत्वान्येव । परमापूर्वं प्रति चाङ्गानां शतं हेतुत्वानि, शतं हेतुत्वानि चाङ्गापूर्वाणां । अङ्गापूर्वे (युगा) [षु चा]ङ्गानां शतं हेतुत्वानीति [3]लाघवं स्फुटमेव ।

---

1 तस्य — यागविशेषस्य ।

2 फलं प्रति — दशविधान्तर्गततत्तत्फलं प्रति ।

3 लाघवमिति — शताङ्गक-दशविधफलजनकयागस्थले, अपूर्वानङ्गीकारे, दशाधिकं सहस्रं हेतुत्वानि, अपूर्वाङ्गीकारे, एकविंशत्यधिकं शतत्रयं हेतुत्वानि कल्पनीयानीति लाघवमित्यर्थः ।

यागध्वंसस्यैव स्थायिनः व्यापारत्वमिति नापूर्वकल्पनमिति मतम्

[1]एतेन, यागादिध्वंस एव यागादिना स्वर्गजनने व्यापारोऽस्तु, किमपूर्वेण । न च प्रतियोगिकार्यध्वंसकार्ये प्रतियोगिनः [2]अन्यथासिद्धतया न हेतुत्वं संभवतीति वाच्यम् । तथाऽन्यथासिद्धत्वे मानाभावात् । नचैवं यागादेः स्वर्गादिप्रतिबन्धकतापत्तिः, कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकतारूपत्वादिति वाच्यम् । घटादिनाशजनकनाशप्रतियोगिनः कपालादेः घटादिनाशप्रतिबन्धकतावारणाय, संसर्गाभावत्वावच्छिन्ना, अत्यन्ताभावत्वावच्छिन्ना वा (पाक करणता) [या कारणता] तदाश्रयाभावप्रतियोगित्वस्यैव प्रतिबन्धकतारूपत्वेना[3]दोषात् ।

———

1 एतेनेति — अस्य व्यवहितेन इत्यपि परास्तमित्यनेन संबन्धः ।

2 अन्यथासिद्धतयेति — घटजनक-कुलाल-जनकस्य घटं प्रति अन्यथासिद्धत्वमिवेति शङ्कितुरभिमानः ।

3 अदोषादिति — यागध्वंसनिष्ठकारणतायाः ध्वंसत्वावच्छिन्नत्वेन न यागस्य स्वर्गप्रतिबन्धकत्वापत्तिरिति भावः ।

### गङ्गास्नानेन स्वर्गजननायापूर्वं कल्पनीयमिति अवान्तराक्षेपः, तन्निरासश्च

यत्तु, गङ्गास्नानस्य सर्वाङ्गीणजलसंयोगरूपस्यापूर्वद्वारैव फलहेतुता [1]युज्यते । विनिगमनाविरहेण जलावयविना तदवयवैश्च संयोगादीनां स्नानत्वेन एकस्य ध्वंसस्य व्यापारत्वायोगात् । (विहिता च) [विविधध्वंसानां च] तथात्वे गौरवसंभवादिति ।

तदसत् । बहूनामपि ध्वंसानां ध्वंसत्वेनैकहेतुतायां गौरवानवकाशेनोक्तयुक्तेरप्रयोजकत्वात् ।

---

### स्मृत्या व्यवहारेण चापूर्वसिद्धिशङ्का, तत्परिहारश्च

न च 'धर्मः क्षरति कीर्तनात्' इत्यादिस्मृतिरेवापूर्वे प्रमाणम् । तस्याः, [2]विहितक्रियाव्यापारविशेषो धर्मः,

---

1 युज्यते इति — नानाविधजलसंयोगैर्जन्यमपूर्वमेकमेवेति भावः ।

2 विहितक्रियाव्यापारविशेषः — विहितक्रियायाः व्यापारविशेषः ।

क्षरति-नश्यतीत्यर्थकतया [1]तदर्थस्यापूर्वमन्तरेणानिर्वाहात्, ध्वंसस्य [2]ध्वंसासंभवादिति वाच्यम् । विहितक्रियाकर्तृत्वमात्रेण धार्मिकपदप्रयोगेण, तस्याः स्मृतेः, धर्मः—विहितक्रिया क्षरति-स्वकार्यजननाच्चलति—फलं नोत्पादयति इत्यर्थकतया, तदर्थस्य च फले कीर्तनस्य प्रतिबन्धकतयैव निर्वाहेणापूर्वासिद्धेः ।

न च प्रधानफलाजनकत्वे सति तज्जनकापूर्वजनकस्याङ्गत्वात् [3]तद्व्यवहार एवापूर्वे प्रमाणमिति वाच्यम् । प्रधान (कार्यता) [[4]कथन्ता] प्रवृत्तविधिविषयस्यैवाङ्गत्वात् ।

---

### ध्वंसस्य स्थायित्वेऽपि स्वर्गविच्छेदोपपत्तिः, निषिद्धादपि न दुरितापूर्वम्

न च यागध्वंसस्य व्यापारत्वे स्वर्गविच्छेदोऽनुपपन्नः । अपूर्वस्य व्यापारत्वे च तस्य चरमस्वर्गव्यक्तिनाश्यतया तदुप-

---

1 तदर्थस्य — स्मृत्यर्थस्य ।
2 ध्वंसासंभवादिति – भावोन्मज्जनापत्त्येत्यादिः ।
3 तद्व्यवहारः — अङ्गत्वव्यवहारः ।
4 प्रधानकथन्ता–प्रधाननिर्वाहप्रकारकजिज्ञासा इति मथुरानाथभट्टाचार्याः ।

पत्तिरिति वाच्यम् । कृतयागादेः इह लोकेऽपि फलवारणाय सहकारितया अवश्योपेयस्य वृत्तिलाभात्मक [1]कालविशेषस्यैव फलोत्पादकतया [2]तदुपप (न्न) त्तेः ।

एवं निषद्धकर्मणामपि स्वध्वंसद्वारा नरकजनकतोपपत्त्या दुरितापूर्वेऽपि मानाभावः । न च 'तस्मादेनसः पूतो भवति' इति श्रुत्या तत्सिद्धिः, तच्छ्रुत्या कृतप्रायश्चित्तस्य दुरितापूर्वनाशप्रतिपादनादिति वाच्यम् । एनःपदस्य तादृशकर्मपरतया तच्छ्रुतेः [3]कृतप्रायश्चित्तस्य निषिद्धकर्मजन्यफलभागित्वाभावसत्त्वप्रतिपादकत्वात्, इत्यपि परास्तम् ।

---

## पूर्वोपदर्शितगौरवेण निरुक्तमत निराकरणं अपूर्वसाधनं च

यागादिध्वंसस्य व्यापारतायामङ्गानामपि प्रधानफलं प्रत्येव हेतुत्वस्योपगन्तव्यतया [4]उक्तदिशा गौरवप्रसङ्गादिति दिक्, इति वदन्ति ।

---

1 कालविशेषस्यैवेति — एवकारोऽप्यर्थकः ।
2 तदुपपत्तेः — स्वर्गविच्छेदोपपत्तेः ।
3 कृतप्रायश्चित्तस्येति — पुंस इति शेषः ।
4 उक्तदिशा गौरवप्रसङ्गादिति — शताङ्कदशविधफलकयागविशेषस्थले दशाधिकसहस्रहेतुत्वानां कल्पनायां गौरवं ध्वंसस्य व्यापारतायामपि अपूर्वानङ्गीकारे, सम्भवतीति भावः ।

## कीर्तनादिनाश्यतया अपूर्वं साधयतां केषांचिन्मतनिरूपणम्

केचित्तु, कीर्तनादिनाश्यतयैवापूर्वसिद्धिः। अन्यथा कीर्तनादेः फलाभावप्रयोजकत्वानुपपत्तेः, ध्वंसस्य तदनाश्यत्वात्। चिरात् तेन कीर्तनादिना कालान्तरभाविस्वर्गादिफलप्रतिबन्धस्याप्ययोगात्। न च कीर्तनादिध्वंसस्य फलप्रतिबन्धकत्वोपगमात् [1]तदुपपत्तिरिति वाच्यम्। तथासति कीर्तितैकाश्वमेधस्य पुरुषस्य कीर्तनानन्तरमाचरितेनापि अश्वमेधेन फलानुत्पत्तिप्रसङ्गात्। न च तत्तत्कर्मव्यक्तिजन्यफलं प्रति तत्तत्कर्मकीर्तनध्वंसस्य विरोधित्वान्नोक्तप्रसङ्ग इति वाच्यम्। तादृशफलस्य [2]प्रायशोऽप्रसिद्धत्वात्, गौरवात्, अकीर्तितकार्यस्थलीयसामान्यसामग्रीबलेन कीर्तितकर्मणः फलजनकतापत्तेर्दुर्वारत्वाच्च।

---

1 तदुपपत्तिः — कीर्तनादेः फलाभावप्रयोजकत्वोपपत्तिः।

2 अप्रसिद्धत्वादिति — यत्कर्मव्यक्तेः कीर्तनं तद्ध्वंसश्च, तद्व्यक्त्या फलविशेषस्याजननात् प्रतिबध्याप्रसिद्ध्या प्रतिबध्यप्रतिबन्धकभावो न संभवतीत्यर्थः।

 

कीर्तितान्यत्वविशिष्टयागादेः फलहेतुत्वशङ्का, तन्निरासश्च

यत्तु, अश्वमेधादेः फलजनकतायां [1]कीर्तितान्यत्वस्यावच्छेदकतया निवेशात् नोक्तदोष इति ।

तदसत् । तथा सति समानकर्तृकत्व–पूर्वकालीनत्वोभयसंबन्धेन [2]कर्मनाशाजलस्पर्शविशिष्टान्यत्वादीनामपि तत्र निवेशनीयतया, [3]विशेष्यविशेषणभावे विनिगमनाविरहप्रयुक्तगौरवापत्त्या, तदपेक्षया स्वविषयजन्यत्वादिसंबन्धेन कीर्तनादेः अपूर्वनाशकत्वस्यैव युक्तत्वात् । न च कर्मनाशाजलस्पर्शप्रयुक्तापूर्वनाशे व्यभिचार इति वाच्यम् । ....
........................ अत्र किञ्चिदिव ग्रन्थपातः

———

1 कीर्तितान्यत्वस्य — समानकर्तृकत्व–पूर्वकालीनत्वोभयसंबन्धेन कीर्तनविशिष्टान्यत्वस्य ।

2 कर्मनाशेति — कर्मनाशाजलस्पर्शात् करतोयातिलङ्घनात् । गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तनात् ॥ इति स्मृत्या कर्मनाशाख्यनदीजलसंयोग – करतोयाख्यनदीलङ्घनादिनापि धर्मनाशस्योक्तत्वेन तत्तद्विशिष्टान्यत्वस्यापि फलजनकतावच्छेदककोटौ निवेशनीयत्वादिति भावः ।

3 विशेषणविशेष्यभावे — कीर्तनविशिष्टान्यत्व–जलसंयोगविशेषविशिष्टान्यत्वादीनामित्यादिः ।

### कीर्तितान्यत्वस्य फलहेतुत्वशङ्का, तन्निराकरणं च

(उक्तोभयसंबन्धेन) [यत्तु, उपधायकतासंबन्धेन] फलं प्रति कीर्तितान्यत्वं हेतुः । अतो नातिप्रसङ्गः, न वा गौरवमिति ।

तदप्यसत् । अतीतयागादौ उपधायकतासंबन्धेन [1]फलोत्पत्तेरसंभवात् । कीर्तिते यागादौ उपधायकतासंबन्धेन फलोत्पादस्य [2]उक्तहेतुतया वारणेऽपि, समवायेनात्मनि फलोत्पादापत्तेर्दुर्वारत्वाच्च । न चोपधायकतासंबन्धेन फलोत्पादकसामग्र्याः प्राक्क्षण (सत्वेपि) [सत्त्वमपि] समवायेन फलोत्पादे अपेक्षितम् । अतो नोक्तदोष इति वाच्यम् । अकीर्तिते एव यागादौ [3]तादृशसामग्र्याः सत्त्वेनो[4]क्तापत्तेर्दुर्वारत्वात् ।

---

1 असंभवादिति — उपधायकतायाः स्वाव्यवहितपूर्ववर्तितारूपत्वादिति भावः ।

2 उक्तहेतुतया — कीर्तितान्यत्वस्य फलहेतुतास्वीकारेण ।

3 तादृशसामग्र्याः — कीर्तितान्यत्वघटितायाः उपधायकतासंबन्धेन फलोत्पादकसामग्र्याः ।

4 उक्तापत्तेः—कीर्तितेऽपि यागादौ, समवायेनात्मनि फलोत्पादापत्तेः ।

अथ समवायेन तत्तदात्मीयस्वर्गादिकं प्रति तत्तदात्मत्वेन तादात्म्यप्रत्यासत्त्या समवायिकारणत्वस्य, तत्तदात्मीयाश्वमेधादिनिष्ठोपधायकतासंबन्धेन स्वर्गादिकं प्रति तत्तदात्मीयाश्वमेधत्वादिना तादात्म्यप्रत्यासत्त्या कारणत्वस्य कल्पनान्नोक्तापत्तिरिति चेन्न । [1]गौरवापत्तेः ।

—— —

## प्रायश्चित्तनाश्यतया दुरितापूर्वसाधनम्

एवं प्रायश्चित्तादिनाश्यत्वेन दुरितापूर्वसिद्धिः । ध्वंसस्य निषिद्धक्रियाव्यापारत्वे, कृतप्रायश्चित्तस्यापि गोवधादिध्वंससत्त्वेन नरकोत्पादप्रसङ्गात् । न च प्रायश्चित्तध्वंसस्य प्रतिबन्धकत्वोपगमान्न दोष इति वाच्यम् । प्रायश्चित्तानन्तरं कृतस्यापि गोवधादेः नरकाजनकत्वप्रसङ्गात् । न च तत्तत्कर्मानन्तरकृतप्रायश्चित्तध्वंसादेः तत्तत्कर्मजन्यनरकप्रति-

1 गौरवापत्तेरिति — तत्तदात्मभेदेन तत्तत्कर्मव्यक्तिभेदेन च हेतुतानन्त्यादिति भावः ।

बन्धकत्वोपगमान्नोक्तदोष इति वाच्यम् । [1]उपदर्शितरीत्या तादृशोपगमासंभवादित्याहुः ।

---

## तत्त्वज्ञाननाश्यतया अपूर्वं साधयतामपरेषां मतनिरूपणम्

अपरेतु, तत्त्वज्ञाननाश्यतया अदृष्टसिद्धिः । 'ज्ञानाग्निः सर्वकर्माणि [2]भस्मसात्कुरुतेऽर्जुन' । (भ. गी 4-37) इत्यादिस्मृतेः । न च तत्त्वज्ञानस्य भोगप्रतिबन्धकतया [3]फलाजनकत्वपरा सा स्मृतिरिति वाच्यम् । सौभरिप्रभृतीनां तत्त्वज्ञानिनां भोगश्रवणेन तत्त्वज्ञानस्य भोगप्रतिबन्धकत्वाभावात् । किञ्च, अपूर्वानङ्गीकारे तत्त्वज्ञानिनामपि विहितनिषिद्धाचरणेन भोगापत्तिः । तदङ्गीकारे तु, वासनाविरहेणापूर्वानुत्पत्त्योक्तापत्त्यभावात् । न च वासनाया भोगनियामकत्वं

---

1 उपदर्शितरीत्येति — यत्कर्मानन्तरं प्रायश्चित्तं कृतम्, तादृशनिषिद्धकर्मव्यक्तेः फलानुत्पत्त्या तत्कर्मजन्यफलविशेषस्य प्रतिबध्यस्याप्रसिद्ध्या नोक्तप्रतिबध्यप्रतिबन्धकभावः संभवतीति भावः ।

2 भस्मसादिति — 'भस्मसात्कुरुते तथा' इति गीतापाठः दृश्यते ।



3 फलाजनकत्वपरेति — कर्मणामित्यादिः ।

संभवति । तत्त्वज्ञानिनां [1]भोगाप्रसङ्गात् । एवं,

'अपूर्वपुण्यप्राप्तिश्च सद्यो मैत्रेय जायते' ।

इत्यादि स्मृतयोऽप्यपूर्वे प्रमाणमिति प्राहुः ।

इति अपूर्वसाधनम्

---

## अपूर्वस्य द्वैविध्यम्

तच्चापूर्वं द्विविधं, परमापूर्वं, कलिकापूर्वं च । दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः इति प्रधानविधिबोधितस्य दर्शपूर्णमासत्वावच्छिन्ने स्वर्गसाधनत्वस्यानुपपत्त्या यथा परमापूर्वकल्पनम्, तथैव, आग्नेयोऽष्टाकपालो भवत्यमावास्यायाम्, ऐन्द्रं दधि भवत्यमावास्यायाम्, ऐन्द्रं पयो भवत्यामावास्यायाम्, आग्नेयोऽष्टाकपालो भवति पौर्णमास्याम्, ताभ्यामग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्, उपांशुयाजमन्तरा यजति, इति षड्भिः द्रव्यदेवतासंबन्धरूपयागस्य प्रथमप्रतीतिरूपोत्पत्ति-

---

1 भोगप्रसङ्गात् — भोगाभावप्रसङ्गात् ।

प्रत्यायकतया [1]उत्पत्तिवाक्यैः, प्रत्येकमाग्नेयत्वाद्यवच्छिन्ने बोधितस्य परमापूर्वद्वारकस्वर्गसाधनत्वस्यानुपपत्त्या षट्कलिकापूर्वाणां कल्पनस्यापि औचित्यावर्जितत्वेन युक्तत्वात् ।

---

कलिकापूर्वैरेवोपपत्तौ परमापूर्वे मानाभावः इत्याक्षेपः, तत्परिहारश्च

अथ, षडाग्नेयादिभिः कलिकापूर्वद्वारा स्वर्गजननसंभवेन परमापूर्वे मानाभावः, षण्णां कलिकापूर्वाणामेव स्वर्गपर्यन्तावस्थानसंभवात् । न च षण्णां स्वर्गहेतुत्वे गौरवात् एकमेव परमापूर्वं तद्धेतुतया सिद्ध्यतीति वाच्यम् । परमापूर्वोपगमे [2]तत्रैव कलिकापूर्वाणां हेतुत्वस्य वाच्यतया तत्कल्पनायामेव गौरवात् । नचाघारादीनामङ्गानां षट्कलिकापूर्वेषु कारणत्वकल्पनायां गौरवात् [3]तज्जन्यत्वेन परमापूर्वं कल्प्यते !इति वाच्यम् । परमापूर्वकल्पनापेक्षया लाघवेन कलिका (पूर्वाद्येव)

---

1 उत्पत्तिवाक्यैः — उत्पत्तिवाक्यतया व्यवह्रियमाणैः वाक्यैः ।
2 तत्रैव — परमापूर्वे एव ।
3 तज्जन्यत्वेन — आघाराद्यङ्गजन्यत्वेन ।

[पूर्वेष्वेव] आघारादिजन्यतावच्छेदकजातिकल्पन[1]स्यौचित्यात् । न च चरमाङ्गहरिस्मरणादिजन्यस्यैवास्तु परमापूर्वत्वम् । तत्र हि हरिस्मरणं साक्षात्, आग्नेयादियागषट्कं च कलिकापूर्व-(धारा)[द्वारा] कारणमिति वाच्यम् । हरिस्मरणादिमात्रजन्य-स्यापूर्वस्य षडाग्नेयादिजन्यत्वोपगमे गौरवात् । किञ्च, कलि-कापूर्वाणां स्वर्गहेतुत्वे, स्वर्गनाश्यत्वे लाघवम् । परमापूर्व-स्वीकारे च कलिकापूर्वाणां परमापूर्वं नाशकम्, परमापूर्वस्य च स्वर्गः नाशकः इति नाश्यनाशकभावद्वयकल्पने गौरवादिति चेत् ।

मैवम् । [2]प्रधानविधिप्रवृत्तिकाले दर्शपौर्णमासजन्यं स्वर्गसाधनमपूर्वं सिद्ध्यत् लाघवादेकं सिद्ध्यति । तदेव च परमापूर्वम् । पश्चात् [3]षडाग्नेयादीनां क्रमिकत्वज्ञाने तदुप-पादककलिकापूर्वकल्पनस्य फलमुखत्वेनादोषात् ।

---

1 औचित्यादिति – धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वा-दिति भावः ।

2 प्रधानविधीति — दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति विधिः प्रधानविधिः ।

3 षडाग्नेयादीनामिति — दर्शपूर्णमासात्मकानामित्यादिः ।

## कार्यकारणमात्रकल्पनालाघवात् स्वर्गादिफलजनकतया परमापूर्वसिद्धिरिति मतम्

यत्तु, स्रक्चन्दनादिविषयसंबन्धाधीनपरस्परविजातीयसहस्रादिसंख्ययागादिफलजनकत्वेनैव परमापूर्वसिद्धिः । कलिकापूर्वाणां स्वर्गादिफलजनकत्वे, [1]षडधिकसहस्रकार्यकारणभावस्थले, षट्सहस्रकार्यकारणभावकल्पनापत्तेः । न च कलिकापूर्वेषु जनकतावच्छेदकतया एकजातिरेव कल्प्यते इति वाच्यम् । [2]तादृशजातेः आग्नेयादिजन्यतावच्छेदकजातिव्यापकत्वे, षडन्तर्गतकतिपयाननुष्ठानेऽपि फलप्राप्तिप्र-

---

1 षडधिकेत्यादि – परमापूर्वानङ्गीकारे, कलिकापूर्वाणां षण्णामपि प्रत्येकं सहस्रफलेषु सहस्रं कार्यकारणभावाः इत्याहत्य षट्सहस्रकार्यकारणभावानां कल्पनम् । परमापूर्वाङ्गीकारे तु, एकस्य परमापूर्वस्य प्रत्येकं सहस्रफलेषु सहस्रं कार्यकारणभावा, परमापूर्वं प्रति षण्णां कलिकापूर्वाणां प्रत्येकं षट् कारणत्वानि, इत्याहत्य षडधिक सहस्रं कार्यकारणभावाः कल्पनीयाः इति लाघवात् परमापूर्वसिद्धिरिति समुदायार्थः ।

2 तादृशजातेः – कलिकापूर्वेषु कल्पितायाः फलजनकतावच्छेदकजातेः ।

सङ्गात् । तदव्यापकत्वे, [1]जातिसंकरापातात् । जन्यतावच्छेदकतया नानाविधस्वर्गादिनिष्ठैकजातिकल्पना न युज्यते, चन्दनसंयोगादिजन्यतावच्छेदकजातिभिः समं संकरप्रसङ्गादिति ।

---

## उक्तमतनिरासः

तदसत् । कलिकापूर्वसंबन्धेन दर्शपूर्णमासत्वादिनैव नानाविधस्वर्गत्वावच्छिन्ने हेतुत्वात् । कलिकापूर्वाणां च धर्मत्वेन अदृष्टत्वेन वा सुखत्वावच्छिन्ने कार्यत्वावच्छिन्ने वा हेतुत्वात् । न च दर्शपूर्णमासादेः एकजातीयपरमापूर्वहेतुत्वम्, परमापूर्वस्य त्वेकजातीयस्य नानाविधस्वर्गत्वावच्छिन्ने इति वाच्यम् । [2]श्रुत्या दर्शादौ स्वर्गहेतुत्वबोधनात् । युज्यते चैतत् । परमापूर्वे कर्मणां विशिष्य हेतुत्वम्, स्वर्गे परमापूर्व-

---

1 जातिसंकरापातात् — आग्नेयादिजन्यतावच्छेदकजातिभिः समं संकरप्रसङ्गात् ।

2 श्रुत्या — दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रुत्या ।

स्येति कल्पनामपेक्ष्य, स्वर्गे एव कर्मणां विशिष्य हेतुत्वे लाघवात्, श्रुत्यनुग्रहाच्चेति दिक् ।

---

## दर्शपूर्णमासस्थले अपूर्वसंख्याविचारः

अथ तथापि दर्शपूर्णमासस्थले कियन्ति अपूर्वाणीति चेत् ।

---

## कलिकापूर्वषट्कं समुदायापूर्वद्वयं परमापूर्वं चेति नवापूर्वाणीति प्राचां मतनिरूपणम्

अत्र प्राञ्चः, दर्शत्रयेण प्रत्येकमाग्नेयाद्येकैकापूर्वं जनयित्वा तत्त्रयद्वारकं दर्शसमुदायापूर्वं जन्यते । एवं पौर्णमासत्रयेण प्रत्येकमाग्नेयाद्येकैकापूर्वं जनयित्वा तत्त्रयद्वारा एकं पौर्णमाससमुदायापूर्वं जन्यते । ततः षड्भिरेव कलिका-पूर्वैः मध्यमसमुदायापूर्वद्वारा (फलसंस्कारपूर्वं) [[1]फलशिरस्का-

---

1 फलशिरस्कापूर्वं – फलजनकापूर्वम् ।

पूर्वं] परमापूर्वं जन्यते इति (नवापूर्वापक्षः) [नवापूर्वीपक्षः] । न च दर्शान्त्यस्य पौर्णमासान्त्यस्य च चरमकारणस्य साक्षादेव मध्यमसमुदायापूर्वं [जन] कतासंभवेन तज्जन्यकलिकापूर्वे मानाभावात् [1]सप्तापूर्वपक्ष एव श्रेयानिति वाच्यम् । तस्यापि उत्तराङ्गदक्षिणादिसमयपर्यन्तमनवस्थित्या तज्जन्यकलिकापूर्वस्याप्यावश्यकत्वादिति वदन्ति ।

---

### समुदायापूर्वानभ्युपगमेन, कलिकापूर्वषट्कं परमापूर्वं चेति सप्तापूर्वाणीति नव्यमतनिरूपणम्

नव्यास्तु, मध्यमसमुदायापूर्वद्वये मानाभावात् षड्भिः दर्शादियागैः कलिकापूर्वषट्कद्वारैव परमापूर्वं जन्यते इति (समा) [सप्ता] पूर्वीपक्षः । न च पञ्चभिः पञ्चापूर्वद्वारा, षष्ठेन च [2]साक्षादेव परमापूर्वं जन्यतामिति किं षष्टेन कलिका-

---

1 सप्तापूर्वपक्षः — दर्शे पौर्णमासे च प्रत्येकं कलिकापूर्वद्वयं, मध्यमसमुदायापूर्वद्वयं, फलापूर्वं चेति सप्तापूर्वाणि इति पक्षः ।

2 साक्षादेव — कलिकापूर्वमद्वारीकृत्यैव ।

पूर्वेण । तथा च षडपूर्वीपक्ष एव श्रेयानिति वाच्यम् । षष्ठेनापि उत्तराङ्गदक्षिणादिसहकारेणैव परमापूर्वजननात् तावत्कालमनवस्थित्या कलिकापूर्वजननात् । न च 'अमावास्यायाममावास्यया यजेत', 'पौर्णमास्यां पौर्णमास्या यजेत' इति विधिबोधितस्य दर्शत्वावच्छिन्न–पौर्णमासत्वावच्छिन्न कारणताद्वयस्य निर्वाहाय मध्यमसमुदायापूर्वद्वयमवश्यकल्पनीयमिति वाच्यम् । दर्शत्वादेः कारणतावच्छेदकत्वपर्यन्तस्याविध्यर्थतया कारणतैक्यलाघवेन अमावास्यायामित्यादिविधिभ्यां एकस्यैव दर्शपूर्णमासोभयसाधारणधर्मावच्छिन्नकारणत्वस्य बोधनात् । दर्शत्वपौर्णमासत्वाभ्यां च कारणताद्वयमप्रामाणिकम् । कारणतैक्यलाघवेनोभयसाधारणवैजात्यस्यैवावच्छेदकतया कल्पनौचित्यात् । न च दर्शत्व पौर्णमासत्वयोः कारणतावच्छेदकत्वं विधिप्राप्तम्, प्रमाणाभावात् । नचैकरूपेण दर्शपूर्णमासयोः कारणतायामकृतदर्शस्यापि कृतपौर्णमासस्य स्वर्गोत्पादापत्तिरिति वाच्यम् । [1]परमापूर्वाभावेन तदयोगादित्याहुः ॥

—

1 परमापूर्वाभावेनेति — षड्भिः आग्नेयादियागैः कलिकापूर्वषट्कद्वारैव परमापूर्वजननादिति भावः ।

## यागेन स्वर्गजनने देवताप्रीतिरेव व्यापारोऽस्तु इत्याक्षेपः

अथ, 'यज देवपूजायाम्' इति शाब्दिकस्मृतिबलेन पूजायाः [1]गौरवितप्रीतिहेतुक्रियारूपतया यागस्य देवताप्रीतिहेतुत्वे [2]तद्द्वारैव यागस्य स्वर्गहेतुता अस्तु, किमपूर्वेण ।

न च देवताप्रीतेः देवतानिष्ठसुखात्मकतया तस्य यागवत् क्षणिकत्वेन कथं स्वर्गजनकत्वमिति वाच्यम् । प्रीत्यनुभवजनितसंस्कारद्वारा प्रीतेरपि स्वर्गहेतुतासंभवात् । न च संस्कारजन्यस्य स्मृतित्वनियमेन स्वर्गस्य संस्कारजन्यत्वे स्मृतित्वापत्तिरिति वाच्यम् । तादृशनियमे मानाभावात् । अन्यथा तत्तत्संस्कारस्य प्रत्यभिज्ञाहेतुत्वपक्षे तस्याः स्मृतित्वापत्तेः । न च यागस्य देवताप्रीतिहेतुत्वेऽपि, तस्याः स्वर्गहेतुत्वे मानाभावः । न हि तस्याः स्वर्गजनकत्वं विना यागजन्यतामात्रेण व्यापारत्वं संभवति, तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारत्वादिति वाच्यम् । या यत्प्रीतिहेतुक्रिया सा

1 गौरवितप्रीतीति – गौरवितनिष्ठप्रीतीत्यर्थः ।

2 तद्द्वारैव – देवताप्रीतिद्वारैव ।

तत्प्रीति(तदन्य)[जन्य) तत्कर्तृनिष्ठफलजनिका इति व्याप्तेः। [1]अवधारिता चेयं राजप्रीतिहेतुभूतायां राजशत्रुनाशनक्रियायाम्।

किञ्च, 'स्वर्गकामो यजेत' इति श्रुतिबलात् यागस्य स्वर्गसाधनत्वे सिद्धे, तस्य साक्षात् साधनत्वासंभवेन परम्परासाधनत्वं प्रामाणिकम्। तस्य च व्यापारं विनाऽनुपपद्यमानतया व्यापारकल्पनावश्यकत्वात्, अतिरिक्तस्यादृष्टस्य व्यापारत्वकल्पनमपेक्ष्य क्लृप्तायाः देवताप्रीतेरेव व्यापारत्वं कल्प्यते लाघवात्।

न च देवताप्रीतेः तदनुभवजन्यसंस्कारस्य च स्वर्गव्यधिकरणतया स्वर्गहेतुत्वं न संभवतीति वाच्यम्। 'पूजके प्रीतिमान् देवः' इत्यादिवचनेन तस्या अपि विलक्षणसंबन्धेन

---

1 अवधारितेति – देवदत्तकर्तृका राजशत्रुनाशनक्रिया राजप्रीतिजनिका, राजप्रीतिजन्यं तादृशक्रियाकर्तृदेवदत्तनिष्ठं प्रभूतधनलाभादिफलं जनयति। एवं यागक्रिया, देवताप्रीतिजनकत्वात्, देवताप्रीतिजन्यं यागकर्तृनिष्ठं फलं जनयतीति अनुमानात्सिद्ध्यतीति समुदायार्थः।

[1]स्वर्गसामानाधिकरण्यसंभवात् । अन्यथा पूजके इति सप्तम्यर्थस्य दुर्वचत्वापातात् । एवं च तादृश संबन्धेन देवताप्रीतेः, [प्रीत्यनुभवजन्यसंस्कारस्य स्वजनकानुभवविषयप्रीतिनिरूपितविलक्षणसंबन्धेन च] स्वर्गहेतुत्वं संभवत्येव [इति चेन्न] ।

---

## देवता प्रीतेः व्यापारत्वनिराकरणम्

[प्रीतेः]प्रीत्यनुभवजनित संस्कारस्य च विलक्षणसंबन्धेन उक्तपरम्परासंबन्धेन च स्वर्गहेतुत्वे गौरवेण, [2]लाघवात् फलसमानाधिकरणादृष्टस्यैव कल्पयितुमुचितत्वात् । किञ्च, उक्तसंस्कारस्य व्यापारत्वे, लोकसंग्रहार्थमनुष्ठितेन यागादिना तत्त्वज्ञानिनामपि भोगापत्तिः । [3]तत्त्वज्ञानिनां बहुशः भोगश्रव-

---

1 स्वर्गसामानाधिकरण्येति — पूजके स्वर्गस्य, वचनसिद्धस्य विलक्षणसंबन्धेन देवप्रीत्याधारत्वस्य च सत्त्वेन स्वर्गसामानाधिकरण्यमित्यर्थः ।

2 लाघवात्, समवायेनैकहेतुत्वकल्पनायां लाघवात् ।

3 मिथ्याज्ञानजन्यवासनाया अभावाच्च तेषां यागादिना भोगापत्तिः इत्याशङ्कायामाह — तत्त्वज्ञानिनामिति । सौभरिप्रभृतीनामिति शेषः ।

णेन भोगे मिथ्याज्ञानजन्यवासनात्मकदोषस्य हेतुत्वासंभवात् । अदृष्टस्य व्यापारत्वोपगमे तु वासनाया अदृष्टकारणत्वेन तदभावेनादृष्टानुत्पत्त्या भोगापत्त्यसंभवात् ।

न च तत्त्वज्ञानेन देवताप्रीत्यनुभवजन्यसंस्कारनाशात् नोक्तापत्तिरिति वाच्यम् । तन्नाशकतावच्छेदकलघुसंबन्धान्तरासंभवेन, स्वसमानाधिकरणकृतिजन्यकर्मा (ही) [धी] नप्रीतिविषयत्वादिरूपसंबन्धस्यैव तन्नाशकतावच्छेदकत्वकल्पने गौरवात् । तत्त्वज्ञानस्योक्तसंस्कारनाशकत्वे, तत्त्वज्ञानिकृत–पित्रादि स्वर्गार्थकर्मणां निष्फलत्वप्रसङ्गाच्च ।

---

सर्वत्र क्रियाजन्यमदृष्टं कर्तृगतमेवेति मतोपन्यासः

[1]एतेन, सर्वत्रादृष्टं कर्तृगतमेव । साक्षात्संबन्धेन

---

1 एतेन — लाघवेन फलसमानाधिकरणस्यैवादृष्टस्य व्यवस्थापनेन । अस्य इत्यपास्तमित्यनेन संबन्धः ।

[1]तत्र यागादेर्जनकत्वे लाघवात् । न च गयाश्राद्धादिजन्य-फलं पित्रादिगतमेव, न तु कर्तृगतम् । (पित्राद्या यायेत्) ['पितृभ्यः पातयेत्] पिण्डं तन्नयेत् ब्रह्म शाश्वतम्' इत्यादि-वचनात्, [2]इत्यदृष्टस्यापि पित्रादिगतत्वेन कथं तस्य कर्तृगतत्व-नियमः इति वाच्यम् । तत्रापि अदृष्टस्य कर्तृगतत्वेन तन्नियमानपायात् । अन्यथा, मुक्ते पितरि गयाश्राद्धजन्या-दृष्टानुत्पत्त्या निष्फलत्वेन साङ्गस्यापि वैदिककर्मणः फलजन-कत्वव्यभिचारेणा[3]विश्वासात् विधेरननुष्ठानलक्षणाप्रामाण्यापा-तात् । न च फलावाप्तेः पूर्वमेव कर्तुर्मुक्तौ [4]तद्गतादृष्टना-शेन पितुः फलं न स्यादिति वाच्यम् ।

गयाश्राद्धादिजन्यादृष्टस्यासमानाधिकरणभोगाजन-कत्वेन [5]तन्मोक्षदशायामपि सत्त्वोपगमात् । न च पुत्रकृत-

---

1 तत्र — अदृष्टे ।

2 अदृष्टस्यापीति — फलहेतोरिति शेषः ।

3 अविश्वासात् — फलाजनकत्वसंभावनया ।

4 तद्गतेति — गयाश्राद्धकर्तृपुत्रगतेत्यर्थः ।

5 तन्मोक्षदशायामपीति —अदृष्टस्य भोगेनैव नाशः । गयाश्राद्ध-जन्यफलं भोगः पितुरेवेति पितुः तत्फलभोगानन्तरमेव श्राद्ध-जन्यादृष्टनाशः इति भावः ।

गयाश्राद्धेन मुक्तस्यापि पितुः ब्रह्मलोकावाप्तिः स्यात्, ज्ञानिनो भोगोदयेन [1]दोषस्य भोगाजनकत्वादिति वाच्यम् । इष्टत्वात् । न च श्राद्धादिजन्यादृष्टस्य कर्तृगतत्वे युगपदेकोद्देश्यकानेककर्तृकश्राद्धादिस्थले कर्तृभेदेनादृष्टभेदात् गौरवमिति वाच्यम् । भोक्तृगतत्वनियमेऽपि प्रतिपुरुषं श्राद्धादिजन्यादृष्टस्य [2]भोक्तृभेदेनादृष्टभेदेन गौरवस्य तुल्यत्वात् । न च फलस्य स्वसमानाधिकरणपुण्यजन्यतानियमेन कथं पुत्रादिगतादृष्टेन पित्रादौ फलमिति वाच्यम् । तादृशनियमे मानाभावात् । इत्यपास्तम् ।

### उक्तमतनिरासः

गयाश्राद्धादिजन्यादृष्टस्य कर्तृगतत्वे, तस्य पित्रादिगतफलं प्रति [स्वजनकश्राद्धोद्देश्यतासंबन्धेन,] गयाश्राद्धादेः उद्देश्यतासंबन्धेन हेतुत्वम् । [भोक्तृगतत्वे, गयाश्राद्धादेः उद्देश्यतासंबन्धेन अदृष्टं प्रति हेतुत्वम्, [3]तस्य

---

1 दोषस्य — मिथ्याज्ञानजन्यवासनारूपदोषस्य ।

2 भोक्तृभेदेनादृष्टभेदेन — भोक्तृभेदप्रयुक्तेन अदृष्टभेदेन ।

3 तस्य — अदृष्टस्य ।

पित्रादिगतफलं प्रति समवायेन हेतुत्वम् ।] तस्य [1]चोक्त-परम्परासंबन्धापेक्षया लघुत्वेनास्मन्मते न किञ्चिदपि गौरवम् ।

किञ्च, गयाश्राद्धादेः कर्तृमात्रगतादृष्टजनकत्वे, पित्रादेरुद्धाराय तत्त्वज्ञानिनां तदनुष्ठाना (न्नो) [नु] पपत्तिः, [2]कर्तुर्दोषाभावेनादृष्टानुत्पत्त्या फलासंभवात् । न चैवं श्येनादितोऽपि भोक्तृगतमेवादृष्टमुपेयतामिति वाच्यम् । इष्टत्वात् ।

किञ्च, पुत्रनिष्ठगयाश्राद्धादिजन्यादृष्टेन पितुर्मुक्तस्यापि भोगाय जन्मोपगमे, 'न स पुनरावर्तते'(छा-)इति श्रुतिविरोधः । तुल्यन्यायेन [3]पुत्रकृतसाक्ष्यादिना मुक्तपितुः नरकादिप्रसङ्गस्यापि दुर्वारतया, 'दुःखेनात्यन्तं विमुक्तश्चरति' इत्यादिश्रुतेरपि विरोधो दुर्वारः ।

---

1 उक्तपरम्परासंबन्धेति— स्वजनकश्राद्धोद्देश्यतासंबन्धेत्यर्थः ।

2 कर्तुः — श्राद्धकर्तुः तत्त्वज्ञानिनः । दोषाभावेन–मिथ्याज्ञानजन्यवासनारूपदोषाभावेन ।

3 पुत्रकृतसाक्ष्यादिनेति — साक्षिविधया असत्याभिधानादि पुत्रक्रियाजन्यपापेन 'स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते' इत्यादिवचनेन बोधितनरकभागित्वमपि मुक्तस्य पितुः स्यादिति समुदायार्थः ।

तस्मात् अदृष्टस्य भोक्तृगतत्वं नियतमेव । फलस्य कर्तृगतत्वं तु औत्सर्गिकम् । अत एवोक्तं–'शास्त्रदेशितं फलमनुष्ठातरीत्युत्सर्गः' इति । अत एव यत्र स्वपरविशेषापुरस्कारेण फलंश्रूयते, तत्र परकीयस्वर्गादिकामनया पुष्करिणीयागाद्याचारः शिष्टानां संगच्छते । स्वर्गकामः इत्यादौ [1]साधारणोक्त्या स्वपरसाधारणस्वर्गस्य फलत्वलाभात् ।

---

### यजेत स्वर्गकाम इत्यत्र स्वपरसाधारण स्वर्गस्य फलत्वे आत्मनेपदमसाधु स्यादित्याक्षेपः

ननु ,स्वरितेद्यजधातूत्तरमात्मनेपदं यागरूपक्रियाफलस्य कर्तृगतत्वं बोधयति । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (पा. सू. -1-3-72) इत्यनुशासनात् । कर्तारमभिप्रैति—संबध्नाति इति कर्त्रभिप्रायः । कर्मोपपदादभिप्रेतेः कर्तरि अण्प्रत्ययेन [2]तत्पदनिष्पत्तिः । एवंभूते क्रियाफले तात्पर्य-

---

1 साधारणोक्त्या — स्वीय-परकीयस्वर्गसाधारण-स्वर्गत्वावच्छिन्नबोधक स्वर्गपदेन ।

2 तत्पदनिष्पत्तिः — कर्त्रभिप्रायपदनिष्पत्तिः ।

विषये सति आत्मनेपदम् इत्यनुशासनार्थः । तथाच यजेतेति विधिबोधितयागात् यदि परगतस्वर्गादि फलं, तदा यजेतेत्यात्मनेपदमसाध्वेव स्यादिति (चेन्न) चेन् ।

---

### उक्ताक्षेपस्य चिन्तामणिकृतां समाधानम्

[अत्र] चिन्तामणिकृतः, यजेतेत्यात्मनेपदं क्रियाफलस्य कर्तृनिष्ठत्वेऽपि कर्त्रभिप्रेतत्वमात्रेणैव साधु, अभिप्रेते: [1]प्रसिद्धेच्छार्थकत्वसंभवेनाभिप्रेतत्वस्येच्छाविषयत्वरूपत्वादित्याहुः ।

---

### फलस्य कर्तृगतत्वे एवात्मनेपदं साध्विति मिश्राणां मतनिरूपणम्

मिश्रास्तु, एवं सति यत्र विशिष्यैव पुरुषविशेषस्य फलार्थं यत्कर्मोक्तम्, तदपि पुरुषान्तरगतफलकामनया कृतं पुरुषान्तर-

---

1 प्रसिद्धेति — अभिप्रायपदस्य इच्छारूपार्थे प्रयोगप्राचुर्यादिति भावः ।

फलजनकमस्तु । एवं च परपुत्रादिपूतत्वार्थमपि जातेष्ट्यादिकमस्तु । 'दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्' इत्यादावपि [1]परपित्रादिलाभापत्तिश्च ।

आत्मनेपदमपि फलस्य कर्तृगतत्वे एव साधु। 'स्वरितञितः'(पा. सू. 1-3-72)इति सूत्रस्य, 'कर्तारं चेत् क्रियाफलमभिप्रैति प्रतिसंबध्नाति' इति व्याख्यानात्, फलस्य कर्तृनिष्ठत्वे एवात्मनेपदस्य साधुत्वात् । अत एव कर्त्रभिप्राय-क्रियाफलयोः [2]सामानाधिकरण्यमप्युपपद्यते। अभिप्रायशब्दस्येच्छार्थकत्वे सामानाधिकरण्यानुपपत्तिः। न चाभिप्रायशब्दस्येच्छाविषयलक्षणया तदुपपत्तिरिति वाच्यम् । गौरवात् । अत एव यजन्ति(पाकजाः) [याजकाः] पठन्ति (यास्का) [पाठकाः] इति [3]प्रत्युदाहरणं

---

1 परपित्रादिलाभेति — परकीयपितुर्बोधेत्यर्थः ।

2 सामानाधिकरण्यमिति — कर्त्रभिप्राये, क्रियाफले इति पदद्वयं समानाधिकरणं दृश्यते। अभेदेन अपरपदार्थान्वितस्वार्थबोधकपदत्वमेव पदनिष्ठं पदान्तर सामानाधिकरण्यम् । कर्त्रभिप्रायपदस्येच्छार्थकत्वे तन्न संभवति, क्रियाफले अभिप्रायाभेदाभावात् । कर्त्रभिप्रायपदस्य कर्तृसंबद्धार्थकत्वे फले तदर्थाभेदसत्त्वेन पदयोः सामानाधिकरण्यमुपपद्यते इति समुदायार्थः।

3 प्रत्युदाहरणं — स्वरितेत्यादिकस्यात्मनेपदविधायकसूत्रस्य प्रत्युदाहरणम् ।

संगच्छते । अन्यथा याजकादीनामपि क्रियाफले अभिप्राय-सत्त्वादात्मनेपदापत्तेः । न च (तया) [तेषां] वेतनमात्रे अभिप्राय इति वाच्यम् । साङ्गफले सत्येव वेतनमिति फलाभिप्रायस्यापि वेतनोपरागेण सत्त्वात् । तस्मात् यथा ससंबन्धिकपित्रादिपदस्य [1]संबन्धिवाचकपदासमभिव्याहारे स्वपितृत्वादिना बोधकतानियमः, तथा कर्तृविशेषणकामना-विषयफलबोधकशब्दस्यापि [2]तादृशपदासमभिव्याहारे स्वीय-संबन्धेनैव फलबोधकता ।

अत एव स्वारसिकसंकल्पवाक्ये पित्रादिगतस्वर्गकाम-नाभिलापे स्वर्गादौ पित्रादिसंबन्धवत्, स्वगतस्वर्गादिकामनाभि-लापेषु पदान्तरेण स्वसंबन्धः न निर्दिश्यते । अपि तु, स्वर्ग-कामोऽहम् इत्याद्येव प्रयुज्यते । [3]एवं च स्वगत स्वर्गादि-कामनयेव मातापितृगतस्वर्गादिकामनयापि पुष्करिणीयागमहा-

---

1 संबन्धिवाचकपदेति — पितृत्वादिप्रतियोगिवाचक-चैत्रादि-पदेत्यर्थः ।

2 तादृशपदेति — संबन्धिवाचकपदेत्यर्थः ।

3 ननु पुष्करिणीयागादि विधायकवाक्यात् मातापित्रादिगतफल-साधनताया अबोधात्, कथं शिष्टानां तथाचारः इत्यत आह— एवं चेति ।

दानदुर्गापाठादेः शिष्टैर (पि) [वि] गानेनाचरणात् तत्र तद्गतत्वेन फलबोधकप्रत्यक्षश्रुतिविरहेऽपि स्वपरसाधारणस्वर्गकामः पुष्करिणीयागादिकं कुर्यात् इति विशिष्यैव श्रुतिः कल्प्यते इत्याहुः ।

---

## चिन्तामणिकारमतस्यैव समीचीनतानिरूपणम्

अत्रेदं विचार्यते । चिन्तामणिकारमतमेव सम्यक् । तथाहि शिष्टाचारानुरोधेन विशिष्य श्रुतिकल्पनामपेक्ष्य स्वर्गकाम इति प्रत्यक्षविधेरेव शिष्टाचारबलेन [1]सामान्यपरत्वावधारणेन औत्सर्गिक स्व (त्व) परताबाधो युक्तः । पितृभ्यः इत्यादौ च 'स्वपितृभ्यः सुतो दद्यात्' इत्यादिवाक्यान्तरैकवाक्यतया शिष्टाचारेण च संबन्धिशब्दत्वेन औत्सर्गिकस्वपितृपरत्वमेव युक्तम् । न चाभिप्रायशब्दस्येच्छार्थकत्वेऽपि अभिप्रेतार्थ-

---

1 सामान्यपरत्वेति — स्व-परसाधारण-स्वर्गत्वाद्यवच्छिन्नसाधनत्वतात्पर्यकत्वेत्यर्थः ।

कता नोपपद्यते इति [1]संबन्धपरतैव युक्तेति वाच्यम् । अभिप्रायशब्दस्य भावाद्यजन्ततया इच्छापरत्वेऽपि, कर्तुः अभिप्रायः अस्मिन्निति बहुव्रीहिणा [2]तद्विषयबोधकतासंभवात् ।

यद्वा क्रियाफले कर्त्रभिप्राये सतीति [3]व्यधिकरण (फलातोत्तरसप्तम्याः) [फलपदोत्तरसप्तम्याः] विषयत्वार्थकतया फल (सा) [स्या] भिप्रायविषयतालाभः । अथवा अभिप्रीयते असाविति कर्मव्युत्पत्त्या कर्त्रभिप्रेते क्रियाफले इत्यर्थलाभः ।

न च क्रियाफलस्य कर्त्रनभिप्रेतत्वे [4]कामनाविषयसाधनत्वाभावात् क्रियागोचरकृतेरेवानुपपत्त्या, यजन्ति याजकाः, पठन्ति पाठकाः, इत्यादिप्रत्युदाहरणासंगतिरिति वाच्यम् ।

---

1 संबन्धपरता — संबद्धपरता ।

2 तद्विषयेति — अभिप्रायविषयेत्यर्थः ।

3 व्यधिकरणेति— क्रियाफलशब्दार्थस्य कर्त्रभिप्रायपदार्थस्य च नाभेदान्वयः । क्रियाफलविषयके कर्त्रभिप्राये सतीति पर्यवसितार्थः ।

4 कामनेति — कर्तृसमवेतेत्यादिः ।

ऋत्विगादेः यजमानस्वर्गादिरूपयागादिजन्यफलकामनाविरहेऽपि परम्परया यागादिप्रयोज्यदक्षिणालाभादिरूपफलगोचरकामनासहकृतफलप्रयोजकताज्ञानात् यागादिकृत्युपपत्त्या तादृशप्रत्युदाहरणसंगतेः । न हि स्वर्गादिवत् दक्षिणादिगतस्वत्वं यागादिजन्यम् । तथा सति तादृशफलस्य कर्तृसंबद्धतया कर्त्रभिप्रायपदस्य कर्तृसंबद्धार्थकत्वेऽपि तादृशप्रत्युदाहरणासंगतेः । अत एव ऋत्विक्-सूपकारादेः फलभागित्वाभावात् न फलभागित्वघटितं कर्तृत्वम् इति टीकाकृतः ।

'कर्त्रभिप्राये' इत्यत्र च फलभागित्वाविशेषितं क्रियानुकूलकृतिमत्त्वमेव कर्तृत्वमभिमतम् । अतः पित्रादिस्वर्गकामस्यापि कर्तृतया, फलस्य तदभिप्रेतत्वेनात्मनेपदनिर्वाहः । [1]अन्यथा, कर्तुः क्रियाफल (संबन्धेनप्रत्येन) [संबन्धनैयत्येन] कर्तारं चेत् क्रियाफलमभिप्रैति संबध्नाति इति व्याख्यायाः नितरामसंगत्यापत्तेः । अत एव, दक्षिणाद्युपरागेणापि यज-

1 अन्यथा – कर्त्रभिप्राये इत्यत्र कर्तृपदेन फलभागित्वविशेषितस्य क्रियानुकूलकृतिमत्त्वरूपकर्तृत्वस्याभिमतत्वे ।

मानस्वर्गादेः ऋत्विजां काम्यत्वे, यजन्ते याजकाः इत्येव, स्वीयदक्षिणादिमात्रस्यैव तेषां काम्यत्वे तु यजन्ति याजकाः, इति [1]उभयमेव समर्थितं ग्रन्थकारैः ।

---

कर्त्रभिप्रायपदस्य कर्त्रिच्छाविषयार्थकत्वे स्थलविशेषेषु आत्मनेपदासाधुत्वशङ्का, कर्तृसंबद्धार्थकत्वेऽपि तद्दोषसंभवेन तुल्यमेव समाधानं पक्षद्वयेऽपि इति तत्परिहारश्च

अथ, 'न विमुञ्चन्ति सामर्थ्यं वाक्यार्थे (षु) [पि] पदानि नः । (यजत्वन्ति) [यज्ज्वलन्ति] हि काष्ठानि तत्किं पाकं न कुर्वते ॥ (भा वा. इति [2]अचेतनस्थले कर्त्रनभिप्रायेऽपि आत्मनेपदस्य भट्टाचार्यैः (अयुक्तत्वात्) [प्रयुक्तत्वात्] अयुक्तमिदम् । एवं 'कमलवनोद्घाटनं कुर्वते ये' । (वृक्षक्षे) '[वृक्षं] परिवारयते कण्टकाः ।' इत्याद्यचेतनस्थले आत्मनेपदानुपपत्तिरिति चेत् ।

---

1 उभयमेव — आत्मनेपदं परस्मैपदं चेत्युभयमेव ।

2 अचेतनस्थले— काष्ठादेः कर्तृत्वविवक्षास्थले । एवमग्रेऽपि ।

न, एतद्दोषस्य अभिप्रायशब्दस्य(सर्वधात्वर्थक)[संबन्धार्थक] तोपगन्तृमतेऽपि तुल्यत्वात् । यदि च, [1]तत्रात्मनेपदार्थाविवक्षणान्न दोषः । [2]अन्याभिप्रायाविवक्षायामेवात्मनेपदस्य साधुत्वात् । अत एवोक्तम् "कर्त्रभिप्राये इति किम्, अन्याभिप्राये मा भूत्" इति । अत एव, [3]'भल्लीनामिव पानकर्म

---

1 तत्रात्मनेपदार्थाविवक्षणादिति — तत्र सूत्रे कर्त्रभिप्रेतफलमात्मनेपदार्थः इति न विवक्षितमित्यर्थः ।

2 अन्याभिप्रायेति — प्रकृतक्रियाकर्तृभिन्नस्याभिप्रायेत्यर्थः ।

3 भल्लीनामिवेति —

'आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
संप्रत्येव निषेकमश्रुपयसां देवस्य चेतोभुवः
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥

इति संपूर्णः श्लोकः । शस्त्रं पङ्केन लिप्त्वा अग्नौ सन्ताप्य पयसि निक्षिप्यते इति पानकर्मणः स्वरूपम् । कामिनीदृशः कामशस्त्रत्वेनाध्यवसानात् उत्प्रेक्षते । कुरङ्गेक्षणा कामं-अतिशयेन आदौ अञ्जनलिप्तवपुषां-पूर्वं दत्तकज्जलानां, ततः—अनन्तरं श्वासानिलैः उल्लासितः-सन्धुक्षितः अत एव प्रोत्सर्पत्-प्रसरणशीलः यः विरहानलः, तेन सन्तापितानां च दृशां संप्रति-इदानीमेव अश्रुपयसां निषेकं चेतोभुवः देवस्य-कामस्य भल्लीनां-बाणविशेषाणामिव पानकर्म कुरुते इति श्लोकार्थः । अत्र दृशाम् इति बहुवचनं, कुरुते इत्यात्मनेपदं च निरर्थकम् इति दोषोऽभिहितः काव्यप्रकाशे । पानकर्मकरणफलस्य कुरङ्गेक्षणारूपकर्त्रसंबन्धात् निरर्थकत्वमेवात्मनेपदस्य, नासाधुत्वम्, पराभिमतसंबन्धविवक्षायामेवासाधुत्वम् न कर्त्रभिप्रेतत्वाभावमात्रे इत्याशयः अवगम्यते इति समुदायार्थः ।

कुरुते कामं कुरङ्गेक्षणा' इत्यत्रात्मनेपदमनर्थकम् इत्येव काव्यप्रकाशकृता उक्तं, न त्वसाध्विति, [इति] विभाव्यते। तथापि न क्षतिः, अभिप्रायशब्दस्येच्छाविषयपरत्वेऽप्येतत्समाधानस्य तुल्यत्वात्।

---

### अभिप्रायशब्दस्य इच्छाविषयपरतैव युक्ता

युज्यते चाभिप्रायशब्दस्येच्छाविषयपरत्वमेव। अन्यथा, 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्या[1]त्मनेपदश्रवणात् पितुर्दशरथस्यान्धकमुनिपुत्र (श्रवण) वधजनितपापक्षयकामनया रामस्याश्वमेधानुष्ठानानुपपत्तेः। न च स्वीयरावणवधजन्यपापक्षयकामनयैव तदनुष्ठानम्, अन्धकपुत्रस्य

---

1 आत्मनेपदश्रवणादिति — यदि क्रियाफलस्य कर्तृनिष्ठत्वे आत्मनेपदसाधुता, तदा कर्तृगामिब्रह्महत्यापापक्षयरूपफलजनकाश्वमेधक्रियाया एव विधानमिति सिद्ध्यति। तथाच दशरथगत पापक्षयरूपफलकत्वस्य रामकर्तृकाश्वमेधे शास्त्रबोध्यत्वाभावात् रामस्य तादृशानुष्ठानस्यावैधत्वापत्तिरिति संपिण्डितार्थः।

[1]शूद्रत्वेन तद्वधजन्यपापक्षयार्थं ब्रह्मवधप्रायश्चित्तानुष्ठानानुपपत्तेरिति वाच्यम् । रावणवधजन्यपापक्षयार्थं रामेश्वरशिवस्थापनस्य पुराणादौ प्रसिद्धतया ब्रह्मवधप्रायश्चित्तस्य मुनिवधपापक्षयकारकतया तदनुष्ठानोपपत्तेरिति संक्षेपः ॥

---

कर्तृगामिफलमेवात्मनेपदार्थ इति नव्यमतनिरूपणम्

नव्यास्तु कर्तृगामि फलमेवात्मनेपदार्थो लाघवात् । [यजेत] इत्यादावात्मनेपदस्य फलमात्रार्थकतयैव यागजन्य [फलगत] [फलाश्रय] कर्त्रै[2]कवाक्यार्थमर्यादया फलस्य कर्तृगामित्वलाभाच्च । कर्त्रभिप्रेतफले शक्तौ च गौरवम् । आत्मनेपदार्थाविवक्षयैव च यजते याजकः इत्यादि प्रयोगः [3]इति ।

---

1 शूद्रत्वेन — ब्राह्मणभिन्नत्वेन ।

2 एकवाक्यार्थमर्यादया — आकाङ्क्षाभास्यसंसर्गविषयतया ।



3 इति — इत्यनन्तरं वदन्ति इति पूरणीयम् ।

## उक्तमतस्यानौचित्यम्

(तत्र) [तन्न] यजन्तीत्यादि परस्मैपदार्थस्य पराभिप्रेतफलजनकत्वस्य धात्वर्थविशेषणत्वेनान्वयात्, आत्मनेपदार्थस्य कर्त्रभिप्रेतफलजनकत्वस्यापि [1]तथाऽन्वयौचित्यात् ।

---

## आत्मनेपदस्य कर्तरि शक्तिं स्वीकृत्य कर्तृगामिफललाभप्रतिपादनम्

अत्र वदन्ति—आत्मनेपदस्य कर्तरि, परस्मैपदस्य कर्तृभिन्ने [च] शक्तिः । तयोः यथायथं समवेतत्वसंबन्धेन आख्यातसामान्यार्थफलेऽन्वयः । फलस्य च धात्वर्थेऽन्वयः इति वाक्यान्वयमर्याद[2]यैव कर्तृगामितादिलाभः । न च काम्यत्वसंबन्धेनैव फले कर्तृ—तद्भिन्नयोरन्वयात् वाक्यार्थमर्यादयैव कर्त्रभिप्रेतत्वादेरपि लाभः संभवत्येवेति वाच्यम् ।

---

1 तथा — धात्वर्थविशेषणत्वेन ।

2 एवेन विशेषणतया [illegible] ।

इच्छाविषयत्वरूपकाम्यत्वस्य [1]समवायात्मकसमवेतत्वापेक्षया गुरुत्वेन तन्मते काम्यत्वसंबन्धेनान्वयबोधत्वादेः कार्यतावच्छेदकत्वेन गौरवात् । अस्मन्मते समवेतत्वसंबन्धेनैवान्वयबोधत्वादेः कार्यतावच्छेदकत्वेन लाघवात् । [2]अत एव [3]अखण्डार्थत्वेऽपि [कर्तृसमवेतफलजनकत्व]–कर्तृभिन्नसमवेतफलजनकत्वयोरेव यथायथमात्मनेपद – परस्मैपदयोः शक्तिरिति कृतं पल्लवेन ।

---

1 समवायात्मकेति— तत्तत्संबन्धावच्छिन्नाधेयतायाः तत्तत्संबन्धरूपत्वमिति भावः ।

2 अत एव — कर्त्रभिप्रेतफलजनकत्वान्वयबोधत्वापेक्षया कर्तृसमवेतफलजनकत्वान्वयबोधत्वस्य कार्यतावच्छेदकत्वे लाघवादेव ।

3 अखण्डार्थत्वेऽपीति — पूर्वं आत्मनेपदस्य कर्तरि फले च खण्डशक्तिः । व्युत्पत्तिवैचित्र्यात् एकपदार्थयोरप्यन्वयः । कर्त्रन्वितफलस्य धात्वर्थे अन्वयः उक्तः । खण्डशक्तिमनङ्गीकृत्य कर्त्रभिप्रेतफलजनकत्वे विशिष्टे अखण्डशक्तिस्वीकारपक्षेऽपि कर्त्रभिप्रेतफलजनकत्वे न शक्तिः । परन्तु लाघवात् कर्तृसमवेतफलजनकत्वे । एवं परस्मैपदेऽपि इति समुदायार्थः ।

## विधिविभागः

स चायं विधिः क्वचित् केवलकर्मविधायकत्वेन कर्ममात्रविधिः इत्युच्यते । यथा अग्निहोत्रं जुहोतीत्यादिः । क्वचित् गुणविधिः । यथा दध्ना जुहोतीत्यादिः । तत्र वाक्यान्तरप्राप्तहोमानुवादेन दध्यादिरूपगुणविधानात् । क्वचित् विशिष्टविधिः । यथा सोमेन यजेतेत्यादिः । तत्र यागस्य तदीयसोमद्रव्यस्य चाप्राप्तत्वेन सोमद्रव्यविशिष्टयागविधानात् । क्वचित् गुणद्वयविशिष्टविधिः । यथा उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोतीत्यादिः । तत्र उपसदिष्ट्यनन्तरत्वमासात्मककालरूपगुण द्वयविशिष्टस्य कर्मणो विधानात् ।

---

## उपसद्भिरित्यादिवाक्यविहितं यावज्जीवसाध्य-नित्याग्निहोत्राद्भिन्नं कर्म

अत्रेदं बोध्यम् । 'उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोति' इति श्रुतिबोधितं 'यावज्जीवमग्निहोत्रं जुहोति' इति श्रुतिबोधिताग्निहोत्रपदमुख्यार्थ—यावज्जीवसाध्याग्निहोत्रभिन्न—

मासैकसाध्याग्निहोत्रकर्मान्तरमेव । तत्र च [1]यागविशेषे लक्षणया प्रयुक्तः अग्निहोत्रशब्दः मुख्यार्थाग्निहोत्रधर्मप्राप्त्यर्थः । [2]अत एव तस्य गौणाग्निहोत्रत्वेन व्यपदेशः ॥

---

## उपसद्भिरित्यादिवाक्ये न कर्मान्तरविधानमित्याक्षेपः

ननु उपसद्भिरित्यादिवाक्येन यावज्जीवसाध्याग्निहोत्रे एव मासरूपकाल-उपसदा (रप्यस्यु) [ख्येष्ट्यु] त्तरत्वरूपगुणद्वयं विधीयते, न तु कर्मान्तरम् । तथाच तत्रापि अग्निहोत्रशब्दो मुख्य एव, न तु गौणः इति [3]नोक्तव्यपदेशसंगतिरिति चेन्न ।

---

1 यागविशेषे — मासैकसाध्ये कर्मान्तरे ।

2 अत एव — मुख्याग्निहोत्रधर्मवत्त्वेन तत्सदृशत्वादेव ।

3 उक्तव्यपदेशेति — गौणाग्निहोत्रव्यपदेशेत्यर्थः ।

वाक्यभेदपरिहाराय कर्मान्तरविधानमिति परिहारः

नित्याग्निहोत्रानुवादेन गुणद्वयविधाने विधेयभेदेन वाक्यभेदप्रसङ्गात् तादृशवाक्यस्य गुणद्वयविशिष्टकर्मान्तरविधायकत्वोपगमात् । तथाचोक्तम्—

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥" (भ. वा.)इति ।

---

विशिष्टविधानेऽपि वाक्यभेदो दुष्परिहरः इति पूर्वपक्षः

ननु, विशिष्टविधानेऽपि गुणद्वयविधानमस्त्येव । कर्मान्तर (साव) [स्या] धिकं विधानमिति, [1]तत्पक्षेऽपि विधेयभेदेन वाक्यभेदस्य दुष्परिहरता । न च विशिष्टस्यैक्यात् विधेयस्यैक्यम् । विशिष्टस्य विशेषणविशेष्याभ्यामनतिरेकेणैक्यासंभवात् ।

---

1 तत्पक्षेऽपि – विशिष्टविधानपक्षेऽपि ।

## विषयताविशेषरूपविधानभेदे एव वाक्यभेदः, न विधेयभेदे इत्यत्रान्तरशङ्का, तन्निरासश्च

अथ, विधेयभेदेन न वाक्यभेदः, अपि तु विधान-भेदेन । विशिष्टान्तर्गतत्वभाने (के) [[1]ते] षामप्येकमेव [विधानम् । ] विधानं च न ज्ञानम्, प्राप्तेऽपि कर्मणि नाना-गुणानामेकज्ञानसंभवेन वाक्यभेदासंभवात् । अपि तु, विधेयताख्यो विषयताविशेषः । नानाविशेषणकविशेष्यघटिते विशिष्टे एकैव विषयतेति चेत् ।

न, विशिष्टान्तर्गतविशेषणानां विशेषणत्वेन नानाधर्मा-वच्छिन्ना मिथो विलक्षणविषयता । विशे (ष) [ष्य] स्य च [2]विशेष्यविधया अन्यादृशी विषयता । तासां च विषयताना-मैक्यासंभवेन विधानैक्यकथनस्यायुक्तत्वात् । अन्यथा, प्राप्तकर्मानुवादेन गुणद्वयविधानेऽपि गुणद्वयरूपविधेयविशिष्टानु-वाद्यकर्मणोऽपि विषयतैक्यमुपगम्य वाक्यभेदपरिहारसंभवात् ।

---

1 तेषामपि — विधेयानामपि ।

2 विशेष्यविधया — विशेष्यतया ।

## उक्तपूर्वपक्षस्य निराकरणम्

मैवम् । विधेयविशेषणतानापन्नविधेयविषयताया अभेदो वाक्यैक्यप्रयोजकः इति अनेकगुणविशिष्टस्य विधाने गुणानां विषयताभेदेऽपि नानागुणविशिष्टकर्मणः [1]विधेयस्य विषयतैक्यात् वाक्यैक्यम् । विषयस्य ऐक्येऽपि उद्देश्यभेदेन विधेयविषयताभेदात् उद्देश्यभेदस्थले न विधेयैक्ये नैकवाक्यता । 'अर्थैकत्वादेकं वाक्यम्' (पू. सू. 2-1-46) इति जैमिनिसूत्रमपि न येषां पदानामेकवाक्यता तत्तत्पदार्थाभेदपरम् । तत्तत्पदार्थानां मिथो भेदात् । नापि तत्तपदार्थविषयतानामभेदपरम् । सर्वत्रैव वाक्यार्थप्र [विष्ट] विशेषणविशेष्य–संसर्गविषयत्वानां प्रकारता-विशेष्यता-संसर्गतारूपाणां विलक्षणतया भेदस्यावश्यकत्वादेकवाक्यविलयप्रसङ्गात् ।

किन्तु, तावत्पदार्थविषयतानां साक्षात् परम्परया वा अवच्छेद्यावच्छेदकभावपरमेव । अवच्छेद्यावच्छेदकभावापन्न-

---

1 विधेयस्येति — तस्य विधेयविशेषणतानापन्नत्वात् तद्विषयताया ऐक्यं वाक्यैक्ये प्रयोजकमिति भावः ।

विषयताकूटस्य एकविषयतातुल्यत्वात् । अतः [1]विश्रृङ्खलविषयता एव वाक्यभेदव्यवहारमादधति । एवं च नानागुणविशिष्टस्य कर्मणो विधेयत्वे, नानागुणानां विधेयकर्मणि युगपत् विशेषणतया विधेयविषयतैक्यात् [2]तद्द्वारा नानागुणविषयतानां अवच्छेद्यावच्छेदकभावात्, कर्मतद्गुणविषयतयोश्च साक्षादेवावच्छेद्यावच्छेदकभावापन्नतया वाक्यार्थान्तर्गतवस्तूनां न विश्रृङ्खलविषयतेति न वाक्यभेदः ।

न चैवं प्राप्ते कर्मणि अनेकगुणविधानेऽपि कर्मणः एकविषयतायाः विधेयतया भासमानगुणद्वयविषयतया अवच्छेद्यावच्छेदकभावेनैकवाक्यतोपपद्यते इति वाच्यम् । विधेयान्तराविशेषणतया भासमानविधेयविषयताभेदे उद्देश्यविषयता-

---

1 विश्रृङ्खलविषयताः — अवच्छेद्यावच्छेदकभावा नापन्नविषयताः ।

2 तद्द्वारेति–स्वनिरूपक—विधेयविषयतानिरूपितत्वस्य विशेषणान्तरविषयतायां सत्त्वेन, तादृशविधेयविषयताद्वारा विधेयविशेषणविषयतयोरवच्छेद्यावच्छेदकभावो बोध्यः ।

भेदस्यावश्यकतया, तादृशविधेयविषयतयोः परम्परया अवच्छे-[1]द्यावच्छेदकभावविरहात् ।

अत एव, (आरब्धा) [आख्या] तद्द्वयघटितं नैकं वाक्यम् । आख्यातार्थस्य विधेयान्तराविशेषणतया विधेयत्व-नियमेन तद्विषयतानिरूपितोद्देश्यविषयताभेदस्यावश्यकत्वात् । एवं च चैत्रः खड्गी कुण्डली इत्यादावुभयविधेयके, नैक-वाक्यता स्वीक्रियते । स्वीक्रियते तु, खड्गी, कुण्डली चैत्रो दण्डी इत्यादावेकविधेयक एवेति दिक् । अधिकमुक्तं प्राक् ।

---

## विकल्पविधिप्रस्तावः

क्वचित् विकल्पविधिः । यथा व्रीहिभिर्यजेत, यवैर्य-जेतेत्यादिः । स च प्रसङ्गात् मङ्गलवादे संक्षेपेणोक्तोऽप्यधि-कोक्तये पुनः प्रस्तूयते ।

---

1 अवच्छेद्यावच्छेदकभावविरहादिति — तादृशैकविधेयविषयता-निरूपिका या उद्देश्यविषयता तन्निरूपितत्वस्य तादृशविधेया-न्तरविषयतायामभावेन उद्देश्यविषयताद्वारा तयोर्विषयतयोर-वच्छेद्यावच्छेदक भावो न संभवतीत्यर्थः ।

## विकल्पविधिलक्षणम्

तत्र मिथो विरुद्धयोर्विधानं विकल्पविधिः । यथा व्रीहियवयोः द्रव्ययोरेकत्र यागे अकरणतया विरुद्धयोः यागकरणतया विधानम् । नचैवमश्वमेध—वाजपेयादीनां [1]स्वर्गादिरूपैकफले अकरणतया विरोधे, फलसाधनतया तद्विधानं वैकल्पिकं स्यादिति वाच्यम् । परस्पराभावसाहित्येन विधानस्य विवक्षितत्वात् । अश्वमेधादेः वाजपेयाभावसाहित्यं पुरस्कृत्य स्वर्गादिरूपफले कारणत्वेनाविधानात् । व्रीहि—यवविधौ च परस्पराभावसाहित्यं प्रतीयते । प्रथमतः प्रवृत्तविधिवाक्यात् व्रीहिरूपद्रव्यसंबन्धपुरस्कारेण यागलाभात् द्रव्याकाङ्क्षानुदयेन तत्र यागे यवरूपद्रव्यान्वयासंभवात् । व्रीह्यभावे कथं [2]यागः इत्याकाङ्क्षयैव यवविधेरुत्पादस्य स्वीकरणीयतया, वाकारव्यतिरेकेण तादृशाकाङ्क्षाविषयबोधासंभवात् आकाङ्क्षाया (अपि) [अनि] वृत्तेः, तन्निवृत्तये यवविधौ वाकार-

---

1 एकफले अकरणतयेति — अश्वमेधजन्यस्य वाजपेयजन्यस्य च स्वर्गस्य भिन्नजातीयत्वादिति भावः ।

2 याग इति — कर्तव्यः इति शेषः ।

कल्पनेन समभिव्याहृतव्रीह्यभावसाहित्यबोधकवाक्यबलात् तदभावसहितयवस्य करणत्वप्रतीतेरवश्यमुपगन्तव्यत्वात् । अत एव उभयकरणकात् यागात् फलानुत्पत्त्या विकल्पेषु उभयोरशास्त्रार्थताप्रवादः ।

---

व्रीह्यभावसहितयवादिद्रव्यान्तरस्य यागकरणत्वं न विकल्पशास्त्र विषयः इति पूर्वपक्षः

अथ, उक्ताकाङ्क्षायां व्रीह्यभावसहितद्रव्यान्तरस्य करणत्वं न विषयः । किन्तु व्रीहिसमवधानाभावकालीनयागे द्रव्यान्तरकरणकत्वमेवेति तत्रैव 'यवैर्यजेतेति वाक्यस्य तात्पर्यं कल्पनीयम् । न तु व्रीह्यभावस्य [1]करणसहकारित्वे । तत्र तात्पर्यकल्पकाभावात् ।

वाकारपूरणेनापि तदर्थस्यालाभः । [2]वाकारस्य यव-

---

1 करणसहकारित्वे — यागकरणयवस्य सहकारित्वे ।

2 वाकारस्येति — वाकारस्याभावोऽर्थः । व्रीहिभिः इति तृतीयान्तार्थस्य व्रीहिकरणकत्वस्याभावे, तस्य च यवैरिति तृतीयान्तार्थयवकरणकत्वान्वयिनि धात्वर्थे यागे अन्वयः । तावता व्रीह्यभावकरणकत्वं यागस्य न बोध्यते इत्यर्थः ।

करणकत्वान्वयिनि यागे व्रीहिकरणकत्वाभावमात्रबोधकत्वात् व्रीह्यभावस्य करणत्वाबोधकत्वात् । दधि भुङ्क्ते, पयो वा भुङ्क्ते इत्यादिलौकिकवाक्ये वाकाराव्यवहितपूर्वयादृशविभक्तिसहितपदेन [1]यत्र स्वार्थान्वयः प्रत्याय्यते, [2]तत्र पूर्ववाक्यस्थतादृशविभक्त्यन्तसमुदायार्थव्यवच्छेदबोधकताया वाकारे (प्यु) [व्यु] त्पन्नत्वात् । अत एव तत्र दधिकर्मकत्वाद्यभाव एव पयःकर्मकत्वान्वयिनि भोजने प्रतीयते, न तु दध्याद्यभावकर्मकत्वम् ।

एवं वैकल्पिककारणत्वस्थले यागे यवस्य व्रीह्यभावसहकृतस्य करणत्वलाभेऽपि उभयकरणकयागात् फलोत्प (त्तौ) [त्तौ] बाधकाभावः, फले व्रीह्यभावकरणकत्वस्य कथं चिदप्यलाभात् । एवं, यागे व्रीह्यभावस्य करणत्वमपि बाधि-

---

1 यत्र — धात्वर्थभोजने । स्वार्थान्वयः– द्वितीयान्तपयःपदार्थस्य पयःकर्मकत्वस्यान्वयः ।

2 तत्र — धात्वर्थभोजने । समुदायार्थ व्यवच्छेदेति–द्वितीयान्तदधिपदार्थस्य दधिकर्मकत्वस्य यः व्यवच्छेदः–अभावः तद्बोधकतेत्यर्थः ।

तम्, यागसामान्यस्य तद्व्यभिचारित्वात्, [1]यागविशेषे च तस्यान्यथासिद्धत्वम् । एवं, [2]इच्छारूपे यागे तदङ्गपुरोडाशनिर्वाहकव्रीह्यादेरपि न कारणत्वम्, इष्टसाधनताज्ञानादिघटितसामग्रीत एव तदुपपत्तेरिति, परस्पराभावसाहित्येन कारणत्वरूपविकल्पस्य व्रीहियवादावसंभव एव ।

---

### यागे व्रीहियवयोः न वैकल्पिकं कारणत्वं, किन्तु अपूर्वविशेषे व्रीहियवयागयोः इति अवान्तरमतोपन्यासः तन्निरासश्च

यत्तु, व्रीहियवयागयोः अपूर्वविशेषे कारणत्वमेव वैकल्पिकम्, न तु यागे व्रीहियवयोरिति नोक्तदोषः । अपूर्वे यागस्य, एककरणकयागजन्यापूर्वेऽ (यव) [पर] करणकयागाभावस्य च कारणताया अव्याहतत्वात् । [3]विकल्पमुख चाकाङ्क्षा न व्रीह्यभावे कथं यागः इत्याकारिका । अपि तु व्रीह्यसंपत्त्या व्रीहियागाभावे सति कथं फलमित्याकारिकैवेति ।

---

1 यागविशेषे — यवकरणकयागे ।

2 इच्छारूपे — देवतोद्देश्यकद्रव्यत्यागात्मकेच्छाविशेषरूपे

3 विकल्पमुखी — विकल्पविधिप्रवृत्तिहेतुः ।

तदतीवाव्युत्पन्नविजृम्भितम् । प्रागुत्पन्नव्रीह्यादियागस्य फलजनने सहकारिणः अनाकाङ्क्षितत्वेन [1]तत्र विधितात्पर्यकल्पकाभावात् । व्रीहिभिर्यजेत इत्यादिश्रुतेश्च श्रुत्यन्तरप्राप्तयागानुवादेन द्रव्यविधायकतया वैकल्पिकयागविधित्वासंभवात् । तादृशश्रुतेः यागविधायकत्वे प्रधानविधित्वेन [2]परस्परसाकाङ्क्षताविरहात् विकल्पमुख्या आकाङ्क्षाया अयोगेन वाकारकल्पकाभावाच्च । अन्यथा, अश्वमेधवाजपेयादीनां विधिस्थलेऽपि वाकारकल्पनापत्तेः । न च तत्र प्रकरणभेदान्न साकाङ्क्षतेति तत्कल्पकाभाव इति वाच्यम् । तत्रैवा[3]त्रापि प्रधानयागभेदे (प्रकरणभेदे) प्रकरणभेदध्रौव्यात् ।

---

1 तत्र — यवकरणकयागाभावस्य सहकारित्वे ।

2 परस्परसाकाङ्क्षताविरहादिति — व्रीहिभिर्यजेत, यवैर्यजेत इतिश्रुत्योरित्यादिः ।

3 अत्रापि — व्रीहियवविधिस्थलेऽपि ।

## व्रीहिकरणकत्वाभावान्वयिनि यवकरणकत्वान्वयः, विध्यविषयत्वादुभयकरणकयागः न फलसाधनमिति अवान्तरमतान्तरोपन्यासः, तन्निरासश्च

यत्तु, [1]उक्तव्युत्पत्त्यनुरोधेन व्रीह्यकरणकत्वान्वयि यागे यवकरणकत्वान्वय एव स्वीकरणीयः। एवमपि व्रीहियवोभययागस्य तत्फलसाधनत्वं [न] प्रामाणिकम्, विध्यविषयत्वात्। [2]तादृशान्वयबोधश्चाकाङ्क्षितोऽपि। प्रथमविधेः यागत्वसामानाधिकरण्येन व्रीह्यन्वयपरतया, व्रीह्यकरणकयागस्यापि चेदिष्टसाधनत्वम्, तदा तादृशो यागः किंद्रव्यकरणकः इत्याकाङ्क्षायाः सुलभत्वात्। [3]परस्परकरणकत्वाद्यभावान्वयिनि यवकरणकत्वादि नानाकल्पविधिरेव वैकल्पिककारणता-

---

1 उक्तव्युत्पत्त्यनुरोधेन — वाकाराव्यवहितपूर्वं यादृशविभक्तिसहितपदेन यत्र स्वार्थान्वयः प्रत्याय्यते, तत्र पूर्ववाक्यस्थतादृशविभक्त्यन्तसमुदायार्थव्यवच्छेदबोधकत्वं वाकारस्येति व्युत्पत्त्यनुरोधेन।

2 तादृशान्वयबोधश्च — व्रीहिकरणकत्वाभाववति यागे यवकरणकत्वान्वयबोधश्च।

3 विकल्पविधिः इति शब्दार्थं योजयति — परस्परेत्यादिना।

विधिः । अश्वमेधादिविधिर्नैतादृशः, तत्र फले वाजपेयादि-(फल) करणकत्वाद्यभावबोधकाभावादिति ।

तदपि न । तथा सत्यपि व्रीहिभिर्यजेतेति विधि-जन्यबोधे [1]यवकरणकत्वाद्यभावाभानात्, यवैर्यजेतेत्यत्र यव-करणकत्वान्वयिनि व्रीहिकरणकत्वाभावभानेऽपि लाघवात् व्रीहि-करण कत्वाभावाघटित धर्मस्यैव स्वर्गादिकारणतावच्छेदकतायाः कल्पनात्, तद्रूपाक्रान्ततया उभयकरणकयागस्यापि फल-साधनताया दुर्वारत्वात् । न व्रीहिकरणकत्वाभावस्या-[2]काङ्क्षानुरोधात् यवविधिजन्यबोधविषयस्य कारणतावच्छे-दकत्वेऽपि किमपि प्रमाणमस्ति ।

---

1 यवकरणकत्वाद्यभावाभानादिति — उत्तरवाक्ये एव वाकारस्य व्यवच्छेदबोधकतायाः पूर्वोक्तव्युत्पत्तिसिद्धत्वादिति भावः ।

2 आकाङ्क्षानुरोधात् — व्रीह्यकरणकयागस्यापीष्टसाधनत्वे तादृशो यागः किंद्रव्यकरणकः इत्याकाङ्क्षानुरोधात् ।

## व्रीहिभिर्यजेतेत्यत्रापि यवकरणकत्वाभावबोधस्वीकर्तृमतान्तर-निरासः

[1]एतेन, दुग्धं पिबति, द्रव्यं वा इत्याद्य[2]प्रयोगात्, (वाक्य) [वाकार] घटितं यत्रोत्तरवाक्यं, तत्र पूर्ववाक्यस्यापि उत्तरवाक्यप्रतिपाद्य–द्रव्यकर्मकत्वादिव्यवच्छेदबोधकत्वमावश्यकम् । तद्बोधश्च लक्षणादिना कथंचिदुपपादनीयः । एवं च व्रीहिभिर्यजेतेत्यादौ यवकरणकत्वाभावबोधध्रौव्यम्, इत्यु-(क्त्वापि) [क्तावपि] न निस्तारः ।

एवं व्रीहियव[योः]यागं प्रति कारणता न प्रामाणिकी । इच्छारूपस्य यागस्येष्टसाधनताज्ञानादिघटितसामग्रीत एव निर्वाहात् ।

---

1 एतेन — व्रीहि–यवोभयकरणकयागस्यापि फलसाधनत्वापादनेन ।

2 अप्रयोगादिति — उत्तरवाक्यस्यैव व्यवच्छेदबोधकत्वे, दुग्धं पिबति द्रव्यं वा इति प्रयोगापत्तिः, जलादिकर्मकपाने दुग्धकर्मकत्वाभावस्याबाधितत्वात् । अतः वाकारस्थले पूर्ववाक्यस्यापि व्यवच्छेदबोधकत्वमावश्यकम् । तथाच दुग्धकर्मकपाने द्रव्यकर्मकत्वाभावस्य बाधान्न तादृशप्रयोग इति भावः ।

### उक्तमहापूर्वपक्षे सिद्धान्तकथनम्

अत्राहुः—व्रेदस्थले विशिष्टान्वयपरतासंभवे, तदपरित्यागात् व्रीहिकरणकत्वाभावस्य [1]विशेषणतयैव यवकरणकयागधर्मिकस्वर्गसाधनत्वभानेन तादृशाभावस्य स्वर्गादिफलप्रयोजकत्वसिद्धिः। एवं, [2]उक्तातिप्रसङ्गवारणाय [3]कल्पनीयव्युत्पत्त्या व्रीहिभिर्यजेतेत्यत्रापि यत्रकरणकत्वाभावविशिष्टव्रीहियागस्य स्वर्गादिसाधनत्वभानात् तस्यापि तादृशयागजन्यफलप्रयोजकतासिद्धिरिति नोभयकरणकयागात् फलम्। यदि च उत्तरवाक्ये वाकारार्थव्यवच्छेदस्यान्वयितावच्छेदकद्रव्यपानत्वाद्यवच्छेदेनान्वयोपगमेन, [4]तद्रूपवति दुग्धपाने दुग्धकर्म-

---

1 विशेषणतयैवेति — व्रीहिकरणकत्वाभावविशिष्ट-यवकरणकयागे फलसाधनत्वस्य बोधे विशेष्ययागान्वयिसाधनत्वे व्रीहिकरणकत्वाभावस्य धर्मिपारतन्त्र्येण अवच्छिन्नत्वसंबन्धेन विशेषणत्वात् कारणतावच्छेदकत्वरूपं फलप्रयोजकत्वं सिद्ध्यति।

2 उक्तातिप्रसङ्गवारणाय—दुग्धं पिबति, द्रव्यं वा इति प्रयोगातिप्रसङ्गवारणाय।

3 कल्पनीयव्युत्पत्त्या — पूर्ववाक्यस्यापि व्यवच्छेदबोधकत्वव्युत्पत्त्या।

4 तद्रूपवति — अन्वयितावच्छेदकद्रव्यपानत्ववति।

कत्वव्यवच्छेदबोधेनातिप्रसङ्गो वार्यते। तदापि न क्षतिः। प्रकृतेऽपि फलसाधने यवकरणकयागत्वादिरूपान्वयितावच्छेदकावच्छेदेन व्रीहिकरणकत्वव्यवच्छेदबोधेन उभयकरणकयागे निष्फलत्वोपपत्तेः।

व्रीहिकरणक-फलजनकयागे यवकरणकत्वव्यवच्छेदस्य [1]अर्थलभ्यत्वेऽपि व्रीहिभिर्यजेतेत्यस्य [2]तत्परत्वमव्याहतमेवेति, विधेययोः परस्परान्वयिनि परस्परसंबन्धव्यवच्छेदविधानरूपवैकल्पिकं विधानं तत्र निर्वहति।

यागस्य व्रीह्यादिकरणत्वं च वीह्याद्यवयवारभ्यपुरोडाशविषयकत्वरूपमेव तृतीयार्थः। अतः इच्छारूपयागे व्रीह्यादेः अनन्यथासिद्ध नियतपूर्ववर्तितारूपकारणताविरहेऽपि नानुपपत्तिः। व्रीह्यकरणक-यवकरणकयागत्वाद्यवच्छिन्नस्य फलनिष्ठावान्तरवै-

---

1 अर्थलभ्यत्वेऽपीति—उत्तरवाक्यादेव वाकारेण अन्वयितावच्छेदकावच्छेदेन व्यवच्छेदविषयकशाब्दबोधजननादिति भावः।

2 तत्परत्वमिति — अर्थलभ्येऽपि वाक्यतात्पर्यमस्त्येव। अत एव आनुमानिक वह्निधीपरस्य इह धूमः इति वाक्यस्य वह्निपरत्वं व्यवहरन्त्यभियुक्ताः।

जात्यं जन्यतावच्छेदकमिति फलस्य [1]तद्रूपावच्छिन्नव्यभिचारेऽपि [2]न क्षतिः । व्रीह्यकरणक [त्व] यवकरणकत्वादिरूपकारणतावच्छेदकयोः परस्परविशेष्यविशेषणभावे विनिगमनाविरहेऽपि न क्षतिः, [अ] गत्या कार्यकारणभावाधिक्यस्यादोषत्वात् ॥

---

यवकरणकयागस्य फलजनकतायां व्रीह्यादिकरणकत्वाभावो न प्रयोजकः इति केषांचित् मतनिरूपणम्

केचित्तु, व्रीह्यकरणकत्वादिकमनिवेश्य, यवकरणकयागत्वादिनैव विजातीयफलजनकता । उभयकरणकयागादपूर्वानुत्पत्त्यनुरोधेन च साधारणरूपावच्छिन्नमपूर्वं प्रति उभयकरणकयागत्वेन प्रतिबन्धकता वाच्या । उभयकरणकयागानन्तरं प्रत्येककरणकयागकर्तरि नापूर्वानुपपत्तिः, पूर्वमुभयकरणक [याग] नाशात् । (यागात्) यवादिमात्रकरणक-

---

1 तद्रूपावच्छिन्नव्यभिचारेऽपि — यवाकरणकव्रीहिकरणकयागात् व्रीह्यकरणकयवकरणकयागत्वावच्छिन्नं विना उत्पत्तावपि ।



2 न क्षतिः — न फलसाधनताबाधः ।

यागेनापूर्वं जननीये, (तादृशयागस्य व्रीहिकरणकत्वाद्यभावादुभयकरणकत्वविशिष्टयागाभावस्य निर्धार इति तज्जन्यफले) यागनिष्ठव्रीह्यादिकरणकत्वाद्यभावस्याप्रयोजकत्वमव्याहतमेवेति, न [1]विशिष्टयागस्य प्रयोजकत्वबोधः इत्याहुः ।

---

साधारणरूपावच्छिन्नफलप्रतिबन्धकतायां विनिगमनाविरहः

उपधायकतासंबन्धेन यवादियागजन्यतासंबन्धेन व्रीह्यादेः, व्रीह्यादिजन्यतासंबन्धेन व्रीह्यादेः व्रीह्यादिजन्यत्वस्यैव वा साधारणरूपावच्छिन्नफले उभयत्वावच्छिन्नस्य वा प्रतिबन्धकत्वमित्य[त्र विनिगमनाविरहः ।]

---

भावयोर्विकल्पे वाकारापेक्षा, न भावाभावयोर्विकल्पे

भावयोर्विकल्पेपर स्परव्यवच्छेदबोधकवाकारापेक्षा । न तु अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति इत्यादौ ग्रहणाग्रहणादिविकल्पे । तत्र वाकारं [2]विनैव परस्पर-

1 विशिष्टयागस्य — व्रीहिकरणकत्वाद्यभावविशिष्टयागस्य ।
2 विनैवेति — नञा प्रतीतेरिति भावः ।

व्यवच्छेदरूपयोः ग्रहणाग्रहणयोः प्रतीतेः । न च षोडशिग्रहणे प्रवृत्त्यनुरोधेन तदङ्गकातिरात्रजन्यसातिशयफल [कल्पनात्] तज्जनकविजातीयापूर्वे षोडशिग्रहणस्य अनन्यथासिद्धत्वेन हेतुत्वेऽपि, तादृशातिशयरहितफलस्य षोडशिग्रहणानङ्गकयागादतिशयप्रयोजकाभावसहितादर्थत एवोपपत्तेः तज्जनकत्वविध्यर्थबाध इति वाच्यम् । तद्बोधानुरोधेनातिशयशून्यफलनिष्ठवैजात्यस्यापि कल्पनीयत्वादिति ।

---

### विकल्पानुकल्पयोर्भेदः

अनुकल्पस्थले, प्रथमकल्पासामर्थ्यं सहकारि, न तु प्रथमकल्पस्याभावः । कुशाद्युपादानसंभवे काशादिमात्रमुपादायानुष्ठितकर्मणो निष्फलत्वात् । प्रथमकल्पे च नान्य व्यवच्छेदापेक्षेति विकल्पा [नुकल्प] योर्भेद इति । -

---

### तत्र मतान्तरं तन्निराकरणं च

यत्तु, विकल्पस्थले परस्परोत्कर्षापकर्षभावानाश्रयफलजनकत्वमभ्युपगम्यते । प्रथमकल्पानुकल्पस्थले परस्प-

रोत्कर्षापकर्षभावाश्रयफलजनकत्वमभ्युपगम्यते इति विकल्पानुकल्पयोर्भेदः इति नव्यतरैरुक्तम् ।

तदसत् । प्रथमकल्पानुकल्पस्थले सोमेन यजेत, सोमाभावे पूतिकयाऽभिषिणुयात् इत्यादौ परस्परोत्कर्षापकर्षभावाश्रयफलजनकत्वस्य सर्वमीमांसकैरनभ्युपगमादिति दिक् । अधिकं विधिनिरूपणमाकरादावनुसन्धेयम् ।

इति विधिनिरूपणम्

---

## अर्थवादप्रस्तावः

सिद्धार्थबोधकः शब्दः अर्थवादः । स च 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिः स्तुत्यर्थवादः । 'सोऽरोदीत्' इत्यादिः (ति अ) [निन्दा] र्थवादादिरूपः ।

### पदानां कार्यान्विते शक्ततया कार्यतावाचकलिङादिपदाभावे सिद्धार्थकवाक्यानां शाब्दप्रमाजनकत्वं नेति मीमांसकमतनिरूपणम्

अत्र मीमांसकाः- पदमात्रस्य कार्यान्विते एव शक्ततया अर्थवादानां प्रामाण्यासंभवः, तत्र कार्यतावाचकपदाभावात् ।

तथाहि-लोके घटमानयेति वाक्यश्रवणानन्तरं कस्यचित् [1]घटे प्रवृत्तिमुपलभमानो बालः, प्रवृत्तेः कार्यताज्ञानजन्यत्व-नियमेन तज्ज्ञानजन्यत्वं गृहीत्वा, उपस्थितपदानां कार्य-त्वान्वितज्ञानजनकत्वं प्रथमं गृह्णाति । तदनन्तरमपरस्य (पाठादौ) [पटादौ] प्रवृत्तेरदर्शनात् आवापोद्वापेन कार्य-तान्वितं यदानयनं, तदन्वितं यत् कर्मत्वं, तदन्वितघट-ज्ञानजनकत्वं घटपदे गृह्णाति । एवं तादृशकर्मत्व [ज्ञान] जनकत्वमम्पदस्येत्येवं क्रमेण शक्तिग्रहः इति, [2]तद्रक्षार्थं शाब्दसामान्यं प्रति कार्यतावाचकपदज्ञानस्य हेतुत्वं स्वी-करणीयम् । अत एव कृतिसाध्यत्वशक्तिकलिङ्पदघटित-घटमानयेत्यादिवाक्यानामेव शाब्दबोधजनकत्वं प्रामाण्यं च । न घटोऽस्तीत्यादिवाक्यानाम्, तेषां कार्यतावाचकपदाघटि-तत्वात् ।

---

1 घटे — घटानयने । एवमग्रेऽपि ।

2 तद्रक्षार्थम् — व्यवहारेण जातस्य पदानां कार्यतान्वितस्वार्थे शक्तिग्रहस्य रक्षार्थम् ।

## घटमानय घटोऽस्ति इति वाक्यात् समूहालम्बनबोधापत्तिरित्याक्षेपः

ननु कार्यतावाचकपदज्ञानस्य कार्यतावच्छेदकं यदि शाब्दत्वम्, तदा घटमानय, घटोऽस्ति इति वाक्यात् समूहालम्बनतादृशबोधापत्तिः । यदि कार्यतान्वितशाब्दत्वम्, तदा [1]व्यर्थविशेषणत्वापत्त्या व्याप्तिविरहेण तद्धर्मावच्छिन्ननिरूपितकारणत्वासंभवात् तादृशवाक्यात् समूहालम्बनशाब्दबोधापत्तिरिति चेन्न ।

## उक्ताक्षेपप्रतिक्षेपः

कार्यतान्वितानयनान्वितकर्मत्वान्वितघटविषयताशालिशाब्दत्वावच्छिन्नं प्रति घटमानयेति समभिव्याहारज्ञानमपि हेतुः । एवं क्रमेण विधिसमभिव्याहारज्ञानस्य हेतुत्वे, घटोऽस्तीति वाक्यस्य तादृशशाब्दबोधं प्रति हेतुत्वाकल्पनेन

1 व्यर्थविशेषणत्वापत्त्येति—कार्यतान्वितविषयकशाब्दत्वावच्छिन्नं प्रति कार्यतावाचिपदज्ञानस्य कारणत्वं न संभवति, कारणस्य कार्यं व्यापकत्वात् कार्यतावच्छेदकावच्छिन्ने कारणव्याप्यत्वमावश्यकम् । प्रकृते नीलधूमत्वस्येव व्यर्थविशेषणघटितत्वात् कार्यतान्वितशाब्दत्वस्य न व्याप्यतावच्छेदकत्वं कार्यत्वाविषयकशाब्दस्याभावात् कार्यताविषयकत्वस्याव्यावर्तकत्वात् इति भावः ।

पादकाभावः । [1]भवन्मते घटोऽस्तीत्यादिवाक्यस्य केवलघटमित्यादिपदज्ञानस्य च तत्तच्छाब्दबोधत्वावच्छिन्नं प्रति कार्यकारणभावान्तरकल्पने गौरवम् । घटमानयेत्यादिस्थलीयकार्यकारणभावकल्पनमुभयसिद्धमेव । घटोऽस्तीति वाक्यानां लक्षणया कार्यत्वान्विततत्तच्छाब्दबोधहेतुत्वाभ्युपगमे तु, तत्स्थलीयकार्यकारणभावकल्पनमुभयमते समानम् । लक्षणाज्ञानशून्यकाले तत्तत्पदजन्योपस्थितिकालीनासंसर्गाग्रहवशात् विशिष्टव्यवहारः ।

वस्तुतस्तु, तादृशलक्षणायां मानाभावः । न च लक्षणामात्रोच्छेदापत्तिरिति वाच्यम् । घटमानयेत्यादिवाक्यानां कार्यत्वान्वितानयनान्वितकर्मत्वान्वितपटविषयकशाब्दनिर्वाहाय लक्षणास्वीकारात् । न च बालकेन यदि कार्यतान्वितघटशाब्दं प्रति घटमानयेति वाक्यस्य हेतुता गृहीता, तदा

---

1 भवन्मते — कार्यत्वानन्विते केवलघटादौ घटादिपदशक्तिवादिन्यायमते ।

 

[1]फलानुरोधात् घटोऽस्तीति वाक्यस्य यदा कदाचित् कारणत्वग्रहेऽपि पूर्वकल्पनाया अविरोधात् कथं सिद्धार्थकवाक्यस्य (व) [न] शाब्दहेतुत्वमिति वाच्यम् । यत्र यदा कार्यत्वान्वितघटशाब्दं प्रति हेतुता बालकेन गृहीता, तदैव तांन्निर्वाहाय शाब्दत्वावच्छिन्नं प्रति विषयामिश्रितकार्यत्वो (पपादक) [पस्थापक] पदज्ञानस्यापि हेतुत्वं गृहीतम् । पश्चात् [2]अतिप्रसङ्गवारणाय विधिसमभिव्याहृतवाक्यस्य तत्तदर्थविषयकशाब्दबोधं प्रति हेतुत्वकल्पने पूर्वगृहीत[3]सामान्यकारणतया विरोधेन तद्विरोधिसिद्धार्थकवाक्यस्य हेतुत्वं न स्वीक्रियते । न च कार्यत्वोपस्थापकपदज्ञानस्य हेतुत्वकल्पने (कार्याभावः) [4][कार्यभावः] अस्तीति वाक्यादपि शाब्दबोधापत्तिरिति वाच्यम् । कार्यपदभिन्नकार्यत्वोपस्थापक-

---

1 फलानुरोधात् — घटोऽस्तीति वाक्याधीनशाब्दबोधानुरोधात् ।

2 अतिप्रसङ्गेति — घटमानयेत्यादितः कार्यतान्वितानयनान्वितकर्मत्वान्वितपटबोधप्रसङ्गेत्यर्थः ।

3 सामान्यकारणतया — शाब्दत्वावच्छिन्नं प्रति कार्यत्वोपस्थापकपदज्ञानस्य कारणतया ।

4 कार्यभाव इति — कार्यस्य भाव कार्यता इति ततो बोधादिति भावः ।

पदज्ञानत्वेन हेतुत्वकल्पनात् । किंच, [1]विशेषसामग्रीविरहेण तत्र शाब्दबोधापत्त्यभावः । [वस्तुत] स्तु घटः कृतिसाध्यः इत्यादिवत् अत्रापीष्टापत्तिः । न च (तदा) [तथा] सामान्य-कारणतायां मानाभावः इति वाच्यम् । [2]यद्विशेषयोरिति न्यायात् तादृशकारणत्वकल्पनात् ।

---

### कार्यान्विते शक्तौ, कार्यान्वितत्वस्यापि शाब्दबोधे भानापत्ति-रित्याक्षेपः, आनुभाविक–स्मारकशक्तिद्वयं स्वीकृत्य संप्रदायमतेन तत्परिहारश्च

अथ, यदि कार्यत्वान्वित[3]घटज्ञाने शक्तिः, तदा तादृश-शक्तिज्ञानात् घटः इति स्मरणानुपपत्त्या शाब्दबोधे कार्यत्वा-न्वित [त्व] स्य प्रकारतापत्तिरिति चेत् ।

---

1 विशेषसामग्री — तत्तदर्थविषयकशाब्दहेतुभूत-तत्तद्वाक्यरूप-कारणघटिता सामग्री ।

2 यद्विशेषयोरिति — यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरपीति न्यायः ।

3 घटज्ञाने शक्तिः — घटज्ञानानुकूला शक्तिः-सामर्थ्यम् ।

मैवम् । द्विविधा हि पदशक्तिः, आनुभाविकी स्मारिका च । कार्यत्वान्वितघटविषयकशाब्दबोधनिरूपिता पदनिष्ठा शक्तिरानुभाविकी । घटत्वनिरूपिता पदनिष्ठा शक्तिः स्मारिका । आनुभाविकी तु [1]स्वरूपसती अपेक्षिता । स्मारिकायास्तु ज्ञानम् । तथा च तादृशस्मारकशक्तिज्ञानादेव घटः इति स्मरणोपपत्तिरिति संप्रदायः ।

---

## जातौ स्मारकशक्तेरभावेऽपि घटादिपदात् घटत्वस्मृतिशाब्दयोरुपपत्तिवर्णनम्

वस्तुतस्तु, कार्यतान्वितघटविषयकशाब्दनिरूपितायाः पदनिष्ठायाः आनुभाविकशक्तेरेव घटत्वीयत्वेन ज्ञानं कारणम्। तथा च यत्संबन्धित्वेन ज्ञानं [2]तस्यैव स्मरणात्, प्रकृते [3]घटत्व-

---

1 स्वरूपसतीति — न तस्या ज्ञानमपेक्षितमिति भावः ।

2 तस्यैवेति — एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति रीत्यैव स्मरणोत्पत्तेरिति भावः ।

3 घटत्वसंबन्धितादृशज्ञानात् — घटत्वसंबन्धित्वेन कार्यतान्वितघटशाब्दबोधनिरूपितायाः आनुभाविकपदशक्तेः ज्ञानात् ।

संबन्धितादृशज्ञानात् घटत्वस्मृत्या [1]घटस्मृतिर्लभ्यते इति जातिनिरूपितस्मारकशक्तेः कल्पने मानाभावात् न शक्तिद्वयमिति सारम् ।

अत एव केवलघटोऽस्तीति वाक्यस्यापि घटत्वादिना स्मारकतामात्रम् । स्वरूपसंबन्धेन कार्यत्वविशिष्टं यदानयनं, निरूपकतासंबन्धेन तदन्वितं यत् कर्मत्वम्, आधेयतासंबन्धेन तदन्वितो (यद्घटादिः) [यो घटादिः] तच्छाब्दत्वेन कार्यतास्वीकारेण च घटमानयेत्यादौ तत्तत्संसर्गकशाब्दोदयः । न च अवान्तरवाक्यार्थबोधस्य [2]महावाक्यार्थविशिष्टवैशिष्ट्यबोधहेतुत्वेन तदनुरोधेन घटकर्मत्वबोधस्वीकारे, कार्यत्वाविषयकशाब्दस्वीकारापत्तिरिति वाच्यम् । व्युत्क्रमेण कार्यत्वान्वितानयनमित्यादिक्रमेणावान्तरवाक्यार्थबोधस्य कार्यत्वविषयकस्य स्वीकारात् । न च नैयायिकमते घटपदजन्योपस्थितेः घटत्व-

1 घटस्मृतिरिति — निर्विशेषणकजातिज्ञानस्य व्यक्तिविषयकत्वं विनानुपपत्तेरिति भावः ।

2 महावाक्यार्थेति — विशिष्टस्य वैशिष्ट्यावगाहि-महावाक्यार्थबोधे हेतुत्वेनेत्यर्थः ।

प्रकारकघटशाब्दत्वं, [1]भवन्मते कार्यत्वान्वितार्थान्वितघटशाब्दत्वं कार्यतावच्छेदकमिति गौरवमिति वाच्यम् । मन्मतेऽपि [2]घटशाब्दत्वमेवावच्छेदकम् । किं तु घट इति पदं आनयपदेन सहान्वयबोधतात्पर्यकमिति ज्ञानस्य सहकारेण तादृशोपस्थितेः हेतुत्वस्वीकारेण लाघवसंभवात् । एवं योग्यताज्ञानादेरपि [3]एतज्ज्ञानसहकारेण विशिष्टविषयताशालिशाब्दं प्रति हेतुत्वम् । केवलं घटमिति शाब्दबोधे योग्यताज्ञानादेः शाब्दसामग्र्याः [4]हेतुत्वाकल्पनेन चापरं लाघवम् ।

एवं यत्र चैत्र पुत्रस्ते जातः इति वाक्यस्य पुत्रजन्मज्ञानजनकता गृहीता, तत्रापि पूर्वकल्पनाऽविरोधेन कार्यत्ववाचकपदसह (कारिणा) [कारेण] जनकता गृह्यते, लाघवादिप्रतिसन्धानादिवशात् । एवं विध्येकवाक्यतापन्नार्थ (वारण)

---

1 भवन्मते — कार्यान्वितशक्तिवादिमते ।

2 अवच्छेदकम् — घटपदजन्योपस्थितिकार्यतावच्छेदकम् ।

3 एतज्ज्ञानेति — घटपदमानयपदेन सहान्वयबोधतात्पर्यकमिति ज्ञानेत्यर्थः ।

4 हेतुत्वाकल्पनेनेति — कार्यतावाचकपदाभावेन शाब्दबोधस्यैव तत्रानुदयादिति भावः ।

[वाद] स्यापि शाब्दबोधजनकत्वं विध्येकवाक्यतापन्नत्वज्ञान-सहकारिवशात् ।

न च कार्यत्ववाचकपदलभ्यत्वप्रतिसन्धानोत्तरं पूर्व-क्लृप्त (कार्यतान्विनानन्वित) कार्यत्वान्वितघटज्ञानजनक-त्वज्ञानस्या [1]प्रामाण्यग्रहस्वीकारात् अन्वितज्ञानजनकत्वमेव कल्प्यते । तथाचायातं सिद्धार्थवाक्यस्यापि प्रामाण्यमिति वाच्यम् । भ्रमत्वकल्पने गौरवात् । न चाश्वमेधादौ यथा स्वर्गत्वसामानाधिकरण्येन तन्निरूपितजनकता गृह्यते, नत्व-वच्छेदकत्वांशोऽपि, तथा कार्यत्वान्वितत्तदर्थग्रहे जनकता गृह्यते, [2]नत्ववच्छेदकत्वांशोऽपि । तथाच कार्यत्ववाचकपदसमभिव्या-हारेण तादृश (स्थरेक्षणे) [जनकता] लभ्यते इति न सिद्धार्थ-वाक्यस्याप्रामाण्यमिति वाच्यम् । तदवच्छिन्नजनकत्वस्यैव वाक्ये ग्रहात् । न च तदा कार्यान्विततादृशघटज्ञानत्वा-वच्छिन्नजनकताग्रहात् तदनुरोधेन घटान्तर्भावेणापि सर्वत्र

---

1 अप्रामाण्यग्रहादिति – अनन्यलभ्यस्यैव शब्दार्थतया अन्य-लभ्यकार्यताघटितार्थे शक्तेर्बाधादिति भावः ।

2 न त्ववच्छेदकत्वांशोऽपीति — कार्यतान्वितघटशाब्दत्वा-वच्छिन्नजन्यतानिरूपितजनकता न गृह्यते इत्यर्थः ।

बोधकतापत्तिः । अन्यलभ्यत्वप्रतिसन्धानात् यदि घटांशत्यागः, तदा कार्यत्वांशेऽपीति वाच्यम् । प्रथमं घटानन्तर्भावेणैव विशेषजनकताग्रहेण सामान्यजनकताया अग्रहात् घटान्तर्भावेण सर्वत्र बोधकतापत्तेरभावादिति वदन्ति ।

---

पदानां कार्यान्विते, अन्विते वा न शक्तिः, अपितु पदार्थमात्रे इति व्यवस्थापयतां नैयायिकानां मतनिरूपणम्

अत्र नैयायिकाः—घटोऽस्ति इति वाक्यश्रवणानन्तरं शाब्दबोधोदयेन तदनन्तरं शाब्दयामि इत्यनुव्यवसायेन च तादृशवाक्यस्य शाब्दबोधजनकत्वेन प्रमाणत्वात् । प्राक् कॢप्त [स्य शाब्द] सामान्यं प्रति कार्यत्ववाचकपदसमभिव्याहृत [पद] ज्ञानकारणत्वग्रहस्य भ्रमत्वकल्पनात् । अन्यथा घटमानयेत्यादिवाक्यश्रवणात् तज्जन्योपस्थितिजन्यमानसबोधेनैव [1]व्यवहारोपपत्तौ [2]शब्दमात्रस्याप्रामाण्यापत्तेः ।

---

1 व्यवहारोपपत्तौ — घटानयनादिव्यवहारस्योपपत्तौ ।

2 शब्दमात्रस्य — शब्दसामान्यस्य । वैदिकलिङाद्यन्तवाक्यस्याप्यप्रामाण्यप्रसङ्ग इति भावः ।

एवं विधिशेषीभूतवाक्यस्य प्रामाण्यनिर्वाहाय विध्येकवाक्यत्व-ज्ञानस्य हेतुत्वकल्पनमपि न संभवति । तं विनापि [1]स्वर्ग-पदशक्तिग्राहकवाक्यस्य प्रमाणत्वादिति ।

---

## पदानां कार्यान्विते शक्त्यभावेऽपि इतरान्विते शक्तिरस्तु इति आक्षेपः

अथ, तदा इतरान्विते एव शक्तिरस्तु, शाब्दबोध-विषयता च तन्निष्ठ [वृत्ति] विषयताव्याप्येति नियमात् । [2]अन्यथा, अन्वयस्य शाब्दबोधविषयता न स्यात् । न चान्वितघटत्वादिना शक्यत्वे, अन्वितघटस्य घटान्वितकर्म-त्वस्य च भाने घटमानयेति शब्दात् वाक्यार्थद्वयबोधः स्यात्,

---

1 स्वर्गपदशक्तिग्राहकवाक्यस्य —

'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥' इति वाक्यस्य ।

2 अन्यथा — अन्वयस्य-संसर्गस्य शक्यत्वाभावे ।

न तु विशिष्टैकार्थबोध इति वाच्यम् । तथा सति घटान्वये घटपदस्य शक्तिः कर्मत्वान्वये (वानयनपद) [चाम्पद] स्य शक्तिरस्तु, इत्येवं क्रमेण वाक्यार्थैक्यसंभवात् । न च यत्र नीलघटः इत्यादौ घटस्य विशेष्यतया भानम्, तत्र [1]न कथं घटान्वयस्य विशेष्यतया भानमिति वाच्यम् । घटे अन्वये च खण्डशक्तिस्वीकारेणो[2]भयोपपत्तेः । अन्वयस्य अनन्वितेतरपदार्थे एवान्वयेन [3]तत्र तादृशेतरपदार्थाभावेन [4]तस्यानन्वयात् । अत एव घटमानयेत्यादौ आनयनान्वयस्य विशेष्यतया भानापत्तिरपि [5]निरस्ता ।

वस्तुतस्तु, यथा तदादिशब्दे बुद्धिस्थत्वेन शक्तिः, सहकारिविशेषात् (विशेष्येण) [विशिष्यैव] बोधः, तथा पदानामित-

---

1 न कथमिति — घटान्वयस्यैव घटपदशक्यत्वादिति भावः ।

2 उभयोपपत्तेः — अन्वये शक्यत्वस्य विशेष्यतया भानाभावस्य चोपपत्तेः ।

3 तत्र — नीलघटः इत्यत्र ।

4 तस्य — शक्यस्याप्यन्वयस्य ।

5 निरस्तेति — अनन्वितेतरपदार्थाभावादिति भावः ।

रान्वितत्वेन, अन्वितत्वेन वा सामान्यरूपेण शक्तिः । घट-कर्मकानयनादिलाभस्तु [1]परस्पराकाङ्क्षादिवशात् इत्येव सार-मिति चेन्न ।

---

## अवश्यकल्पनीयमाकाङ्क्षादेर्नियामकत्वमवलम्ब्योक्ताक्षेपपरिहारः

अन्वयसामान्यस्य श (क्त) [क्य]त्वेऽपि अन्वयविशेष-भानार्थं आकाङ्क्षाज्ञानादेः नियामकत्वकल्पनावश्यकत्वेन [2]तत्र स्वतन्त्रशक्त्यकल्पनात् । शाब्दविषयताया वृत्तिविषयता-व्याप्यत्वानङ्गीकारात् ।

पदार्थद्वयसंसर्गभानं चाकाङ्क्षावशात् । पदार्थता-वच्छेदक संसर्गभानं तु [3]शक्तिबलात् । अन्यथा अन्वये

---

1 परस्पराकाङ्क्षा — पदविशेषसमभिव्याहारः ।

2 तत्र — अन्वयसामान्ये ।

3 शक्तिबलादिति — घटपदस्य घटत्वविशिष्टे शक्तिः । घटत्वे घटे वैशिष्ट्ये (समवाये) च त्रये घटपदस्य एका शक्तिरिति सिद्धान्तः ।

शक्तिस्वीकारे [1]तत्संसर्गस्यापि भाने भासमानवैशिष्ट्यप्रतियोगिनः प्रकारतापत्तेः । न च [2]तदनुभवसिद्धम् । (अन्यलभ्यत्वे शक्यम्)

अत एव, अन्वयस्य सांसर्गिकविषयताशालिशाब्दबोधे शक्तिज्ञानस्य सहकारित्वकल्पनमेव तादृशान्वयस्य प्रकारत्ववारकमिति परास्तम् ।

आकाङ्क्षावशादेव तादृशसांसर्गिकविषयताशालिशाब्दबोधनिर्वाहात् तदर्थमन्वये शक्तिकल्पनानौचित्यात् ।

---

अन्वयस्य लक्षणया भानमिति पक्षः, तन्निराकरणं च

अत एव, शाब्दबोधविषयताया वृत्तिविषयताव्याप्यत्वाभ्युपगमे अन्वयांशस्य [3]लक्ष्यतावच्छेदकविधया भानम् ।

---

1 तत्संसर्गस्यापि – अन्वयप्रतियोगिकसंसर्गस्यापि ।

2 तत् – पदार्थद्वयसंसर्गस्य शाब्दबोधे प्रकारत्वम् ।

3 लक्ष्यतावच्छेदकविधयेति – घटादिपदानां घटे शक्तिः, अन्वितघटे लक्षणेति भावः ।

युगपत् [1]वृत्तिद्वयविरोधानुपगमात् । सर्वपदस्य लाक्षणिकत्वेऽपि न बोधानुपपत्तिः, लाक्षणिकपदस्याननुभावकत्वव्युत्पत्तेरप्यकल्पनात्. इति परास्तम् ।

आकाङ्क्षाबललभ्ये लक्षणाया अप्यकल्पनात् । अत एव, धूमोऽस्तीति वाक्ये वह्निपरत्वस्या[2]नुमानेन निर्वाहात् न तदर्थं वह्नौ धूमपदस्य [3]वृत्तिकल्पना । किञ्च, एवं घटपदस्य[4]शक्तिविलोपापत्तिः । लक्षणानिर्वाहार्थं शक्तिकल्पने घटातिरिक्तेऽपि शक्तिः स्यात् । मुख्यप्रयोगविरहस्यो[5]भयत्र तुल्यत्वात् ।

---

1 युगपत् वृत्तिद्वयविरोधानुपगमादिति — अत एव गङ्गायां मीनघोषौ स्तः इति प्रयोग उपपद्यते इति भावः ।

2 अनुमानेन— वाक्यजन्यशाब्दबोधविषयधूमलिङ्गकानुमानेन ।

3 वृत्तिकल्पना — लक्षणाकल्पना ।

4 शक्तिविलोपापत्तिरिति — लक्षणया घटादिबोधनिर्वाहादिति भावः ।

5 उभयत्र — घटे घटातिरिक्ते च ।

## पदानामर्थज्ञाने शक्तिरिति पक्षदूषणम्

अत एव, पदार्थज्ञाने पदानां शक्तिः, शक्यीभूतज्ञानविषयत्वलक्षणशक्यत्वमर्थे इत्यपि निरस्तम् । तस्या [1]अर्थस्मरणाजनकत्वात् । न च ज्ञानशक्तिरेव स्मारिका शक्तिरर्थे इति मते न दोषः । ज्ञानशक्तिज्ञानस्य [2]घटत्वस्य स्मृतिकार्यतावच्छेदकताभ्युपगमेन तादृशफलान्वयव्यतिरेकौ इति वाच्यम् । ज्ञाने शक्तिस्वीकारे मानाभावात्, अर्थशक्त्यैव तादृशफलोपपत्तिरिति ।

इत्थं च कार्यान्विते अन्विते वा न शक्तिः, किन्तु पदार्थमात्रे इति । शक्तिमत्पदज्ञानं करणम्, पदार्थस्मृतिर्व्यापारः, शाब्दबोधस्तु फलम्, इति न्यायसिद्धान्तः ॥

---

1 अर्थस्मरणाजनकत्वादिति — अर्थज्ञानस्यैव संबन्धित्वेनार्थस्यासंबन्धित्वादिति भावः ।

2 घटत्वस्येति— विषयतासंबन्धेन घटत्वविशिष्टस्मृतेः ज्ञाने शक्तिज्ञानकार्यत्वात् स्मृतिनिष्ठकार्यतायां विषयतया घटत्वमवच्छेदकं बोध्यम् ।

## पदार्थः पदार्थस्मृतिर्वा शाब्दे करणम्, शाब्दत्वं द्वयमिति भट्टमतनिरूपणम्; तन्निरासश्च

अत्र भट्टाः, अर्थस्यैव करणत्वमस्तु, किं पदस्य करणत्वकल्पनेन । न चार्थस्यातीतत्वानागतत्वात् न तस्य शाब्दकारणत्वम् । स्मृतेर्विषयाजन्यत्वेन तस्याः [1]व्यापारत्वाभावादिति वाच्यम् । तदा पदार्थस्मृतेः करणत्वमस्तु, तद्वशेन सर्वोपपत्तेरिति । अत एव चिन्तोपस्थितोपनीतज्ञानानन्तरं कार्यनिर्वाहः ।

तथाच भट्टनये [2]सर्वपदस्थले, [3]सर्वार्थोपस्थितिकाले च शाब्दबोधः । शाब्दत्वं द्वयम् । एकं सर्वपदजन्यपदार्थोपस्थितेर्जन्यतावच्छेदकम् । अपरं, (पदवा) [पदा] जन्य-

---

1 व्यापारत्वाभावादिति — तथा च स्मृतिद्वारा अतीतादिपदार्थस्य शाब्दकरणत्वं न संभवतीत्यर्थः ।

2 सर्वपदस्थले — वाक्यार्थघटकानां सर्वेषां पदार्थानां बोधकपदैः घटिते वाक्ये ।

3 सर्वार्थोपस्थितिकाले च — वाक्यार्थप्रविष्टानां सर्वेषां पदार्थानां पदं विना मानान्तरेणोपस्थितिकाले च ।

पदार्थोपस्थितिजन्यतावच्छेदकम् । अत एव यत्किञ्चित्पदासत्त्वे [1]अपरपदाध्याहारेणैव शाब्दबोधः ।

न च यत्र पदजन्योपस्थितिः, पदाजन्योपस्थितिश्च, तत्रोभयजातीयशाब्दापत्तिरिति वाच्यम् । पदजन्योपस्थितिघटितशाब्द[2]सामग्रीप्रतिबन्धकतयैव एकदा शाब्दद्वयजातीयानुदयात् । न च विषयमिश्रिततादृशशाब्दत्वस्य प्रतिबध्यतावच्छेदकत्वे महागौरवमिति वाच्यम् । पदजन्यसर्वोपस्थितिघटितसामग्र्याः प्रतिबध्यतावच्छेदकत्वस्य [3]तादृशशाब्दत्व एवोपपत्तेः । न च घटमानयेति पदजन्योपस्थितिसत्त्वे पटमानयेति पदाजन्यतादृशसर्वोपस्थितिसत्त्वे, परस्परविरोधेन शाब्दमात्रानुत्पादे, अनुभववि-

---

1 अध्याहारेणैवेति – शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते इति न्यायः बोध्यः । भट्टमते घटमानय इत्यादौ, कस्यापि पदस्याश्रवणे श्वेतरूपदर्शने ह्रेषाशब्द-खुरविक्षेपशब्दयोः श्रवणे च, श्वेतोऽश्वो धावतीति वाक्यार्थबोधः शाब्दबोधः जायते । वाक्यार्थं प्रविष्टकतिपयपदार्थानां पदबोध्यत्वे कतिपयानामपरेषां मानान्तरोपस्थितत्वे न शाब्दबोधः इति निष्कर्षो बोध्यः ।

2 सामग्रीप्रतिबन्धकतयेति — तादृशसामग्र्याः पदाजन्यार्थोपस्थितिजन्यशाब्दे प्रतिबन्धकतयेत्यर्थः ।

3 तादृशशाब्दत्वे — विषयमिश्रिततादृशशाब्दत्वे ।

रोध इति वाच्यम् । पदजन्योपस्थितिघटितशाब्दसामग्र्याः प्रतिबन्धकत्वे लाघवेन तस्यैवोपगमात् । (भवन्मते) [भट्टमते] पदाजन्य[1]सर्वोपस्थितिघटितसामग्र्याः प्रतिबन्धकत्वे, पदजन्यत्वाभावेत्यत्राभावांशनिवेशाधिक्येन गौरवात् । [2]न्यायनयेऽपि तदर्थस्य मानसबोधास्वीकारेण पदजन्योपस्थितिघटितसामग्र्याः प्रतिबन्धकत्वस्वीकारात् । न च यत्र शक्तिज्ञानघटितसामग्री नास्ति, केवलपदाजन्योपस्थितिः, तत्र तदर्थस्य मानसबोधवारणाय प्रतिबन्धकत्वस्यावश्यकत्वेन, तत्रैव पदाजन्योपस्थितिघटितसामग्र्याः तज्जातीयान्यं प्रति प्रतिबन्धकताभ्युपगमे क्लृप्तेनैवोपपत्तेः न प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनमिति वाच्यम् । तत्र मानसेच्छाया उत्तेजकत्वेन

---

1 सर्वोपस्थितीति — वाक्यार्थप्रविष्टसर्वपदार्थोपस्थितीत्यर्थः ।

2 न्यायनयेऽपीति — सर्वपदार्थानां मानान्तरादुपस्थितौ पदार्थसंसर्गज्ञानं मानसं जायते, न शाब्दबोधात्मकमिति नैयायिकानां मतम् । तच्च ज्ञानं सर्वपदजन्योपस्थितिकाले न स्वीक्रियते । तदुपपादनाय तादृशमानसे सर्वपदजन्योपस्थितिघटितसामग्र्याः प्रतिबन्धकत्वं कल्प्यते इत्यर्थः ।

 

[1]तादृशेच्छाकाले शाब्दोत्पत्तिवारणाय स्वातन्त्र्येण प्रतिबन्धकतायाः आवश्यकत्वादिति ।

(तत्र)[तन्न]पदाजन्यसर्वपदार्थोपस्थितिकाले मानसबोधस्वीकरणात् तादृशव्यवहारोपपत्तौ [2]तस्य शाब्दत्वे [3]मानाभावात् । तस्मात् पदज्ञानं करणम्, पदार्थोपस्थितिर्व्यापारः इत्यलं प्रसङ्गागतेन ।

---

1 तादृशेच्छाकाले — मानसेच्छाकाले ।

2 तस्य — पदानुपस्थितसर्वपदार्थसंसर्गज्ञानस्य ।

3 मानाभावादिति —

पश्यतः श्वेतमारूपं ह्रेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ।
दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित् ॥ इति

भट्टवार्त्तिके वाक्यं विनैव शाब्दधीरुक्ता । तत्रोक्तबुद्ध्यनन्तरं, शाब्दयामि, इति, शृणोमि इति वा अनुव्यवसायाभावेन तस्याः शाब्दत्वे मानाभावः, अपि तु सा मानसज्ञानमिति भावः । इयं लिङ्गजा धीरिति मणिकारा वदन्ति । अयं श्वेतः, धावदश्वः, खुरविक्षेपशब्दविशेषवत्त्वात् इत्यनुमानाकारं केचिदाहुः । अन्येतु, अयं श्वेतः, अश्वः, ह्रेषाशब्दवत्त्वात्, ततः श्वेतोऽश्वः, धावति, खुरविक्षेपशब्दवत्त्वादित्यनुमाकारमाहुः ।

### अर्थवादात् स्वर्गपदस्य शक्तिग्रहः

तस्मात् कार्यान्वितशक्तिविरहात् सिद्धमर्थवादानां प्रामाण्यम् । अत एव,

'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत (सत्वं)[सुखं][स्वः]पदास्पदम् ॥'

इत्यर्थवादात् सुखविशेषे स्वर्गपदशक्तिग्रहोऽप्युपपन्नः ।

---

### यन्नेत्यादेरर्थवादस्य सनिष्कर्षमर्थवर्णनं, स्वर्गपदशक्यतावच्छेदककथनं दुःखासंभिन्नत्वपरिष्कारश्च

ननु अत्र दुःखासंभिन्नत्वं यदि दुःखानवच्छेदकावच्छिन्नत्वम्, तदा राजचक्रवर्तिसु (त्वे) [खे] तादृशखण्डशरीरावच्छिन्नेऽतिप्रसक्तम् । न च दुःखावच्छेदकवृत्तिजात्यनाश्रयावच्छिन्नत्व[1]मर्थः, तत्र तादृशचैत्रत्वादिजातिसत्त्वात् नोक्तातिप्रसङ्ग इति वाच्यम् । तथा सति स्वर्गात्मक (सुखेऽपि)

---

1 अर्थः — दुःखासंभिन्नशब्दार्थः ।

[सुखावच्छेदकेऽपि] [1]तादृश-सत्त्व-द्रव्यत्वादिजातिसत्त्वेनासंभवप्रसङ्गादिति चेन्न ।

दुःखावच्छेदकवृत्त्येककालीनद्व्यावृत्तिजात्यनाश्रयावच्छिन्नसुखत्वस्यैव तदर्थतया (तस्यैव तदर्थतया) तस्यैव स्वर्गपदशक्यतावच्छेदकत्वात् । सत्त्व (गुणत्वादे) [द्रव्यत्वादे]रेककालीनद्व्यवृत्तित्वात् चैत्रत्वादेश्चैकदोभयशरीरावृत्तित्वाच्च [2]नोक्तदोषः ।

---

## नव्यमतेन दुःखासंभिन्नत्वनिर्वचनम्

नव्यास्तु दुःखावच्छेदकावृत्तिजात्याश्रयावच्छिन्नत्वं तदर्थः । [3]स्वर्गावच्छेदकवृत्तिचैत्रत्वादिजातेः दुःखावच्छे-

---

1 तादृशेति — दुःखावच्छेदकवृत्तीत्यर्थः ।

2 नोक्तदोषः—नासंभवः, न वा चक्रवर्तिखण्डशरीरविशेषावच्छिन्नसुखे अतिप्रसङ्गः ।

3 स्वर्गावच्छेदकवृत्तीति — स्वर्गरूपसुखावच्छेदकशरीरविशेषवृत्तीत्यर्थः ।

दकावृत्तित्वात् तत्संग्रहः । न च [1]तत्रापि (यातदुभय) [पातभय] जन्यदुःखसत्त्वात् न दुःखावच्छेदकावृत्तित्वं तादृश-जातेरिति वाच्यम् । 'स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नैव निर्वृतिः ।' इत्यादिश्रुतेः स्वर्गस्य हेयताप्रतिपादकत्वेन तादृशार्थे तस्य [2]तात्पर्याभावात् । पातभयाजन्यत्वं वा दुःख-विशेषणं (वैयर्थ्यं) [देय] मित्याहुः ।

---

## स्वर्गिशरीरपातानन्तरं मुक्त्यनुपपत्तिशङ्का, तन्निरासश्च

अथ, तादृशस्वर्गिशरीरनाशानन्तरं (पुत्रा) [मुक्त्य] नुपपत्तिः । तत्र दुःखासत्त्वेन तन्नाशविरहादिति चेन्न ।

मुक्तिं प्रति ब्राह्मणशरीरादेर्हेतुत्वेन तदभावादेव मुक्ति-विरहात् । स्वर्गिशरीरे ब्राह्मणत्वप्रयोजकादृष्टाभावेन तच्छरीरे ब्राह्मणत्वाभावात् । यदि च श्रवणादिजन्यमुक्त्यै ब्राह्मण-

---

1 तत्रापि – स्वर्गेऽपि ।

2 तात्पर्याभावादिति — तथा च स्वर्गे न दुःखमिति नासंभव इत्यर्थः ।

शरीरापेक्षा, न तु प्रकारान्तरेण मुक्तौ काशीमरणादिजन्यायां तदपेक्षेति विभाव्यते। तथापि न क्षतिः। तादृशशरीर-नाशानन्तरं दुःखावच्छेदकशरीरोत्पादमुपेत्य चरमदुःखोत्पत्त्य-(न) ङ्गीकारेण तादृशदुःखध्वंसस्यैव मुक्तित्वसंभवात्।

---

## अनन्तरत्वपरिष्कारः

न च ग्रस्तमनन्तरमिति—नचैतदपि राजचक्रवर्तिसुखे क्रमिकखण्डशरीरावच्छिन्नेऽतिप्रसक्तमिति वाच्यम्। [1]क्षण-द्वयात्मककालोपाध्यवच्छेदेन सुखाभावावच्छेदकावृत्तिजात्याश्र-यावच्छिन्नसुखत्वस्य तदर्थत्वात्।

---

1 क्षणद्वयात्मकेति — चक्रवर्तिशरीरेऽपि क्षणद्वयावच्छेदेन सुखाभावावच्छेदकत्वसत्वात् तादृश सुखाभावावच्छेदकावृत्ति-जातेः क्रमिकखण्डशरीरे अभावेन, न सुखाभावावच्छेदकावृत्ति-जात्याश्रयावच्छिन्नत्वं चक्रवर्तिसुखस्येति नातिप्रसङ्गः। ग्रासः-लौकिकसुखापेक्षया अपकर्षः। तच्छून्यमिति, न च ग्रस्त-मित्यस्यार्थः इति मथुरानाथभट्टाचार्याः।

## अभिलाषोपनीतत्वार्थः

अभिलाषोपनीतमिति—न चात्राभिलाषविषयसुखत्वं जन्यखण्डशरीरावच्छिन्ने राजचक्रवर्तिसुखेऽतिप्रसक्तमिति वाच्यम् । तत्तद्विषयसंबन्धगोचरेच्छाऽव्यवहितोत्तरकालावच्छेदेन तत्तद्विषयसंबन्धत्वावच्छिन्नाभावावच्छेदकावृत्तिजात्याश्रयावच्छिन्नसुखत्वस्य तदर्थत्वात् ।

अत्र च प्रत्येकमेव स्वर्गपदशक्यतावच्छेदकमेतद्धर्मत्रयम् । तात्पर्यवशादेव कदाचित् कस्य चित् भानमिति [1]तस्य नानार्थत्वम् ।

---

## दुःखासंभिन्नसुखत्वमेव स्वर्गपदशक्यतावच्छेदकमिति केषांचिन्मतनिरूपणम्

अत्र केचित्, इन्द्रादीनां सुखविच्छेदस्य बहुशः श्रवणात् नचग्रस्तेत्यादिप्रतिपाद्यस्य न स्वर्गपदशक्यतावच्छेद-

1 तस्य – स्वर्ग – स्वरादिपदस्य ।

कत्वम् । स्वर्गसुखस्यापि विषयजन्यत्वाच्च न निरुक्ताभि-[1]लाषोपनीतत्वस्यापि । अविलम्बेन विषयप्राप्तिरेव हि तेषामभिलाषमात्रात् । अविलम्बश्च क्रमाद्यनपेक्षत्वमिति । तस्मात् यन्न दुःखेत्यादिप्रतिपाद्यस्याद्यधर्मस्यैव स्वर्गपद (शक्त) [शक्य] तावच्छेदकत्वमित्याहुः ।

---

### उक्तमतनिरासः, स्वर्गनिष्ठतत्तद्वैजात्यस्य शक्यतावच्छेदकत्व-निरासश्च

तदसत् । देवानां सुखविच्छेदश्रवणस्य रामादिदुःख-श्रवणवत् संसारनिन्दापरत्वात् । स्वर्गसुखस्य विषयजन्यत्वे मानाभावाच्च ।

न च तथापि [2]लाघवादग्निष्टोमादिजन्यतावच्छेदक-स्वर्गनिष्ठतत्तद्वैजात्यमेव स्वर्गपदशक्यतावच्छेदकमस्तु । उक्त-

---

1 अभिलाषोपनीतत्वस्यापीति — स्वर्गपदशक्यतावच्छेदकत्व-मित्यनुषज्यते ।

2 लाघवादिति — जातेरखण्डत्वेन उक्तधर्मापेक्षया शरीरकृत-लाघवादित्यर्थः ।

धर्मत्वयं परिच्छायकमेवेति वाच्यम् । [1]तस्याननुगमेन शक्यतावच्छेदकत्वासंभवात् ।

---

## स्वर्गत्वजातिः शक्यतावच्छेदिका इत्याशङ्का, तन्निरासश्च

ननु, तस्याननुगमेन शक्यतावच्छेदकत्वासंभवेऽपि अग्निष्टोम-गङ्गास्नानादिरूपविभिन्नजातीयकारणजन्यसकलस्वर्गनिष्ठस्वरूपविलक्षण जातिरेव स्वर्गपदशक्यतावच्छेदिकाऽस्तु। न च स्वर्गत्वजातौ मानाभावः, तत्तद्वैजात्यस्यैवाग्निष्टोमादिजन्यतावच्छेदकत्वावश्यकत्वेन, [2]तां विना कार्यकारणभावविरहाद्यनिर्वाहादिति वाच्यम् । अग्निष्टोमादीनां [3]विशेषरूपेण [या] कारणता [4]तत्प्रतियोगिककार्यतायाः तत्तदवान्तरवैजात्येनावच्छिन्नत्वेऽपि, विहितकर्मत्वेन या सामान्यकारणता तत्प्रतियोगिक-

---

1 अननुगमेनेति — स्वर्गपदशक्यतान्यूनवृत्तितयेति शेषः ।
2 तां विना — सकलस्वर्गनिष्ठस्वर्गत्वजातिं विना ।
3 विशेषरूपेण — अग्निष्टोमत्वादिना ।
4 तत्प्रतियोगिकेति — तन्निरूपितेत्यर्थः । एवमग्रेऽपि ।

कार्यतावच्छेदकतया [1]व्यापकस्वर्गत्वजातेरवश्यकल्पनीयत्वात् । न च कार्यतावच्छेदकाननुगमस्यादोषतया तत्तदवान्तरवैजात्यानामेव तादृशकार्यताया अप्यवच्छेदकत्वमास्तामिति वाच्यम् । यद्विशेषयोरिति न्यायेन सामान्यरूपेण कारणताया अप्यावश्यकत्वात् । कार्यकारणभावैक्यरूपलाघवेनापि सकलस्वर्गसाधारणैककार्यतावच्छेदकस्य जातिरूपस्य सिद्धेर्निष्प्रत्यूहत्वादिति चेत् ।

मैवम्-सकलस्वर्गोपायसाधारणस्य विहितकर्मत्वस्य दुर्वचतया तेन रूपेण कारणत्वस्याप्रामाणिकत्वात् । प्रामाणिकत्वेऽपि सुखत्वस्यैव तज्जन्यतावच्छेदकत्वात् । लौकिकापकृष्टसुखस्यापि विना पुण्यमनुत्पत्त्या व्यभिचारानवकाशादिति दिक् ।

---

1 व्यापकेति — स्वर्गत्वव्याप्यतत्तद्वैजात्यव्यापकेत्यर्थः ।

### इन्द्रपदशक्तिग्रहोऽप्यर्थवादादिति कथनम्

एवं, इन्द्रमुपासीतेत्यादावपि, इन्द्रपदस्य लोके (ष्टस्योकारादावापि) [[1]पृथ्वाकारादावपि] प्रयोगात् इन्द्रपदार्थानिश्चयेन 'इन्द्रः सहस्राक्षः' (दावि) [इत्यर्थवादादि] न्द्रादिपदशक्तिग्रहः । अत एव देवताचैतन्यसिद्धिरपि ।

---

### अचेतनमन्त्रादिरेव देवता, तत्रैवेन्द्रादिपदशक्तिरिति मीमांसकमतनिरूपणम्

[2]अत्र मीमांसकाः— देवताचैतन्ये मानाभावः तथाहि— देवतावाचकेन्द्रादिपदानां 'इन्द्राय स्वाहा' इत्यादिमन्त्रात्मकाचेतने एव शक्तिः, तस्यैव देवतात्वात् । न तु सहस्राक्षे, इन्द्रः सहस्राक्षः इत्यर्थवादस्या (प्रवृत्ते) [प्रवर्त] कत्वेनाप्रमाणत्वात्

---

1 पृथ्वाकारादावपीति — इन्द्रार्थस्थूणायामपि इन्द्रपदप्रयोगो दृश्यते ।

2 अत्र मीमांसकाः — इत्यस्य व्यवहितेन आहुरित्यनेन संबन्धः ।

## शिवेन्द्रादिपदानां चेतनार्थकत्वाक्षेपः

अथ शिवाय गां दद्यादित्यादौ [1]त्यागजन्यफलभागित्वरूपदेवतानिष्ठसंप्रदानत्वस्य श्रुतेः, वरदातृत्वश्रुतेश्चाचेतनमन्त्रस्य कथं शिवादिपदशक्यत्वम् । तस्याचेतनरूपतया तादृशसंप्रदानत्वविरहात् । अपि च मन्त्रस्य शिवादिपदशक्यत्वे, तत्तन्मन्त्रानुपूर्वीविशेषाणामेव शक्यतावच्छेदकभावात् शिवादिसहस्रनाम्नां [2]पर्यायत्वव्याघातापत्तिः । एवं, वाजपेययागस्य इन्द्रपदफलकत्वात् [3]तद्विरोधापत्तिश्चेति चेत्

---

1 त्यागजन्यफलभागित्वेति — त्यागजन्यफलरूपस्वत्वनिरूपकत्वेत्यर्थः ।

2 पर्यायत्वव्याघातापत्तिरिति — तत्तत्पदघटकवर्णानुपूर्वीविशेषाणां शिवादिपदशक्यतावच्छेदकानां भिन्नभिन्नतया नामसु एकधर्मावच्छिन्नवाचकत्वरूपं पर्यायत्वं व्याहन्येतेत्यर्थः ।

3 तद्विरोधापत्तिरिति — इन्द्रशब्दात्मताया अफलत्वेन चेतनदेवताभावस्यैव फलत्वादिति भावः ।

## इन्द्रादिपदानां चेतनार्थकत्वेऽपि देशनादेशित-चतुर्थ्यन्तपदनिर्देश्यत्वरूपं देवतात्वमिन्द्रायेत्यादिपदानामेवेति निरूपणम्

अस्तु एतावतापि इन्द्रादिपदानां सहस्राक्षत्वा [दिवि-शिष्टे शक्तिः । देवतात्वं तु तस्य नास्ति, मानाभावात् । किन्तु, इन्द्रायेत्यादिपदानामेव । देशनादेशित चतुर्थ्यन्त-पदनिर्देश्यत्वरूपं देवतात्वम् ।] [1]तन्निर्देश्यत्वं च वेदबोधित-चतुर्थ्यन्ततयोच्चार्यत्वम् । न च कया देशनया इन्द्रादि-पदस्य चतुर्थ्यन्ततयोच्चार्यत्वं बोध्यते इति वाच्यम् । ऐन्द्रं दध्यमावास्यायाम्, आग्नेयं हव्यं निर्वपेदित्यादौ देवतार्थे विहि-तेन तद्धितेन चतुर्थ्यन्ततयोच्चार्यत्वस्वरूपदेवतात्वस्येन्द्रादिपदे बोधनात्। (तन्नेन्द्रादि)[तत्र ऐन्द्रादि]पदस्य स्वरसतया चतुर्थ्य-न्ततयोच्चार्येन्द्रपदकरणकाभिन्नं [2]दधि इत्येवान्वयबोधात् । अत एव इन्द्रायेत्यादिपदमेव देवता, (त्तु) [न तु] शक्रायेत्यादि-

---

1 ननु इन्द्रपदस्य सहस्राक्षत्वविशिष्टे शक्तत्वात् चतुर्थ्यन्तपदेन सहस्राक्षः चेतन एव निर्दिश्यते, इत्यत आह — तन्निर्देश्यत्वं चेति ।

2 दधि — दधियागः ।

पदम् । (शक्त) [शक्र] पदे चतुर्थ्यन्ततयोच्चार्यत्वस्या-बोधितत्वात् । न च इन्द्राय स्वाहेति स्वाहान्तसमुदायस्यैव मन्त्रत्वेन, तस्य कथं देवतात्वम् । चतुर्थ्यन्ततयोच्चार्य-तादृशमन्त्रस्य वेदेनाबोधनादिति वाच्यम् । स्वाहादेः [1]त्याग-मात्र बोधकत्वेन देवतानन्तर्गतत्वात् । न च चतुर्थ्यन्तत-योच्चार्यत्वमात्रं न देवतात्वम्, [किन्तु देशनादेशितत्वविशिष्टं देवतातद्धितवाच्यम् । तत्र वेदबोधितत्वग्रहे ग्राह्यम्, देवतात्व-] ग्रहे वेदबोधितत्वं ग्राह्यमित्यन्योन्याश्रयात् । प्रकारान्तरेण तद्ग्रहे तत्प्रत्यक्षमूलकत्वात् । पूर्वपूर्ववेदज्ञानमूलकोत्तरोत्तर-तादृशज्ञाननिर्वाहेऽपि प्रथमतस्तादृशवेदजन्यशाब्दबोधे तद-संभवादिति वाच्यम् । [2]विशेष्यमात्रस्यैव [तद्धितार्थत्वात् । तत्पुरस्कारेण प्रवृत्ते तद्धिते, देशनादेशिततत्पदनिर्देश्यत्वरूपं देवतात्वं गृह्यते इत्यदोषात् । ] तथाच देशनादेशिता या चतुर्थ्यन्तता तद्विशिष्टपदत्वमेव देवतात्वम् । घटायेत्यादि-

---

1 त्यागमात्रेति — देवोद्देश्यकत्यागे स्वाहा शब्दः पित्र्युद्देश्य-कत्यागे स्वधाशब्दः प्रयोक्तव्यः, तथा शास्त्रेण बोधनात् । स्वाहा-स्वधा-नमः-पदानां त्याग एवार्थः । इन्द्राय स्वाहा इत्यत्र इन्द्रोद्देश्यकस्त्यागः इति बोधः ।

2 विशेष्यमात्रस्यैव — चतुर्थ्यन्ततयोच्चार्यत्वस्यैव ।

चतुर्थ्यन्तता न वेदबोधितेति तन्निरासः। केवलेन्द्रपदस्य चतुर्थ्यन्तत्वाभावादेव व्युदासः। ऐन्द्रं दधि इत्यादौ तद्धितेनापि चतुर्थ्यन्तत्वं बोध्यते। चतुर्थ्यन्तेन्द्रपदकरणकाभिन्नं [1]दधि इत्येवान्वयबोधात्। (न चौभयत्वैवं) [नचैवं] धृतिः स्वाहेति प्रथमान्तधृतिपद [स्य] देवतात्वाभावप्रसङ्ग इति वाच्यम्। चतुर्थीपदेन चतुर्थ्यर्थकस्योक्तत्वात्। तत्र चतुर्थीनिषेधेन प्रथमाया एव तत्स्थलाभिषिक्ततया चतुर्थ्या इव [2]तस्या अपि उद्देश्यतार्थकत्वात्। [3]वैज्ञानिकं वा चतुर्थ्यन्तत्वं निवेश्यम्। प्रकृतेऽपि चतुर्थ्यन्तत्वज्ञानात्। अत एव, लुप्तचतुर्थीकेऽपि 'भूःस्वाहा' इत्यादौ नानुपपत्तिरिति। न चाचेतनस्यैव देवतात्वे, इन्द्रो देवता इति [4]अभेदान्वयानुपपत्तिरिति वाच्यम्। इन्द्रपदस्य इन्द्रायेति पदपरत्वादिति संप्रदायः।

---

1 दधि — दधियागः।

2 तस्या अपि — प्रथमाया अपि।

3 वैज्ञानिकमिति — चतुर्थ्यन्तत्वेन ज्ञायमानत्वमित्यर्थः।

4 अभेदान्वयानुपपत्तिरिति — इन्द्रपदार्थ सहस्राक्षे देवतापदबोध्यमन्त्राभेदस्य बाधितत्वादिति भावः।

विनिगमनाविरहेणार्थविशिष्टमन्त्रस्य, मन्त्रविशिष्टार्थस्य च देवतात्व-मिति कथनम्, द्वयोरपि पक्षयोः ऐन्द्रं दधि इति वाक्याधीन-बोधवर्णनं च

वस्तुतस्तु—चेतनस्य देवतात्वमतेऽपि, प्रतिपाद्यता-संबन्धेन इन्द्राय स्वाहेत्यादिमन्त्रविशिष्टस्यैव देवतात्वमवश्यं स्वीकरणीयम् । अन्यथा, [1]पर्यायान्तरेणापि त्यागापत्तेः । तथाच विनिगमनाविरहात् प्रतिपाद्यतासंबन्धेन मन्त्रविशिष्टोऽर्थः, प्रतिपादकतासंबन्धेन अर्थविशिष्टो मन्त्रो वेत्युभयमेव देवता । केवलस्यार्थस्य देवतात्वे (पी) मन्त्रान्तरेणापि त्यागप्रसङ्गात् । केवलपदस्य तत्त्वे, लक्षणादिना अर्थान्तरबोधकतादृशपदस्य देवतात्वप्रसङ्गात् ।

तत्र आद्ये, वेदबोधिता या चतुर्थ्यन्तता तद्विशिष्टपद-प्रतिपाद्यत्वमेव देवतात्वम् । अन्त्येच, तादृशचतुर्थ्यन्तता-विशिष्टत्वमेव । न च केन वेदेन तादृशचतुर्थ्यन्तता बोध्यते इति वाच्यम् । 'ऐन्द्रं दधि' इत्यनेनैव तद्बोधनात् ।

---

1 पर्यायान्तरेणापि – शक्रादिपदेनापि ।

तथाहि- (यद्विशिष्टस्य) [[1]पदविशिष्टस्य] अर्थस्य देवतात्वपक्षे इन्द्रपदस्य इन्द्र एवार्थः। तद्धितप्रत्ययस्य च चतुर्थ्यन्तपदप्रतिपाद्यत्वविशिष्टः। तथाच [2]इन्द्राभिन्न-चतुर्थ्यन्तपदप्रतिपाद्यक–पदाङ्गकत्यागकर्माभिन्नं दधि इत्यन्वयबोधः।

[3]अर्थविशिष्टपदस्य देवतात्वकल्पे च तद्धितप्रत्ययस्य चतुर्थ्यन्तेन्द्रादिपदमेवार्थः। तथाच प्रतिपादकतासंबन्धेन इन्द्रविशिष्ट-चतुर्थ्यन्तपदाङ्गकत्यागकर्माभिन्नं दधि इत्यन्वयबोधः। इन्द्रपदसमभिव्याहृततद्धितपदेन च पदत्वरूपेण इन्द्रायेत्यादिपदमेव बोध्यते [इति]व्युत्पत्तेरिति नानुपपत्तिः। इत्थं च [4]पक्षद्वये पर्यायान्तरेण न त्यागः। (पपत्या)[इन्द्रादिप]

1 पदविशिष्टस्येति – प्रतिपाद्यतासंबन्धेनेत्यादिः।
2 इन्द्राभिन्नेत्यादि – सहस्राक्षाभिन्नं चतुर्थ्यन्तपदप्रतिपाद्यं यस्य तादृश–इन्द्रायेतिपदाङ्गके दधिद्रव्यत्यागे कर्म दधीत्यर्थः।
3 अर्थविशिष्टपदस्येति – प्रतिपादकतासंबन्धेनेत्यादिः।
4 पक्षद्वयेऽपि– अर्थविशिष्टस्य पदस्य देवतात्वं पदविशिष्टार्थस्य देवतात्वमिति च पक्षद्वयेऽपि।

दोपस्थाप्येऽर्थे तद्धितार्थान्वयः । चतुर्थ्यन्तत्वेन (वा) यत्पदं बोध्यते, [ते] नैव त्यागः इति नियमात् ।

न च वेदबोधितचतुर्थ्यन्तपदस्य देवतात्वरूपत्वे, इन्द्रः अस्य देवता [1]इत्यभेदान्वयबोधो न स्यादिति वाच्यम् ।

वेदबोधित चतुर्थ्यन्ततावत्पदप्रतिपाद्यत्वरूपदेवतात्वस्यैव देवतापदशक्यतावच्छेदकत्वात् । तथाच एत (त्वा) [त्क] र्मकत्यागाङ्गीभूतचतुर्थ्यन्तपदप्रतिपाद्याभिन्नः इन्द्रः [2]इत्यन्वयबोधः, व्युत्पत्तिवैचित्र्यानुरोधात् । व्युत्पत्तिवैचित्र्यात् देवतापदार्थैकदेशे चतुर्थ्यन्तपदेऽपि [3]षष्ठ्यर्थान्वयस्वीकारात् इत्याहुः ।

---

1 इत्यभेदान्वयेति – इन्द्रपदार्थे देवतापदार्थाभेदान्वयेत्यर्थः ।

2 इत्यन्वयबोध इति — इन्द्रः अस्य देवता इति वाक्याधीनः इत्यादिः ।

3 षष्ठ्यर्थेति– अस्येत्यत्रेदंपदार्थस्य द्रव्यः स्वकर्मकत्यागाङ्गत्वरूप-संबन्धविशेषे षष्ठ्यर्थे, तस्य चाश्रयतासंबन्धेन देवतापदार्थैकदेशे चतुर्थ्यन्तपदे अन्वयः इत्यर्थः ।

## देवताचैतन्यवादिनां नैयायिकानां मतनिरूपणम्

अत्र नैयायिकाः–अचेतनमन्त्रादीनां नेन्द्रादिपदवाच्यत्वम्, न वा देवतापदवाच्यत्वम् । अपि तु सहस्राक्षस्यैव, इन्द्रः सहस्राक्षः इत्यादि प्रसिद्धपदसामानाधिकरण्यस्थले इन्द्रपदार्थे सहस्राक्षाभेदस्यानुभवसिद्धत्वात् । इन्द्रमुपासीतेत्यादौ इन्द्रपदार्थे उपासनान्वयासंभवाच्च, अचेतने उपास्यत्वविरहात् । एवं, शिवादिपदानामपि अचेतनवाचकत्वे शिवाय गां दद्यात् इत्यादौ [1]तन्निष्ठफलोद्देशेन क्रियमाणत्वरूपसंप्रदानत्वस्य यागादावन्वयासंभवः, अचेतनस्य [2]फलाभावात् । एवं शिवादिसहस्रनाम्नां देवतावाचकत्वेन प्रसिद्धानां पर्यायत्वमपि न स्यात् । मन्त्रस्य देवतात्वे, अनुगतैकशक्यतावच्छेदकावच्छिन्न [त्वा] भावात् । एवं देवतानां वरदातृत्वश्रुतिरपि विरुद्धा स्यात्, अचेतनस्य वरदातृत्वासंभवात् ।

---

1 तन्निष्ठफलोद्देशेन –शिवनिरूपितस्वत्वरूपफलोद्देशेन । क्रियाजन्यफलभागित्वेनोद्देश्यत्वं संप्रदानत्वम् । शिवादेः स्वत्वनिरूपकत्वं स्वत्वभागित्वमिति बोध्यम् ।

2 फलाभावादिति – स्वत्वभागित्वाभावादिति यावत् ।

तस्मात् [1]मन्त्रकरणकहविस्त्यागाद्युद्देश्यत्वस्यैव देवतात्वरूपतया सचेतनेन्द्रादिः देवतेति । न च हविस्त्यागोद्देश्यत्वस्य देवतात्वरूपत्वे द्रव्यान्तरत्यागोद्देश्ये देवतात्वाभावापत्तिरिति वाच्यम् । हविःपदस्य द्रव्यसामान्यपरत्वात्, प्रयोजनविरहेणानुपादेयत्वाच्च । न च तादृशोद्देश्यताया देवतात्वरूपत्वे तादृशोद्देश्यताशून्यकालेऽदेवतात्वप्रसङ्ग इति वाच्यम् । यदा कदाचित् तादृशोद्देश्यतावत्त्वस्यैव तथात्वात् । न च यदा कदाचिदुद्देश्यत्वस्य तथात्वे, (इन्द्रिय) [इन्द्र] शरीरानवच्छेद्यतादशायामपि (इन्द्रियात्मनः) [इन्द्रात्मनः] देवतात्वापत्तिरिति वाच्यम् । (इन्द्रियादि) [इन्द्रादि] शरीरस्यैव त्यागोद्देश्यत्वात् । न च शरीरस्यैव देवतात्वे आत्मन्यतिव्याप्तिः, तत्रापि त्यागोद्देश्यतासत्त्वादिति वाच्यम् । आत्मव्यावृत्तोद्देश्यताया एव लक्षणघटकत्वात् । न च शरीरस्य देवतात्वे, देवताया [2]अचेतनत्वापत्तिरिति

---

1 मन्त्रकरणकेति — त्यागाङ्गोच्चारणकत्वं मन्त्रस्य त्यागकरणत्वं बोध्यम् ।

2 अचेतनत्वापत्तिरिति — तथा च देवताचैतन्यसिद्धान्तविरोध इति भावः ।

वाच्यम् । [अवच्छेदकतासंबन्धेन ज्ञानाधारतया [1]शरीरस्यापि चेतनत्वात् । ब्राह्मणाद्युद्देश्यकत्यागे न ब्राह्मणस्य देवतात्वम्] तत्त्यागस्य मन्त्रकरणकत्वाभावात्, 'इन्द्राय स्वाहा' इत्यादेरेव मन्त्रत्वात् । अत एव, प्रेतोद्देश्यकत्यागस्यापि मन्त्रकरण-कत्वाभावात् न प्रेतस्य देवतात्वम् । न च तथापि कन्यात्या-गोद्देश्यत्वात् जामात्रादौ देवतात्वापत्तिः, तत्त्यागस्य 'कोऽदात्' इत्यादिमन्त्रकरणकत्वादिति वाच्यम् । तन्मन्त्रस्य प्रति-गृहीतृपठनीयत्वेन [2]करणत्वाभावात् । शूद्रादेस्तु नमःपदस्य मन्त्रत्वात् तत्करणक[3]पार्वणोद्देश्यतत्पित्रादेर्दैवतात्वमेव । न च नमःपदस्य मन्त्रत्वे तत्करणकप्रेतश्राद्धोद्देश्यप्रेतस्य देव-तात्वापत्तिरिति वाच्यम् । तत्स्थलीयनमःपदस्य मन्त्रत्वानङ्गी-कारात्, [4]शक्तिसंबन्धेन मन्त्रपद [व]त्त्वस्यैव मन्त्रत्वरूपत्वात् ।

---

1 शरीरस्यापीति — समवायेन ज्ञानाश्रयस्येवेत्यादिः ।

2 करणत्वाभावादिति — कन्यात्यागाङ्गोच्चारणकत्वाभावेन कन्या-त्यागकरणत्वाभावादित्यर्थः ।

3 पार्वणोद्देश्येति — पार्वणश्राद्धात्मकत्यागोद्देश्येत्यर्थः ।

4 शक्तिसंबन्धेनेति — मन्त्रः इत्यभियुक्तप्रयोगविषयस्यैव मन्त्र-पदशक्यत्वस्वीकारादिति भावः ।

## देवतात्वशरीरे उद्देश्यत्वनिवेशःव्यर्थः, मन्त्रस्य करणत्वे मानाभावेनासंभवश्चेति आक्षेपः

ननु, मन्त्रकरणकहविर्भागित्वमेव देवतात्वमस्तु, किमुद्देश्यत्वपर्यन्तनिवेशेन। नचैवं मुक्तस्य पित्रादेः श्राद्धे, 'आकाशाय स्वाहा' इत्यादौ आकाशादेश्चा[1]संग्रहः तस्य हविर्भागित्वाभावात्। उद्देश्यतायाश्च विसंवादीच्छामादाय तत्रापि संभवादिति वाच्यम्। एवं सति इन्द्रोद्देश्यकत्यागमन्त्रस्य करणत्वे मानाभावेनासंभवस्य दुर्वारत्वादिति चेत्।

---

## सदलप्रयोजनं निष्कृष्टदेवतात्वस्वरूपवर्णनम्

अत्राहुः—मन्त्रोच्चारणपूर्वकतया विधिबोधितो यस्त्यागः तत्र हविःसंबन्धितया विषयत्वे तात्पर्यान्न कोऽपि दोषः। आकाशादेरचेतनत्वेऽपि हविःस्वामित्वेन तादृशत्यागविषयत्वाक्षतेः, तदुद्देश्यकत्यागस्य आकाशाय स्वाहेत्यादिमन्त्रपूर्वकत्वेनैव [शास्त्रबोधितत्वात्।] दानस्यापि तुभ्यं संप्रददे इत्यादि-

---

1 असंग्रहइति— मुक्ते पितरि, आकाशादेश्चाव्याप्तिरिति भावः।

वाक्योच्चारणपूर्वकत्वेन [1]शास्त्रबोधितत्वात् मन्त्र (मयेत) [पद] निवेशः । घृतादेरपि देवतासंबन्धादिप्रकारेण त्यागविषयतया [2]तत्रातिव्याप्तिवारणाय हविःसंबन्धितयेति । कोऽदात् इत्यादि-मन्त्रपाठपूर्वकत्वेन विधिबोधिते [3]प्रतिग्रहे द्रव्यसंबन्धितया प्रतिग्रहीतुर्विषयतया [4]तत्रातिप्रसङ्गवारणाय त्यागत्वनिवेशः इति संक्षेपः ॥

---

## पदानां शक्तिविचारः

### गवादिपदानां गोत्वादिविशिष्टव्यक्तौ शक्ति.

नन्वेवं पदानां कार्यान्विते, अन्विते वा शक्तिविरहे कुत्र गवादिपदानां शक्तिरिति चेत् ।

---

1 शास्त्रबोधितत्वादिति — तथा च दानसंप्रदानब्राह्मणादेः देवतात्वापत्तिरिति भावः ।

2 तत्र — घृतादौ ।

3 प्रतिग्रहे — इयं मे भवत्विति इच्छात्मकस्वीकारविशेषे ।

4 तत्र — प्रतिगृहीतृनामादौ ।

अत्राहुः-गवादिपदानां गोत्वादिविशिष्टगवादिव्यक्तौ शक्तिः। [1]'जात्याकृतिव्यक्तयः पदार्थः' (न्या. सू. 2-2-65) इति सूत्रे च आकृतिपदं वैशिष्ट्यपरम् । [2]सामान्यलक्षणोपगमे तया सर्वत्र गवि शक्तिग्रहसंभवात् । तदनुपगमे च समानप्रकारकत्वेन [हेतु] हेतुमद्भावोपगमान्न दोषः । पिष्टमय्यो गावः

---

1 ननु न्यायसूत्रे — अवयवसंस्थानात्मकाकृतेरपि पदार्थत्वोक्तेः कथं जातिविशिष्टव्यक्तावेव शक्तिः, इत्यत आह— जात्याकृतीति । अत्रेदमवधेयम् 'व्यक्त्याकृतिजातयस्तु पदार्थः' इति न्यायसूत्रपाठः । तत्सूत्रानन्तरं निर्दिष्टक्रमानुसारेण व्यक्तेः, आकृतेः, जातेश्च लक्षणबोधकानि त्रीणि सूत्राणि वर्तन्ते, व्यक्तिर्गुणविशेषाश्रयो मूर्तिः (न्या. सू. २-२-६६) आकृतिर्जातिलिङ्गाख्या (न्या. सू. २-२-६७) समानप्रसवात्मिका जातिः (न्याः सू. २-२-६८) इति । तत्रावयवसंस्थानमेवाकृतिपदेन विवक्षितम् । कौस्तुभकारास्तु, जातिः वैशिष्ट्यं व्यक्तिरिति त्रिषु पदस्यैका शक्तिः, जातिविशिष्टव्यक्तौ शक्तिरिति प्रवादस्यायमेवार्थः इति सिद्धान्तमभिसन्धाय तस्य सूत्रारूढत्वोपपादनाय, आकृतिपदस्य वैशिष्ट्य (संबन्ध) परत्वमभिधाय, 'जात्याकृतिव्यक्तयः पदार्थः' इति व्युत्क्रमेण पदानि विन्यस्य न्यायसूत्रमुदजह्रुः ।

2 सामान्यलक्षणोपगमे — सामान्यलक्षणप्रत्यासत्तेरङ्गीकारे ।

इत्यादौ च गवादिपदं गोसंस्थानसदृशसंस्थानवति [1]लाक्षणिकम् । अतो न तत्रानुपपत्तिरिति ।

---

## जातिः पदशक्यतावच्छेदिकैव, न पदशक्येति दीधितिकारादिमतनिरूपणम्

दीधितिकारादयस्तु, गवादिपदानां व्यक्तावेव शक्तिः, न गोत्वाद्यंशेऽपि । न चैवं शाब्दबोधप्रयोजकशक्त्यभावात् गोत्वादीनां शाब्दबोधे प्रकारतया भानानुपपत्तिरिति वाच्यम् । पदार्थांशे गोत्वादिधर्मस्य शाब्दबोधप्रकारतायां [2]तदंशे तत्पदशक्यतावच्छेदकत्वस्यैव प्रयोजकत्वात् । शक्यतावच्छेदकत्वं च संकेतीय–तत्पदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपितविशेष्यतावच्छेदकत्वम्, न तु बोधविषयतावच्छेदकतया

---

1 लाक्षणिकमिति — तत्र गोत्वजातिवैशिष्ट्याभावेन शक्त्या गोपदेन बोधासंभवादिति भावः ।

2 तदंशे — गोत्वाद्यंशे ।

संकेतविषयत्वरूपं विशेषणविधया वाच्यत्वम् । तथाच तद्धर्मप्रकारकशाब्दबोधे तद्धर्मावच्छिन्नत्वविशिष्ट [1]तादृशविशेष्यतासंसर्गकशक्तिज्ञानस्यैव कारणत्वमिति [2]नोक्तानुपपत्तिः ।

यत्तु, एवमपि शक्तिज्ञानाधुनिकसंकेतज्ञानयोः एकरूपेणैव हेतुतया यत्र द्रव्यपदात् गुणवत्त्वादिना द्रव्यं बोद्धव्यमित्याकारकः कस्य चित् संकेतः, द्रव्यत्वाद्यवच्छिन्नतादृशविशेष्यतासंबन्धेन गृहीतः, तत्र तादृशसंकेतग्रहात् [3]द्रव्यत्वेन द्रव्यबोधापत्तिः, गुणवत्त्वादिप्रकारकबोधानुपपत्तिश्चेति दूषणोद्भावनम् ।

तदसत् । द्रव्यपदात् गुणवत्त्वादिना द्रव्यं बोद्धव्यम् इत्येतादृशसंकेते द्रव्यांशे द्रव्यत्वस्य प्रकारत्वेऽपि

---

1 तादृशविशेष्यतेति—तत्पदजन्यशाब्दबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतेत्यर्थः ।

2 नोक्तानुपपत्तिः — गोत्वादीनां शाब्दबोधे प्रकारतया भानानुपपत्तिर्न ।

3 द्रव्यत्वेन द्रव्यबोधापत्तिरिति — संकेतीयद्रव्यपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतावच्छेदकत्वस्य शाब्दे प्रकारतया भानप्रयोजकस्य द्रव्यत्वे सत्त्वात् गुणवत्त्वे विरहाच्चेत्यर्थः ।

[1]विशेष्यतावच्छेदकताया गुणवत्त्वे एव स्वीकारेणो[2]क्तानुपपत्त्यभावादिति प्राहुः ।

---

## पदानां जातावेव शक्तिरिति प्राभाकरमतनिरूपणम्

प्राभाकरास्तु, गवादिपदानां गोत्वादिविशिष्टे शक्तिकल्पने गौरवात्, नागृहीतविशेषणन्यायेन गोत्वादौ शक्तिकल्पनस्यावश्यकत्वाच्च लाघवेन केवलगोत्वादावेव शक्तिः । न चैवं गवादिपदात् गोत्वादिविशिष्टान्वयबोधानुपपत्तिः, विशिष्टे शक्तिविरहादिति वाच्यम् । गोत्वादिविशिष्टशाब्दत्वस्यैव गोत्वादिशक्तिज्ञानकार्यतावच्छेदकत्वोपगमेन केवलगोत्वादिशक्तिज्ञानादेव [3]विशिष्टान्वयबोधसंभवात् ।

---

1 विशेष्यतावच्छेदकतायाः — संकेतीय द्रव्यपदजन्य गुणवत्त्वप्रकारकबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतारूप विषयताविशेषस्य ।

2 उक्तानुपपत्त्यभावात्—द्रव्यत्वेन बोधप्रसङ्गस्य गुणवत्त्वेन बोधानुदयापत्तेश्चाभावात् ।

3 विशिष्टान्वयबोधसंभवादिति — तथाच जातिभासकसामग्र्यव व्यक्तिभासिकेति भावः ।

अथैवं पश्वादिपदस्थलेऽपि पशुत्वाद्युपाधिशक्तिज्ञानस्यैव पशुत्वादिविशिष्टशाब्दबोधत्वस्य कार्यतावच्छेदकत्वोपगमेन पशुत्वादिशक्तिज्ञानादेव पशुत्वादिविशिष्टबोधोपपत्तौ तत्रापि विशिष्टशक्त्युच्छेदः । न चेष्टापत्तिः । उपाधिप्रवृत्ति-निमित्तकस्थले [1]विशिष्टे एव शक्तिरिति तत्सिद्धान्तविरोधादिति चेन्न ।

[2]जातेर्व्यक्तिवेद्यत्वनियमेन जातिप्रवृत्तिनिमित्तस्थले उक्तरीतेः संभवेऽपि, उपाधेर्व्यक्तिवेद्यत्वनियमाभावेन तत्रोक्तरीते-रसंभवेन तत्र विशिष्टशक्त्यङ्गीकारस्यावश्यकत्वात् । न च गोत्वादौ शक्त्युपगमे गोत्वं गोपदशक्यमिति शक्तिज्ञानहेतुतायां गोत्वत्वादेः विशेष्यतावच्छेदकतया निवेशे (नैवं) [[3]गौरवम्] । विशिष्टशक्तिस्वीकारे च गौर्गोपदशक्येति शक्तिज्ञानहेतुतायां

---

1 विशिष्टे एव — लोमवल्लाङ्गूलादिविशिष्टत्वरूपपशुत्वादि-विशिष्टे एव ।

2 जातेर्व्यक्तिवेद्यत्वनियमेन — अनवच्छिन्नजातिविषयतायाः (जात्याश्रय) व्यक्तिविषयतानिरूपितत्वनियमेन । घटः इत्या-कारके स्वरूपतः घटत्वविषयकज्ञाने व्यक्तिभानस्य नियतत्वा-दिति भावः ।

3 गौरवमिति — सखण्डस्य गोत्वत्वस्य गवेतरासमवेतत्वे सति सकलगोवृत्तित्वरूपस्य गुरुभूतत्वादिति भावः ।

गोत्वादेः विशेष्यतावच्छेदकतया निवेशे [1]लाघवमिति विशिष्ट-शक्तिस्वीकार एवोचित इति वाच्यम्। गोत्वादौ शक्तिस्वीकारेऽपि तादात्म्येन गोत्वादेरेव विशेष्यतावच्छेदकतया निवेशेन गौरवाभावादिति वदन्ति।

---

## उक्तजातिशक्तिवादस्य निरासः

तदसत्। केवलजातिशक्तिस्वीकारे गवादिपदात् कदाचित् समवायेन गोत्वादिविशिष्टस्य बोधः, कदाचिच्च कालिकसंबन्धेन गोत्वादिविशिष्टस्य बोधः इत्यत्र [2]नियामकाभावप्रसङ्गात्। विशिष्टशक्तिस्वीकारे च यदा समवायेन गोत्वादिविशिष्टे शक्तिज्ञानं, तदा समवायेन गोत्वादिविशिष्टस्य शाब्दबोधः; यदा च कालिकसंबधेन गोत्वादिविशिष्टे शक्तिज्ञानं, तदा कालिकसंबन्धेन गोत्वादिविशिष्टस्य शाब्दबोधः इति नियमसंभवात्। न च केवलगोत्वादिशक्तिज्ञानादेव

---

1 लाघवमिति — गोत्वस्य जात्यात्मनः अखण्डत्वादिति भावः।
2 नियामकाभावेति — जातेः व्यक्तिवेद्यत्वेन समवायेन गोत्व-विशिष्टस्यैव भानं स्यादिति भावः।

तात्पर्यवशात् तत्तत्संबन्धेन गोत्वादिविशिष्टशाब्दबोधनियमसंभव इति वाच्यम् । सत्यपि तात्पर्यज्ञाने [1]वृत्तिज्ञानं विना शाब्दबोधानुदयात् । किञ्च, प्रत्यक्षे जातेर्व्यक्तिवेद्यत्वनियमेऽपि शाब्दबोधे तथा नियमाभावेन उक्तरीत्या केवलजातिशक्तिज्ञानात् विशिष्टान्वयबोधो दुरुपपाद इति विशिष्टशक्तिस्वीकार आवश्यकः इति दिक् ।

---

## शब्दानां चतुर्धा विभागः

इत्थं विशिष्टवाचकत्वेन व्यवस्थितेषु शब्देषु केचन शब्दाः केवलयौगिकाः । यथा पाचक—पाठकादयः । केचन केवलरूढाः । यथा गवादिशब्दाः । केचन योगरूढाः पङ्कजादिशब्दाः । केचन यौगिकरूढाः । यथा उद्भिदादिशब्दाः ।

---

1 वृत्तिः - शक्ति-लक्षणान्यतरात्मकः संबन्धः ।

## पङ्कजादिपदे रूढिशक्तिरावश्यकी

ननु पङ्कजादिशब्दस्य यौगिकत्वमेवास्तु, किं रूढ्येति चेन्न । पङ्कजादिशब्दात् [1]योगशक्त्या कुमुदादिशाब्दबोधापत्तिवारणाय [2]तत्र रूढिस्वीकारस्यावश्यकत्वात् । (तत्त्वं च) [न च] रूढिस्वीकारेऽप्यापत्तिर्दुर्वारेति वाच्यम् । रूढिज्ञानस्य [3]प्रतिबन्धकत्वोपगमेनोक्तापत्तिवारणात् । तदुक्तं 'रूढेर्योगापहारिता' इति ।

---

## पद्मान्यविशेष्यकयोगार्थबुद्धौ रूढिज्ञानस्य प्रतिबन्धकत्वासंभवशङ्का

ननु पद्मान्यविशेष्यकपङ्कजनिकर्तृत्वप्रकारकशाब्दत्वावच्छिन्नं प्रति पङ्कजपदं(अ)[पद्मे]शक्तमित्याकाररूढिज्ञानत्वेन प्रतिबन्धकत्वासंभवः, तादृशरूढिज्ञानकाले कर्दमजादि-

---

1 योगशक्त्या —पङ्कजपदावयवशक्त्या

2 तत्र — पङ्कजशब्दस्य पद्मे ।

3 प्रतिबन्धकत्वोपगमेनेति – पङ्कजनिकर्तृत्वादिना कुमुदादि बोधे इत्यादिः ।

पदात् [1]ताद्रूप्येण कुमुदादिबोधानुदयप्रसङ्गात् । न च पङ्कजपदजन्यतादृशशाब्दत्वावच्छिन्नं प्रति उक्तरूपेण रूढिज्ञानस्य प्रतिबन्धकत्वोपगमान्नोक्तदोष इति वाच्यम् । तथा सत्यपि उक्तरूढि ज्ञानकाले समुदायलक्षणया पङ्कजपदात् पङ्कजनिकर्तृत्वेन कुमुदादेर्बोधानुपपत्तेः । [2]लक्षणाग्रहस्योक्तरूढिज्ञानप्रतिबन्धकतायामुत्तेजकत्वकल्पने गौरवादिति चेन्न ।

उक्तप्रतिबध्यप्रतिबन्धकभावनिष्कर्षवर्णनम्

[3]अवयवशक्त्या पङ्कजपदजन्यपद्मान्यविशेष्यकपङ्कजनिकर्तृत्वप्रकारकशाब्दत्वावच्छिन्नं प्रति उक्तरूढिज्ञानत्वेन प्रतिबन्धकत्वात् । न चैवं कुमुदादावेव पद्मत्वेन भ्रमात्मक-

1 ताद्रूप्येण — पङ्कजनिकर्तृत्वेन ।

2 ननु पङ्कजपदजन्यपद्मान्यविशेष्यकपङ्कजनिकर्तृत्वप्रकारकबोधं प्रति समुदायलक्षणाग्रहाभावविशिष्टं पङ्कजपदं पद्मे शक्तमिति रूढिज्ञानं प्रतिबन्धकम् । अतो न लक्षणया बोधानुपपत्तिः, इत्यत आह— लक्षणाग्रहस्येति ।

3 अवयवशक्त्येति — तथाच समुदायलक्षणया पङ्कजनिकर्तृत्वेन कुमुदबोधस्य नानुपपत्तिरिति भावः ।

रूढिज्ञानकाले ताद्रूप्येण कुमुदादिबोधानुपपत्तिः, उक्तरूढिज्ञानरूपप्रतिबन्धकसत्त्वादिति वाच्यम् । पद्मान्यविशेष्यकेत्यनेन पद्मत्वानवच्छिन्नविशेष्यताकत्वस्य विवक्षणात् । न चैवमुक्तरूढिज्ञानसत्त्वे पङ्कजपदं कुमुदे शक्तमिति रूढिज्ञानकाले पद्मस्येव कुमुदादेरपि अवयवशक्त्या पङ्कजनिकर्तृ कुमुदमित्यादिबोधो न स्यादिति वाच्यम् । (इष्टापत्तेः) पङ्कजपदविशेष्यककुमुदादिशक्तत्वप्रकारकज्ञानाजन्यत्वस्यापि प्रतिबध्यतावच्छेदककोटौ निवेशनीयत्वात् ।

वस्तुतस्तु स्वसामानाधिकरण्य—स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसंबन्धेनोक्तरूढिज्ञानविशिष्टान्यशाब्दत्वमेवोक्तरूढिज्ञानप्रतिबध्यतावच्छेदकम्, लाघवात् । [1]तावतैवोक्तदोषवारणसंभवाच्चेति सारम् ।

---

1 तावतैवोक्तदोषवारणसंभवाच्चेति—निरुक्तस्थलीयस्य पङ्कजनिकर्तृ कुमुदमिति बोधस्य उक्तरूढिज्ञानविशिष्टत्वेन तदप्रतिबध्यत्वादिति भावः ।

पङ्कजनिकर्तृ कुमुदमिति शाब्दापरेरसभवशङ्का, तत्परिहारश्च

ननु, योग्यताज्ञानस्य धर्मितावच्छेदकभेदेन भिन्नहेतुताकतया कुमुदत्वादिधर्मितावच्छेदकक पङ्कजनिकर्तृत्व प्रकारकशाब्दत्वावच्छिन्नं प्रति तादृशयोग्यताज्ञानस्य हेतुत्वाकल्पनेन [1]आपादकाभावादेव [निरुक्तशाब्दापत्त्यसंभवः। न च योग्यताज्ञानस्यात्मनिष्ठप्रत्यासत्त्या]हेतुत्वे गौरवात् धर्मितावच्छेदकनिष्ठप्रत्यासत्त्यैव हेतुत्वं कल्प्यते इति पङ्कजनिकर्तृत्वप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन कुमुदत्वादौ शाब्दत्वावच्छिन्नापत्तौ क्रियमाणायां फलतः पङ्कजं कुमुदमित्यादिशाब्दापत्तिर्दुर्वारैवेति वाच्यम्। तथापि कुमुदं कुमुदमित्यादौ शाब्दवारणाय कुमुदत्वभिन्नवृत्तिविषयता संबन्धेन शाब्दत्वावच्छिन्नं प्रति कुमुदत्वादिभेदस्य हेतुत्वावश्यकतया, योग्यताज्ञानेन शाब्दत्वावच्छिन्ने जननीये कुमुदत्वादिभेदस्य सहकारित्वकल्पनेनैव उक्तशाब्दापत्त्यभावात्। पङ्कजनिकर्तृत्वनिष्ठप्रकारतानिपितविशेष्यतावच्छेदकतासबन्धेन शाब्दत्वावच्छिन्नस्य कुमु-

---

1 आपादकाभावादेवेति — शाब्दसामग्रीविरहादिति भावः।

दत्वादिभिन्ने एव जायमानत्वात् कुमुदत्वादावजायमानत्वाच्चेति चेत् ।

नैवम्, इच्छाविशिष्टविरोधिसामग्र्यभावस्य, भिन्नविषयकानुमितिसामग्र्यभावस्य[1] च विना धर्मितावच्छेदकनिवेशनं कार्यकारणभावासंभवेन तद्बलादुक्तशाब्दस्यात्मन्यापत्तिवारणाय रूढिज्ञानस्य प्रतिबन्धकताया आवश्यकत्वात् । लक्षणया पङ्कजादिपदात् [2]पङ्कजं कुमुदमित्यादिशाब्दस्य जायमानत्वेन कुमुदत्वादिभेदस्योक्तरीत्या सहकारित्वकल्पनाया असंभवाच्च ।

---

### रूढिज्ञानस्य प्रतिबन्धकत्वे मानाभावः इति मणिकृतां मतम्, तन्निरासश्च

मणिकृतस्तु, नियमतो रूढ्या स्मृतं पद्ममेव व्यक्ति-

---

1 भिन्नविषयकानुमितिसामग्र्यभावस्य चेति — प्रतिबन्धकाभावविधया शाब्दसामग्रीप्रविष्टस्येति शेषः ।

2 पङ्कजं कुमुदमिति — पङ्कजनिकर्तृ कुमुदम् इति शाब्दबोधस्य ।

वाचक [1]ड प्रत्ययेन पङ्कजनिकर्तृतया अनुभाव्यते, [2]व्यक्ति-[वा]चिनां संनिहितविशेषपरत्वनियमात् इति रूढिज्ञानस्य प्रति-बन्धकत्वे मानाभाव: इत्याहुः ।

तदसत् । उक्तरीत्या (ये) (पङ्के) नैव सह प्रथमं योगार्थस्य अन्वयबोधेऽपि, कुमुदादितात्पर्यग्रहवशात् पुनः पङ्कजपदानुसन्धानेन योगादेव कुमुदादिशाब्दधीवारणाय रूढि-ज्ञानस्य प्रतिबन्धकताया आवश्यकत्वात् ।

---

## पद्मत्वं प्रयोगोपाधिरिति रूढिज्ञानस्य प्रतिबन्धकत्वं नेति मीमांसकमतनिरूपणम्

मीमांसकास्तु, पद्मत्वस्य [3]प्रयोगोपाधित्वाभ्युपगमेनैवोक्ता-पत्तिवारणे रूढिज्ञानस्य प्रतिबन्धकतायां मानाभावः । तथाहि-

---

1 डप्रत्ययेन — जन्युत्तरेण डप्रत्ययेन ।

2 व्यक्तिवाचिनामित्यादि — घटमानयेत्यादिवाक्यात् संनिहित-घटव्यक्तिविषयकस्यैव बोधस्योदयादिति भावः ।

3 प्रयोगोपाधीति — प्रयोगे निमित्तभूतं प्रयोगोपाधिरिति व्यवह्रियते ।

पङ्कजनिकर्तृत्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दत्वावच्छिन्नं प्रति तादात्म्येन पद्मत्वस्य हेतुत्वकल्पनान्नोक्तापत्तिः । पद्मत्वं प्रयोगोपाधिः' इति प्राचीनप्रवादस्याप्युक्त एवार्थः ।

---

### प्राचीन प्रवादस्यार्थान्तरकथनं, तन्निरासश्च

यत्तु, पङ्कजनिकर्तृत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दत्वावच्छिन्ने समवायेन पद्मत्वं हेतुरिति तस्यार्थ इति । तदसत् । अतीतानागतपद्मादावपि तादृशसंबन्धेन शाब्दस्योत्पत्त्या तत्र[1] तत्प्राक्काले समवायेन पद्मत्वस्याभावेन व्यभिचारात्, अतीतानागतादौ [2]सविषयकस्यैव वृत्तेः । अत

---

1 तत्र तत्प्राक्काले — अतीतानागतपद्मादौ शाब्दबोधोत्पत्तिप्राक्काले ।

2 सविषयकस्यैवेति — अतीतविषयकमिदानीं जायमानं ज्ञानं विषयतया अतीते वर्तते । एवं अनागतविषयिणी इच्छापि अनागते विषयतया वर्तते इति ज्ञेयम् ।

एव [1]जातः संबद्धश्चेत्येकः कालः इति प्रवादोऽपि साधु संगच्छते ।

---

## उक्त प्रवादस्यापरार्थवर्णनम्, तन्निरासश्च

यदपि, तादृशसंबन्धेन शाब्दत्वावच्छिन्ने पद्मत्वाभावः प्रतिबन्धकः इत्युक्तप्रवादार्थः । तत्र च नोक्तव्यभिचारः, अतीतानागतादौ पद्मत्वस्येव पद्मत्वाभावस्याप्यभावादिति । तदप्यसत् । तथा सति यद्देशावच्छेदेन यदा कार्योत्पत्तिः तद्देशावच्छेदेन तत्प्राक्काले तत्सामग्री इत्याकारक-सामग्री-व्याप्तिविलयप्रसङ्गात् । न च यद्देशवृत्तिसामग्री यदा, तद-व्यवहितोत्तरकाले तद्देशवृत्तिकार्योत्पत्तिः इत्याकारिकाया एव सामग्रीव्याप्तेरुपगमान्न दोषः । अतीतानागतपद्मलक्षणदेशवृत्तिपद्मत्वस्येदानीं सत्त्वेन तद्देशवृत्तिकार्योत्पत्तिसंभवादिति

---

1 जात इत्यादि — पद्मोत्पत्तिक्षणे पद्मत्वसंबन्धो भवति । अतः अतीते पद्मत्वसंबन्धो नास्तीति उक्तप्रवादेन गम्यते इत्यर्थः ।

वाच्यम् । तथा सति मण्यादिमति कालेऽपि दाहाद्यापत्तिः, तद्देशवृत्तिमण्याद्यभावस्य भूतलाद्यवच्छेदेन तत्काले सत्त्वेन तद्देशवृत्तिदाहादिरूपकार्योत्पत्तिसंभवात् । नचैवं केवलपङ्कज-पदात् [1]निर्धर्मितावच्छेदक,पङ्कजनिकर्तृत्वप्रकारककुमुदादिबोधोऽपि स्यादिति वाच्यम । इष्टापत्तेः, कुमुदत्वादिधर्मितावच्छेद-कपङ्कजनिकर्तृत्वप्रकारकशाब्दस्यैवानभ्युपगमात् ।

वस्तुतस्तु, पङ्कजनिकर्तृत्वनिष्ठप्रकारतानिरूपितविशेष्यता - संबन्धेन शाब्दत्वावच्छिन्ने पद्मवृत्तित्वविशिष्टविषयतासंबन्धेन ज्ञानत्वेनैव रूढिज्ञानस्य हेतुत्वम् । अतो न कोऽपि दोषः । [2]उक्तप्रवादस्या प्यत्रैव[3] तात्पर्यमित्याहुः ।

---

1 निर्धर्मितावच्छेदकेति —पङ्कजनिकर्तृ इत्याकारकः कुमुदविषय-कबोध इत्यर्थः ।

2 उक्तप्रवादस्य — पद्मत्वं प्रयोगोपाधिरिति प्रवादस्य ।

3 अत्रैव — ईदृशकार्यकारणभावे एव ।

## उक्तमीमांसकमतनिरास:

तदसत् । लक्षणादिजन्यकुमुदादिशाब्दबोधे व्यभिचारात् । शक्तिजन्यत्वस्य जन्यतावच्छेदके निवेशेनोक्तव्यभिचारवारणेऽपि, समुदायरूढिशक्त्यग्रहदशायां पङ्कजपदात् पङ्कजनिकर्तृत्वेन कुमुदादिशाब्दबोधानुदयप्रसङ्गस्य दुर्वारत्वात् । स्वसामानाधिकरण्य-स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसंबन्धेन रूढिज्ञानवत्त्वस्य जन्यतावच्छेदके निवेशे, रूढिज्ञानकाले योग्यतादिज्ञानरूपसामान्यसामग्रीबलात् पङ्कजनिकर्तृत्वेन कुमुदादिबोधापत्तेर्दुर्वारत्वात् । रूढिज्ञानवदन्यतादृशबोधे रूढिज्ञानाभावस्यातिरिक्तहेतुत्वोपगमे चातिगौरवापत्त्या, रूढिज्ञानप्रतिबन्धकत्वस्यैव सम्यक्त्वात् ।

---

## पङ्कजपदं रूढमेव न योगरूढमिति वैयाकरणमत निरूपणं तन्निरासश्च

वैयाकरणास्तु, रूढिज्ञानप्रतिबध्यतायां पद्मान्यविशेष्यकत्वनिवेशे गौरवेण पङ्कजनिकर्तृत्वप्रकारकबोधमात्रे रूढि-

ज्ञानस्य प्रतिबन्धकतया तद्दशायां पङ्कजनिकर्तृत्वेन पद्मस्यापि न बोधः। किन्तु पद्मत्वेनैवेति पङ्कजादिपदं रूढमेवेति योगरूढः शब्दो नास्त्येव। तदुक्तम्—

'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी।
पङ्कजं यमुना देवो पद्मनाभो युधिष्ठिरः॥' इति

इत्याहुः।

तदसत्। पङ्कजमस्तीति वाक्यात् पङ्कजनिकर्तृपद्ममस्तीत्याद्याकारकबोधस्य सर्वानुभवसिद्धतया प्रामाणिकगौरवस्यादोषत्वात्। [1]वस्तुतस्तु इत्याद्युपदर्शितरीत्या [2]अस्माकमपि पद्मान्यधर्मिकत्वस्यानि[3]वेशाच्चेति दिक्।

---

1 वस्तुतस्तु इत्याद्युपदर्शितरीत्येति — स्वसामानाधिकरण्यस्वान्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसंबन्धेन उक्तरूढिज्ञानविशिष्टान्यशाब्दं प्रति रूढिज्ञानं प्रतिबन्धकमित्युक्त रीत्येत्यर्थः।
2 अस्माकमपि — योगरूढमङ्गीकुर्वतामस्माकमपि।
3 अनिवेशादिति — रूढिज्ञान प्रतिबध्यतायामित्यादिः।

धेनुशब्दः रूढ एव न योगरूढः

अत्रेदं बोध्यम् । धेनुपदं गोत्वविशिष्टे [1]धानकर्मणि रूढमेव । न तु योगरूढम् । न च 'दाभाभ्यां नुः' (उ-सू-३-३१२) 'धेट इच्च' (उ-सू-३-३१४) इत्यनुशासनात् [2]योगशक्तिर्दुर्वारेति वाच्यम् । तस्योणादिसूत्रत्वेन कथं [3]चित् व्युत्पादनपरत्वात् । अलं वदतीत्यलवत् तं डाति-क्षिपतीत्यलवड् इत्यादिवत् । उणादिप्रत्यये शक्तिकल्पने मानाभावात्, समुदायशक्तौ लाघवाच्च । अत एव पाणिनिः [4]पञ्चपादिकाविहितान् उणादिप्रत्ययान् 'उणादयो बहुलम्' (पा. सू. ३-३-१)

---

1 धानकर्मणीति — प्रसूता गौः धेनुः, तां वत्सः धयति । अतः वृषभः, महिषी वा न धेनुपदेनोच्यते ।

2 योगशक्तिः — अवयवशक्तिः । धानकर्मत्वे इति शेषः ।

3 कथं चित् व्युत्पादनपरत्वादिति — मणावपि इदं दृश्यते । तत्र प्रकाशकाराः 'अलवड्डादे क्वचिदर्थे कथं चित् व्युत्पादनसंभवेऽपि अवयवानपेक्षस्यैव काष्ठप्रतिमाकारवाचित्वं, तथौणादिकप्रत्ययान्तस्यापि' इति विवृण्वन्ति ।

4 पञ्चपादिकाविहितान् — पञ्चभिः पादैः विहितान् ।

इत्येकेनैव सूत्रेण विहितवान् । यत्र च प्रत्यये शक्तिः, तत्र प्रत्येकमेवासूत्रयत् ।

---

## धेनुपदस्य धानकर्मत्वं शक्यम्, गोत्वं शक्त्युपाधिः इति मतनिरूपणं तन्निरासश्च

यत्तु धेनुपदस्य गोत्वं न शक्यम्, किन्तु उपलक्षणीय शक्यानुगमकशक्त्युपाधिः । गोत्ववत्सु धानकर्मसु धेनुपदशक्तेः । गोत्वांशे तु न शक्तिस्पर्शोऽपि, तस्य शक्तिग्रहाहित संस्कारादेवोपस्थितस्य शाब्दधीविषयत्वसंभवात् । न च [1]लाघवात् गोत्वं शक्यम्, धानकर्मत्वं शक्त्युपाधिः इत्येवास्तु विनिगमनाविरहादिति वाच्यम् । गोत्वजातेः शक्यत्वे तुल्यवित्तिवेद्यतया व्यक्तिलाभसंभवे व्यक्तेरशक्यतापत्तेः । तथा च धानकर्मत्वस्य गोत्वनिष्ठशक्त्युपाधित्वासंभवे धानकर्मत्वभानं न स्यात्, वृषभादिबोधश्च स्यात् इत्यस्यैव विनिगमकतया धानकर्मत्वरूपोपाधिविशिष्टे धर्मिण्येव शक्तिरिति ।

---

1 लाघवादिति — अखण्डतयेति भावः ।

(तत्र) [तन्न] धानकर्मत्वस्याननुगतत्वेनाति[1]प्रसक्ततया च शक्यतावच्छेदकत्वासंभवादिति ।

---

योगरूढ-यौगिकरूढयोर्वैलक्षण्यम्

अथ यौगिकरूढस्य योगरूढा[2]दवैलक्षण्ये कथं पार्थक्येनोक्तिरिति चेन्न ।

योगरूढिस्थले पङ्कजादिपदादेकदा एकस्य धर्मिणः योगरूढिभ्यां बोधः । यौगिकरूढस्थले तु उद्भिदादिपदात् कदाचित् योगशक्त्या तरुगुल्मादीनां बोधः, कदाचिच्च उद्भिदा यजेतेत्यत्र रूढिशक्त्या यागविशेषबोधः इति वैलक्षण्यस्य स्फुटत्वात् । एवमन्यत्राप्यूह्यम् ।

---

1 अतिप्रसक्ततयेति — महिष्यादावित्यादिः । महिष्यादिव्यावृत्त-तत्तद्धानकर्मत्वं तु अननुगतमिति भावः ।

2 योगरूढादवैलक्षण्ये इति—योगार्थ-रूढ्यर्थयोः योगरूढे यौगिकरूढे च भानादवैलक्षण्यम् ।

## पदशक्तिस्वरूपनिरूपणम्

शक्तिश्च ईश्वरसंकेतः । स च अस्माच्छब्दादयमर्थो बोध्यः इत्याकारकेश्वरेच्छारूपः, तद्विषयत्वरूपो वा । एतदाशयेनैव शक्तिः पदार्थान्तरमित्युक्तिः नव्यानां, विषयत्वस्य [1]पदार्थान्तरत्वात् । विवेचितं चेदमस्माभिः भवानन्दीयप्रकाशे ।

न चैवं वाच्यवाचकव्यवस्थानुपपत्तिः, [2]तस्याः [3]सर्वत्राविशेषादिति वाच्यम् । बोध्यत्वेन बोधनिष्ठजन्यतानिरूपकत्वेन च विषयतायाः यथाक्रमं वाच्य-वाचकव्यवस्थासंपादकत्वसंभवात् । नचेश्वरज्ञानादिकमादाय विनिगमनाविरह इति वाच्यम्। इच्छात्वस्याविवक्षणेन तस्यापि शक्तित्वस्येष्टत्वात् । [4]आधुनिकसंकेतस्येच्छात्वदर्शनेन इच्छाया एव तथात्वसंभवाच्च ।

---

1 पदार्थान्तरत्वादिति — ज्ञानरूपत्वस्य विषयरूपत्वस्योभयरूपत्वस्य चासंभवादिति भावः।

2 तस्याः — ईश्वरेच्छाविषयतायाः ।

3 सर्वत्र — वाच्ये अर्थे, वाचके पदे चेति यावत् ।

4 आधुनिकसंकेतस्येत्यादि—एवं च शक्तिज्ञानस्य आधुनिकसंकेतज्ञानसाधारण्येनैकक‌ारणता लाघवमिति भावः ।

## शाब्दबोधे साधुत्वज्ञानं कारणम्, शक्तिमत्त्वं साधुत्वमिति प्राचां मतम्

अत्र प्राञ्चः—

बाधति-ग्रामगाम इत्याद्यसाधुशब्दात् शाब्दबोधवारणाय साधुत्वज्ञानं शाब्दबोधजनकम्। तद्विषयसाधुत्वमपि निरुक्तशक्तिमत्त्वमेव। तथाहि-साधुत्वं न प्रतिपादकत्वम्, असाधोरपि[1]प्रतिपादकत्वात्। नाप्यनादित्वम्, 'हेलयो हेलय इति वदन्तोऽसुराः पराबभूवुः' इति वेदे श्रवणेन अनादितया हेलिशब्दस्य साधुत्वापत्तेः। लौकिकगौणलाक्षणिकयोः आधुनिकसंकेतितानां चासाधुतापत्तेः। साधुत्वं न जातिः, व्याकरणाध्येतृपुरुषवेद्य(कि)त्वादिना सांकर्यात्। नापि [2]पुण्यजनकशब्दत्वम्, परोपकारहेतावसाधौ अतिप्रसङ्गात्, अपकारहेतौ संस्कृतेऽप्रसङ्गाच्च। तस्मात् शक्तिमत्त्वमेव साधुत्वम्।

---

1 प्रतिपादकत्वादिति — शक्तिभ्रमेणेत्यादिः।

2 पुण्यजनकेति — 'एकः शब्दः सुष्टु प्रयुक्तः स्वर्गे लोके कामधुग्भवति' इति महाभाष्योदाहृतश्रुत्या साधुशब्दस्य पुण्यजनकत्वं बोध्यम्।

## अपभ्रंशस्यापि शक्तिमत्त्वेन, न साधुत्वं शक्तिमत्त्वमिति पक्षनिरूपणम्

यत्तु, एवं सति अपभ्रंशस्यापि साधुतापत्तिः, [1]तस्मात् नियमेनार्थप्रतीत्या व्यवहाराधीनव्यु[2]त्पत्तिसंभवेन तत्र शक्तिसंभवात् । नचापभ्रंशेन स्मारितात् साधुशब्दादेवार्थ प्रतीतिरिति वाच्यम् । पामराणां साधुशब्दाप्रतिसन्धानेऽपि ततोऽर्थप्रत्ययात्, तदर्थकसंकृतेनाप्रत्ययाच्च । न च तत्र शक्तिभ्रमात् बोध इति वाच्यम् । बाधकं विना भ्रमत्वासंभवात् । अन्यथा, अपभ्रंशेषु शक्तिः, साधुशब्द एव [3]तदारोपः इत्येव किं न स्यात् । न च तस्य साधुत्वे यज्ञे प्रयोगापत्तिरिति वाच्यम् । 'नापभ्रंशितवै न म्लेच्छितवै' इत्यनेन यज्ञे निषेधादेव तदनापत्तेः । युज्यते चैतत् । अन्यथा, 'साधुभिर्भाषितव्यम्' इति विधेरेव अपभ्रंशस्याप्रयोगसंभवे 'नापभ्रंशितवै' इति निषेधस्य व्यर्थत्वापत्तेः । न चापभ्रंशस्य कोशादावव्यु-

1 तस्मात् — अपभ्रंशात् ।
2 व्युत्पत्तिसंभवेन — शक्तिग्रहसंभवेन ।
3 तदारोपः — शक्तिभ्रमः ।

त्पादनात् नैवमिति वाच्यम् । कोशादौ धर्मविशेषजनकशब्दानामेव व्युत्पादनादिति ।

---

## उक्तपक्षनिराकरणम्

अपभ्रंशस्य शक्तिमत्त्वाङ्गीकारे 'अर्थवदधातुः' (पा. सू. १-२-४५)इत्यादिसूत्रेण प्रातिपदिकसंज्ञापत्तौ, तदुत्तरं 'ङ्याप्प्रातिपदिकात्' (पा. सू. ४-१-१) इति सूत्रेण विभक्त्यापत्त्या तस्य शक्तिमत्त्वानङ्गीकारात् । न चैवं तस्य साधुत्वाभावादेव यज्ञोपयोगासंभवे, 'नापभ्रंशितवै' इति निषेधवैयर्थ्यापत्तिः दुर्वारेति वाच्यम् । 'अयज्ञिया वै माषाः' इति वत् तस्य विधिप्राप्तत्वेनादोषात् ।

नचैवमपभ्रंशात् शाब्दबोधानुपपत्तिः, साधुत्वज्ञानाभावादिति वाच्यम् । व्युत्पन्नानां साधुशब्दस्मरणेन, अव्यु-

त्पन्नानां च शक्तिभ्रमेण [1]तत्संभवात् । न च [2]गवादिशब्दघटितायाः शक्तेः कथमपभ्रंशे भ्रमसंभव इति वाच्यम् । वक्ष्यमाणरीत्या तत्संभवात् । तथाहि-केनचित् गोशब्दे प्रयोक्तव्ये प्रमादात् गावीशब्दे प्रयुक्ते, व्युत्पन्नः तेन शब्देन गोशब्दमुन्नीय, [3]ततो गां प्रतीत्य [4]व्यवहृतवान् । समीपस्थो व्युत्पित्सुश्च गावीशब्दादेवायं गां प्रतीतवानित्यवगत्य, गावीशब्दमेव गोशब्दत्वेन प्रतीत्य व्युत्पादयतीति ।

---

## अपभ्रंशे शक्तिभ्रमानुपपत्तिः इति वैयाकरणाद्युक्तनिरूपणम्

यत्तु—एवमपि भ्रमानुपपत्तिः । तथाहि—तत्तत्पदपदार्थघटितेश्वरेच्छायाः गवादिपदवृत्तितया, गावीशब्दस्य

---

1 तत्संभवात् — शाब्दबोधसंभवात् ।

2 गवादिशब्दघटिताया इति — गोपदजन्यबोधविषयताप्रकारकेश्वरेच्छाया एव शक्तित्वादिति भावः ।

3 ततः — गावीशब्दोन्नीतगोशब्देन ।

4 व्यवहृतवान् — गवानयनादिकं कृतवान् ।

बोध्यत्वप्रकारकत्वावच्छिन्नेच्छा न शक्तिः, किन्तु गोशब्दस्य। [1]तत्त्वेन ग्रहश्च पामरस्य गावीशब्दात्मकापभ्रंशे न संभवति, विभिन्नानुपूर्वीकत्वरूपविशेषदर्शनसत्त्वात्, [2]साधारणधर्मदर्शनाभावाच्च। न च गावीशब्दघटितेच्छायां ईश्वरीयत्वभ्रम एव शक्तिभ्रम इति वाच्यम्। ईश्वरीय (ज्ञानतामपि) [तामजानतामपि] शाब्दबोधादिति वैयाकरणादिभिः उक्तम्।

---

### शक्तिभ्रमोपपादनेन उक्तस्य निरासः

तदसत्। मीमांसक-नैयायिकादिसाधार (ण्याय) [ण] शक्तित्व[3]स्यैक्याभावेन शक्तित्वेन शक्तिज्ञानस्य हेतुत्वासंभवेन अनुभवजनकतावच्छेदकधर्मत्वेन तज्ज्ञानस्य हेतुतया [4]तादृशधर्मवदिति भ्रमस्य संभवात्। किञ्च, गौः गोपदशक्त्या

---

1 तत्त्वेन ग्रहश्च — गोशब्दत्वेन ग्रहश्च।
2 साधारणधर्मेति — गोशब्द-गावीशब्दोभयसाधारणेत्यर्थः।
3 ऐक्याभावेनेति — अतिरिक्तपदार्थस्य सामर्थ्यापरपर्यायस्य मीमांसकमते शक्तित्वम्, न्यायमते तु ईश्वरेच्छाया इति भावः।
4 तादृशेति — गावीशब्दः अनुभवजनकतावच्छेदकधर्मवानिति शक्तिभ्रमो बोध्यः।

इत्यादि शक्तिप्रकारकं ज्ञानं न हेतुः । किन्तु शक्तिसंबन्धेन गोपदादिप्रकारकं गोपदवती गौः इत्याकारकम्, लाघवात् ।

अत्र ग्रन्थविच्छेदः

एवं च व्यधिकरणसंयोगादिसंबन्धेन घटादेर्वारणमिति चेन्न ।

तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपित-विशेष्यतासंबन्धेन ईश्वरे (णवक्त) [च्छावत्त्व] स्य, ईश्वरेच्छा-निरूपिततादृशविशेष्यतावत्त्वस्य [वा] तत्पदशक्यत्वरूपतया तस्य संस्कृतनिरूपितस्यैव [1]प्रवाहादावेव च स्वीकारेणापभ्रंशादेः शक्तत्वस्य वारयितुं शक्यत्वात् । न च विनिगमकाभावात्

---

1 प्रवाहादावेवेति — प्रवाहः गङ्गापदजन्यबोधविषयो भवतु इतीश्वरेच्छायां तादृशबोधविषयतात्वेन बोधविषयत्वं प्रकारतया भासते । गङ्गापदेन तीरबोधेऽपि सन्मात्रविषयिण्याः ईश्वरेच्छायाः, विषयता गङ्गापदजन्यबोधीया भवतु, विषयतावत्तीरं भवतु इत्याकारकतैव । तथाच गङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता तीरे नेत्यर्थः ।

[1]तत्रापि तत्स्वीकारोऽस्तु इति वाच्यम् । तत्र शक्तिभ्रमादिना लक्षणया च निर्वाहे, पदार्थस्मृत्यनुरोधेन कल्प्यमानसंबन्धताकस्य निरुक्तशक्तत्वस्य साधुसंस्कृते एव स्वीकारात्, फलबलेन तथैव कल्पनात् । अन्यथा, अपभ्रंशस्य साधुतापत्तौ यज्ञ प्रयोगापत्तेः ।

एतेन, ईश्वरेच्छाया एकत्वेन सर्वविषयकत्वेन च [2]शब्दार्थव्यवस्थानुपपत्तिः, इत्यपि समाहितम् । फलबलेन निरुक्ततत्पदशक्यत्वस्य [3]तत्तत्पदार्थे एवाङ्गीकारात् ।

———

संस्कृतस्य शक्तिमत्त्वे, प्रसिद्ध्यादेः विनिगमकत्वोक्तिः, तन्निरासश्च

यत्तु; प्रसिद्ध्यादिकं सर्वदेशीयशिष्टपरिगृहीतत्वादिकं च [4]विनिगमकमिति ।

---

1 तत्रापि तत्स्वीकारः—अपभ्रंशे लाक्षणिके च शक्तत्वस्वीकारः ।

2 शब्दार्थव्यवस्थानुपपत्तिरिति — घटपदजन्यबोधविषयत्वप्रकारकेच्छाविशेष्यत्वस्य पटेऽपि सत्त्वेन पटस्यापि घटपदवाच्यत्वापत्तिरिति भावः ।

3 तत्तत्पदार्थे इति—तथाच ईश्वरेच्छीय-घटपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता घटे एव न पटादाविति भावः ।

4 विनिगमकमिति — साधुशब्दस्य शक्तिमत्त्वे इत्यादिः ।

तदसत्। प्रसिद्धेरनियतत्वात्, लाक्षणिकेषु सर्वदेशीयशिष्टपरिगृहीतत्वस्य सत्त्वाच्च। तत्तद्देशनियतसंस्कृतेषु सर्वदेशशिष्टपरिगृहीतत्वाभावेन शक्तिसिद्ध्यनापत्तेश्चेति। (वदन्ति)

---

## व्याकरणव्युत्पाद्यत्वमेव साधुत्वम्, शाब्दबोधे असाधुत्वनिश्चयः प्रतिबन्धकः इति नव्यानां मतनिरूपणम्

नव्यास्तु, व्याकरणव्युत्पाद्यत्वमेव साधुत्वमिति वदन्ति। तेषामयमाशयः। साधुत्वं न शक्तिमत्त्वम्, लाक्षणिकादेरसाधुत्वापत्तेः। न च तस्यापि [1]क्वचित् शक्तिसत्त्वात् साधुत्वसंभव इति वाच्यम्। घटादिपदस्य पटाद्यर्थे साधुतावारणाय तत्तदर्थे शक्तत्वस्य तत्तदर्थे साधुत्वरूपतायाः अवश्यवाच्यत्वात्। केवल (धी) प्रकृतिप्रत्यययोः साधुत्वापत्तेश्च। प्रकृतिप्रत्ययसमुदाये, समासादौ शक्त्यभावेनासाधुत्वापत्तेश्च। न च तस्य [2]प्रत्येकघटकशक्तिमादाय [साधु] त्वमुपपादनीयमिति

---

1 क्वचिदिति — तीरे लाक्षणिकस्य गङ्गापदस्य प्रवाहे शक्तत्वादित्यर्थः।

2 प्रत्येकघटकेति — शक्तिमदविषयकप्रतीत्यविषयत्वं शक्तिमद्घटित-शक्तिमदुभयसाधारणं साधुत्वमिति भावः।

वाच्यम् । तथा (च) [सति] बाधति-ग्रामगाम इत्यादेरपि साधुत्वापत्तेः । [1]एतेन, वृत्तिमत्त्वमेव साधुत्वमित्यपि परास्तम् ।

तस्मात् व्याकरणव्युत्पाद्यत्वमेव साधुत्वम् । यः शब्दः यस्मिन्नर्थे व्याकरणव्युत्पादितः, स तत्र साधुः । न चैवं गावीशब्दोऽपि गं—गणपतिम्, अवितुं शीलमस्येत्यर्थे साधुः स्यादिति वाच्यम् । इष्टत्वात् । [2]तस्य गवाद्यर्थे एवासाधुत्वात्, तदर्थे तस्य व्याकरणाव्युत्पाद्यत्वात् । येषामाधुनिकसंकेतितडित्थादिशब्दानां विशिष्य व्याकरणेन व्युत्पादनं नास्ति, तेषामपि 'उणादयो बहुलम्' पा. सू. 3-3-1 इत्यादिना व्युत्पादनान्न दोषः ।

एतज्ज्ञानं च न शाब्दबोधे कारणम्, व्याकरणव्युत्पाद्यत्वाग्रहेऽपि शाब्दबोधात् । किन्तु व्याकरणाव्युत्पाद्यत्वरूपासाधुत्वनिश्चयः प्रतिबन्धकः, तदभावः कारणम् । अत एव साधुशब्दे असाधुत्वनिश्चये ततो न शाब्दबोधः ।

---

1 एतेन— केवलप्रकृति-प्रत्यययोरतिप्रसङ्गेन, समासादौ प्रकृति-प्रत्ययसमुदाये च साधुत्वाप्रसङ्गेन च ।

2 तस्य — गावीशब्दस्य ।

न चापभ्रंशात् [1]व्युत्प[न्नानां शाब्दबोधः, साधुशब्दानुमानेन साधु] शब्दस्मरणेन वा शाब्दबोधात् । न चाव्युत्पन्नानामसाधुत्वनिश्चये, कथं [2]तस्माच्छाब्दबोधः, तेषां साधुशब्दानुमानस्य साधुशब्दस्मरणस्य वाऽसंभवादिति वाच्यम् । व्युत्पन्नपुरुषीयशाब्दबोधे एवासाधुत्वनिश्चयस्य प्रतिबन्धकत्वात् । न चैवं व्युत्पन्नानामसाधुशब्दात् सामान्यसामग्रीबलात् शाब्दबोधापत्तिर्दुर्वारैवेति वाच्यम् । अव्युत्पन्नपुरुषीयशाब्दबोधे व्युत्पत्त्यभावस्यापि हेतुतया सामान्यसामग्र्या फलजनने असाधुत्वनिश्चयाभाव–व्युत्पत्त्यभा[3]वान्यतरस्य सहकारित्वोपगमेनोक्तापत्त्यसंभवात् ।

---

1 व्युत्पन्नानामिति–तेषामपभ्रंशे असाधुत्वनिश्चयस्य प्रतिबन्धकस्य सत्त्वादिति भावः

2 तस्मात् — अपभ्रंशात् ।

3 अन्यतरस्येति — व्युत्पन्नानामसाधुत्वनिश्चयाभावस्य, व्युत्पत्त्यभावस्य चासंभवेन सहकारिविरहान्नापत्तिरिति भावः ।

## साधुशब्दस्यानुमानेन स्मरणेन वा न शाब्दबोधः इति पक्षः, तन्निरासश्च

(यत्र) [यत्तु] व्युत्पन्नानां साधुशब्दानुमानेन साधुशब्दस्मरणेन वा शाब्दबोधोपपादनं न सम्यक् । अनुमानस्य व्याप्तिग्रहविलम्बेन, स्मरणस्य चोद्बोधकविलम्बेनानियतत्वात् । अनुमानं स्मरणं [च] विनापि व्युत्पन्नानां बोधानुभवाच्च । भवदुक्तसंस्कृतेनायमर्थो न बुद्धः, किन्तु एतदुक्त[1]भाषयेति व्युत्पन्नव्यवहाराच्चेति ।

तदसत् । [2]फलबलेनानुमानस्य स्मरणस्य वा सामग्र्या नियमेन कल्पनात् । [3]उक्तबोधानुभवे मानाभावाच्च । कारणं विना कार्यानुभवस्य क्वाप्यसिद्धेः । भवदुक्तेत्यादिव्यवहारोऽप्यसिद्धः । प्रत्युत, भवदुक्तसंस्कृतादेतदुक्तभाषातश्चायमर्थोऽवगतः । गवादिशब्देन वक्तव्ये गाव्यादिशब्देनोक्तम् इत्यादिव्यवहारस्यैव सर्वसिद्धत्वात् । अत एव वाक्यपदीये हरिणाप्युक्तम्—

---

1 भाषयेति — भाषाशब्दश्चापभ्रंश इति भावः ।
2 फलबलेन — शाब्दबोधरूपकार्यबलेन ।
3 उक्तबोधानुभवे—साधुशब्दस्यानुमानं स्मरणं च विनापि व्युत्पन्नानां अपभ्रंशाच्छाब्दबोधानुभवे ।

[1]'ते [2]साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
[3]तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः ॥
[4]न शिष्टैरनुमन्यन्ते पर्याया इव साधवः ।
न यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः ॥
अम्बम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते ।
[5]अव्यक्तं तद्विदां तेन [6]व्यक्ते भवति निर्णयः ॥
एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।
तेन [7]साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥' इति ।

---

1 ते — अपभ्रंशाः ।

2 साधुष्विति — सप्तम्यर्थो विषयत्वमनुमानान्वयि ।

3 पक्षान्तरमाह —तादात्म्यमुपगम्यैवेति — साधु-गवादि शब्द-तादात्म्यप्रकारकज्ञानविषयतामापद्य वेत्यर्थः । एवकारः वाकारार्थो बोध्यः । गोपदे उच्चारणीये करणापाटवेन गावीत्युच्चरितं, वस्तुतो गोपदमेवेदमिति तादात्म्येन भासमानाः गाव्यादिशब्दाः गवादिरूपार्थस्य प्रकाशका इत्यर्थः ।

4 न शिष्टैरिति — यतः ते अपभ्रंशाः, साधवः पर्याया इव स्मृतिशास्त्रेण शिष्टैः नानुमन्यन्ते, अतः न वाचका इत्यर्थः ।

5 अव्यक्तमिति — प्रभाषते इति क्रियाविशेषणम् ।

6 व्यक्ते — साधुशब्दे । स्मृते सतीति शेषः ।

7 साधुव्यवहितः — साधुशब्दज्ञानद्वारकः ।

अन्यथा, उक्तहग्ग्रिन्थेन अपभ्रंशस्थले साधुशब्दानुमानेन साधुशब्दस्मरणेन वा शाब्दबोधोपपादनासंगत्यापत्तेः ।

न च व्याकरणव्युत्पाद्यत्वं न साधुत्वम्, व्याकरणत्वस्य [1]शब्दव्युत्पादकत्वरूपतया अन्योन्याश्रयादिति वाच्यम् । पाणिन्यादिसंकेतसंबन्धेन व्याकरणपदवत्त्वस्यैव व्याकरणत्वरूपत्वात् । न च व्युत्पन्नानां शास्त्रकारसंकेतितान्यक्षतादि ? पदात्, अश्वादिषु संकेतितगवादिपदाच्च कथं तत्तदर्थप्रत्ययः, तेषां तत्तदर्थे असाधुत्वनिश्चयादिति वाच्यम् । तत्प्रतिबध्यतावच्छेदककोटौ [2]तत्तदर्थशक्तिप्रयोज्यत्वस्यापि निवेशात् । न चैवमपि तेषां यज्ञे प्रयोगो न स्यादसाधुत्वादिति वाच्यम् । इष्टापत्तेः । न च लाक्षणिकानां तत्तदर्थे व्युत्पादनविरहेण तदर्थे तेषामसाधुत्वापत्तिरिति वाच्यम् । वेदलाक्षणिकानां निरूढलाक्षणिकानां च तत्तदर्थे व्युत्पाद्यत्वस्य सत्त्वात् । आधुनिकलाक्षणिकानामसाधुत्वे चेष्टापत्तेरिति दिक् ।

---

1 शब्देति — साधुशब्देत्यर्थः

2 तत्तदर्थशक्तीति — आधुनिकसंकेतस्य शक्तित्वाभावात् तत्प्रयोज्यशाब्दबोधे असाधुत्वनिश्चयस्याप्रतिबन्धकत्वादिति भावः ।

स धुत्वज्ञानं न शाब्दबोधे हेतुः, साधुत्वं जातिविशेषः,
बोधकत्व शक्तिः, इति वैयाकरणमतनिरूपणम्

वैयाकरणास्तु, शाब्दबोधे न साधुत्वज्ञानं कारणम्, न वा आसाधुत्वनिश्चयः प्रतिबन्धकः । नचैवमसाधुशब्दात् बाधति इत्यादेः शाब्दबोधापत्तिरिति वाच्यम् । इष्टत्वात् । न चैवं च्युतसंस्कृतेः दोषत्वानुपपत्तिः, [1]तद्बीजस्य शाब्दबोधासंभवस्य भवन्मते अभावादिति वाच्यम् । साधुशब्दे प्रयोक्तव्ये असाधुशब्दः किमिति प्रयुक्तः इत्यनुसन्धानेन सहृदयोद्वेगस्यैव तद्बीजत्वात् । नचैवं साधुत्वस्य कोपयोगः, तज्ज्ञाने शाब्दबोधहेतुतायाः, तदभावनिश्चये वा शाब्दबोधप्रतिबन्धकतायाः भवद्भिरनङ्गीकारादिति वाच्यम् । 'एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुक् भवति ।' 'साधूनेव प्रयुञ्जीत' इत्यादिवा [क्यचो] दितपुण्यजननेनोपयोगात् । साधुत्वं च व्याकरणव्यङ्ग्यः शब्दनिष्ठः पुण्यजनकतावच्छेदको जातिविशेषः । न च कत्वादिना सं (स्का) [क] राज्ञैवमिति वाच्यम् । दूषकताबीजाभावेन सांकर्यस्यादोषत्वात् ।

1 तद्बीजस्य — दूषकताबीजस्य । एवमग्रेऽपि ।

एवं च असाधुशब्दस्य गावी–बाधत्वादेः, भाषाऽपभ्रंशशब्दस्य च बोधजनकत्वेन तेषामपि शक्त्यैव बोधकत्वम्, बोधकत्वस्यैव शक्तित्वात् ।

यद्यते चैतत् । मीमांसक-नैयायिकादीनां [1]शक्तित्वस्यैक्याभावेन [2]बोधजनकतावच्छेदकधर्मत्वेन ज्ञानस्य हेतुत्वं वाच्यम् । तथाच बोधजनकत्वज्ञानस्यैव [3]लाघवेन शाब्दबोधहेतुत्वमुचितम् । किञ्च, ईश्वरेच्छारूपसंकेतस्य शक्तित्वमते, तस्य अस्माच्छब्दादयमर्थो बोद्धव्यः इत्याकारकत्वस्येव, अयं शब्दः एतदर्थबोधकः इत्याकारकत्वस्यापि [4]विनिगमनाविरहेण सुवचतया बोधजनकत्वप्रकारकेच्छायाः शक्तित्वापेक्षया बोधजनकत्वस्य शक्तित्वे लाघवं स्पष्टमेव ।

---

1 शक्तित्वस्येति — अतिरिक्तपदार्थात्मकशक्ति – ईश्वरसंकेतसाधारणस्येति शेषः ।

2 बोधजनकतावच्छेदकेति — शक्तिज्ञाननिष्ठायां बोधकारणतायां विषयितासंबन्धेन अवच्छेदकत्वं शक्तेरिति भावः ।

3 लाघवेनेति—बोधजनकतावच्छेदकधर्मज्ञानत्वापेक्षया बोधकत्वज्ञानत्वस्य शाब्दबोधकारणतावच्छेदकत्वे लाघवेनेत्यर्थः ।

4 विनिगमनाविरहेणेति— सन्मात्रविषयकत्वादीश्वरेच्छाया इति भावः ।

## कारणाभावादपभ्रंशान्न शाब्दबोधः इति शङ्का, तन्निरासश्च

अथ गवादिनिष्ठकर्मता (वच्छेदक) बोधे गवादि (वृत्तत्त्तया) [वृत्तिमत्तया] ज्ञातपदसमभिव्याहृतविभक्तिजन्यकर्मत्वाद्युपस्थितेर्हेतुत्वात्, तां विना अपभ्रंशात् कथं शाब्दबोधः। न च [1]नामातिरिक्तजन्यकर्मत्वाद्युपस्थितिरेव कारणम्। नामत्वं च सुबन्तत्वम्। तद्भेदश्चापभ्रंशेऽपीति वाच्यम्। एवं सति निराकाङ्क्षापभ्रंशादपि शाब्दबोधप्रसङ्गादिति चेन्न।

गवादिवृत्तिमत्तया ज्ञातपदसमभिव्याहृतकर्मत्वोपस्थापकपदज्ञानविशिष्टकर्मत्वाद्युपस्थितेरेव शाब्दबोधजनकत्वात्। यादृशपदज्ञानजन्यकर्मत्वाद्युपस्थितिसत्त्वे शाब्दबोधः, तज्जन्यतासंसर्गेणैव वैशिष्ट्यं वाच्यम्। तेन [2]नातिप्रसङ्गः, संबन्धा-

---

1 नामातिरिक्तेति — गौः कर्मत्वमित्यत्र कर्मत्वपदजन्योपस्थितेः सत्त्वेऽपि गोनिष्ठकर्मत्वबोधाभावात् नामातिरिक्तेत्युक्तम्। गामित्यत्र अम्पदस्य नामातिरिक्तत्वात् तज्जन्यकर्मत्वोपस्थित्या गोनिष्ठकर्मताबोधः।

2 नातिप्रसङ्ग इति — निराकाङ्क्षापभ्रंशात् शाब्दापत्तिरूपातिप्रसङ्गो नेत्यर्थः।

ननुगमस्यादोषत्वात्। अत एव ओदनः पक्त्वा भुज्यते इत्यादौ, 'जानामि सीता जनकप्रसूता' इत्यादौ च तन्निर्वाहः ।

---

बोधकत्वस्य शक्तित्वे लक्षणोच्छेदशङ्का, तत्परिहारश्च

न च बोधकत्वस्य शक्तित्वे गङ्गादिपदे तीरादिबोधकताया अपि सत्त्वेन शक्त्यैवोपपत्तौ लक्षणाद्युच्छेद इति वाच्यम्। तव गङ्गादिपदनिष्ठायाः तीरादिबोधकत्वप्रकारकेच्छाया इव, मम गङ्गादिपदनिष्ठस्य तीरादिबोधकत्वस्यापि शक्तित्वाभावात् । गङ्गापदादिनिष्ठं तीरादिबोधकत्वमेव लक्षणा । घोषादि [प्र] सिद्धसंबन्धता यत्र [तत्र] बोधकत्वस्यैव शक्तित्वमिति व्यवस्थायाः संभवाच्च ।

यद्वा, शक्तिलक्षणयोरभेद एव। पर (त्वप्र)[न्तु प्र]सिद्ध शक्यसंबन्धित्वेन गृहीतार्थविषयकबोधजनकत्वं लक्षणा । प्रसिद्धार्थविषयकबोधजनकत्वं तच्छक्तित्वेन व्यवह्रियते । प्रसिद्धत्वं च प्रचुरप्रयोगविषयत्वम् । शक्त्यादिनियामकतया प्रसिद्ध्यादेस्तत्राप्यावश्यकत्वात् ।

न चापभ्रंशस्यार्थवत्त्वात् प्रातिपदिकत्वे सुबुत्पत्तौ व्याकरणव्युत्पाद्यत्वात् साधुत्वप्रसङ्ग इति वाच्यम् । [1]अनभिधानादेवानभिधानात् । भाषाशब्देभ्यः सुबुत्पत्तौ भाषात्वस्यैव भङ्गापत्तेश्च । त[स्मा]त् बोधकत्वस्यैव शक्तित्वं निष्प्रत्यूहमित्याहुः ।

---

## निरुक्तवैयाकरणमतनिराकरणम्

तदसत् । असाधुशब्दस्य स्वरूपायोग्यतया तस्माच्छाब्दबोधस्यानुभवविरुद्धत्वात् । [2]अन्यथा, असाधुशब्दस्येव निराकाङ्क्ष—घटः कर्मत्वम् इत्यादेरपि शाब्दबोधजनकत्वस्य सुवचतया आकाङ्क्षादिज्ञानस्यापि शाब्दबोधहेतुताविलयापत्तेः ।

---

1 अनभिधानादेव — पूर्वप्रयोगाभावादेव ।

2 अन्यथा – स्वरूपायोग्यस्यापि शब्दस्य शाब्दबोधजनकत्वे ।

साधुत्वं जातिः इत्यप्ययुक्तम् । [1]इह अनुमान-परिच्छेदे, भवानन्दीयप्रकाशे चास्माभिः संकरदूषकताया व्यवस्थापनेन, कत्वादिना संकरस्य दोषत्वात् ।

---

## बोधकतायाः शक्तित्वप्रतिक्षेपः

बोधकत्वं शक्तिः इत्यप्यसमञ्जसम् । सामान्यतो बोधकत्वस्य तत्त्वे, घटादिपदेऽपि पटादिशक्तत्वापत्त्या तत्तत्पद-निष्ठ-तत्तदर्थबोधजनकत्वमेव तत्तत्पदे तत्तदर्थशक्तत्वमित्येव वाच्यम् । तथाच आधुनिकसंकेतितचैत्रादिपदे शाब्दबोधात् प्राक तत्तदर्थबोधजनकत्वाग्रहेण [2]तं विनापि तत्प्रकारकसंकेत-ज्ञानमात्रात् शाब्दबोधोदयेन बोधजनकत्वज्ञानस्य हेतुत्वा-संभवात् । न च तृणारणिन्यायेन बोधकत्वज्ञान-संकेत-

---

1 इह — न्यायकौस्तुभग्रन्थे ।

2 तं विनापि — तत्तदर्थबोधजनकत्वग्रहं विनापि ।

ज्ञानयोः [1]वैकल्पिककारणत्वाभ्युपगमात् न दोष इति वाच्यम्। संकेतज्ञानस्य हेतुतावश्यकत्वे, सर्वत्र तद्धेतुतयैव निर्वाहे बोधकत्वज्ञान–संकेतज्ञानयोः वैकल्पिककारणताङ्गीकारे गौरवापत्तेः। न च संकेतज्ञानेन बोधकत्वमनुमाय आधुनिकसंकेतितचैत्रादिपदे बोधकत्वज्ञानादेव शाब्दबोधसंभवेन सर्वत्र बोधकत्वज्ञानस्यैव हेतुत्वोपगमान्न गौरवमिति वाच्यम्। (व्याद्या) [[2]व्याप्त्या] दि प्रतिसन्धानाभावेऽपि शाब्दबोधात्। फलोपधायकत्वरूपबोधकत्वज्ञानस्य हेतुत्वे शाब्दबोधात् पूर्वं तदसंभवात्, गौरवात् [3]तस्य कादाचित्कत्वेन शक्तौ शब्दार्थ-

---

1 वैकल्पिककारणत्वेति — अव्यवहितोत्तरत्व संबन्धेन तृणविशिष्टवह्निं प्रति तृणस्य, अरणिनिर्मन्थनसंयोगविशिष्टवह्निं प्रति तादृशसंयोगस्य कारणत्वमिव, बोधकत्वज्ञानविशिष्टशाब्दं प्रति बोधकत्वज्ञानस्य संकेतज्ञानविशिष्टशाब्दबोधं प्रति संकेतज्ञानस्य च कारणत्वमित्यर्थः।

2 व्याप्त्यादिप्रतिसन्धानाभावेऽपि — बोधजनकत्व-संकेतज्ञानयोरित्यादिः। तथाच तत्र बोधकत्वज्ञानाभावात् व्यतिरेकव्यभिचार इति भावः।

3 तस्य कादाचित्कत्वेन — शाब्दबोधोपधायकत्वस्य शाब्दसामग्रीसमवधानकाल एव सत्त्वेन।

योर्नित्यसंबन्धत्वानुपपत्तेश्च । न च स्वरूपयोग्यतारूपबोधकत्वज्ञानस्यैव हेतुत्वोपगमान्न दोषः इति वाच्यम् । स्वरूपयोग्यताया जनकतावच्छेदकरूपतया बोधकत्वस्य तत्त्वे [1]आत्माश्रयापत्त्या, संकेतस्यैव [2]तत्त्वं वाच्यमिति सर्वत्र संकेतज्ञानस्यैव जनकतया अस्मदभिमतसिद्धेः ब्रह्मणोऽपि दुर्वारत्वात् ।

अथ जनकत्वमतिरिक्तं पदार्थान्तरम् (तदननु)[ न तु] जनकतावच्छेदकरूपम् । तच्च जनकतावच्छेदकरूपग्रहं विनापि अनुमानादिना सुग्रहम् । प्रत्यक्षेण जनकताग्रहे एव जनकतावच्छेदकरूपग्रहापेक्षणादिति बोधजनकत्वज्ञानमेव सर्वत्र कारणमस्तु, लाघवात् । अपभ्रंशादिसाधारण्ये [न] आधुनिकसंकेतितसादिपदेऽपि संकेतज्ञानात् बोधकत्वमनुमेयम् । [3]तवानादिपदे तदर्थबोधकत्वज्ञानात् तत्संकेतवदिति चेत् ।

---

1 आत्माश्रयापत्त्येति — अवच्छेद्य-बोधजनकताज्ञानस्यावच्छेदकज्ञानाधीनत्वादिति भावः ।

2 तत्त्वं - शक्तित्वम् ।

3 तव — संकेतस्य शक्तित्ववादिनः नैयायिकस्य ।

नैवम् । तद्बीजनकत्वं नानाव्यक्तिगर्भत्वात् गुरु । संकेतस्तु [1]एकत्वाल्लघुरिति स एव पदपदार्थयोः संबन्धः । किञ्च, तद्बीजनकत्वार्थमेव संबन्धापेक्षेति, न तदेव संबन्धः, आत्माश्रयात् । अत एव प्रत्याय्यप्रत्ययात् वाचकत्वसंबन्धज्ञानं सहकारि, इति प्रत्यायकत्वोपपादकतया वाचकत्वोपयोगः इत्युक्तं महार्णवेऽपि । न च तद्बीजनकत्वेन ज्ञातत्वं संबन्धः इति [2]नात्माश्रयः इति वाच्यम् । तज्ज्ञानस्य स्मृत्यनुपयोगात्, संबन्धितावच्छेदकज्ञानस्यैव [3]तथात्वात् प्राक्सत्त्वनियमाच्च ।

एतेन, शब्दत्वसमानाधिकरणतत्तज्जनकता (न्य) संबन्धेन बोधस्यैव शक्तित्वमिति [4]ममाप्येकस्यैव लघोः संबन्धत्वमिति नवीनवैयाकरणोक्तमपि परास्तम् ।

---

1 एकत्वादिति — ईश्वरेच्छाया ऐक्यादित्यर्थः ।

2 नात्माश्रय इति—तद्धीजनकत्वेन ज्ञातत्वरूपसंबन्धज्ञानाधीनत्वं बोधजनकत्वज्ञानस्येति न स्वज्ञाने स्वज्ञानापेक्षेत्यर्थः ।

3 तथात्वात् — अपरसंबन्धिस्मृतिजनकत्वात् ।

4 ममापि — एकस्य संकेतस्य संबन्धत्ववादिन इव बोधकत्वस्य शक्तित्ववादिनोऽपीति यावत् ।

किञ्च, तद्धीजनकत्वज्ञानमात्रस्य हेतुत्वे [1]पदमात्रं [2]स्मृत्यात्मकाकाशधीजनकमिति ज्ञानादाकाशशाब्दबोधप्रसङ्गः। न च तच्छाब्दबोधजनकत्वज्ञानं कारणमिति नोक्तदोष इति वाच्यम् । भूतलं घटवदित्याकारकघटशाब्दबोधजनकत्वज्ञानस्य [3]भूत (त्वा) [ला] दिपदेऽपि सत्त्वेनातिप्रसङ्गतादवस्थ्यात् । अपि च, घटपदात् शक्तिभ्रमेण पटशाब्दबोधे पटशक्तत्वाभावनिश्चयदशायामपि पटशाब्दबोधजनक [त्व] ज्ञानात् शाब्दधीप्रसङ्गः । एवं घटपदं पटे आधुनिकसंकेतितं न तु शक्तमिति ज्ञानेऽपि [4]न शाब्दधीरिति ईश्वरसंकेतज्ञानमेव कारणमिति सिद्धम् ।

एवं, अनभिधानादेवानभिधानम् इत्यप्यसत् ।

---

1 पदमात्रं — पदसामान्यम् ।

2 आकाशधीजनकमिति — समवायेनाकाशस्य संबन्धित्वादिति भावः ।

3 भूतलादिपदेऽपीति— वाक्यार्थबोधे वाक्यघटकसकलपदानां कारणत्वादिति भावः ।

4 न शाब्दधीरिति — बोधकतायाः शक्तित्वे नैतदुपपद्यते इति भावः ।

तस्य दुर्वचत्वात्, तस्य पूर्वपूर्वप्रयोगाभावादेवाप्रयोगः इत्यत्र पर्यवसानेन, पूर्वप्रयोगाभावे एव किं बीजमिति प्रश्ने उत्तराभावाच्च । [1]गत्यन्तराभावस्थले एव तदङ्गीकाराच्च । अन्यथा [2]सकलव्युत्प (न्नता) [त्तीना] मुच्छेद एव स्यात् । किं बहुना, व्याकरणस्यैव नैरर्थक्यप्रसङ्गः, पूर्वाप्रयोगेनैवोपपत्तेः । भाषात्वभङ्गापत्तिरपि '[3]यतिभङ्गे प्रवृत्तस्य' इत्यादिन्यायमनुसरतीति (च) [यत्] किञ्चिदेतत् । अत एव–

'अपभ्रंशोऽपशब्दः स्यात् शास्त्रे शब्दस्तु वाचकः' इति अमरकोशानुशासनमपि स्वरसत एव संगच्छते । बोधकत्वस्य शक्तित्वे तदसंगतेरिति दिक् ॥

---

1 गत्यन्तराभावस्थले इति — शाखारूपवृक्षावयवस्य वृक्षाधारत्वेऽपि शाखायां वृक्षः इति प्रयोगाभावनिर्वाहस्थले इत्यर्थः ।

2 सकलव्युत्पत्तीनामिति — घटादौ आधेयतासंबन्धेन भूतलान्वयतात्पर्येण भूतलं घटः इत्यादिप्रयोगाभावस्य पूर्वाप्रयोगेनैवोपपत्तेः, नामार्थयोः भेदानन्वयव्युत्पत्तेरप्युच्छेदः स्यादिति भावः ।

3 यतिभङ्गे इति — यतिभङ्गे प्रवृत्तस्य यतिभङ्गो न दोषभाक् इति न्यायः ।

## शक्तिग्राहकप्रमाणम्

शक्तिग्रहश्च व्यवहारात् व्याकरणादितश्च । तदुक्तम्—

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥'

इति । तत्र व्याकरणात् शक्तिग्रहो यथा — 'कर्तरि कृत्' ( पा. सू. 3-4-67 ) इत्यादिव्याकरणात् कृदादीनां कर्त्रादौ ।

---

## व्याकरणस्य शक्तिग्राहकत्वे आख्यातस्य कर्तरि शक्तिः स्यादित्याक्षेपः

नन्वेवं 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा. सू. 3-4-69) इति सूत्रे 'कर्तरि कृत्' (पा. सू. 3-4-67) इति सूत्रस्थस्य कर्तरीत्यस्यानुवृत्त्या कर्तरि लकारविधाने चाख्यातस्यापि कर्तरि शक्तिः स्यात् । तथाच आख्यातस्य कृतौ शक्तिरिति नैयायिकसिद्धान्तो दत्तजलाञ्जलिः स्यादिति चेत् ।

---

### बाधकाभावे एव व्याकरणस्य शक्तिग्राहकत्वेनाक्षेपपरिहारः

न । असति बाधके एव व्याकरणस्य शक्तिग्राहकतोपगमेन कर्तरि शक्तौ अनन्तकृतीनां शक्यतावच्छेदकत्वकल्पनरूपगौरवात्मकबाधकसत्त्वेन [1]कृतित्वरूपजात्यवच्छिन्ने शक्तिकल्पने लाघवेन आख्यातस्य कृतावेव शक्तिस्वीकारात् । न चैव[2]मुक्तलाघवेन कृतोऽपि कृतिः शक्या स्यात्, न तु कर्ता शक्य इति वाच्यम् । चैत्रः पक्ता इत्यादौ पाकानुकूलकृतेर्नामार्थत्वेन चैत्रे नामार्थे [3]भेदेनान्वयासंभवेन, अभेदान्वयस्य बाधादसंभवेन अनायत्या कर्तरि शक्तिस्वीकारात् ।

---

### आख्यातेन कर्तृत्वानभिधानं तृतीयानियामकम्

न च 'कर्तृकरणयोः' (पा.सू.2-3-18) इति सूत्रेण [4]अनभिहिते कर्तरि तृतीयाविधानेन, तण्डुलं पचति चैत्रः

---

1 कृतित्वरूपजातीति — जातिश्चैकेति लाघवमिति भावः ।

2 उक्तलाघवेन — शक्यतावच्छेदकलाघवेन ।

3 भेदेन — आश्रयतासंबन्धेन ।

4 अनभिहिते इति — 'कर्तृकरणयोस्तृतीया' इति सूत्रस्य अनभिहिताधिकारस्थत्वादिति भावः ।

इत्यादौ [1]तृतीयापत्त्या आख्यातस्य कर्तर्येव शक्तिर्युक्तेति वाच्यम् । कृत्यनभिधानस्यैव तृतीयानियामकत्वोपगमेनोक्तापत्त्यभावात् । न चैवं चैत्रेण पच्यते तण्डुलः इत्यादावपि तृतीयानुपपत्तिः तत्राप्याख्यातेन कृत्यभिधानादिति वाच्यम् । कर्माख्यातस्य कर्मत्वाभिधायकत्वेन कृत्यनभिधायकत्वात् । न चैवं चैत्रो गतः इत्यादिकृदन्तस्थले तृतीयापत्तिः कृता कर्तुरभिधानेन कृत्यनभिधानादिति वाच्यम् । विशेषणतया विशेष्यतया वा कृत्यनभिधानस्यैव तृतीयानियामकतया, कृता विशेष्यतया कृत्यनभिधानेऽपि [2]विशेषणतया तदभिधानेनोक्तापत्त्यभावात्

---

द्वितीयानियामकं विशेष्यतया विशेषणतया वा कर्मत्वानभिधानम्

एवं विशेषणतया विशेष्यतया वा कर्मत्वानभिधानं द्वितीयानियामकम् ।

---

1 तृतीयापत्त्येति – आख्यातेन कर्तुरनभिधानादिति भावः ।

2 विशेषणतयेति –गत. इत्यत्र कृतिविशिष्टस्य कृदर्थत्वादित्यर्थः ।

एतेन कर्मानभिधानस्य द्वितीयानियामकत्वे चैत्रेण पच्यते तण्डुलः इत्यत्र तण्डुलपदोत्तरं द्वितीयापत्तिः, कर्माख्यातस्य कर्मत्वाभिधायकतया कर्मानभिधायकत्वात् । कर्मत्वानभिधानस्य द्वितीयानियामकत्वे चैत्रेण गतो ग्रामः इत्यत्र ग्रामपदोत्तरं द्वितीयापत्तिः, [1]कृतः [2]कर्माभिधायकत्वे कर्मत्वानभिधायकत्वात् इत्याशङ्का निराकृता । कर्माख्यातस्य विशेष्यतया कर्मत्वाभिधायकतया कृतश्च विशेषणतया कर्मत्वाभिधायकतया [3]उभयत्रापि द्वितीयाभावोपपत्तेः ।

---

1 कृतः — गमधातूत्तरक्तप्रत्ययस्य ।

2 कर्माभिधायकत्वे इति — ग्रामनामार्थेनाभेदान्वयानुरोधेनेत्यादिः ।

3 उभयत्रापि — पच्यते तण्डुलः इत्यत्र तण्डुलपदे, गतो ग्रामः इत्यत्र ग्रामपदे च ।

कृतपूर्वी कटम् इत्यत्र द्वितीयानुपपत्तिः इति पूर्वपक्षः

नन्वेवमपि कृतपूर्वी कटमित्यत्र क्तप्रत्ययेन कर्माभिधानात् कटमिति [1]द्वितीयानुपपत्तिः । अन्यथा कटः कृतपूर्वः इत्यत्रापि द्वितीयापत्तेः । [यत्तु, कृतं] पूर्वं (कटः) अनेनेति कृतपूर्वीत्यत्र कृतमिति [2]भावक्तान्तमविव[3]क्षितकर्मकमेव, पूर्वशब्देन समासं समासाद्य, कर्तरि [4]तद्धितं जनयित्वा कृतपूर्वी इति शब्दं साधयति । स च प्राक्कालिककरणकर्ता इति बोधसमर्थोऽवतिष्ठते । पश्चात् भावक्तान्तकृञर्थे च कटकर्मकत्वान्वयः इति शाब्दिकैरुक्तम् ।

तदसत् । कर्मयोगे [5]निष्ठाप्रत्ययानुपप(न्न)[त्तेः]

---

1 दूषयितुं, शाब्दिकोक्तं द्वितीयोपपत्तिप्रकारमनुवदति — यत्त्विति ।

2 भावक्तान्तमिति— भावार्थकक्तप्रत्ययान्तमित्यर्थः । कृतपदेन कृञर्थकरणमेव बोध्यते इति भावः ।

3 अविवक्षितकर्मकमिति — तथाच तस्यां दशायां न कटमिति शब्दबोध्यस्य कटकर्मकत्वस्य करणेऽन्वयः इति भावः ।

4 तद्धितमिति — इनिप्रत्ययमित्यर्थः । पूर्वशब्दोत्तरमित्यादिः

5 निष्ठाप्रत्ययेति — 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इत्यनुशासनादिति भावः ।

क्तप्रत्ययस्य भावार्थकत्वे कृतः अविवक्षितकर्मतया [1]पश्चादपि कर्मान्वयानुपपत्तिश्च । अन्यथा भावप्रत्ययान्तगम्यर्थे ग्रामकर्मकत्वस्यान्वयसंभवेन गतं, गम्यते वा ग्रामम् इति प्रयोगापत्तेः ।

अत एव, पूर्वं कृतशब्दः (कर्मविशेषकटावयवप्रतिपाद्यमान) कर्मसामान्यवाचकक्तप्रत्ययान्ततया व्युत्पादितः पूर्वपदेन समस्यते । पश्चात् कटं कृतवानिति वत् कटं कृतपूर्वी इत्यत्रापि द्वितीयान्तस्य कृ(त)[ञ]र्थे अन्वयः । क्तप्रत्ययेन [2]तस्यानभिधानाच्च द्वितीयोपपत्तिरिति नव्यशाब्दिकमतमपि परास्तम् ।

तथा सत्यु[3]क्तरीत्या चैत्रेण पच्यते तण्डुलः इत्यादावपि द्वितीयापत्तेर्दुर्वारत्वात् । न च [4]द्वितीयानुरोधेनैव विवक्षा-

---

1 पश्चादपि — कृतपूर्वी इति शब्दनिष्पत्त्यनन्तरमपि ।

2 तस्य — कटान्वयिकर्मत्वस्य ।

3 उक्तरीत्येति — कर्मसामान्यवाचकाख्यातान्तो धातुः, तदर्थे द्वितीयान्ततण्डुलशब्दार्थस्य तण्डुलकर्मकत्वस्यान्वयः इति रीत्येत्यर्थः ।

4 द्वितीयानुरोधेनैव विवक्षाया इति —कृतपूर्वी कटम् इत्यत्र कटमिति द्वितीयान्तप्रयोगान्यथानुपपत्त्या यत्तु इत्यादिनोक्तान्वयविवक्षाया इत्यर्थः ।

याः सत्त्वान्न दोषः इति वाच्यम् । प्रयोगानुरोधस्य प्रयोगान्यथानुपपत्तिरूपतया तदन्यथोपपत्तेर्वक्ष्यमाणतया तदन्यथानुपपत्त्यभावात् ।

यदपि, कारकाणां प्रत्ययार्थभावनायामेवान्वयः, [1]न तु धात्वर्थे । 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' (पू.मी.सू.)इति न्यायात् । कृतपूर्वीत्यत्र भावना [2]तद्धितार्थः । स च कृतिरेव । तस्यामेव द्वितीयोपात्तकर्मत्वान्वयः । [3]कृतिवाचकतद्धिते [न]कर्मकारकस्यानुक्तत्वाच्च द्वितीयोपपत्तिरिति मीमांसकैरुक्तम् ।

तदप्यसत् । क्रियाभेदस्यैव कर्मभेदनियामकतया [4]पदभेदेन तदभावात् कृतमित्यत्रापि क्तप्रत्ययेन [5]तद्धितार्थ-

---

1 न तु धात्वर्थे इति — धात्वर्थस्य प्रधानीभूतभावनाविशेषणत्वेन गुणत्वादिति भावः ।

2 तद्धितार्थः — पूर्वशब्दोत्तरेनिप्रत्ययार्थः ।

3 कृतिवाचकतद्धितेन — इनिप्रत्ययेन ।

4 पदभेदेन तदभावादिति — कृञ्धातु–तद्धितरूपपदभेदेन कर्मभेदाभावादित्यर्थः ।

5 तद्धितार्थभावनेति— कृतपूर्वी इत्यत्रेनिप्रत्ययार्थभावनेत्यर्थः ।

भावनाकर्मण एवाभिधानेन द्वितीयानुपपत्तेः तादवस्थ्यात् । नहि तद्धितार्थस्य कृ (त)[ञ]र्थस्य वा कृतिरूपस्य भेदः । तथा सति अनेन कृतमित्यत्र कर्तृत्वान्वयानुपपत्तेः । किञ्च, तद्धितार्थभावनायां कारकान्वयस्वीकारे कृतपूर्वीत्यादाविव पूर्वी इत्यत्रापि कर्मान्वयप्रसङ्गः । 'पूर्वादिनिः' [पा-सू-5-2-86] इति सूत्रेणापि कर्तर्येव इनेर्विधानात् । तस्मात् कृतपूर्वी कटमित्यत्र द्वितीयानुपपत्तिर्दुरुद्धरैवेति चेत् ।

---

### द्वितीयानुपपत्तिपूर्वपक्षस्य प्राचीननैयायिकमतेन निरासः

अत्र प्राचीनानुयायिनो नैयायिकाः — कृतपूर्वी कटमित्यत्र क्तप्रत्ययेन कर्मणोऽभिधानेऽपि कटः कर्मतादात्म्येन प्रतिपादयितुं [न] शक्यते । कृतकटपदार्थयोः तादात्म्येनान्वये तस्य [1]समानविभक्तिकत्वस्याभावात् । [2]सवि-

---

1 समानविभक्तिकत्वस्याभावादिति — कटपदस्य द्वितीयान्तत्वात् वृत्त्यनुप्रविष्टकृतशब्दस्य निर्विभक्तित्वात् समानविभक्तिकत्वं कृत-कटपदयोः नेत्यर्थः ।

2 सविशेषणस्य — अभेदेन कटरूपविशेषणान्वितस्य ।

शेषणस्य कृतशब्दस्य वृत्त्यनु[प्र]वेशानुपपत्तेश्च, 'सविशेषणानां वृत्तिर्न' इत्यनुशासनात् । अत: कटत्वावच्छेदेन कृततादात्म्यान्वयबोधस्य कर्मार्थकेनापि कृतपदेनानुपपादनात् कटपदसमभिव्याहारेण द्वितीयोत्पत्तौ बाधकाभावः । तथा च कृतपूर्वी कटमित्यत्र आश्रयः इनिरूपतद्धितार्थः । तत्र कृञ् धात्वर्थस्य प्रयत्नस्यान्वयः । तत्र च [1]क्तप्रत्ययवाच्यं कर्म, द्वितीयावाच्यं कर्मत्वं विशेष्यगततयाऽन्वेति । [2]वृत्त्यनुप्रविष्टस्य कृतो धत्वर्थविशेषणस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धत्वात् । अत एव, प्राप्तोदको ग्रामः इत्यत्रोदकं तादात्म्येन [3]कर्तरि, कर्ता च [4]प्राप्तौ, सा च बहुव्रीहिचरमावयवलक्ष्ये कर्मण्यन्वेति । इत्युदककर्तृकप्राप्ति[कर्म]ग्रामः इत्यन्वयबोधः । इत्थं च कृतपूर्वी कटमित्यत्र प्राक्कालि-

---

1 क्तप्रत्ययवाच्यं कर्मेति — अन्वेतीत्युत्तरेणान्वयः । व्युत्पत्तिवैचित्र्यात् प्रकृत्यर्थे प्रत्ययार्थः विशेपणतया भासते इति भावः। एतदुत्तरं तत्र चेत्यस्यानुषङ्गः । कर्मणीति तदर्थः ।

2 व्युत्पत्तिवैचित्र्यं दर्शयति–वृत्त्यनुप्रविष्टस्य कृतइति–कृत पूर्वी इति वृत्तौ प्रविष्टस्य–घटकस्य कृञ्धातूत्तरस्य कृतः-क्तप्रत्ययस्येति यावत् ।

3 कर्तरीति — क्तप्रत्ययार्थे इत्यादिः ।

4 प्राप्ताविति — प्रकृतिभूतधातोरर्थे इत्यादिः ।

ककट (कभंगकस) [1]विषयककृत्याश्रयो देवदत्तः इति शाब्द-बोधः इत्याहुः ।

---

## नव्यमतेन द्वितीयानुपपत्तिवारणम्

नव्यास्तु, कृतपूर्वी कटमित्यत्र कृत्याश्रयरूपः कर्ता इनिरूपतद्धितस्यैवार्थः । कृतपदं च तद्धितार्थे शक्तिग्राहकतयोपयुक्तम्, न तु कृतिकर्मार्थकम् । एवं च क्तप्रत्ययेन कर्मानभिधानान्न द्वितीयानुपपत्तिः । तद्धितार्थकृतेः कृधात्वर्थकृतेश्चोक्तरीत्या भेदाभावेन तद्धितार्थ कृतौ कटकर्मकत्वान्वयेऽपि न (कार्यकारणं) [कारकाणां] धात्वर्थान्वयभङ्गप्रसङ्गः । [2]क्तान्तकृधातोः तात्पर्यग्राहकतया तद्धितार्थकृतेः धातुप्रयोज्योपस्थितिविषयत्वरूपधात्वर्थत्वस्याप्यनपायादिति प्राहुः ।

---

1 कटविषयकेति — कटनिष्ठकृतिकर्मतायाः साध्यताख्यविषयतारूपत्वादिति भावः ।

2 ननु कृतेरभेदेऽपि इनिप्रत्ययार्थकृतेः धातुजन्योपस्थितिविषयत्वरूपधात्वर्थत्वाभावात् कुतो न कारकाणां धात्वर्थान्वयभङ्गः, इत्यत आह—क्तान्तकृधातोरिति ।

### कृतपूर्वी कटमित्यत्र द्वितीयानुपपत्तिशङ्काया एवानवसरः इति सारार्थनिरूपणम्

वस्तुतस्तु, अनभिधानपदार्थपर्यालोचनायां, कृतपूर्वीत्यादौ न द्वितीयानुपपत्तिशङ्कापि । तथाहि- यथाश्रुतस्य कर्मत्वानभिधानस्य द्वितीयानियामकत्वे ओदनः पक्त्वा भुज्यते इत्यादौ [1]कृता कर्मत्वानभिधानात् द्वितीयापत्तिः । न च कृदाख्याततद्धितसमासान्यतमाभिहितत्वसामान्याभावस्य द्वितीयानियामकत्वान्न दोषः । तत्र कृता कर्मत्वानभिधानेऽपि आख्यातेन तदभिधानादिति वाच्यम् । तथा सति भोक्तव्यमोदनं पचतीत्यादौ द्वितीयानुपपत्तेः, कृता [2]कर्मत्वाभिधानात् । न च तत्र भोजनकर्मत्वाभिधानेऽपि पाककर्मत्वानभिधानान्न दोष इति वाच्यम् । ओदनः प(क्ते) [क्त्वे] त्यादावपि [3]तदनभिधानात् द्वितीयापत्तेरपरिहारात् । न च प्रधानक्रियानिरूपितकर्मत्वानभिधानमेव द्वितीयानियामकमिति

---

1 कृतेति — आख्यातेन कर्मत्वाभिधानेऽपीत्यादिः ।

2 कर्मत्वाभिधानादिति — तथा च निरुक्तान्यतमाभिहितत्वसामान्याभावस्य द्वितीयाप्रयोजकस्याभाव इति भावः ।

3 तदनभिधानात् — पाककर्मत्वानभिधानात् ।

वाच्यम् । तथापि चैत्रेण दृश्यमानं घटं मैत्रः पश्यतीत्यादौ [1]द्वितीयानुपपत्तेः । ज्ञानभेदेन विषयताभेदे मानाभावेन चैत्रदर्शनमैत्रदर्शनोभयनिरूपितविषयत्वरूपस्य कृताऽभिधानात् ।

---

## निष्कृष्टानभिधानपदार्थनिरूपणम्

तस्मात्, [2]प्रधानीभूत—कृदाख्याताद्यन्यतमेनानभिधानमेव अनभिधानपदार्थः इति वक्तव्यम् ।

अथवा, तत्तत्प्रातिपदिकार्थविशेषणतामात्रेण कर्मत्वाद्यविवक्षणमेव तदनभिधानपदार्थः । तत्तत्प्रातिपदिकार्थविशेष्य-

---

1 द्वितीयानुपपत्तेरिति — मुख्यविशेष्यमैत्रान्वयिदर्शनक्रियायाः प्रधानक्रियात्वात्, तद्विषयताया एव तत्कर्मतारूपत्वादिति भावः ।

2 प्रधानीभूतेति — चैत्रेण दृश्यमानं घटं मैत्रः पश्यतीत्यत्र मुख्यविशेष्यमैत्रान्वय्यर्थकाख्यातस्यैव प्रधानत्वात् तेन कर्मत्वानभिधानात् न द्वितीयानुपपत्तिरिति भावः ।

तया कर्मत्वादिविवक्षायां द्वितीयादेः साधुत्वमिति पर्यवस्यति। इत्थं च (प्रमाणी) [प्रधानी] [1]भूततद्धितेन कर्मत्वानभिधानात् [2]कटविशेष्यत्वेन कर्मत्वस्य विवक्षितत्वाच्च न द्वितीयानुपपत्तिशङ्कालेशोऽपि। [3]संभेदे नान्यतरवैयर्थ्यमिति न्यायेन एकस्यैव कर्मत्वस्य बोधनात् न कृद्–द्वितीयान्यतरवैयर्थ्यम्। [4]नित्यसापेक्षत्वाच्च न सविशेषणकृतशब्दस्य [5]वृत्त्यनुप्रवेशानुपपत्तिरपीति सारः।

---

1 प्रधानीभूततद्धितेन — कृतपूर्वी इत्यत्र इनिप्रत्ययेन।

2 अथवा इत्युक्तरीत्याह – कटविशेष्यत्वेनेति

3 ननु तथापि कटमिति द्वितीयया, कृतेत्यत्र क्तप्रत्ययेन च एकस्यैव कृतिकर्मत्वस्य वोधनं व्यर्थमित्यत आह — संभेदे – इति सांकर्ये इत्यर्थः।

4 नित्यसापेक्षत्वाच्चेति — चैत्रस्य दासभार्या इत्यादौ नित्यसापेक्षदासपदस्य चैत्रसंबन्धरूपविशेषणविशिष्टस्य वृत्त्यनुप्रवेशदर्शनादिति भावः।

5 वृत्त्यनुप्रवेशेति — कृतपूर्वी इति वृत्तौ अनुप्रवेशेत्यर्थः।

## ज्ञापकबलेनाभिहितेऽपि कर्मणि द्वितीयोपपत्तिरिति केषांचिन्मतनिरूपणं, तदपाकरणं च

एतेन, 'कर्तृकर्मणोः कृति' (पा. सू.2-3-65) इति सूत्रे कृद्ग्रहणेन ज्ञाप्यते, कृतपूर्वी कटमित्यादावभिहितेऽपि कर्मणि तद्बोधिका विभक्तिर्भवतीति । तेन न द्वितीयानुपपत्तिः । तथाहि—उक्तज्ञापनानङ्गीकारे [1]सूत्रे कृद्ग्रहणं व्यर्थम्, तद्धिततिङादियोगे [2]षष्ठीव्यावृत्त्यर्थम् । 'न लोकाव्यय' (पा.सू. 2-3-69) इति सूत्रेण लादेशरूपतिङादियोगे षष्ठीनिषेधेन परिशेषादेव कृद्योगे षष्ठीविधिप्राप्तेः । नापि कृतपूर्वी कटमित्यादौ [3]तद्धितयोगे षष्ठीव्यावृत्त्यर्थम् । कृद्योगषष्ठ्या अपि [4]अनभिहिताधिकारीयत्वेन तत्र कर्मणः क्तप्रत्ययेनाभिहिततया षष्ठ्याः अप्रसक्तत्वेन तद्व्यावृत्त्यर्थं कृद्ग्रहणा-

---

1 सूत्रे — षष्ठीविधायके 'कर्तृकर्मणोः कृति' इति सूत्रे ।

2 षष्ठीव्यावृत्त्यर्थमिति — तद्धिततिङादियोगे षष्ठीव्यावृत्तिफलकमित्यर्थः । व्यावृत्त्यर्थं सूत्रे कृद्ग्रहणं व्यर्थमिति योजना ।

3 तद्धितयोगे — इनिप्रत्यययोगे ।

4 अनभिहिताधिकारीयत्वेनेति — षष्ठीविधायकस्य 'कर्तृकर्मणोः' इति सूत्रस्य अनभिहिताधिकारस्थत्वादिति भावः ।

संभवात् । उक्तज्ञापनाङ्गीकारे तु कृता कर्माभिधानेऽपि तद्धितयोगेन षष्ठ्याः प्रसक्त्या तद्व्यावृत्त्यर्थं कृद्ग्रहणसार्थक्यमिति केषांचित् प्रलपितमपि अपास्तम् ।

[1]उक्तरीत्या (ज्ञायमानं) [ज्ञापनं] विनैव द्वितीयोपपत्तौ कृद्ग्रहणस्य ज्ञापकताकल्पकत्वे मानाभावात् । उपदर्शितरीत्या कर्मणोऽनभिधानसत्त्वेन अनभिहिताधिकारीयषष्ठ्याः प्रसक्त्या तद्वारणाय कृद्ग्रहणस्यावश्यकतया वैयर्थ्याभावेन ज्ञापकत्वासंभवाच्च । व्यर्थं सत् ज्ञापयतीति न्यायेन व्यर्थस्यैव ज्ञापकतया प्रकृते कृद्ग्रहणस्योक्तरीत्या सार्थक्यात् । इत्यलं प्रसङ्गागतविचारबाहुल्येन ।

---

**आख्यातस्य कृतिशक्तत्वे संख्यावाचकत्ववैफल्यशङ्का, तत्परिहारश्च**

अथ आख्यातस्य कृतौ शक्तिस्वीकारे संख्यावाचकत्वमफलम्, चैत्रः पचतीत्यादौ संख्याबोधस्य सुप एव संभवात् ।

---

1 उक्तरीत्या — प्रधानीभूतकृदाख्याताद्यन्यतमेनानभिधानं, तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षणं वा अनभिधानपदार्थः इत्युक्तरीत्या । एवमग्रेऽपि ।

कर्तरि शक्तौ तु [1]पचतीत्यादौ संख्याबोधानुरोधेन तत् सफलमिति चेन्न ।

लक्षणया कर्तृबोधके पचतीत्यादौ (भसख्या) [संख्या] बोधानुरोधेन कृतिशक्तावपि [2]तत्साफल्यात् । न च संख्याविशिष्टकर्तर्येव लक्षणाऽस्तु इति वाच्यम् । विशिष्टलक्षणाप्रतिसन्धानं विनापि तादृशान्वयबोधात् ।

---

चैत्रः पचतीत्यादौ प्रथमान्तार्थ मुख्यविशेष्यको बोधः

न च कृतिशक्तौ कृतिः पचति इति वाक्ययोग्यतापत्तिः, कृतावभेदेन पाकानुकूलकृतिप्रकारकशाब्दस्य तद्वाक्यजन्यस्य [3]संभवादिति वाच्यम् । आख्यातार्थकृतेः भेदान्वयबोधे एव

---

1 पचतीत्यादाविति — प्रथमान्तपदासमभिव्याहृते इत्यादिः ।

2 तत्साफल्यात् — आख्यातस्य संख्यावाचकत्वसाफल्यात् ।

3 संभवादिति—दण्डवान् रक्तदण्डवान्, घटो नीलघटः इत्यादिप्रयोगदर्शनात् विधेयांशे अधिकावगाही बोधः संभवतीति भावः ।

साकाङ्क्षत्वोपगमात् । एवं च, चैत्रः पचतीत्यादौ पाकानुकूलकृतिमांश्चैत्रः इत्याद्याकारकः प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः ।

---

## आख्यातस्य कृतौ शक्तिः, आश्रयत्वादौ निरूढलक्षणा

रथो गच्छतीत्यादौ गत्याश्रयत्वमात्रप्रतीत्या आश्रयत्वे, घटो नश्यतीत्यादौ [नाशप्रतियोगित्व] प्रतीत्या तत्र [प्रतियोगित्वे] आख्यातस्य निरूढलक्षणा । नचोभयत्र प्रयोगात् [1]वैपरीत्यमेव किं न स्यादिति वाच्यम् । तथासति चैत्रो जानातीतिवत् [2]घटो जानातीति प्रयोगवारणाय, [3]रथो गच्छतीत्या-

---

1 वैपरीत्यमेवेति — आश्रयत्वादौ शक्तिः, कृतौ निरूढलक्षणा इति वैपरीत्यमेवेत्यर्थः ।

2 घटो जानातीति प्रयोगवारणायेति — विषयतासंबन्धावच्छिन्नायाः ज्ञानाश्रयतायाः घटे सत्त्वादिति भावः ।

3 विषयतायाः वृत्त्यनियामकत्वेन तत्संबन्धावच्छिन्नाधारता अप्रसिद्धेति मन्यते यदि, तदाप्याह–रथो गच्छतीत्यादि–कालिकसंबन्धस्य वृत्तिनियामकतया तत्संबन्धावच्छिन्नायाः गमनाधारतायाः महाकाले सत्त्वात् महाकालो गच्छतीति प्रयोगापत्तिरिति भावः ।

दिवत् महाकालो गच्छतीत्यादिप्रयोगवारणाय, [1]तत्तत्संबन्धावच्छिन्नाश्रयतासु, कृति (त)[म] दन्यवस्तुमात्रवृत्तिप्रतियोगित्वे च शक्तिकल्पने गौरवापत्त्या, कृतौ शक्तिः. आश्रयत्वादौ लक्षणा इत्यस्यैव सम्यक्त्वात् । न च विक्लृत्त्यादिफलानुकूलव्या[2]पारमात्रस्य धात्वर्थतया कृतेरपि तदन्त[र्गत]त्वेन कथमाख्यातार्थत्वम्, अनन्यलभ्यस्यैव शब्दार्थत्वादिति वाच्यम् । कृतित्वेनान्यलभ्यत्वाभावात्, विक्लृत्त्यनुकूलव्यापारानुकूलकृतेरनन्यलभ्यत्वाच्च, रूपादिपरावृत्तिफलकतेजःसंयोगादेरेव पचाद्यर्थतया कृतेर्धात्वर्थानन्तर्गतत्वाच्च । [3]अत एव 'स्वतन्त्राः परमाणवः पच्यन्ते' इति प्रयोगः ।

---

1 तत्तत्संबन्धेति — समवायादिसंबन्धेत्यर्थः ।

2 व्यापारमात्रस्य — व्यापारसामान्यस्य ।

3 अत एवेति — विक्लृत्त्यनुकूलव्यापारस्य धात्वर्थत्वे निरवयवे परमाणौ अवयवविश्लेषात्मक विक्लृत्तेः फलस्यासंभवात् पाककर्मता परमाणूनां न स्यादिति भावः । वस्तुतः, तेजःसंयोग इव विक्लृत्त्यनुकूलव्यापारोऽपि पच्यर्थः । धातूनामनेकार्थत्वात् । व्युत्पत्तिवादे द्वितीयाविचारे तेजःसंयोगस्य, लकारार्थविचारे विक्लृत्त्यनुकूलव्यापारस्य पचधात्वर्थता व्यवहृता । परंतु, पचति इत्यस्य, पाकं करोति इति पाकात् पृथक् कृतेः करोतिना विवरणात् न कृतेः पचधात्वर्थान्तर्गतत्वमिति बोध्य ।

यत्तु, तेजःसंयोगानुकूलकृतिमति पचतीति प्रयोगानापत्तिरिति ।

तदसत् । तदानीं पचतीति प्रयोगाभावेन इष्टापत्तेः । प्रस्रावणानन्तरं रसादिपरावृत्त्यर्थं अङ्गारेषु पुनः स्थापनेन प्रस्रावणानुकूलकृतेरपि रसादिपरावृत्तिजनकतेजःसंयोगानुकूलकृतित्वाभ्युपगमेन पचतीति प्रयोगोपपत्तेश्च, (यत्) [पच] धातोः प्रस्रावणे लक्षणयैव तदानीं पचतीति प्रयोगनिर्वाहाच्च ।

---

### आख्यातार्थः आश्रयः, क्रियामुख्यविशेष्यक एव शाब्दबोधः इति वैयाकरणमतनिरूपणम्

वैयाकरणास्तु, आख्यातार्थः आश्रयः । आश्रयत्वं [1]चाखण्डोपाधिरूपं शक्यतावच्छेदकम् । न चाश्रयस्य चैत्रादिपदलभ्यतया कथं तत्राख्यातशक्तिरिति वाच्यम् । आश्रयत्वेन

1 अखण्डोपाधिरूपमिति — तथाच न शक्यतावच्छेदकानन्त्येन गौरवमिति भावः ।

तदलाभात् । एवं च चैत्रः पचतीत्यादौ एकचैत्राभिन्नाश्रयिका [1]पचिक्रिया इत्याद्याकारकः शाब्दबोधः । आख्यातस्थले सर्वत्र क्रियाविशेष्यकशाब्दबोधस्यैवाभ्युपगमात्, तथैवानुभवात् । अत एव मृगो धावतीत्यादौ मृगाभिन्नैकाश्रयिका धावनक्रिया इत्याकारकः क्रियामुख्यविशेष्यकबोधः साधुः । पश्य मृगो धावतीत्यादौ मृगकर्तृकधावनक्रियाया एव दृशिक्रियायां कर्मतासंबन्धेनान्वयः । [2]एवमेव वाक्यार्थकर्मतोपपद्यते ।

---

### प्रथमान्तार्थस्य मुख्यविशेष्यत्वे, पश्य मृगो धावतीत्यत्र वाक्यार्थकर्मकदर्शनान्वयानुपपत्तिः

मृगो धावतीत्यादौ धावनानुकूलकृतिमान् मृगः इत्याकारको नैयायिकसंमतः प्रथमान्तार्थमुख्यविशेष्यकबोधस्तु न

---

1 पचिक्रियेति — क्रियेति स्वरूपकथनम् । क्रियात्वस्य न शाब्दबोधे भानम् । तदुपस्थापकपदाभावात् । पाक इत्येव बोधः । एवमग्रेऽपि ।

2 एवमेव — क्रियामुख्यविशेष्यकबोधाभ्युपगमे एव ।

साधुः, पश्य मृगो धावतीत्यादौ वाक्यार्थकर्मत्वानुपपत्तेः। तथाहि–पश्य मृगो धावतीत्यादौ धावनानुकूलकृतिविशिष्टमृगस्य दृशिक्रियायां कर्मत्वापत्तौ [1]द्वितीयापत्तिः। नचैवं [2]अप्रथमासामानाधिकरण्यात् शतृप्रसङ्गः। तथाच धावन्तं मृगं पश्येति वाक्यप्रयोगः स्यात्। एवमपि द्वितीयाया दुर्वारत्वेन पश्य मृगो धावतीति वाक्यासंभवापत्तिः। न च पश्येत्यत्र तमिति कर्माध्याहार्यम्। [3]वाक्यभेदप्रसङ्गात्। उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वादध्याहारे[4]ऽनन्वयापत्तेरित्याहुः।

---

1 द्वितीयापत्तिरिति — मृगपदोत्तरमित्यादिः।

2 अप्रथमासमानाधिकरणेति —'लटः शतृशानचावप्रथमासमानाधिकरणे' इत्यनुशासनादिति भावः।

3 वाक्यभेदप्रसङ्गादिति — एकवाक्यता तत्र महाभाष्यसिद्धेति भावः।

4 अनन्वयापत्तेरिति — क्रियाविशेषस्येत्यादिः।

केवलनामार्थस्य धात्वर्थे न भेदेनान्वयः, धावनकर्तृत्व विशिष्टस्य मृगस्य वाक्यार्थस्य दर्शनक्रियायां कर्मतयान्वयः, अतो न मृगपदात् द्वितीयापत्तिरिति स्वाशयनिरूपणम्

अत्रेदं प्रतिभाति । पश्य मृगो धावतीत्यादौ वाक्यार्थभूतस्य धावनानुकूलकृतिविशिष्टस्य मृगस्य कर्मतासंबन्धे[1]नान्वयः । न चैवं मृगपदोत्तरं द्वितीयापत्तिरिति वाच्यम् । अत्र वाक्यार्थस्य कर्मत्वेन मृगपदोत्तरं [2]द्वितीयापादनासंभवात् । यत्र तु केवलमृगपदार्थस्य कर्मत्वे तात्पर्यं, तत्र मृगपदोत्तरं द्वितीयायाः साधुत्वात् । न च तथापि धावनानुकूलकृतिविशिष्टस्य मृगस्य नामार्थस्य धात्वर्थे दर्शने [3]कथं भेदेनान्वयः । अन्यथा, तण्डुलः पचति इत्यादौ तण्डुलादेरपि कर्मतासंबन्धेन पाकेऽन्वयापत्तेरिति वाच्यम् । [4]केवलनामार्थस्य धात्वर्थे

1 अन्वय इति — दर्शनक्रियायामन्वयः ।

2 द्वितीयापादनासंभवादिति — कर्मीभूतवाक्यार्थबोधकस्य वाक्यस्य प्रातिपदिकसंज्ञाविरहेण न तदुत्तरं द्वितीयापादनसंभवः इति बोध्यम् ।

3 कथं भेदेनान्वयइति — नामार्थधात्वर्थयोः भेदेनानन्वयव्युत्पत्तेरिति भावः ।

4 केवलनामार्थस्य—आख्यातार्थाद्यविशेषितस्य प्रातिपदिकार्थस्य ।

भेदेनान्वयानङ्गीकारात् । वाक्यार्थस्य धात्वर्थे भेदेनान्वयाङ्गीकारे क्षतिविरहात् ।

अत [एव]

'श्रुत्वा ममैतन्माहात्म्यं तथाचोत्पत्तय: शुभाः ।
पराक्रमं च युद्धेषु जायते निर्भय: पुमान् ॥' इत्यत्र

प्रथमान्तपदोपस्थापितानां शुभत्वविशिष्टोत्पत्तीनां [1]भेदेन श्रवणे अन्वयः संगच्छते । एवं च तण्डुलः पचतीत्यादौ तण्डुलपदार्थस्य तण्डुलपदरूपनामार्थत्वेन धात्वर्थेन सह तस्य न साक्षादन्वयबोध: । शुक्लः तण्डुलः पचतीत्यादौ च शुक्लाभिन्नतण्डुलरूपवाक्यार्थस्य नामार्थत्वाभावेनान्वयबोधो निराबाध एवेति ।

———

तण्डुलपदोत्तरविभक्तिजन्योपस्थितेः कारणस्याभावात्
शुक्लः तण्डुलः पचति इत्यत्रान्वयानुपपत्तिशङ्का तन्निरासश्च

ननु तण्डुलः पचतीत्यादौ तण्डुलस्य कर्मतासंबन्धेन पाकादावन्वयबोधवारणाय, विशेष्यतासंबन्धेन तण्डुलपदजन्य-

1 भेदेन — कर्मतासंबन्धेन ।

तण्डुलप्रकारकशाब्दबोधं प्रति तण्डुलपदोत्तरविभक्तिजन्योपस्थितेः (कारणत्वमिति बोधापत्तेः)कारणत्वकल्पनात्, कथं [1]तां विना शुक्लः तण्डुलः पचतीत्यादौ तण्डुलपदजन्यान्वयबोधः [इति चेत्]

[2]न, शुद्धतण्डुलत्वरूपेण तण्डुलान्वयबोध एव तादृशोपस्थितेः कारणत्वमिति [3]बोधोपपत्तेः। शुद्धतण्डुलत्वप्रकारकतण्डुलबोध एव विभक्तिजन्योपस्थितौ कारणत्वकल्पनात्। (इतिचेन्न) विशेष्यतासंबन्धेन तण्डुलपदजन्य तण्डुलप्रकारकशाब्दबोधे विभक्तिजन्योपस्थिति-प्रथमान्तशुक्लादिपदसमभिव्याहृत-प्रथमान्ततण्डुलपदोत्तरपच्यादिधातुजन्योपस्थित्यन्यतरस्य कारणत्वकल्पनात्।

---

1 तां विना — तण्डुलपदोत्तरविभक्तिजन्योपस्थितिं विना।

2 शुद्धतण्डुलत्वरूपेण — इतरपदार्थाविशेषिततण्डुलत्वरूपेण।

3 बोधोपपत्तेरिति — शुक्लः तण्डुलः पचतीत्यादौ इत्यादिः।

## वाक्यार्थकर्मतास्थले इतिपदाध्याहारः, इतिपदार्थः कर्मत्वं, तस्य क्रियायां, वाक्यार्थस्य इत्यर्थे चान्वयः इति केषांचिन्मतनिरूपणम्

केचित्तु, पश्य मृगो धावतीत्यादिवाक्योत्तरं [1]कर्मत्वोपस्थापकमितिपदमध्याहृत्य सर्वत्र वाक्यार्थकर्मस्थले अन्वयबोधः। निपाताव्ययातिरिक्तनामार्थयोरेवान्वयबोधस्य अव्युत्पन्नत्वेन निपातीभूतेतिपदोपस्थापितकर्मत्वे मृगो धावतीत्याद्यर्थस्य धावनकर्तृमृगादेः [2]अन्वयबोधे बाधकाभावात्। एवं निपातातिरिक्तनामार्थस्यैव धात्वर्थे साक्षादन्वयबोधस्याव्युत्पन्नतया इतिपदोपस्थापित कर्मत्वस्यधात्वर्थदर्शनादौ [3]साक्षादन्वयबोधस्यापि निराबाधता। न च घटो न, चन्द्र इव, इत्यादौ नञ्पदेवपदाद्युपस्थापितार्थे घटपद–चन्द्रपदार्थयोः [4]भेदेन अन्वयबोधदर्शनेन नामर्थयोः भेदा [न] न्वयबोधव्युत्पत्तौ नाम्नि निपातातिरिक्तत्वविशेषणस्यावश्यकत्वेऽपि नामार्थधात्वर्थयोः

---

1 कर्मत्वोपस्थापकमिति — निपातानामनेकार्थत्वादिति भावः।

2 अन्वयबोधे इति — आधेयतासंबन्धेनेत्यादिः।

3 साक्षादन्वयबोधस्य — विभक्त्यर्थमद्वारीकृत्य निरूपकतारूपभेदसंबन्धेनान्वयबोधस्य।

4 भेदेन — प्रतियोगिताविशेषरूपभेदसंबन्धेन।

भेदे [ना] न्वयबोधव्युत्पत्तौ नाम्नि तादृशविशेषणं किमर्थमिति वाच्यम्। नातिरात्रे षोडशिनं गृह्णातीत्यादौ निपातभूतनञर्थेन सह [1]धात्वर्थान्वयबोधस्य सर्वसंमतत्वेन [2]तत्रापि तद्विशेषणस्यावश्यकत्वात्। अत एव अव्ययोत्तरं कर्मत्वाद्युपस्थापिकां प्रथमान्यविभक्तिं प्राञ्चो न स्वीकुर्वन्ति। धात्वर्थे तेषां कर्मत्वादिसंबन्धेनैवान्वयबोधोपपत्तेः। नचैवं, पश्य चैत्रः पचतीत्यादौ वाक्यार्थकर्मस्थले अध्याहृतेतिपदोपस्थापितकर्मतायामाख्यातार्थविशिष्टचैत्रादेः विधेयत्वेनान्वयबोधे, कर्मत्वादौ नामार्थस्यो[3]द्देश्यतयैवान्वयः इति घटमानयेत्यादिस्थले क्लृप्तव्युत्पत्तिभङ्गप्रसङ्ग इति वाच्यम्। इतिपदसमभिव्याहारे तादृशव्युत्पत्तिसंकोचस्वीकारादित्याहुः।

---

1 धात्वर्थान्वयबोधस्येति — नातिरात्रे इति वाक्ये धात्वर्थस्य नञर्थाभावे, तत्र च लिङर्थेष्टसाधनत्वस्यान्वयः। तथा च अतिरात्रे षोडशिग्रहणाभावः इष्टसाधनमिति अन्वयबोधः।

2 तत्रापि तद्विशेषणस्य — नामार्थधात्वर्थयोर्भेदानन्वय व्युत्पत्तावपि निपातातिरिक्तत्वविशेषणस्य।

3 उद्देश्यतयैवान्वय इति — अस्य क्लृप्तव्युत्पत्तीत्युत्तरेणान्वयः।

## वाक्यार्थकर्मतास्थले अध्याहृतेतिपदोपस्थापितो वाक्यार्थः तदुत्तरद्वितीयार्थे कर्मत्वे अन्वेतीति अन्येषां मतनिरूपणम्

अन्येतु, अध्याहृतेतिपदेनैव [1]तादृशवाक्यार्थोपस्थितिः, तादृशवाक्यं च तात्पर्यग्राहकम् । इतिपदोत्तर[2]द्वितीयायाश्च कर्मत्वमर्थः । तावतैव विभक्त्यर्थद्वारा धात्वर्थनामार्थयोरन्वयबोधसंभवादित्याहुः ।

---

## इतिशब्दाध्याहारवादिमतद्वयनिरासः

तदुभयमप्यसत् । वा (च्या)[क्या] र्थकर्मस्थले इतिपदमध्याहृत्यान्वयबोधस्वीकारे, तण्डुलं पचतीत्यादावपि इतिपदमध्याहृत्यान्वयबोधसंभवे, तण्डुलः पचति, शुक्लस्तण्डुलः पचति इत्यादौ सर्वत्र नामार्थधात्वर्थयोः साक्षादन्वयबोधस्यैव स्वीकर्तुमुचितत्वात् ।

---

1 तादृशवाक्यार्थेति — धावनानुकूलकृतिन्मृगरूपवाक्यार्थेत्यर्थः ।

2 द्वितीयायाश्चेति — एवमेव, पृथिव्यामेव गन्धः इत्यत्र एवकारप्रकाशिकासप्तम्या आधेयत्वार्थकत्वं दीधितिकृद्भिरुक्तं बोध्यम् ।

तस्मात् केवलनामार्थस्य भेदेन धात्वर्थे अन्वयस्याव्युत्पत्तावपि, वाक्यार्थस्य धात्वर्थे भेदेनान्वये न दोषः [1]इत्युक्तरीतिरेव समीचीना ।

---

वाक्यार्थस्यापि भेदेन धात्वर्थे अनन्वयशङ्का, तत्परिहारश्च

(पत्र) [यत्तु] [2]विशिष्टस्यानतिरिक्ततया वाक्यार्थस्यापि नामार्थतया तस्य धात्वर्थे भेदान्वयासंभवादुक्तरीतिर्न सम्यगिति ।

तदसत् । विशिष्टस्यानतिरिक्तत्वेऽपि विशिष्ट-केवल-[3]प्रकारतयोर्भेदात् ।

---

1 उक्तरीतिरेव — इतिपदाध्याहारं विनैव वाक्यार्थस्य कर्मतासंबन्धेन दर्शनेऽन्वयः इति रीतिरेव ।

2 विशिष्टस्यानतिरिक्ततया — धावनानुकूलकृति विशिष्टमृगस्य विशेष्यभूतकेवलमृगानतिरिक्ततया ।

3 प्रकारतयोरिति — तथाच केवल (पदार्थान्तराविशेषित) नामार्थप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधे धातुजन्योपस्थितेः, विशेष्यतया प्रतिबन्धकत्वमिति भावः ।

दृशिधातोः दर्शनविशेषे लक्षणाश्रयणेनोपपत्तिः

यद्वा, (ता) दृशिधातोरेव धावनकर्तृमृगकर्मकदर्शने लक्षणा । [1]निरुक्तवाक्यं तात्पर्यग्राहकम् । (व च) [न च] निरुक्तदर्शने दृशिधातोर्वा लक्षणा, पदान्तरस्य वेत्यत्र किं नियामकमिति वाच्यम् । दृशिधातोः निरुक्तदर्शने लक्षणायां तादात्म्यस्य शक्यसंबन्धस्य लघुत्वात्, पदान्तरस्य लक्षणायां शक्यसंबन्धस्य गुरुत्वात् । अथवा, दृशिधातोः मृगकर्तृकोत्कटधावनकर्मकदर्शने लक्षणा । मृगो धावतीति वाक्यं तात्पर्यग्राहकमिति । युज्यते चैतत् । [2]अन्यथा, 'जानामि सीता जनकप्रसूता' इत्यादौ वैयाकरणानामप्यनिर्वाहात् ।

———

1 निरुक्तवाक्यं — मृगो धावतीति वाक्यम् ।

2 अन्यथेत्यादि — तथा च जानामि सीता' इत्यत्र ज्ञाधातोः जनकप्रसूताभिन्नसीताविषयकज्ञाने लक्षणा, 'सीता जनकप्रसूता' इति वाक्यं तात्पर्यग्राहकमित्यर्थः ।

### प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे, पचन्तिकल्पाः पुरुषाः इति प्रयोगप्रसङ्गः इत्याक्षेपः, तत्परिहारश्च

यत्तु, पचन्तिकल्पं पुरुषाः इत्यादिप्रयोगस्य सर्वसिद्धतया, [1]तत्र आचार्यकल्पा द्विजाः इतिवत् पचन्तिकल्पाः पुरुषाः इति प्रयोगप्रसङ्गः । [2]प्रकृत्यर्थस्य [3]ईषदपरिसमाप्तपाककर्तुः लिङ्गसंख्यान्वययोग्यता तिङुपात्ताया इव सुबुपात्ताया अपि बहुत्वसंख्यायाः, सुबुपात्तलिङ्गस्य च तत्रान्वयसंभवादिति प्रथमान्तार्थविशेष्यकबोधोपगमो न समञ्जसः । क्रियाविशेष्यकबोधोपगमे [4]तस्याः लिङ्गसंख्यान्वयायोग्यत्वान्न दोष इति ।

(तत्र) [तन्न] स्यादयं कर्तुराख्यातार्थतावादिनां दोषः । भावना तु धातूपात्तेव तिङुपात्तापि न संख्यान्वययोग्येति, साधुत्वार्थमेकवचनस्य, सामान्ये नपुंसकस्य च न्याय्यत्वात् ।

---

1 तत्र — पचन्तिकल्पं पुरुषाः इति प्रयोगस्थले ।

2 प्रकृत्यर्थस्य — पचन्ति कल्पाः इत्यत्र सुब्विभक्तिप्रकृत्यर्थस्य ।

3 ईषदपरिसमाप्तेति — ईषदपरिसमाप्तत्वं कल्पप्प्रत्ययार्थः । स च पचन्तिपदबोध्ये अन्वेति ।

4 तस्याः — प्रकृत्यर्थभूतेषदसमाप्तपाकक्रियायाः ।

भावप्रधानमाख्यातमिति निरूक्तबलेन क्रियाविशेष्य-
कबोधाक्षेपः निरूक्तार्थकथनेन तत्परिहारश्च

यत्तु, 'भावप्रधानमाख्यातम्' इति निरुक्तेन भावशब्दार्थक्रियाप्राधान्योक्त्या तद्विशेष्यकबोध एवोपेयः, न तु प्रथमान्तार्थविशेष्यकः, उक्तनिरुक्तविरोधादिति ।

तदपि न । भावपदस्य भावयतीति व्युत्पत्त्या कृतिरूपभावनापरतया उक्तनिरुक्तेन [1]आख्यातार्थेषु संख्यावर्तमानत्वादिकेषु भावनारूपाख्यातार्थस्यैव धात्वर्थं प्रति प्राधान्यप्रतिपादनात् । 'सत्वप्रधानानि नामानि' इत्युत्तरवाक्यगत प्रधानशब्दस्य वाचकपरतया 'भावप्रधानमाख्यातम्' इति निरुक्तस्य कृतिवाचकमाख्यातमित्यर्थप्रतिपादकतया विरोधास्पर्शाच्च ।

---

1 आख्यातार्थेष्विति — 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन' इत्यनेन सामान्यतः आख्यातार्थस्य धात्वर्थं प्रति विशेष्यत्वे सिद्धे, आख्यातार्थेषु मध्ये भावनारूपार्थस्य विशिष्य विशेष्यत्वमुक्तनिरुक्तवाक्येन बोध्यते इत्यर्थः ।

## केषांचिन्मतेन भावप्रधानमिति निरुक्तार्थकथनम्

केचित्तु, 'भावप्रधानमाख्यातम्' इति निरुक्तेन आख्यार्थस्य धात्वर्थ[1]रूपभावविशेष्यत्वं बोध्यते। 'सत्वप्रधानानि नामानि' इति निरुक्तेन च लिङ्गसंख्यारूपान्य (त्व) [2]विशेष्यत्वं बोध्यते इत्याहुः।

---

## क्रियामुख्यविशेष्यकबोधे अनुपपत्तिप्रदर्शनम्

तस्मात् प्रथमान्तार्थमुख्यविशेष्यकबोधा[नु]पगमे चैत्रः पचतीत्यादौ चैत्रभावनयोः सर्वजनसिद्धस्योद्देश्यविधेयभावस्य भङ्गापत्तिः। एवं चैत्रः पाकभावनावान्नवेति संशयानुत्पादस्यानिर्वाहः। एवं प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्य प्राधान्यमित्युत्सर्गलभ्यस्य प्रत्ययार्थे प्रकृत्यर्थविशेषणत्व-

---

1 भावविशेष्यत्वमिति — भावस्य प्रधानं-भावप्रधानम्। प्रधानबोधकत्वादाख्यातस्य प्रधानत्वम्। धात्वर्थविशेष्यार्थबोधकमाख्यातमिति निरूक्तवाक्यार्थः।

2 विशेष्यत्वमिति — सत्वशब्दिततद्रव्यस्येति शेषः। सत्त्वप्रधानानि इत्यत्र सत्वं प्रधानं येषामिति बहुव्रीहिर्बोध्यः।

स्य [1]भङ्गापत्तिः । सत्यां हि गतौ प्रत्ययार्थे प्रकृत्यर्थो विशेषणमित्यस्योत्सर्गस्याप्यनुग्रहस्यैव न्याय्यतया तत्परित्यागानौचित्यात् । [एवं क्रियाविशेष्यकबोधनियमे, पचति, पच्यते इत्युभयत्रापि क्रियाविशेष्यकबोधोत्पादेन [2]बोधवैलक्षण्यानुपपत्तिश्च ।] यदि च कर्तृलकारे व्यापारविशेष्यकः, कर्मलकारे च फलविशेष्यको बोधः । पक्वः तण्डुलः [3]इत्याद्यनुरोधेन विशेषणविशेष्यभावविपर्यासस्यावश्यक्लृप्तत्वात् । फलानुकूलव्यापारस्य क्रियात्वेन फलस्यापि क्रियात्वात् क्रियाविशेष्यकबोधनियमोऽपीति विभाव्यते । तथापि क्रियाविशेष्यकबोधाङ्गीकारे क्रियायामाख्यातार्थाश्रयस्य आधेयतासंबन्धेनैवान्वयो वाच्यः । स च न संभवति । चैत्रो न पचतीत्यादाव-

---

1 भङ्गापत्तिरिति — आख्यातार्थस्य आश्रयस्य प्रकृतिभूतधातोरर्थे विशेषणतयान्वयादित्यर्थः ।

2 बोधवैलक्षण्यानुपपत्तिश्चेति — महाभाष्यकारै, पुत्रमिच्छति, इष्यते पुत्रः, इति वाक्यार्थयोर्वैलक्षण्यस्य 'सुपः आत्मनः' इति सूत्रे प्रतिपादानात् नात्रेष्टापत्तिः वैयाकरणै. वक्तुं शक्यते इति बोध्यम् ।

3 इत्याद्यनुरोधेन — इत्यादौ व्यापारजन्यविक्लृत्तिरूपफलाश्रयत्वा[illegible]बोधानुरोधेन ।

[1][न] न्वयापत्तेः । आधेयतासंबन्धस्य वृत्त्यनियामकतया अभावप्रतियोगितावच्छेदकत्वासंभवेन तत्संबन्धावच्छिन्नप्रतियोगिताकाभाव[2]बोधासंभवात् । अपि च, चैत्रः पचतीत्यादौ पाकत्वावच्छेदेन चैत्राश्रयकत्वस्य बाधेन, पाकत्वसामानाधिकरण्येनैव तदन्वयो वाच्यः । तथा च चैत्रादौ पचत्यपि चैत्रो न पचतीत्यादेः योग्यत्वप्रसङ्गः । पाकत्वसामानाधिकरण्येन चैत्राश्रयकत्वाभावसत्वात् । न च नञसमभिव्याहाराभावे पाकत्वसामानाधिकरण्येन बोधोऽभ्युपेयते । तत्समभिव्याहारे तु पाकत्वावच्छेदेन बोधाभ्युपगमात् नोक्तदोष इति वाच्यम् । प्रतियोग्यभावान्वयस्य [3]तुल्ययोगक्षेमताया व्यवस्थापनेन नञसत्वासत्त्वयोः प्रकारभेदाश्रयणासंभवात् ।

---

1 अनन्वयेति — नञर्थानन्वयेत्यर्थः ।

2 बोधासंभवादिति — प्रतियोग्यभावान्वययोः तुल्ययोगक्षेमतया चैत्रः पचतीत्यतः पाके चैत्राश्रयकत्वबोधे, चैत्रो न पचतीत्यतः पाके चैत्राश्रयकत्वाभावबोध एवोचित इति भावः ।

3 तुल्ययोगक्षेमताया इति— नञसमभिव्याहारे यादृशवाक्यात् यद्धर्मावच्छिन्ने येन संबन्धेन यद्धर्मावच्छिन्नस्यान्वयबोधः, नञ्समभिव्याहृतात् तादृशवाक्यात् तद्धर्मावच्छिन्ने तेन संबन्धेन तद्धर्मावच्छिन्नाभावः बोध्यते इति प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ इत्यस्यार्थो बोध्यः ।

## नञ्समभिव्याहारे क्रियाऽभावविशेष्यकबोधनिराकरणम्

[1]एतेन, नञ्समभिव्याहारे चैत्राश्रयकः पाकाभावः, चैत्राश्रयकपाकाभाव इति [वा] बोधोपगमोऽपि निरस्तः। क्रियामुख्यविशेष्यकबोध[2]नियमभङ्गापत्तेश्च। [3]अन्त्ये अधिकरणाकाङ्क्षापत्तेश्च।

---

## न्यायमतेऽपि प्रतियोग्यभावान्वययोः तुल्ययोगक्षेमत्वासंभवः इति आक्षेपः, तत्परिहारश्च

अथ भवन्मतेऽपि भूतले न घटः इत्यादौ भूतलवृत्तिघटाभावः इति बोधाङ्गीकारात् प्रतियोग्यभावान्वययोः न [4]तुल्य-

---

1 एतेन—प्रतियोग्यभावान्वययोः तुल्ययोगक्षेमताव्यवस्थापनेन।

2 नियमभङ्गेति — नञर्थाभावस्य मुख्यविशेष्यतया भानादिति भावः।

3 अन्त्ये — चैत्राश्रयकपाकप्रतियोगिकाभावः इति बोधाभ्युपगमे।

4 न तुल्ययोगक्षेमत्वमिति — नञसमभिव्याहारे भूतले घटः इत्यादौ भूतलवृत्तित्वस्य घटाभावान्वयबोधादिति भावः।

योगक्षेमत्वम । [1]जातौ न सत्तेत्यादौ सत्तायामेकार्थसमवायेन जातिवृत्तितया, जातिसमवेतत्वस्य चाप्रसिद्ध्या [2]प्रथमान्तमुख्यविशेष्यकबोधासंभवादिति [चेन्न]

तत्र समवेतत्वीयस्वरूपसंबन्धरूपव्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताक[3]जातिवृत्तित्वाभावबोधोपगमेनास्मन्मतेऽदोषात् ।

---

1 भूतले न घटः इत्यत्र भूतलवृत्तित्वाभाव एव घटे बोध्यते इत्युक्तावप्याह — जातौ न सत्तेत्यादाविति ।

2 प्रथमान्तेति — प्रथमान्तार्थेत्यर्थः । जातिवृत्तित्वाभावप्रकारकेत्यादिः ।

3 जातिवृत्तित्वाभावबोधेति — तथाच जातौ न सत्तेत्यत्र आधेयतामात्रं सप्तम्यर्थः । निरूपितत्व संबन्धेनप्र कृत्यर्थजात्यन्वितस्य तस्य समवेतत्वीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकत्वसंबन्धेन नञर्थाभावे, तस्य च प्रथमान्तार्थसत्तायामन्वयः इति बोध्यम् ।

## क्रियामुख्यविशेष्यकबोधाभ्युपगमे मैथिलैरुक्तानुपपत्तिप्रदर्शनम्

मैथिलास्तु, क्रियाप्राधान्यमते, 'प्रयाति पुरुषस्तस्य चरणावभिवादय' इत्यादावन्वयबोधानुपपत्तिः । सर्वनाम्नां प्रधानपरामर्शकतया तच्छब्देन [1]प्रधानीभूत (प्रपारणादि) [प्रयाणादि] क्रियापरामर्शात् । न्यायमते तु प्रधानीभूतपुरुषादिपरामर्शेनानुपपत्त्यभावादित्याहुः ।

---

## चैत्रः पचतीत्यत्र तृतीयापत्तिदोषेण नव्यानां क्रियाविशेष्यकबोधनिराकरणम्

नव्यास्तु, वैयाकरणैरपि 'अनभिहिते' (पा. सू. 2-3-1) कर्तरि तृतीया (पा. सू. 2-3-18) इत्यनुशासनस्य कर्तृविशेष्यतया तत्प्रातिपदिकार्थे अविवक्षिते सति तत्प्रातिपदिकात् तृतीया इत्येवार्थो वाच्यः । अन्यथा चैत्रेण पच्यते इत्यादौ कर्तुरनभिधानस्य दुर्वचत्वापत्तेः । तथाहि—न तावदवाचकत्वं

---

1 प्रधानीभूतेति — प्रयाति पुरुषः इति वाक्यजन्यबोधमुख्यविशेष्येत्यर्थः । एवमग्रेऽपि ।

अनभिधानम् । लकारसामान्यस्यैव कर्तृवाचकत्वेन कर्म-लकारस्य तदवाचकत्वासंभवात् । [1]कर्तरि यकः [2]असाधुत्वादेव चैत्रः पच्यते इत्यादिप्रयोगवारणोपगमात् य (उ) [गनु] त्तरत्वस्य कर्तृवाचकतावच्छेदके गौरवेणानिवेशात् । नापि अबोधकत्वम्, चैत्रेण पच्यते इति वाक्यस्य [3]कर्तृविषयक-स्वजन्यबोधे जनकत्वेन तद्घटकसकलपदानामेव जनकतया लकारस्यापि तद्बोधकत्वानपायात् । एवं च क्रियाविशेष्यक-बोधोपगमेन चैत्रः पचतीत्यादौ चैत्रस्य कर्तृविशेष्यतया अविवक्षितत्वे चैत्रपदोत्तरं तृतीयापत्तिः, प्रथमानुपपत्तिश्च । प्रथमान्तविशेष्यकबोधोपगमे च चैत्रस्य कर्तृविशेष्यतया विवक्षणान्नोक्तापत्तिरिति [4]स एवोचितः, न (नु) [तु] क्रियाविशेष्यक-बोध इति प्राहुः ।

---

1 कर्तरीति — लकारेण विवक्षिते इति शेषः ।

2 असाधुत्वादिति — 'कर्तरि शप्' इतिसूत्रप्रवृत्तेरिति भावः ।

3 कर्तृविषयक-स्वजन्यबोधे — तृतीयार्थकर्तृविषयके (स्वपदार्थ) निरुक्तवाक्यजन्ये बोधे ।

4 स एव — प्रथमान्तार्थविशेष्यकबोध एव ।

## चैत्रः पचतीत्यत्र तृतीयापत्त्या मीमांसकसिद्धभावना-विशेष्यकबोधनिरासः

एतेन, चैत्रः पचतीत्यादौ चैत्रनिष्ठा पाकभावना इत्याद्याकारको भावनामुख्यविशेष्यको बोधः, भावनाया आख्यातार्थत्वादिति मीमांसकमतमपि परास्तम् ।

तन्मतेऽपि [1]उक्तदोषावारणात् । तस्मात् प्रथमान्तार्थस्यैव विशेष्यत्वम् ।

---

## नैयायिकमते प्रथमान्तार्थमुख्यविशेष्यक एव बोधः इति न नियमः

वस्तुतस्तु, नैयायिकमते सर्वत्र प्रथमान्तार्थविशेष्यक एव बोधः इति न नियमः, कैरप्यभियुक्तैस्तथा अलिखनादनिर्वाहाच्च । किन्तु यथासंभवं तत्तद्विशेष्यकः । अत एव, पचतीत्यादौ प्रथमान्तपदासमभिव्याहारे भावनाविशेष्यकः,

---

1 उक्तदोषेति – कर्तृविशेष्यतया चैत्रप्रातिपदिकार्थस्याविवक्षितत्वेन कर्तुरनभिधानात् चैत्रपदोत्तरं तृतीयापत्तिरित्यर्थः ।

भावाख्यातस्थले क्रियाविशेष्यक (स्थल)एव बोधो नैयायिकानाम् [इति] लीलावतीप्रकाशविवरणे लिखनं दीधितिकृतां, (पच्यथे) एतद्भवने मैत्रेणैव पक्ष्यते [ते] मनमित्यादिना (नमत) [तेमन] कर्मकैतद्गृहाधिकरणक[1]पाकत्वावच्छेदेन मैत्रान्यकर्तृकत्वाभावः एवकारेण बोधयितुमशक्यः, शब्दात् (तादात्म्येन)[2][ताद्रूप्येण] पाकस्यानुपस्थितेः इति शङ्का च संगच्छते।

एवं न कलञ्जं भक्षयेदित्यादौ कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववदित्यादिबोधाङ्गीकरणं मणिकृतां संगच्छते ।

(यत्र)[यत्तु] न कलञ्जमित्यादौ बलवदनिष्टाननुबन्धित्वाभावव (त्वा) त्कलञ्जभक्षणानुकूल (त्व) कृतिमानिति प्रथमान्तार्थविशेष्यकबोधलिखनम् ।

तदसत् । [3]तत्र प्रथमान्तपदस्यैवाभावात् । अध्याहारे प्रमाणाभावात् । किञ्च, न कलञ्जमित्यादिवाक्यस्य

---

1 पाकत्वावच्छेदेनेति—धात्वर्थविशेष्यकबोधाशयेनैव शङ्कासंगतिरिति भावः ।

2 ताद्रूप्येण — तेमनकर्मकैतद्गृहाधिकरणपाकत्वेन ।

3 तत्र — न कलञ्जं भक्षयेदिति वाक्ये ।

कलञ्जभक्षणे बलवदनिष्टानुबन्धित्वबोधद्वारा निवर्तकत्वस्य सर्वसिद्धस्यानुपपत्तिः । भवन्मते कलञ्जभक्षणकर्तुः [1]पुनर्निवर्तकत्वोपपत्तावपि. कदापि येन कलञ्जभक्षणं न कृतम्, तं प्रति निवर्तकत्वासंभवात्, तस्य कलञ्जभक्षणानुकूलकृतेरप्रसिद्धेः ।

[2]अत एव, अन्धः आकाशं न पश्यति इत्यादिप्रयोगाणामप्युपपत्तिः । अन्ध (छति) [वृत्ति] त्वाकाशविषयकत्वोभयाभावप्रकारकदर्शनविशेष्यकबोधसंभवात् । आकाशविषयकदर्शनाभाववानन्धः इति प्रथमान्तार्थविशेष्यकबोधस्य [3]अप्रसिद्ध्या असंभवात् ।

इत्थं च चैत्रः पचतीत्यादौ प्रथमान्तार्थविशेष्यकबोधेऽपि, पश्य मृगो धावतीत्यादौ मृगकर्तृकधावनस्य विषयतया

---

1 पुनर्निवर्तकत्वेति — एकदा कलञ्जं भक्षितवतः, पुनः कलञ्जभक्षणे निवृत्तिजनकत्वेत्यर्थः ।

2 अत एव — प्रथमान्तार्थविशेष्यकत्वानियमादेव ।

3 अप्रसिद्ध्येति — आकाशविषयकदर्शनस्य प्रतियोगिनः अप्रसिद्धत्वेन तदभावस्याप्रसिद्ध्येत्यर्थः ।

दर्शनान्वयेन क्रियाविशेष्यकबोधाङ्गीकारेऽपि बाधकाभावः। विशेषणविशेष्यभावस्य तात्पर्यग्रहमात्राधीनतया क्वचित् धात्वर्थ-विशेष्यकान्वयबोधाङ्गीकारे क्षतिविरहात्।

[1] अत एव पचति भवतीत्यादि[2]प्रयोगानुपपत्तिरपि समाहिता। (तन्न)[तत्र] पाकानुकूलकृतिर्भवतीत्यादिभावनाविशेष्यकबोधाङ्गीकारादिति सारम्।

---

## प्रथमान्तार्थविशेष्यकत्वनियमे, क्रियाविशेष्यकत्वनियमे चानुपपत्तिः इति तटस्थानां शङ्का, तन्निरासश्च

एतेन, प्रथमान्तार्थविशेष्यकनियमे, 'भवद्भिः स्तूयतेऽत्र का' इति प्रश्ने, 'स्तोत्रं ममैतत् क्रियते' इत्युत्तरस्य स्तोत्रविशेष्यकबोधजनकस्य (पश्न) [प्रश्न] निवर्तकत्वानुपपत्तिः, [3]समानविशेष्यकबोधजनकोत्तरस्यैव (पश्न) [प्रश्न] निवर्त-

---

1 अत एव — प्रथमान्तार्थविशेष्यकत्वानियमादेव।

2 प्रयोगानुपपत्तिरिति — प्रथमान्तपदाभावेन तदर्थविशेष्यकबोधाजननादिति भावः।

3 समानविशेष्यकेति—प्रश्नवाक्यजन्यबोधसमानविशेष्यकेत्यर्थः।

कत्वात् । एवं 'ब्राह्मो विवाह आहूय यत्कन्या दीयते स्वयम् ।' इति वाक्यात् आह्वानपूर्वकं स्वयं कन्यादानं ब्राह्मो विवाहः [1]इत्यर्थलाभानुपपत्तिः ।

क्रियाविशेष्यकबोधनियमे उक्तस्थले अनुपपत्त्यभावेऽपि, 'प्रयाति पुरुषस्तस्य पादयोरभिवादय' इत्यादौ तच्छब्दस्य पुरुषपरामर्शकत्वानुपपत्तिः । तच्छब्दे गुणीभूतार्थापरामर्शकत्वस्यौत्सर्गिकत्वात् । अन्यथा,

'दर्शैते राजमातङ्गाः तस्यैवामी तुरङ्गमाः ।'
'चैत्रो ग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना ।'
'चैत्र प्रजावतीयं हि त्वं तस्मै देहि कम्बलम् ।'

इत्यादौ तच्छब्दस्य [3]यथाक्रमं राज–ग्राम–भ्रातृपरामर्शकत्वापत्तेः । अत एव, 'अनुमानं निरूप्यते' इत्युपक्रम्य

---

1 अर्थलाभानुपपत्तिरिति — कन्या दीयते इति वाक्यजबोधे कन्याया एव विशेष्यत्वेन दानस्याविशेष्यत्वात् यत्पदेन दानमनूद्य ब्राह्मविवाहाभेदबोधनासंभवादित्यर्थः ।

2 यथाक्रममित्यादि — तस्यैवामी इत्यत्र तच्छब्देन राज्ञः, तत्र मैत्रः किं कुरुते इत्यत्र ग्रामस्य, तस्मै देहि इत्यत्र प्रजावतीशब्दार्थभूत–भ्रातृजायैकदेशस्य भ्रातुश्च बोधापत्तिरिति भावः ।

'तत्रानुमितिः' इति तच्छब्देन निरूपणस्य परामर्शासंभवात्, तत्र—निरूपणीये अनुमाने, इति व्याख्यातमभियुक्तैरिति त (त्स्था) [टस्था] नां शङ्कापि निराकृता । यथासंभवमुक्त-रीत्या क्रिया—प्रथमान्तार्थविशेष्यकबोधयोरुपगमेनोक्तानुपपत्त्य-भावात् ।

---

### प्रथमान्तसमभिव्याहारे, प्रथमान्तार्थविशेष्यत्वनियमः, अन्यत्र नेति पक्षान्तरनिरूपणम्

अथवा, प्रथमान्तपदासमभिव्याहारे उक्तरीतिरेव । तत्समभिव्याहारे च सर्वत्र प्रथमान्तार्थविशेष्यकबोधनियम एव । न [1]चोक्तदोषः । 'कः कुलीनः' इति प्रश्ने, यस्य धनमिति [2]भिन्नविशेष्यकबोध [जन] कादप्युत्तरात् प्रश्न-

---

1 उक्तदोषः — कीदृशश्चैत्रः इति प्रश्ने चैत्रः पचतीत्युत्तरापत्ति-रूपो दोषः ।

2 भिन्नविशेष्यकेति— प्रश्नवाक्यजबोधविशेष्यभिन्न [प्रथमान्तार्थ] धनविशेष्यकेत्यर्थः ।

निवृत्त्या समानविशेष्यकबोधजनकोत्तरस्यैव प्रश्ननिवर्तकत्वमिति नियमाभावात् । अन्यथा कश्चैत्रः इति प्रश्ने, यः पाचकः इति वत्,यः पचति इत्युत्तरस्यापि समानविशेष्यकबोधजनकत्वेनैव प्रश्ननिवर्तकत्वे, [1]क्रियाविशेष्यकबोधनियमाङ्गीकर्तृ मतेऽप्यगतेः । एवं 'ब्राह्मो विवाहः' इत्यादिस्मृतिवाक्यस्य तादृशकन्यादानं ब्राह्मो विवाहः इति नार्थः । [2]गान्धर्वविवाहसाधारण्याय, वहप्रापणे इति धात्वनुसारेण च वरनिष्ठकन्याप्राप्त्यनुकूलविलक्षणव्यापारस्यैव विवाहतया, कन्यादानस्य विवाहत्वाभावात् । अत एव, स्मृतौ विवाहस्य अष्टधा विभागः संगच्छते । सामान्यधर्माक्रान्तानां विशेषरूपेण प्रतिपादनस्यैव विभागत्वात् । किन्तु, (पतपदर्थं) यादृशविवाहात्मकव्यापारात् आहूय स्वयं दीयते कन्या, स व्यापारो ब्राह्मो

---

1 क्रियाविशेष्यकबोधनियमाङ्गीकर्तृमतेऽपीति– तन्मते यदभिन्नकर्तृकः पाकः इत्याकारकस्य कश्चैत्रः इति प्रश्नवाक्यजबोधविशेष्यभिन्नपाकविशेष्यकबोधस्यैव जननादिति भावः । एवं आख्यातार्थभावनामुख्यविशेष्यकबोधनियमाङ्गीकर्तृमतेऽपि तत्रागतिर्बोध्या ।

2 गान्धर्वविवाहसाधारण्यायेति —' 'इच्छन्त्याः स्वयं संयोगो गान्धर्वः' इति गौतमस्मृतेः गान्धर्वविवाहे कन्यादानस्याभावादिति भावः ।

विवाह इत्येवार्थ इति न कोऽपि दोषः । इह भवने मैत्रेणैव तेमनं पक्ष्यते इत्यादावपि एवकारार्थव्यवच्छेदस्य उभयत्वावच्छिन्नप्रतियोगिताकतया भानोपगमेन एतद्भवनाधिकरणक (पाककर्म) त्व–[1]मैत्रान्यकर्तृकत्वोभयाभावव (द्धे) [त्पाककर्मत्ववत्] तेमनमिति प्रथमान्तार्थविशेष्यक एव बोधः ।

अन्धः आकाशं न पश्यतीत्यादावपि नञर्थस्य वारद्वयं भानोपगमेन आकाशविषयकत्वाभाववद्दर्शनाभाववानन्धः इति [2]प्रथमान्तार्थविशेष्यक एव बोधः । चैत्रः आकाशं न पश्यतीत्यादौ च आकाशविषयकत्वाभाववद्दर्शनवान् चैत्रः [3]इत्याद्याकारक एवान्वयबोध इति न कोऽपि दोषः । पश्य मृगो धावतीत्यादौ तु [4]गतिरुक्तैवेति युक्तमुत्पश्यामः ।

---

1 मैत्रान्यकर्तृकत्वोभयाभावेति — प्रकृते अन्ययोगः मैत्रान्यकर्तृकत्वं, तस्य व्यवच्छेदे एवकारार्थे उक्तोभयत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वय इति भावः ।

2 प्रथमान्तार्थमुख्यविशेष्यक एवेति — एवकारेण आकाशविषयकत्व–अन्धवृत्तित्वोभयाभाववद्दर्शनविषयकस्य धात्वर्थविशेष्यकबोधस्य व्यवच्छेदः ।

3 इत्याद्याकारक एवेति—वारद्वयं नञर्थभाने वाक्यार्थस्य बाधादिति भावः ।

4 गतिरुक्तैवेति — वाक्यार्थस्य दर्शने कर्मतया अन्वयादिरूपा गतिरुक्तैवेत्यर्थः ।

## असति बाधके एवोपमानादीनामपि शक्तिग्राहकता

एवं उपमानादिना शक्तिग्रहोऽपि असति बाधके एव । अत एव, पचति—पाककर्ता इति आख्यातेन कर्तुर्विवरणेऽपि (व्याख्यानस्य विवरणात्) [न] कर्तरि[1]शक्तिग्रहः । [2]तत्रान्यलभ्यत्वस्यैव बाधकत्वात् । प्रथमान्तचैत्रादिपदे (वि)[न] कृत्याश्रयस्य चैत्रादे (वा) र्भानम् । उपमानादिना शक्तिग्रहप्रकारश्चान्यत्र विस्तरेणास्तीति तत्रैवानुसन्धेयः इति ग्रन्थगौरवभिया नात्र प्रपञ्चितः ॥

---

### लक्षणाप्रस्तावः

शक्तिश्च मुख्या वृत्तिः । लक्षणापि वृत्त्यन्तरम् । तेन गङ्गायां घोषः इत्यादौ गङ्गापदादेः गङ्गातीरादौ शक्तिविरहेऽपि गङ्गातीरवृत्तिः घोषः इत्यादिशाब्दबोधस्य नानुपपत्तिः । लक्षण-

---

1 शक्तिग्रह इति — आख्यातस्येत्यादिः ।

2 तत्र — कर्तर्याख्यातशक्यत्वे ।

यैव गङ्गापदादिना गङ्गातीरादेरुपस्थित्या तादृशबोधोपपत्तेः । सा च स्वशक्यसंबन्धः । स्वपदं लाक्षणिकगङ्गापदादिपरम् ।

---

## लक्षणाख्यं वृत्त्यन्तरमावश्यकमिति निरूपणम्

## गङ्गादिलाक्षणिकपदानां तीरादौ शक्तिरेव इति महापूर्वपक्षः

अत्रेदं विचार्यते—

गङ्गापदादेस्तीरादौ शक्तिरेवास्ताम्. [1]वृत्त्यन्तरकल्पने गौरवात्, शक्तिग्राहकव्यवहारस्य मुख्यलक्ष्यसाधारणत्वात् । [2]लाघवेन गङ्गापदादिनिरूपितशक्तिज्ञानजन्योपस्थितेरेव शाब्दधीहेतुत्वाच्च ।

---

1 वृत्त्यन्तरेति — शक्यतिरिक्तायाः लक्षणायाः प्रवृत्तित्वकल्पने इति यावत् ।

2 लाघवेनेति — लक्षणाख्यवृत्त्यन्तरकल्पने लक्षणाज्ञानजन्योपस्थितेरपि शाब्दधीहेतुत्वकल्पने गौरवमिति भावः ।

## गङ्गादिपदस्य तीरादिषु अनेकेषु शक्तिकल्पनमपेक्ष्य लक्षणाकल्पनमेव युक्तमित्याक्षेपः, तत्परिहारश्च

यत्तु, गङ्गादिपदस्य लक्षणीयतीरादिसहस्रार्थेषु प्रत्येकं शक्तिः कल्प्या, तद्ग्रहार्थं वृद्धव्यवहारापेक्षा चेति, लक्षणाकल्पनमेव युक्तम् । (तं च) [न च] लक्षणाग्रहार्थमपि वृद्धव्यवहारापेक्षा आवश्यकीति वाच्यम् । गङ्गायां घोषः इत्याद्याप्तवाक्यं श्रुत्वा तस्य प्रामाण्योपपादनार्थमेव स्वार्थसंबन्धेनोपस्थिततीरबोधकत्वकल्पनात् । न च तीरादिसहस्रेषु संयोगसमवायादिनानासंबन्धानां शाब्दबोधप्रयोजकत्वे गौरवमिति वाच्यम् । [1]अतिरिक्तायाः शक्तेः, [2]तज्जन्यस्मृतेः, [3]तत्र शाब्दहेतुत्वस्य च कल्पनापेक्षया क्लृप्तानां संबन्धानां क्लृप्तायाः तदधीनस्मृतेश्च [4]शाब्दधीहेतुत्वकल्पने एव लाघवादिति ।

---

1 अतिरिक्ताया इति — लक्षणीयतीरादिसहस्रेषु इत्यादिः ।

2 तज्जन्यस्मृतेः — शक्तिप्रयोज्यलक्षणीयार्थस्मृतेः ।

3 तत्र — तादृशस्मृतौ ।

4 शाब्दधीहेतुत्वकल्पने — शाब्दधीहेतुत्वमात्रकल्पने ।

तदसत् । गङ्गापदादेः तीरादौ लक्षणाङ्गीकर्तृमते गङ्गायां घोषः इत्यादौ प्रत्येकं गङ्गातीरादिविषयभेदेनोपस्थितेः कार्यकारणभावद्वयकल्पनापत्त्या महागौरवात् । तथाहि—यत्र गङ्गायां घोषः इत्यत्र गङ्गापदादेः तीरादौ शक्तिभ्रमात् शाब्द-बोधः, तत्र तदनुरोधेन गङ्गापदादिजन्यतीरशाब्दबोधं प्रति तीरादिविशेष्यकगङ्गा [पदा] दिशक्तिविषयकज्ञानजन्योपस्थिते-रेकः कार्यकारणभावः । एवं यत्र तादृशशक्तिज्ञानाभाव-दशायां गङ्गादिपदादेः तीरादौ लक्षणाज्ञानात् शाब्दबोधः, तत्र तादृशशाब्दबोधं प्रति तीरादिविशेष्यकगङ्गापदादिलक्षणा-विषयकज्ञानजन्योपस्थितेरपरः कार्यकारणभावः इति तीरादि-विषयभेदेन कार्यकारणभावद्वयकल्पने गौरवम् । गङ्गा-पदादेः तीरादौ शक्तिमेवोपगम्य लक्षणानङ्गीकर्तृमते च कार्य-कारणभावेनै [1][केनै] व निर्वाह इति लाघवं स्फुटमेव ।

---

1 एकेनैवेति — गङ्गापदादिजन्यतीरशाब्दबोधं ति प्रतीरादिविशेष्य-कगङ्गापदादिशक्तिविषयकज्ञानजन्योपस्थितित्वेन एककार्य-कारणभावेनेत्यर्थः ।

शक्यसंबन्धरूपलक्षणाज्ञानजन्योपस्थितेः शक्तिविषयकज्ञान-
जन्योपस्थितित्वेनैक एव कार्यकारणभावः लक्षणाङ्गीकर्तृमतेऽपि
इति केषां चित् मतनिरूपणम्, तन्निरासश्च

अत्र केचित्. लक्षणाङ्गीकर्तृमतेऽपि प्रथमकार्यकारण-भावेनैव निर्वाह इति न तन्मते गौरवम् । स्वशक्यसंबन्धा-त्मकलक्षणाज्ञानस्यापि [1]अधिकं त्विति न्यायेन शक्तिविषयकतया तज्जन्योपस्थितेरपि तादृशशक्तिविषयकज्ञानजन्योपस्थितित्वरूप-कारणतावच्छेदकाक्रान्तत्वात् ।

(अत्र) [अथ] यत्र गङ्गापदशक्यः प्रवाहः, तीरं च प्रमेयमित्याद्याकारकसमूहालम्बनात्मकज्ञानजन्या तीराद्युपस्थि-तिः, तत्र गङ्गापदजन्यतीरादिशाब्दबोधवारणाय, तीरत्वाद्यव-च्छिन्नविशेष्यतानिरूपितगङ्गापदादिशक्तिप्रकारताशालिज्ञानत्वा-वच्छिन्नजनकतानिरूपितजन्यताश्रयोपस्थितित्वेनैव कारणत्वं वाच्यम् । तथा च गङ्गापदशक्यसंबन्धि तीरमित्याकारक-लक्षणाज्ञानस्य [2]तीरत्वावच्छिन्नविशेष्यतानिरूपितशक्तिप्रकारता-

---

1 अधिकं त्विति — अधिकं तु प्रविष्टं न तु तद्धानिः इति न्याया-कारः ।

2 तीरत्वावच्छिन्नविशेष्यतानिरूपितेत्यादि — निरुक्तविशेष्यता-निरूपिता शक्यसंबन्धनिष्ठप्रकारतैवेति भावः ।

शालित्वाभावेन तज्जन्योपस्थितेरुक्तकारणतावच्छेदकानाक्रान्ततया कथमेककारणतया लक्षणाङ्गीकर्तृमते निर्वाहः इति चेत् ।

मैवम् । शक्तिप्रकारतायां तीरत्वाद्यवच्छिन्नविशेष्यतानिरूपितत्वमनिवेश्य, ज्ञाने तीरत्वाद्यवच्छिन्नविशेष्यकत्वं निवेश्यैवोक्तकारणत्वाङ्गीकारात् । न [1]चोक्तदोषः । यतः तादृशोपस्थितेः गङ्गापदादिजन्यतीरादिविषयकशाब्दबोधत्वं न कार्यतावच्छेकदम् । अपि तु तादृशोपस्थिति[2]विशिष्टशाब्दत्वमेव । एवं चोक्तस्थले उपदर्शितधर्माक्रान्तः प्रवाहादिशाब्दबोधो जायत एव । तीरादिशाब्दबोधत्वावच्छिन्नस्य त्वापादकाभावः, तस्य कार्यता [न] वच्छेदकत्वादित्याहुः ।

तदसत् । तथापि गङ्गापदशक्यत्वाभाववति गङ्गापदशक्तिप्रकारकं, गङ्गापदशक्यसंबन्धाभाववति गङ्गापद-

1 उक्तदोषः — गङ्गापदशक्यः प्रवाहः, तीरं च प्रमेयमिति समूहालम्बनज्ञानजन्यतीरोपस्थितिस्थले गङ्गापदजन्यतीरादिशाब्दबोधापत्तिरूपदोषः ।

2 विशिष्टेति — अव्यवहितोत्तरत्वसंबन्धेन वैशिष्ट्यं बोध्यम् ।

शक्यसंबन्धप्रकारकमिदं ज्ञानमित्याद्याकारकाप्रामाण्यज्ञानाभावनिवेशानुरोधेन, गङ्गापदशक्य [त्वा] भावाप्रकारकत्व—गङ्गापदशक्यसंबन्धाभावाप्रकारकत्वादिरूपनिश्चयत्वनिवेशानुरोधेन च शक्तिज्ञानजन्योपस्थित्योः [1]कार्यकारणभावद्वयस्यावश्यकत्वात् ।

---

शक्तिसंसर्गकपदप्रकारकार्थविशेष्यकज्ञानजन्योपस्थितित्वेनैकरूपेण उपस्थितिद्वयस्य हेतुत्वमिति, न कारणताद्वयकल्पनगौरवमिति पक्षान्तरनिरूपणं, तन्निरासश्च

एतेन, वृत्तिसंसर्गकपदप्रकारकार्थविशेष्यकज्ञानजन्यो[2]पस्थितेरेव शाब्दबोधजनकत्वोपगमेनोपस्थितिद्वयस्यापि एकरूपेण कारणत्वं संभवत्येव । तथाहि—शक्तित्वावच्छिन्नसां-

---

1 कार्यकारणभावद्वयेति— शक्यत्वाभाववति शक्तिप्रकारकत्वात्मकाप्रामाण्यज्ञानाभावविशिष्ट— शक्यत्वभावाप्रकारकशक्तिप्रकारकज्ञानजन्योपस्थितित्वेन, शक्यसंबन्धाभाववति शक्यसंबन्धप्रकारकत्वात्मकाप्रामाण्यज्ञानाभावविशिष्ट शक्यसंबन्धाभावाप्रकारकशक्यसंबन्धप्रकारकज्ञानजन्योपस्थितित्वेन च कार्यकारणभावद्वयेत्यर्थः ।

2 उपस्थितेरेवेति— एवेन शक्तिलक्षणान्यतरात्मक-वृत्तिप्रकारकज्ञानजन्योपस्थितेः व्यवच्छेदः ।

सर्गिकविषयतानिरूपित—गङ्गापदादिनिष्ठप्रकारतानिरूपिततीरादिविशेष्यताशक्तिग्रहत्वेन गङ्गापदादिजन्यतीरादिविशेष्यक शाब्दबोधत्वावच्छिन्नं प्रति हेतुत्वं कल्प्यते । शक्ति[त्व] निष्ठावच्छेदकतायाः पर्याप्तिः परं [1]न निवेश्यते । इत्थं च शक्तिसंबन्धेन पदप्रकारकार्थविशेष्यकज्ञानस्येव शक्यसंबन्धेन पदप्रकारकार्थविशेष्यकज्ञानस्यापि अधिकं त्विति न्यायेन शक्तिसंसर्गकत्वाविशेषात् द्वयोरप्युक्तधर्माक्रान्तत्वात् संग्रहः सुलभः संसर्गतावच्छेदकीयविषयतायामपि सांसर्गिकविषयतात्वस्य सत्त्वात् । (ननु)[न च] शक्यसंबन्धेन पदप्रकारकज्ञानस्य न शक्तित्वावच्छिन्नसांसर्गिकविषयताशालित्वम् । तथा सति शक्तिसंबन्धावच्छिन्नपदप्रतियोगिकाभाववानर्थः इति बाधनिश्चयोत्तरमपि शक्यसंबन्धसंबन्धावच्छिन्नपदप्रकारकार्थविशेष्यक[2]बोध-

---

1 न निवेश्यते इति — शक्तित्वपर्याप्तावच्छेदकताकसांसर्गिकविषयता हेतुतावच्छेदके न निवेश्यते इत्यर्थः ।

2 बोधस्यानुपपत्तेरिति — शक्तिसंबन्धेन गङ्गापदाभाववत् तीरमिति ज्ञानकाले शक्यसंबन्धात्मकसंबन्धेन गङ्गापदवत् तीरमिति ज्ञानस्यानुभवसिद्धत्वादिति भावः ।

स्या [नुप] पत्तेर्दुर्वारत्वात् [इति वाच्यम्] [1]तत्संबन्धावच्छिन्नप्रतियोगितासंबन्धावच्छिन्न [2]यत्पदप्रकारतानिरूपिताभावप्रकारतानिरूपितयदर्थनिष्ठविशेष्यताशाली ग्रहस्तिष्ठति, तादृशसंबन्धावच्छिन्नतत्पदनिष्ठ [3]प्रकारतानिरूपिततदर्थनिष्ठविशेष्यतानिरूपिततादृशसंबन्धनिष्ठसांसर्गिकविषयताशालिग्रहो न जायते । इत्थं च [4]तदनुसारेण प्रतिबन्धकत्वस्य कल्पनीयतया, पदनिष्ठप्रकारतानिरूपिता, अर्थनिष्ठविशेष्यतानिरूपिता च या शक्तिनिष्ठसांसर्गिकविषयता तच्छालिज्ञानं प्रति शक्तिसंबन्धावच्छिन्नप्रतियोगिताकपदाभावप्रकारतानिरूपितार्थनिष्ठविशेष्यताशालिनिश्चयस्य प्रतिबन्धकतया शक्तिसंबन्धावच्छिन्नप्रतियोगिताकपदाभावप्रकारताशालिनिश्चयसत्त्वे, शक्य-

---

1 अनुभवानुसारेण प्रतिबन्धकतां निर्वक्तुमनुभवं स्फुटीकरोति-तत्संबन्धेत्यादिना ।

2 यत्पदप्रकारतानिरूपिताभावप्रकारतेति — इदं च एकनिष्ठयोः एकज्ञान विषयतयोरभेदाभिप्रायेण । तयोर्भेदमते च पदप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाभावप्रकारता इति वक्तव्यम् ।

3 प्रकारतानिरूपितेति — इदं सांसर्गिकविषयतायामन्वेति ।

4 तदनुसारेण — निरुक्तानुभवानुसारेण ।

संबन्धावच्छिन्नपदप्रकारताशालिज्ञानस्य नानुपपत्तिः । तत्र शक्तिनिष्ठा या सांसर्गिकी विषयता तस्याः पदनिष्ठप्रकारतानिरूपितत्वे सति अर्थनिष्ठविशेष्यतानिरूपितत्वाभावात् । शक्तिनिष्ठसांसर्गिकविषयतायाः पदनिष्ठप्रकारेतानिरूपितत्वेऽपि अर्थ-[1]निष्ठविशेष्यतानिरूपितत्वाभावात् । न चोक्तरीत्या एककार्यकारणभावकल्पने शक्त्यभावसंबन्धेन पदप्रकारकार्थविशेष्यकज्ञानजन्योपस्थितितः, शक्यसंबन्धाभावसंबन्धेन पदप्रकारकार्थविशेष्यकज्ञानजन्योपस्थितितश्च शाब्दबोधापत्तिर्दुर्वारेति वाच्यम् । शक्तित्वावच्छिन्नसांसर्गिकविषयतायां प्रतियोगितावच्छेदकतानवच्छिन्नत्वस्यापि निवेशनीयत्वादित्यपि परास्तम् ।

शक्तिकालीनत्व–शक्तितादात्म्यादि संसर्गकपदप्रकारकज्ञानजन्यो[2]पस्थितिवारणाय, पदप्रकारत्वार्थविशेष्यत्वोभयनिरू-

---

1 निरूपितत्वाभावादिति— शक्यसंबन्धसंसर्गकज्ञाने संबन्धनिष्ठसांसर्गिकविषयताया पदार्थनिष्ठविशेष्यतानिरूपितत्वमिति भावः ।

2 उपस्थितिवारणायेति — शक्तिकालीनत्वस्य संसर्गतया भाने कालीनत्वे विशेषणतया संसर्गघटकशक्तिविषयतायाः प्रतियोगितावच्छेदकतावच्छिन्नत्वेन, शक्तिकालीनत्वसंसर्गकपदप्रकारकज्ञानजन्योपस्थितेः निरुक्तकारणतावच्छेदकाक्रान्तत्वादिति भावः ।

पितत्वस्य (तव्य) [तच्छ] क्तित्वावच्छिन्नसांसर्गिकविषयतायां निवेशस्य (वारकतया) [आवश्यकतया] लक्षणाजन्योपस्थितेः संग्रहासंभवाच्च ।

---

## शक्तिलक्षणाज्ञानजन्योपस्थित्योः एकरूपेण कारणत्वमिति, लक्षणाङ्गीकारे गौरवाभावात् न गङ्गादिपदानां तीरादिषु शक्तिरिति सिद्धान्तनिरूपणम्

अत्रोच्यते

तीरत्वाद्यवच्छिन्नविशेष्यतानिरूपिता या सांसर्गिकविषयता तन्निरूपिता या निरूपितत्वसंबन्धावच्छिन्नाश्रयनिष्ठसांसर्गिकविषयता [1]तद्भिन्नसांसर्गिकविषयताया अनिरूपिता या

---

1 तद्भिन्नसांसर्गिकविषयताया इति — शक्यसंबन्धेन गङ्गापदवत् तीरमिति ज्ञाने शक्यसंबन्धः संसर्गतया भासते । तत्र संबन्धे निरूपितत्वेन आश्रयः, तत्र शक्तिः, विशेषणतया भासते । संसर्गघटकेषु सांसर्गिकविषयता वर्तते । एवं चोक्तज्ञानीया शक्तिनिष्ठसांसर्गिकविषयता निरूपितत्वसंबन्धावच्छिन्नाश्रयविषयतया निरूपिता, न तद्भिन्नविषयतानिरूपितेति लक्षणासंसर्गकज्ञानसंग्रहः । शक्यभावादिसंसर्गकज्ञानीयशक्तिविषयता तु निरुक्तविषयताभिन्न-अभाव-कालीनत्वादिविषयतानिरूपितेति न तादृशसंसर्गकज्ञानसंग्रहः इति बोध्यम् ।

शक्तित्वावच्छिन्नसांसर्गिकविषयता तन्निरूपिता या गङ्गादिपद-निष्ठप्रकारता तन्निरूपित तीरत्वाद्यवच्छिन्नविशेष्यताशालिनिश्चय-त्वेन शक्तिज्ञानशक्यसंबन्धात्मकलक्षणाज्ञाने अनुगम्य, तज्ज-न्योपस्थितित्वेन गङ्गादिपदजन्यतीरत्वावच्छिन्नविषयकशाब्द-बोधत्वावच्छिन्नं प्रति एकविध एव शक्तिज्ञानलक्षणाज्ञानजन्यो-पस्थित्योः कार्यकारणभावः कल्प्यते इति लक्षणाङ्गीकर्तृमते न गौरवावकाशः । शक्तिकालीनत्व–शक्तितादात्म्यादिसंसर्गक-पदप्रकारकज्ञानीयशक्तित्वावच्छिन्नसांसर्गिकविषयतायां तादृ-शविषयताभिन्न—कालीनत्वादिविषयतानिरूपितत्वेन तादृश-ज्ञानस्योपदर्शितानुगमकरूपानाक्रान्ततया तज्जन्योपस्थितेर्वा-रणम् ।

न चोपदर्शितरीत्या [1]द्विविधाप्रामाण्यग्रहाभावनिवे-शानुरोधेनोपस्थितेः कारणताद्वयमावश्यकमिति वाच्यम् ।

---

1 द्विविधाप्रामाण्यग्रहाभावेति — शक्तिसंबन्धेन गङ्गापदाभाव-वति तेन संबन्धेन गङ्गापदप्रकारकमित्याकारकस्य, शक्य-संबन्धेन गङ्गापदाभाववति तेन संबन्धेन गङ्गापदप्रकारक-मित्याकारकस्य चाप्रामाण्यज्ञानस्याभावेत्यर्थः ।

[1]शक्तिसंबन्धावच्छिन्नप्रतियोगिताकगङ्गादिपदाभाववद्विशेष्यता-निरूपितत्वप्रकारतानिरूपित — शक्तिसंबन्धावच्छिन्नगङ्गादिपद-प्रकारतानिष्ठविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्य, लक्षणा-संबन्धावच्छिन्नप्रतियोगिताकगङ्गादिपदाभाववद्विशेष्यतानिरूपि-तत्वप्रकारतानिरूपित —लक्षणासंबन्धावच्छिन्नगङ्गादिपदप्रका-रतानिष्ठ विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्य, [2]चाप्रामा-ण्यज्ञानाभावस्य गङ्गादिपदनिष्ठप्रकारतायां निवेशेनानुपपत्त्य-भावात् ।

---

1 शक्तिसंबन्धावच्छिन्नेत्यादि -- शक्तिसंबन्धावच्छिन्ना गङ्गा-पदनिष्ठप्रकारता, शक्तिसंबन्धावच्छिन्नप्रतियोगिताकगङ्गापदा-भाववद्विशेष्यतानिरूपिता इत्यप्रामाण्यज्ञाने गङ्गापदनिष्ठप्रकारता विशेष्यः, उक्तगङ्गापदाभाववद्विशेष्यतानिरूपितत्वं प्रकारः । तथाचोक्तप्रकारतानिरूपितगङ्गापदप्रकारतानिष्ठविशेष्यतासंब-न्धेन अप्रामाण्यज्ञानाभावः गङ्गापदनिष्ठप्रकारतायां विशेषणं बोध्यम् । एवमुत्तरत्रापि बोध्यम् ।

2 अप्रामाण्यज्ञानेति — अत्र. स्वावच्छिन्नत्व-स्वप्रतियोगिनिष्ठत्व-स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वैतत्त्रितयसंबन्धेन संसर्ग-विशिष्टान्यप्रकारताशालिस्वरूपमनुगतं अप्रामाण्यं निविष्टमिति बोध्यम् ।

न च तथापि शक्तिसंबन्धावच्छिन्नगङ्गादिपदप्रतियोगिकाभावाप्रकारकत्व, लक्षणासंबन्धावच्छिन्नगङ्गादिपदप्रतियोगिकाभावाप्राकारकत्वरूप-द्विविधनिश्चयत्वनिवेशानुरोधेन कारणताद्वयमावश्यकमिति वाच्यम् । संशयसमुच्चययोर्वैलक्षण्यानुरोधेन, संशये उभयप्रकारतानिरूपितैकविशेष्यतास्वीकारेण, अभावप्रकारत्वानिरूपिता या तन्निष्ठप्रकारतानिरूपिताविशेष्यता तच्छालित्वस्यैव निश्चयत्वरूपतया, तीरत्वाद्यवच्छिन्नविशेष्यतायां अभावप्रकारत्वानिरूपितत्वनिवेशेन उक्तरूपद्विविधनिश्चयत्वानिवेशात् ।

नचैवमपि शक्यनिरूपितपरम्परासंबन्धरूपलक्षणा संबन्धेन गङ्गादिपदप्रकारक[1]ज्ञानस्यासंग्रहात् तज्जन्योपस्थितेरसंग्रह इति वाच्यम् । तादृशज्ञानजन्योपस्थितेः स्वातन्त्र्येणैव कारणत्वो-

---

1 असंग्रहादिति— परम्परासंबन्धसंसर्गकगङ्गापदप्रकारकज्ञानीयसांसर्गिकविषयतायाः शक्तिनिष्ठायाः, निरूपितत्वसंबन्धावच्छिन्नाश्रयनिष्ठसांसर्गिकविषयताभिन्नविषयतानिरूपितत्वादिति भावः ।

पगमात् । नचैवं लक्ष[णा]ङ्गीकर्तृमते गङ्गादि [1]एतत्प्रयुक्तं गौरवं दुर्वा-
रमिति वाच्यम् । अनन्तविषयेषु संबन्ध अतिरिक्त (विषयादि)
[शक्ति] कल्पनापेक्षया कतिपयैतादृशकारणतियोगि रणताकल्पनेऽपि लाघ-
वानपायात् । ङ्गभाव

धावच्छि

नियोगि मा-

मुख्यामुख्यार्थव्यवहाराद्यनुरोधादियुक्तिभिताय अतिरिक्तलक्षणा[त्य]-
शक्तिज्ञान–लक्षणाज्ञानजन्योपस्थित्योः कारणताद्वये गौरव
प्रामाणिकं न दोष इति निरूपणम्

---

वस्तुतस्तु, मुख्यामुख्यार्थव्यवहारानुरोधेन लक्षणा-
कार आवश्यकः । शक्यत्व–ल(क्षणा) [क्ष्य] त्वातिरिक्त-
मुख्यत्वामुख्यत्वयोः दुर्वचत्वात् । किञ्च, मुख्यार्थान्वयता
पपत्तिमनपेक्ष्यैव गङ्गादिपदात् प्रवाहादिबोधः, त-
पेक्ष्यैव [2]तस्मात् तीरादिबोधः । इति वैरूप्यनिर्वाहाय लक्ष-
णाङ्गीकार आवश्यकः । तदङ्गीकारे शक्यार्थबोधे उक्ता-
पपत्तेरनपेक्षा, लक्ष्यार्थबोधे तस्या अपेक्षेति सुवचत्वात् । अ-

---

1 एतत्प्रयुक्तं — स्वातन्त्र्येण उक्तकारणत्वोपगमप्रयुक्तम् ।

2 तस्मात् — गङ्गादिपदात् ।

च, तीरादीनां तीरादिशब्दैः प्रतिपादने न शैत्यपावनादिप्रतीतिः, गङ्गादिशब्दैः प्रतिपादने तु भवति तत्प्रतीतिरिति सर्वजनसिद्ध-स्यानुभवस्य लक्षणानङ्गीकारे न निर्वाहः । तदङ्गीकारे तु, 'स्वायत्ते शब्दप्रयोगे किमिति अवाचकं प्रयुञ्जामहे' इति न्या-येन तीरादिवाचकतीरादिशब्दं विहाय अवाचकगङ्गादिपद-प्रयोगस्य किं प्रयोजनमिति प्रतिसन्धानेन तादृशप्रयोगप्रयोज-नानुपपत्त्या गङ्गादिशब्दैः तीरादिप्रतिपादने भवति शैत्यपावन-त्वादिप्रतीत्युपपत्तिः ।

इत्थं च [1]अनायत्त्या शक्तिज्ञानलक्षणाज्ञानजन्योपस्थित्योः कारणताद्वयमुपेयम् । प्रामाणिकगौरव[2]स्यादोषत्वात् । नचैवं परस्परजन्यबोधे परस्परस्य व्यभिचार इति वाच्यम् । स्वाव्य-वहितोत्तरक्षणोत्पत्तिकत्वस्वसामानाधिकरण्योभयसंबन्धेन त [त्त] दुपस्थितिवैशिष्ट्यस्य तत्तदुपस्थितिजन्यतावच्छेदककोटौ निवे-शेन व्यभिचाराभावादिति संक्षेपः ॥

---

1 अनायत्या – अगत्या ।

2 अदोषत्वादिति– अन्यथा घटानामनेकत्वे गौरवस्य दोषतापत्ते-रिति भावः ।

## द्विरेफपदस्य भ्रमरे लक्षितलक्षणा, सा च वृत्त्यन्तरमिति प्राचांमतनिरूपणम्

अत्र प्राञ्चः लक्षितलक्षणापि वृत्त्यन्तरम् । तथाहि द्विरेफो गुञ्जतीत्यादौ द्विरेफपदात् भ्रमरबोधः सर्वसिद्धः । स च न द्विरेफपदशक्त्या, तस्य बहुव्रीहि[1]समासात्मकतया शक्त्यभावात् । अत एव [2]न लक्षणयापि । तस्मात् [3]तात्पर्यग्राहकद्विशब्दसमभिव्याहृतरेफशब्देन द्वौ रेफौ यत्रेति व्युत्पत्त्या रेफद्वयसंबन्धित्वेन भ्रमरपदं लक्ष्यते । लक्षितेन च भ्रमरपदेन तादात्म्यरूपस्वशक्यसंबन्धेन भ्रमररूपार्थो लक्ष्यते इति द्विरेफपदस्य भ्रमरे लक्षितलक्षणारूपवृत्त्यन्तरम् ।

---

1 समासात्मकतयेति — पदसमुदायत्वेनेति शेषः ।

2 न लक्षणयापीति — शक्तेरिव लक्षणाया अपि पदमात्रवृत्तित्वादिति भावः ।

3 तात्पर्यग्राहकेति — रेफशब्दस्य रेफद्वयसंबन्धिनि लक्षणातात्पर्यग्राहकेत्यर्थः ।

लक्षितेन भ्रमरपदेन शक्त्यैव बोधोऽस्तु इत्याक्षेपः, तत्परिहारश्च

अथ, द्विरेफपदलक्ष्यभ्रमरपदेन शक्त्यैव भ्रमरबोधसंभवे भ्रमरपदस्य न भ्रमरे लक्षणा । न च रेफद्वयसंबन्धित्वेन भ्रमरपदज्ञानेऽपि (भ्रमोत्तरत्व) [भ्रोत्तरमोत्तरत्व] रूपभ्रमरपदत्वावच्छिन्नाज्ञानात् कथं शक्त्या बोधः । शक्ततावच्छेदकप्रकारकज्ञानाभावादिति वाच्यम् । भ्रमरपदत्वावच्छिन्ने रेफद्वयसंबन्धित्वग्रहे भ्रमरपदत्वावच्छिन्नज्ञानसत्त्वादिति चेन्न ।

प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन भ्रमरस्य भ्रमरपदार्थतया द्विरेफपदार्थत्वाभावेन [1]तत्र [2]विभक्त्यर्थान्वयानुपपत्तेः । (पश्यते च) [3]द्विरेफपदस्यैव लक्षितलक्षणाया वृत्तितया भ्रमरस्य द्विरेफपदार्थत्वान्नानुपपत्तिः । न च 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति भ्रमरपदशक्यतावच्छेदकस्य भ्रमरत्वस्य कथं भ्रमरपदलक्ष्यतावच्छेदकत्वम्,

---

1 तत्र — भ्रमरे ।

2 विभक्त्यर्थेति — द्विरेफपदोत्तरविभक्त्यर्थेत्यर्थः ।

3 ननु तथापि भ्रमरस्य लक्षितभ्रमरपदलक्ष्यार्थतया द्विरेफपदार्थत्वाभावादुक्तानुपपत्तिः दुर्वारा, इत्यत आह —द्विरेफपदस्यैवेति ।

शक्त्यैव तद्बोधसंभवादिति वाच्यम् । शक्येन रूपेण लक्षणानङ्गीकारे, शक्त्यैव तद्बोधसंभवे लक्षणाकल्पनमफलमित्यस्यैव बीजतया, प्रकृते भ्रमरपदशक्त्या भ्रमरत्वविशिष्टस्य बोधस्वीकारे भ्रमरस्य द्विरेफपदार्थत्वाभावेन विभक्त्यार्थान्वयानुपपत्त्या शक्यस्यापि लक्षणयैव भानमुपेयते । एवं च लक्षितस्य भ्रमरपदस्य लक्षणा लक्षितलक्षणा । सा च द्विरेफपदस्य वृत्तिरिति वदन्ति ।

---

लक्षितशक्तेरेव द्विरेफपदवृत्तित्वमुचितमिति प्राचांमतनिरासः

तदसत् । द्विरेफपदलक्ष्यभ्रमरपदेन शक्त्यैव भ्रमरबोधसंभवे, तस्य लक्षणाया असंभवेन लक्षितशक्तेरेव वृत्तित्वौचित्यात् । भवन्मते लक्षितलक्षणाया इव मन्मते लक्षितशक्तेरपि द्विरेफपदस्यैव वृत्तितया भ्रमरस्य द्विरेफपदार्थत्वसंभवेन तत्र विभक्त्यर्थान्वयानुपपत्तेरभावात् ।

---

लक्षितपदेन शक्त्या बोधस्यैव लक्षितलक्षणात्वमित्यन्येषां मतम्

अन्ये तु, द्विरेफपदलक्ष्यभ्रमरपदेन शक्त्यैव भ्रमरबोधेऽपि लक्षितलक्षणाया वृत्तित्वं निर्वहति । लक्षितेन लक्षणा-बोधनं तादात्म्येन यस्यामिति व्युत्पत्त्या द्विरेफपदलक्षितेन भ्रमरपदेन शक्त्या[1]बोधस्यैव लक्षितलक्षणात्वादित्याहुः ।

---

शक्यपरम्परासंबन्धेन लक्षणैव लक्षितलक्षणा, न वृत्त्यन्तरमिति मिश्रमतनिरूपणम्

मिश्रास्तु, शक्यसंबन्धो हि लक्षणा, न तु शक्यस्य साक्षात् संबन्ध एव, गौरवात् । एवं च परम्परासंबन्धेन लक्षणैव लक्षितलक्षणा । स्वलक्ष्यपदघटितलक्षणा सेति तु यावत् । तथा च परम्परासंबन्धेन लक्षणाया एव [2]तथा-त्वेन द्विरेफपदस्य स्वलक्ष्यभ्रमरपदोपस्थाप्यत्वरूपेण स्वलक्ष्य-भ्रमरपदघटितपरम्परासंबन्धेन भ्रमरत्वरूपेण भ्रमररूपार्थोपस्था-

---

1 बोधस्यैवेति — एतन्मते स्वरूपसत्या एव लक्षणायाः शाब्द-बोधोपयोगिता । न ज्ञाताया इति बोध्यम् ।

2 तथात्वेन — लक्षितलक्षणापदबोध्यत्वेन ।

पकत्वसंभवात्, द्विरेफपदलक्षणयैवोपपत्तेः [1]नातिरिक्तवृत्तिकल्पनम्। न च यत्र द्विरेफपदस्य भ्रमरे उपदर्शितपरम्परासंबन्धो न गृहीतः, किन्तु द्विरेफपदलक्षणयोपस्थितस्य भ्रमरपदस्यैव तादात्म्यरूपः स्वशक्यसंबन्धो गृहीतः, तत्र द्विरेफपदलक्षणया भ्रमरशाब्दबोधासंभवेन लक्षितलक्षणारूपवृत्त्यन्तरमावश्यकमिति वाच्यम्। तत्र द्विरेफपदलक्षणयोपस्थितस्य भ्रमरपदस्य भ्रमरे तादात्म्यरूपस्वशक्यसंबन्धग्रहे, द्विरेफपदस्य भ्रमरे [2]उपदर्शितपरम्परारूप—स्वशक्यसंबन्धग्रहेऽपि बाधकाभावात्। न च यत्र भ्रमरे द्विरेफपदस्य परम्परासंबन्धेन बाधनिश्चयः तत्र तादृशग्रहो न भवतीति (वाच्यं) लक्षणाज्ञानमपि न संभवतीति वाच्यम्। [लक्षणा] संबन्धेन बाधनिश्चयस्य लक्षणाप्रकारकज्ञाने अविरोधित्वात्। न च यत्र लक्षणाया एव बाधनिश्चयः, तत्र लक्षणाप्रकारकज्ञानमपि न संभवतीति वाच्यम्। तत्रापि लक्षणाया बाधग्रहस्य लक्षणा-

1 अतिरिक्तवृत्तिकल्पनं — लक्षितलक्षणाख्यवृत्तिकल्पनम्। युक्तमिति शेषः।

2 उपदर्शितपरम्परारूपेति — स्वलक्ष्य भ्रमरपदबोध्यत्वात्मकपरम्परारूपसंबन्धेत्यर्थः।

संसर्गकज्ञानाविरोधितया लक्षणासंसर्गकज्ञाने बाधकाभावात् । न च वृत्तिप्रकारकज्ञानस्यैव शाब्दबोधहेतुतया [1]तदकिञ्चित्करमिति [वाच्यम्] वृत्तिप्रकारकज्ञानस्येव वृत्तिसंसर्गकज्ञानस्यापि शाब्दबोधहेतुत्वोपगमादिति प्राहुः ।

---

### द्विरेफपदं पङ्कजादिपदवत् योगरूढमिति नवीनमतप्रतिपादनम्

नवीनास्तु, द्विरेफपदादुपदर्शितपरम्परासंबन्धेन भ्रमरत्व-चर्वरत्व-स्रस्तरत्व-प्रस्तरत्वादीनामनियतोपस्थितौ तस्य भ्रमरपर्यायत्वमनुपपन्नम् । तस्मात् रेफपदस्य रेफघटितपरम्परासंबन्धित्वेन लक्षणा । रेफे एकदेशे द्विपदार्थस्याभेदान्वयः । अस्तु वा, द्विपदस्य तात्पर्यग्राहकतया [2]उक्तलक्षणयैव द्विरेफसंबन्धी लक्ष्यः । (सं) [स च] योगार्थ एव, यौगिकव्युत्पत्तिप्रयोज्यत्वात् । स च प्रस्तरादावतिप्रसक्त इति भ्रमर-

---

1 तदकिञ्चित्करम् — लक्षणासंसर्गकज्ञानं शाब्दानुपयोगि ।

2 उक्तलक्षणयैव — परम्परासंबन्धरूपलक्षणयैव ।

त्वविशिष्टे रूढिः । तथाच द्विरेफपदं [1]योगरूढमेव पङ्कज-लव (क) णादिपदवदिति प्राहुः इति दिक् ।

---

## लक्षणाद्वैविध्यम्

लक्षणा च द्विविधा । जहत्स्वार्था अजहत्स्वार्था च । तत्र जहत् स्वार्थो य [स्या] मिति व्युत्पत्त्या स्वार्थाविशेष्यक-(श्च प्र) बोधप्रयोजिका जहत्स्वार्था । तदन्या तु अजहत्स्वार्था । गङ्गायां घोषः इत्यादौ [गङ्गातीरवृत्तिर्घोषः इति]बोधः । तत्र [2]गङ्गातीरत्वेन तीरत्वेन वा गङ्गातीर-लक्षणात् ।

एतेन, तत्र गङ्गांशभाने युगपत् वृत्तिद्वयविरोधापत्ति-

1 योगरूढमेवेति — तथाच रेफद्वयसंबन्धयभिन्नः भ्रमरः इति द्विरेफपदाधीनो बोधः ।

2 गङ्गातीरत्वेनेति — तथाच स्वार्थस्य प्रवाहस्य विशेष्यत्वा-भावात् जहत्स्वार्थत्वं लक्षणायाः ।

रिति परास्तम् । गङ्गांशस्य लक्ष्यतावच्छेदकविधया तीरत्ववत् भानात्, युगपत् वृत्तिद्वयविरोधे [1]मानाभावाच्च ।

---

## लक्ष्यतावच्छेदके न लक्षणेति संप्रदायमतम्

अत्र लक्ष्यतावच्छेदके न लक्षणा, [2]गङ्गातीरत्वादि-विशिष्टे गङ्गापदलक्षणाग्रहेण तद्धर्मप्रकारकोपस्थितिः शाब्दबोध-श्चेति संप्रदायः ।

---

## लक्ष्यतावच्छेदकेऽपि लक्षणैवेति नव्यानां मतम्

नव्यास्तु, लक्ष्यतावच्छेदकेऽपि लक्षणाऽस्त्येव । अन्यथा शक्यतावच्छेदकेऽपि शक्तिर्न स्यात् लक्ष्यतावच्छेदक-

---

1 मानाभावाच्चेति — गङ्गायां मीनघोषौ स्तः इत्यत्र मीने प्रवाह-वृत्तित्वस्य घोषे तीरवृत्तित्वस्य च बोधोदयेन गङ्गापदेन शक्त्या लक्षणया च युगपत् प्रवाहतीरयोर्बोधस्यानुभवसिद्धत्वादिति भावः ।

2 वृत्त्यविषयस्य शाब्दबोधे भानाङ्गीकारे अतिप्रसङ्गमाशङ्क्याह— गङ्गातीरत्वादिविशिष्टे इति ।

स्येव शक्तिं विनापि [1]भानसंभवात् । न चैवं [2]तेन शक्या-नुगमासंभव इति वाच्यम् । अकार्येण घटत्वादिना कार्यानु-गमवत्, अशक्येनापि शक्यानुगमे बाधकाभावादित्याहुः । काकेभ्यो दधि रक्ष्यतामित्यादौ [3]द्वितीया ।

---

## लक्षणायाः विभागान्तरम्

लक्षणा पुनर्द्विविधा, प्रयोजनवती, निरूढा च । आद्या गङ्गायां घोषः इत्यादौ । तत्र शैत्यपावनत्वादिविशेषादि-बोधस्य प्रयोजनस्य सत्त्वात् । नीलो घटः इत्यादौ नील-रूपादिशक्तस्य नीलपदादेः नीलादिरूपवति द्वितीया ।

---

1 भानसंभवादिति — शक्यतावच्छेदकस्येत्यादिः ।

2 तेन — अशक्येन शक्यतावच्छेदकेन ।

3 द्वितीया — अजहत्स्वार्था ।

## तात्पर्यविषयान्वयानुपपत्तिः लक्षणाबीजमिति संप्रदायमतम्

लक्षणाबीजन्तु, तात्पर्यविषया (च) [न्व] यानुपपत्तिः । न तु शक्यान्वयायोग्य [त्वम्] । यष्टीः प्रवेशयेत्यादौ, काकेभ्यो दधि रक्ष्यतामित्यादौ च [1]तदभावात् । तात्पर्य (पदस्य) [विषयस्य] यष्टिधरप्रवेशस्य, [2]सर्वतो दधिरक्षणस्य (वा) [च] अन्वयानुपपत्तिः तत्राप्यस्त्येवेति संप्रदायः ।

---

## मणिकृन्मते लक्षणाबीजम्

चिन्तामणिकृतस्तु, मुख्यार्थान्वयायोग्यत्वमेव लक्षणाबीजम् । तात्पर्यग्राहकतया आवश्यकत्वात् । गङ्गायां घोषः इत्याद्याप्तवाक्यस्य प्रामाण्योपपादनार्थमेव विनापि तात्पर्यग्रहं मुख्यान्वयायोग्यत्वज्ञानेनैव लक्षणाकल्पनाच्च । यष्टीः

---

1 तदभावादिति — शक्यस्य यष्ट्यादेः प्रवेशनकर्मत्वाद्यन्वययोग्यत्वादिति भावः ।

2 सर्वतः — दध्युपघातकेभ्यः सर्वेभ्यः ।

प्रवेशयेत्यादौ च तात्पर्यज्ञानविषये भोक्तृ[1]प्रवेशनादौ (ष)[य]ष्टयन्वयानुपपत्तिरस्त्येवेति प्राहुः ।

---

### शब्दजन्यबोधे शब्दभानविचारः
### गामुच्चारयेत्यादौ गोपदादेः स्वपरत्वे लक्षणा इति निरूपणम्

अत्रेदं बोध्यम् । गामुच्चारयेत्यादौ गोपदादेः [2]स्वपरत्वे लक्षणैव । गोपदादेः गवादावेव श (क्य) [क्त]त्वेन गोपदादेरशक्यतया शब्दबोधविषयत्वासंभवात् । गामुच्चारयेत्यादौ अर्थोच्चारणासंभवेन विना शब्दविषयकत्वं शाब्दबोधानुपपत्तेश्च ।

---

### गोपदादेः गवादिपदमपि शक्यमेवेति शाब्दिकमतं, तन्निरासश्च

[यत्तु] गोपदादेः गवादिपदमपि शक्यमेव । न च लक्षणया निर्वाहः । जबगडदशमाह इत्यादौ [3]स्वशक्या-

---

1 भोक्तृप्रवेशनादौ — भोक्तृणां पुरुषाणां प्रवेशनादौ ।
2 स्वपरत्वे — गोपदादितात्पर्यकत्वे ।
3 स्वशक्याभावेनेति — जबगडदश इति वर्णसमाम्नायस्य कुत्राप्यर्थं अशक्तत्वादित्यर्थः ।

भावेन लक्षणाया असंभवात् । लक्षणाग्रहं विनापि शाब्दबोधाच्चेति शाब्दिकैरुक्तम् । तदसत् । द्वन्द्वात्परः इत्यादिन्यायेन [1]जा(ति)[दि]प्रत्येकवर्णानामेव द्वितीयार्थेऽन्वयेन तेषां चैकाक्षरकोशेन स्व-स्वार्थे शक्तिसत्त्वेन [2]तत्संबन्धेन [3]स्वस्मिन् लक्षणासंभवात् । लक्षणाया अग्रहे च शक्तिभ्रमादेव [4]स्वतः [5]स्वस्योपस्थित्या शाब्दबोधसंभवात् ।

---

पदानां स्वपरत्वे न वृत्त्यपेक्षा इति शाब्दिकोक्तिः, तन्निरासश्च

यदपि, पदानामौत्सर्गिकमर्थपरत्वमेव । तदभावे च स्वपरत्वम् । गामुच्चारयेत्यादौ वाच्यान्वये बाधेन स्वपरत्वे च

---

1 जादिप्रत्येकेति — भेरीमृदङ्गं वादयेत्यादौ द्वन्द्वघटकयोः भेरी-मृदङ्गयोः द्वितीयार्थे कर्मत्वे अन्वयदर्शनेन जबगडदशमि.त समाहारद्वन्द्वघटकप्रत्येकजादिवर्णानां स्वेष्वेव लक्षणाया संभवात्, प्रत्येकवर्णलक्ष्याणां तेषामेवान्वयबोध इति भावः ।

2 तत्संबन्धेन — प्रत्येकवर्णशक्यार्थसंबन्धेन ।

3 स्वस्मिन् — जादिवर्णे ।

4 स्वतः — जबगडदश इति वर्णसमुदायात् ।

5 स्वस्य — तादृशवर्णसमुदायस्य ।

न (दृश्य) [वृत्त्य] पेक्षा । तादात्म्यसंबन्धादेव स्वस्मादुपस्थितिसंभवादिति तैरुक्तम् ।

तदपि न । प्रत्यक्षोपस्थितघटादेः, [1]आश्रयतासंबन्धेनोपस्थितगगनादेश्च, शाब्दबोधवारणाय वृत्तिज्ञानजन्योपस्थितेरेव शाब्दबोधहेतुत्वेन वृत्त्यपेक्षाया आवश्यकत्वात् ।

---

गवादिपदानां प्रत्यक्षोपस्थितस्वपरत्वमिति पक्षः, तद्दूषणं च

एतेन, श्रोत्रप्रत्यक्षोपस्थित[2]स्वपरत्वमेव, पदानां उपस्थितार्थबोधकत्वस्यैव लाघवेन क्लृप्तत्वात्, वृत्त्येत्यस्य गौरवेणाप्रवेशादित्यपि तेषां प्रलपितमपास्तम् ।

प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थपरत्वव्युत्पत्त्या गोपदादेः गोपदार्थत्वाभावेन तत्र विभक्त्यर्थस्यो[3]च्चारणकर्मत्वादेरनन्वय-

---

1 आश्रयतासंबन्धेनेति — घटादिपदादित्यादिः ।

2 स्वपरत्वमेव — गवादिपदपरत्वमेव । गामुच्चारयेत्यादाविति शेषः ।

3 उच्चारणकर्मत्वादेः — धात्वर्थोच्चारणान्वितकर्मत्वादेः ।

प्रसङ्गात् । किन्तु श्रोत्रप्रत्यक्षोपस्थितं (एक)[1][गा] मित्यादि पदमेवोच्चारणकर्म स्यात् ।

---

### आश्रयतासंबन्धेन गोपदशक्त्या गोपदस्योपस्थितिरिति पक्षः, तन्निरासश्च

यत्तु, वृत्तिज्ञानजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वेऽपि न गामुच्चारयेत्यादौ गोपदादिशाब्दबोधानुपपत्तिः । निरूपकताश्रयतान्यतरसंबन्धेन वृत्तिज्ञानजन्यत्वस्यैव पदार्थोपस्थितावपेक्षितत्वेन आश्रयतासंबन्धेन गोपदादिश (क्यैव) [क्त्यैत्र] गोपदादेरुपस्थितिसंभवात् । गवादौ वृत्तिसत्त्वेऽपि तात्पर्यविरहान्न शाब्दबोधः । उच्चारयेत्यादिसमभिव्याहारेण गोपदादौ स्वपरत्वनिर्णयात् ।

एतेन, गामुच्चारयेत्युक्ते [2]विकृतस्यैवोच्चारणापत्तिः । तादृशस्यैव श्रोत्रेणोपस्थितेः । शब्दस्याप्रकृत्यर्थतया तत्र

---

1 गामित्यादि पदमेवेति — गामुच्चारयेति वाक्यप्रयोगे द्वितीयान्तस्यैव गोपदस्य श्रावणप्रत्यक्षविषयत्वादिति भावः ।

2 विकृतस्यैव — गामित्यस्यैव ।

द्वितीयार्थानन्वयापत्तिः । स्वस्यैव प्रत्यक्षेण शीघ्रमुपस्थित्या [1]गौरस्तीत्यादावपि स्वपरत्वापत्तिश्चेत्यपि परास्तम् ।

तात्पर्यवशात् वृत्त्या अविकृतस्यैव शब्दादुपस्थितेः । नचैवं तात्पर्येणैव सर्वनिर्वाहे वृत्तिमात्रोच्छेद इति वाच्यम् । तस्य शाब्दसामान्ये [2]अहेतुतया क्वचित् शाब्दबोधप्रमात्व-नियामकत्वेन, वृत्तिं विनाऽनिर्वाहादिति ।

तदप्यसत् । तथासति ईश्वरस्य [3]शक्त्याश्रयत्व-संबन्धेन [4]पदमात्रात् स्मृतौ शाब्दबोधप्रसङ्गात् । तात्पर्यस्य उपस्थितौ प्रमात्वा (नचा) नियामकत्वाच्च । प्रमात्वे विषया-बाधस्यैव नियामकत्वाच्च ।

---

1 गौरस्तीत्यादावपि — गवाद्यर्थे अस्तित्वबोधतात्पर्यकेऽपीति यावत् ।

2 अहेतुतयेति — नानार्थातिरिक्तस्थले तात्पर्यज्ञानस्य शाब्दबोध-हेतुत्वे मानाभावादिति भावः ।

3 शक्त्याश्रयत्वेति — ईश्वरेच्छाया एव सिद्धान्ते पदशक्तिरूप-त्वादिति भावः ।

4 पदमात्रात् — पदसामान्यात् ।

## शाब्दसामान्यसामग्र्याः शब्दभासकत्वमिति नवीनशाब्दिकमतनिरूपणम्

नवीनशाब्दिकास्तु, यथा संसर्गे वृत्तिविरहेऽपि आकाङ्क्षादिवशात् संसर्गस्य शाब्दबोधे भानम्, तथा शाब्दज्ञानसामान्यसामग्र्यैव सर्वत्र शाब्दबोधे शब्दभानम्, शाब्दसामान्यसामग्र्या एव शब्दभासकत्वकल्पनादिति, गामुच्चारयेत्यादौ वृत्तिं विनैव शब्दभानम् । एवं च [1]प्रकारता–विशेष्यतान्यतरसंबन्धेन पदभिन्नविषयकशाब्दबोधं प्रत्येव वृत्त्या पदजन्यपदार्थोपस्थितेः कारणत्वं कल्प्यते । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तौ प्रकृत्यर्थत्वं च [2]प्रकृतिजन्यबोधविषयत्वमिति गामुच्चारयेत्यादौ न कर्मत्वाद्यन्वयानुपपत्तिः । न च घटपदजन्यबोधे सकलपर्यायाणां भानापत्तिः, विनिगमकाभावादिति वाच्यम् । तत्तत्पदबोधे तत्तत्पदज्ञानघटितशाब्द (ज्ञानघटित)सामग्र्या हेतुत्वेनादोषादित्याहुः ।

---

1 आकाङ्क्षाभास्ये पदार्थे संसर्गे व्यभिचारवारणाय प्रकारता-विशेष्यतान्यतरसंबन्धेनेत्युक्तम् ।

2 प्रकृतिजन्येत्यादि — न प्रकृतिवृत्तिमत्त्वमित्यादिः । प्रकृतिजन्यशाब्दबोधविषयत्वं प्रकृतिभूतगोशब्दस्यापीति भावः ।

## शाब्दसामान्यसामग्र्याः शब्दभासकत्वनिरासः

तदसत् । शाब्दसामग्र्याः शब्दभासकत्वकल्पने मानाभावात्, उपस्थितिजन्यतावच्छेदके पदभिन्नविषयकत्व-निवेशे गौरवाच्च, शाब्दबोधे [1]प्रकृतित्वेनाजनकतया प्रकृति-त्वेन प्रकृतिजन्यत्वविवक्षणासंभवेन प्रकृतिजन्यबोधविषयत्व-स्याति[2]प्रसक्तत्वाच्च ।

वस्तुतस्तु, सर्वत्र शाब्दबोधे शब्दभानं न संभवति । यत्र भिन्नविषयकानुमितिसामग्रीकाले घटादिशाब्देच्छया शाब्दबोधः, तत्र घटशब्दादिशाब्देच्छाविरहविशिष्टभिन्नविषय-कानुमितिसामग्रीरूपप्रतिबन्धकसत्त्वेन [3]घटशब्दादिशाब्द-बोधानुपपत्तेः । न च तादृशसामग्रीप्रतिबन्धकतायां घट-शब्दादिशाब्देच्छा [या इव] तद्घटादिशाब्देच्छाया अपि उत्ते-

---

1 प्रकृतित्वेनाजनकतयेति — प्रकृतित्व-प्रत्ययत्वादिज्ञानविरहि-णामपि शाब्दबोधोदयेन श्रूयमाणानुपूर्वीज्ञानस्यैव शाब्दजनक-त्वमित्याशयः ।

2 अतिप्रसक्तत्वाच्च — शाब्दबोधाविषये समवायादिना प्रकृति-भूतपदादुपस्थिते आकाशादौ प्रकृत्यर्थत्वापत्तेरिति भावः ।

3 घटशब्दादिशाब्दबोधानुपपत्तेरिति — जायमानस्य घटशाब्द-बोधस्य घटशब्दविषयकत्वानुपपत्तिरिति यावत् ।

जकत्वोपगमा[1]न्नोक्तानुपपत्तिरिति वाच्यम् । तथा सति तादृशानुमितिसामग्रीसत्त्वे घटादिशाब्देच्छासत्त्वे घटादिशाब्दसामग्र्यसत्त्वे घटशब्दादिशाब्दबोधापत्तेः । [2]तादृशेच्छाविषयसिद्ध्यसंभवेनेष्टापत्तेरसंभवात् । तत्तदिच्छाभावकूटस्यैकत्व निवेशे मिथो विशेषणविशेष्यभावे विनिगमनाविरहेणानन्तकार्यकारणभावकल्पनापत्तेरिति, न किञ्चिदेतत् ॥

———

## शाब्दबोधे शब्दस्याभाने प्रक्रमभङ्गस्य दोषत्वानुपपत्तिरित्याक्षेपः, तत्परिहारश्च

ननु, शाब्दबोधे शब्दस्याभाने पर्यायादि [स्थले]प्रक्रमभङ्गस्य दोषत्वानुपपत्तिः, भिन्नाकारकप्रतीतिजननस्य (तत्तद्व्याप) [तद्दूष] कताबीजत्वेन भवन्मते पर्यायादिस्थले [3]तदसंभवादिति चेन्न ।

---

1 नोक्तानुपपत्तिरिति — घटविषयकशाब्देच्छारूपोत्तेजकसत्त्वात् शाब्दस्य घटशब्दविषयकत्वमुपपद्यते इति भावः ।

2 तादृशेच्छाविषयसिद्ध्यसंभवेनेति — घटशब्दाविषयकशाब्देच्छाविषयत्वस्य घटशब्दविषयकशाब्दे असत्वादिति भावः ।

3 तदसंभवादिति — शाब्दबोधे शब्दस्यार्थे प्रकारतया भानमते पर्यायपदप्रयोगस्थले, पदान्तरप्रकारकबोधोदयेन दूषकताबीजं संभवति । शब्दस्य भानानङ्गीकर्तृमते अर्थस्यैव भानात् निरुक्तदूषकताबीजं न संभवतीत्यर्थः ।

येन शब्देनोपक्रमः तद्भिन्नशब्दे[1]नोपसंहारस्यैव रसापकर्षकतया चमत्काराभावप्रयोजकतया (तद्व्याप) [तद्दूष] कताबीजत्वात् । अत एव, 'नैकं पदं द्विःप्रयोज्यं प्रायेण' (वा. सू. 5–1–1) इति वामनसूत्रे प्रायेण इत्युक्तम् । 'उदेति सविता ताम्रः ताम्र एवास्तमेति च' इत्यादावुद्देश्यप्रतिनिर्देश्यस्थले शब्दान्तरोपादाने चमत्काराभावादिति तदाशयात् । अधिकमन्यत्र सुव्यक्तम् ।

---

## शाब्दबोधे शब्दस्याभाने नलरामादिपदात् शाब्दबोधो न संभवतीति महापूर्वपक्षः

ननु शाब्दिकमते शाब्दबोधे शब्दभानोपगमेन, घटत्वादिरूपेण विशिष्य गृहीतशक्ति (कान्यो) [केभ्यो] घटादिपदेभ्यः पद-जात्युभयप्रकारको बोधः । विशिष्याज्ञातार्थकनल — रामादिपदेभ्यस्तु नलत्वादिधर्मानुपस्थितौ

1 उपसंहारस्यैवेति — एवेन भिन्नाकारकप्रतीतिजननस्य व्यवच्छेदः ।

विशिष्य शक्तिग्रहासंभवेन सामान्यरूपेणोपस्थितव्यक्तौ, नलादिपदं क्वचिच्छक्तं साधुपदत्वादिति सामान्यतोदृष्टानुमानेन नलादिपदवाच्यः कश्चिदर्थोऽस्ति इत्याकारकात् शक्तिग्रहात्, (केव) [न]लव्यक्तिविशेष्यकः [1]केवल [नल] पदप्रकारकः नलादिपदवाच्यः कश्चिदर्थः इत्याकारको बोधः इति वक्तुं शक्यते । [2]तच्च मतमुपदर्शितदोषदुष्टमिति, नलरामादिपदेभ्यः [3]कथं शाब्दबोधः ।

---

स्वरूपतः नलत्वादिप्रकारकस्मरणमूलकशक्तिग्रहात् स्वरूपतो नलत्वप्रकारकशाब्दबोधं वदतां केषांचिन्मतनिरूपणम्

यत्तु (द्धि) [बुद्धि] विषयतावच्छेदकत्वादिनाऽनुगतधर्मेण निखिलधर्मविषयकसंस्कारस्य, सामान्यप्रत्यासत्त्यधीनानुभवमूलकस्य सत्त्वेन बुद्धिविषयतावच्छेदकत्वांशे )दोष)

---

1 केवलनलपदप्रकारक इति — केवलपदेन नलत्वजातेः प्रकारतया भानं व्यवच्छिद्यते ।

2 तच्च मतं — शाब्दबोधे अर्थविशेषणतया वाचकशब्दो भासते इति मतम् ।

3 कथं शाब्दबोध इति — व्यवहितेन इति चेत् इत्यनेन संबन्धः ।

[मोष] दशायां [1]स्वरूपतः नलत्वादिप्रकारकं स्मरणं निराबाधमेवेति तन्मूलकशक्तिग्रहमूलकमेव स्वरूपतो नलत्वादिप्रकारकशाब्दज्ञानं भविष्यतीति किमनुपपन्नम् । न च स्वरूपतः तत्प्रकारकस्मरणे [2]तत्प्रकारकानुभव–संस्कारयोः हेतुत्वादनुपपत्तिरेवेति वाच्यम् । जन्यता–जनकतावच्छेदककोटौ स्वरूपतः इत्यस्यानिवेशात् । नचैवं कदाचित् जातिमानित्याकारकं, कदाचित् घटः इत्याकारकं, कदाचित् जातिमान् घटः इत्याकारकं विलक्षणस्मरणमिति नियमानुपपत्तिरिति वाच्यम् । उद्बोधकवैचित्र्यादेव [3]तदुपपत्तेः । स्वरूपतो घटत्वादिप्रकारकानुभवजनितसंस्कारवतः जातित्वादिना घटत्वादिप्रकारकात् संस्कारात्, कदाचित् स्वरूपतो घटत्वाद्यप्रकारकस्य जातिमानित्याकारकस्मरणस्योदयेन स्वरूपतस्तत्प्रकारकस्मृतौ तादृशानुभवसंस्कारयोः विशिष्य हेतुत्वेऽपि उद्बोधकविशेषविरहस्य तादृश-

1 स्वरूपतः नलत्वप्रकारकमिति — नलत्वनिष्ठनिरवच्छिन्नप्रकारताकमित्यर्थः । एवमग्रेऽपि ।

2 तत्प्रकारकानुभव-संस्कारयोरिति — स्वरूपतः इत्यादिः ।

3 तदुपपत्तेः — कादाचित्कस्मरणविशेषनियमोपपत्तेः ।

स्मृतिविरहप्रयोजकताया [1]आवश्यकत्वे, स्वरूपतः इत्यन्तर्भाव्य [2]तादृशहेतुताया अप्रामाणिकत्वात् । अथैवमुद्बोधकवैचित्र्यस्य नियामकत्वमुपेत्य तादृशहेतुताया अनुपगमे, विशेष्यविशेषणभावांशेऽप्युद्बोधकविशेषस्य नियामकत्वमुपेत्य प्रकारत्व–विशेष्यत्वानन्तर्भावेण सामान्यतः तद्विषयकस्मृतौ तद्विषयकत्वेनैव संस्कारानुभवयोः हेतुतापत्तिरिति चेन्न ।

अनुगतोद्बोधकस्थले स्वरूपतस्तत्प्रकारकज्ञानाद्यसत्त्वे स्वरूपतस्तत्प्रकारकस्मरणापत्त्या तादृशहेतुत्वस्यावश्यकत्वादिति कैश्चिदुक्तम् ।

---

1 आवश्यकत्वे इति -- स्वरूपतः घटत्वप्रकारकस्मृतिहेतोः स्वरूपतो घटत्वप्रकारकानुभवस्य तज्जन्यतादृशसंस्कारस्य च सत्त्वेन, तादृशानुभव-संस्कारयोरभावस्य उक्तस्मृत्यनुत्पादप्रयोजकत्वासंभवादिति भावः ।

2 तादृशहेतुतायाः — स्वरूपतः तत्प्रकारकस्मृतौ स्वरूपतः तत्प्रकारकस्यानुभवस्य संस्कारस्य च हेतुतायाः ।

 

## उक्तमतनिरासः

तदसत् । एवं हि व्यवहितचैत्रेऽपि [1]चैत्रत्वजातीय-शक्तिग्रहसंभवेन [2]तमेव चैत्रत्वेन पश्यन् पुरुषः, तत्र चैत्रो नायमिति प्रतारकवाक्येन चैत्रभेदेन [न] गृह्णीयात्, प्रत्यक्ष-बाधात् । चैत्रं दृष्ट्वा च चैत्रशब्दं नियमतः स्मरेत् । [3]पद-प्रवृत्तिनिमित्तविशिष्टपिण्डप्रत्यक्षस्य संज्ञासंस्कारनियतोद्बोधक-त्वात् । अत एव हरिणोक्तम्—

'यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् ।
पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः॥' (वा. प.) इति ।

---

## विधान्तरेण नत्वादिविशिष्टे शक्तिग्रहोपपादननिरासः

एतेन, [4]नत्वादिसंसर्गैकबोधानन्तरमुपनीतनत्वादि-विशिष्टे शक्तिग्रह—शाब्दबोधोदय उपपद्यते ।

---

1 चैत्रत्वजातीये — चैत्रत्वजातिविशिष्टे ।
2 तमेव — व्यवहितचैत्रमेव ।
3 पदप्रवृत्तिनिमित्तेति — पदशक्यतावच्छेदकेत्यर्थः ।
4 नत्वादिसंसर्गैकेति — ततः पूर्वं नत्वज्ञानानपेक्षणादिति भावः ।

यद्वा, नलत्वादिविशिष्टगोचरा अनादयः संस्कारपरम्पराः तत्तदुद्बोधकवशादुद्बुध्यन्ते इति नलत्वादिविशिष्टे [न] शक्तिग्रहाद्यनुपपत्तिरित्यपि परास्तम् । इति चेत् ।

---

## उक्तमहापूर्वपक्षे केषां चित् समाधानम्

नलादिपदं किञ्चिद्वाचकं साधुपदत्वादिति सामान्यतोदृष्टानुमानेन जायमानानुमितिः पक्षधर्मताबलात् नलादिवाचकत्वं विषयीकरोति । विशिष्टप्रत्यक्षे विशेषणज्ञानहेतुत्वेऽपि अनुमित्यादौ परामर्शादेरेव [1]नियामकत्वोपगमात् । तेन न नलत्वादिरूपेण शाब्दबोधानुपपत्तिरित्याहुः ।

---

## तत्रैवान्येषां समाधानम्

अन्ये तु, [2]औत्प्रेक्षिकचित्रकारादीनां, स्वाप्निके च ज्ञाने सर्वेषां अननुभूते जातेः स्वरूपतोऽनुभवस्य सर्वानुभवसाक्षि-

---

1 नियामकत्वोपगमात् — विशेषणतया भाने नियामकत्वोपगमात् ।

2 चित्रकारादीनामिति — अस्य 'अननुभूते जातेः स्वरूपतोऽनुभवस्येत्यनेन संबन्धः ।

कत्वादुपनयस्य सं (गाभूत) [भवात्] जातिप्रकारकमुपनीत-भानं क्वचिदुपगम्यते । तथा नलादिपदादपि वाक्यार्थबोधः संभवतीत्याहुः ।

---

## नलादिपदेभ्यः लक्षणया नलादिपदार्थत्वेन बोधः इति सिद्धान्तसारकथनम्

वस्तुतस्तु, नल–रामादि[1]पदार्थत्वादिप्रकारक एव शाब्द-बोधो लक्षणया संभवति । न च नलत्वादिविशिष्टे शक्त्य-ग्रहात् स्वशक्यसंबन्धरूपलक्षणाग्रहोऽपि न संभवतीति वाच्यम्। सामान्यरूपेण तत्रापि शक्तिग्रहसत्त्वात् । वृत्तिसंसर्गक-ज्ञानस्यापि हेतुताया उक्तत्वेन लक्षणासंसर्गकबोधे शक्तिग्रहस्या-नपेक्षणीयत्वाच्चेति सारः ।

---

## समासस्थलीयबोधप्रस्तावः

एवं राजपुरुषः इत्यादिसमासेऽपि राजादिपदलक्षणयैव शाब्दबोधः । राजा पुरुषः इत्यादौ राजकीयः पुरुषः इत्यादि-

---

1 पदार्थत्वादिप्रकारक एवेति — एवेन नलत्वादिप्रकारकस्य व्यवच्छेदः ।

शाब्दबोधवारणाय नामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नतया, राजपुरुषः इत्यादिसमासे लक्षणां विना राजकीयः पुरुषः इत्यादिशाब्दबोधासंभवात् । एवं च राजादिपदस्य राजसंबन्ध्यादौ लक्षणा । तस्य चाभेदेन पुरुषादावन्वयः इति ।

---

## एकार्थीभावसामर्थ्ये सति समासविधानात् समासे समुदायशक्तिरिति शाब्दिकोक्तिः, व्यपेक्षासामर्थ्यस्य समासप्रयोजकत्वेन तन्निरासश्च

यत्तु, 'समर्थः पदविधिः' (पा. सू. 2-1-1) इति सूत्रेण [1]एकार्थीभावरूपसामर्थ्ये [सति समास] विधानेन राजपुरुषादिसमुदायस्यैव राजकीयपुरुषादौ शक्तिरावश्यकीति समासशक्तिवादिभिः शाब्दिकैरुक्तम् ।

---

1 एकार्थीभावरूपेति — विशिष्टैकार्थबोधकत्वरूपेत्यर्थः । सामर्थ्यं द्विविधं व्यपेक्षा, एकार्थीभावश्चेति । आकाङ्क्षावशात् पदानां परस्परान्वितार्थबोधकत्वं व्यपेक्षा । सा राज्ञः पुरुषः इत्यादि वाक्ये । शक्त्या विशिष्टार्थबोधकत्वमेकार्थीभावः । स च समासादिवृत्तिषु । पदसंबन्धी विधिः-विधीयमानः समासादिः सामर्थ्यवत्पदाश्रितः इति समर्थः पदविधिरिति सूत्रार्थः । तत्र सामर्थ्यमेकार्थीभावरूपमिति शाब्दिकसंप्रदायः ।

तदसत्। तेन सूत्रेण आकाङ्क्षादिवशात् परस्परान्वयबोधकत्वात्मकव्यपेक्षारूपसामर्थ्ये एव समासविधानेन समुदायशक्तौ मानाभावात्।

---

## एकार्थीभाववादिनां नव्यवैयाकरणानां मतनिरूपणम्।

### एकार्थीभावानङ्गीकारे समासैकदेशे विशेषणान्वयप्रसङ्गः

अत्र एकार्थीभावरूपसामर्थ्यवादिनो [1]नव्यवैयाकरणाः—समासे एकार्थीभावरूपसामर्थ्यानुपगमे राजपुरुषः इत्यादिसमासैकदेशराजादिपदार्थे विशेषणान्वयो दुर्वारः। तथाच सुन्दरस्य राजपुरुषः इत्यादिप्रयोगप्रसङ्गः। तथाहि—राजपदोपस्थापितो राजा स्वस्वामिभावसंसर्गेण भेदेन पुरुषेऽन्वेति। निपातस्येव समासावयवस्यार्थो भेदेन प्रातिपदिकार्थे अन्वेति, [2]व्युत्पत्तिवैचित्र्यात्। यद्वा, लुप्तषष्ठीस्मरणजन्यपदार्थोपस्थितिसहकारेण

---

1 नव्यवैयाकरणा इति — अस्य व्यवहितेन 'समासे शक्तिसिद्धि-रिति वदन्ति इत्यनेनान्वयः।

2 व्युत्पत्तिवैचित्र्यात् — आकाङ्क्षावैचित्र्यात्। अकाङ्क्षाच तत्तच्छाब्दबोधौपयिकसमभिव्याहारः।

विग्रहवाक्यादिव समासादपि [1]वाक्यार्थबोधः, इति हि व्यपेक्षावादिनां नैयायिकानां मतम् । तथाच (विग्रहे) लुप्तविभक्तिकदध्यादिपदार्थस्य दध्यादेरिव समासघटकराजादिपदार्थस्यापि विशेषणयोगो दुरुद्धरः ।

अथ 'सविशेषणानां [2]वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न' इति वार्त्तिकात् सुन्दरस्य राजपुरुषः इत्यादिप्रयोगो न साधुरिति चेत् ।

[3]पदार्थैकदेशे पदार्थान्तरस्यान्वये वाक्यमसाधु, यथा गौर्नित्यः इत्यदाविति न्यायस्यैव वार्त्तिकमनुवादकम् ,न तु विधायकम् । अत एव चैत्रस्य [4]नप्ता इत्यादाविव देवदत्तस्य गुरुकुलम् इत्यादावपि [5]पदार्थैकदेशेऽन्वयेऽपि वाक्यसाधुतां

---

1 वाक्यार्थबोधः — राजनिरूपितस्वत्ववान् पुरुषः इत्याकारकः स्वत्वप्रकारको बोधः ।

2 वृत्तिरिति — समासादयः पञ्च वृत्तयः इति ज्ञेयम् ।

3 पदार्थैकदेशे — पदजन्योपस्थितिप्रकारे ।

4 नप्तेति — जन्यजन्यत्वरूपनप्तृत्वघटके जन्यत्वे षष्ठ्यन्तार्थस्य चैत्रनिरूपितत्वस्यान्वयो बोध्यः ।

5 पदार्थैकदेशे — गुरुकुलसमासार्थैकदेशे गुरौ ।

न्यायसिद्धां ज्ञापयितुं 'भवति वै [1]नित्यसापेक्षस्य समासः' इति वार्त्तिकमप्यनुवादकमेव । तदाहुः—

बहूनां वृत्तिधर्माणां वचनैरेव साधने ।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥ (भू. का.)

संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत्सा व्यपेक्षाऽस्य वृत्तावपि न हीयते ॥(भू. का.)
इति ।

ये तु चैत्रस्य नप्तेत्यादावपि [2]प्रकारीभूतजन्यजन्यत्वादिसंबन्धेन नप्तरि चैत्रादेरन्वयः, न तु पदार्थैकदेशे पुत्रादौ । यदाह हरिः—

समुदायेन संबन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥ इति ।

---

1 नित्यसापेक्षस्य — नियताकाङ्क्षोत्थापकस्य । गुरुः इत्युक्ते नियमेन कस्येत्याकाङ्क्षोदयात् गुरुशब्दः नित्यसापेक्ष इत्युच्यते ।

2 प्रकारीभूतेति— षष्ठ्यर्थस्यार्थस्य नप्तृपदार्थैकदेशान्वयपक्षाभिप्रायकम् ।

वर्णयन्ति । तन्मते देवदत्तस्य गुरुकुलमित्यादावपि कुले एव [1]देवदत्तादेरन्वयः, न तु गुरावित्यपि सुवचम् ।

---

### एकार्थीभावपक्षेऽपि द्वन्द्वे विशेषणान्वयप्रसङ्गः इति शङ्का, तन्निरासश्च

ननु एकार्थीभावाभ्युपगमेऽपि द्वन्द्वोपात्तस्यैकदेशत्वाभावात् तत्र पदार्थान्तरान्वयो दुर्वारः । तथाच [तथाऽ] [2]न्वयस्थलेऽपि [3]द्वन्द्वप्रसङ्ग इति चेत् ।

[4]पुष्पवन्तादिपदो [पस्था]प्यचन्द्रमसि शैत्यान्वयेन पुष्प-

---

1 अन्वय इति — गुरुघटितपरम्परासंबन्धेनेत्यादिः ।

2 तथान्वयस्थलेऽपि — वृत्तिघटक (विशेषण) पदस्यार्थे वृत्त्यघटकपदार्थान्वयस्थलेऽपि ।

3 द्वन्द्वप्रसङ्ग इति — तथाच चैत्रमात्रे पण्डिताभेदतात्पर्येण प्रयुक्तं पण्डितौ चैत्रमैत्रौ इति वाक्यं साधु स्यादिति भावः ।

4 पुष्पवन्तादिपदोपस्थाप्ये इति — 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यनुशासनात् पुष्पवत्पदस्य चन्द्रसूर्योभये एका शक्तिः, उभयोश्च न विशेषणविशेष्यभावेन भानम् । एकया शक्त्या दिवाकरनिशाकरौ पुष्पवत्पदप्रतिपाद्यौ इत्यनुशासनार्थः इति बोध्यम् ।

वन्तौ शीतौ इत्यस्य साधुतावारणाय धर्मद्वयावच्छिन्नैकशक्तिमतः पदस्य स्वार्थैकदेशान्वये सत्यसाधुत्वावधारणात् ।

---

राजपुरुष इत्यादौ राजपदस्य राजसंबन्धिनि लक्षणाश्रयणात् पदार्थैकदेशे राज्ञि न विशेषणान्वयः इति नैयायिकमतेनाक्षेपः

[1]अथ राजपुरुषः इत्यादौ राजपदं राजसंबन्धिलाक्षणिकम् । अन्यथा राजपदार्थस्य पुरुषे अभेदेनान्वयो न स्यात् । नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात् । न च नि(य) [पा] तस्थल इव समासेऽपि तादृशव्युत्पत्तेः संकोचान्न दोषः इति वाच्यम् । दृष्टान्तासिद्ध्या संकोचे मानाभावात् । नचैवं घटो न पटः, चन्द्र इव मुखमित्यादौ नञर्थे भेदे, इवार्थसादृश्ये च घटचन्द्रादेः [2]भेदेनान्वयो न स्यात् । न स्याच्च नञाद्यर्थस्य पटादौ [3]तथाऽन्वय इति वाच्यम् । तत्रापि घटपदादेः घटप्रतियोगिकादौ, नञा-

---

1 अथेति — अस्य 'व्यावृत्तिरिति चेत्' इति व्यवहितेनान्वयः । अयं च नैयायिकस्यावान्तरपूर्वपक्षः ।

2 भेदेन — प्रतियोगितासंबन्धेन ।

3 तथा — आश्रयत्वादिभेदसंबन्धेन ।

देश्च भेदादिमति लक्षणोपगमात् । नापि लुप्तषष्ठीस्मरणेन [1]निर्वाहः । षष्ठीलोपमजानतोऽपि बोधात् । अत एव, तत्पुरुषस्य पूर्वपदलाक्षणिकतया, कर्मधारयस्य [2]सर्वशक्ततया तदभावेन तत्पुरुषात् कर्मधारयो बलीयानिति आशयेन निषाद-स्थपत्यधिकरणसिद्धान्तोऽपि संगच्छते । एवं च [3]ममापि एकदेशान्वयभियैव, न सुन्दरस्य राजपुरुषः इति प्रयोगः, इति सविशेषणानामित्यादिवार्त्तिकं विनैव निर्वाहः ।

---

## तत्पुरुषे पूर्वपदस्य लक्षणास्वीकारे कर्मधारयत्वापत्तिः इत्यत्रान्तराक्षेपः तत्परिहारश्च

यत्तु राजपुरुषः इत्यादौ पूर्वपदे राजसंबन्धिनि लक्षणा-स्वीकारे तस्य कर्मधार [यत्वा] पत्तिः, [4]समानाधिकरणतत्पुरुष-स्यैव कर्मधारयत्वात् । न च यत्र समासपूर्वदशायामभेदा-

---

1 निर्वाहः — राज्ञः पुरुषः इत्यत्रेव षष्ठ्यर्थस्वत्वप्रकारकबोध-निर्वाहः ।

2 सर्वशक्ततया—(कर्मधारयघटकानां) सर्वेषां पदानां शक्ततया ।

3 ममापि — व्यपेक्षावादिनः नैयायिकस्यापि ।

4 समानाधिकरणेति — 'तत्पुरुषः समानाधिकरणः कर्मधारयः' इत्यनुशासनादिति भावः ।

न्वयः, तत्र कर्मधारयः। यत्र च (ताद्द) [1][तद्द] शायां भेदेनान्वयः तत्र तत्पुरुषः इति वाच्यम्। नित्यसमासे विग्रहशून्यत्वेन तादृशतत्पुरुषकर्मधारययोरव्याप्तेः। अलौकिकविग्रहस्य सत्त्वेऽपि तस्य अन्वयबोधे स्वरूपायोग्यत्वात्। न (चैवं) [चस] मासात्पूर्वं यत्र [2]तुल्यविभक्तित्वं तत्रैव कर्मधारयत्वम्। अतो न तत्पुरुषस्य कर्मधारयत्वम्। तत्र समासात् पूर्वं विरुद्धविभक्तित्वादिति वाच्यम्। पूर्वावस्थायाः समासार्थविवक्षानुसारेणैव कल्प्यतया तत्र समासवाक्ये बोधाविशेषेण तद्वैलक्षण्यकल्पनाया अप्यसंभवादिति।

तदसत्। यत्र समासघटकपदार्थस्य विशेष्यत्वे सति तद्घटकीभूतपदानां [3]स्वोत्तरमुत्पत्तियोग्यविभक्त्यर्थवदन्तर्भावेण लक्षणां विना सामानाधिकरण्यं तत्र कर्मधारयत्वम्, तदन्त-

---

1 तद्दशायां— समासपूर्वदशायाम्।

2 तुल्यविभक्तित्वमिति — समासघटकपदानामिति शेषः।

3 स्वोत्तरमुत्पत्तियोग्यविभक्त्यर्थवदन्तर्भावेणेति — नीलघटः इति कर्मधारये नीलपदस्य नीलरूपविशिष्टलाक्षणिकत्वेऽपि विभक्त्यर्थवति लाक्षणिकत्वाभावान्नाव्याप्तिरिति भावः। राजपुरुषः इत्यत्र राजपदस्य षष्ठ्यर्थसंबन्धवति लाक्षणिकत्वात् तत्पुरुषत्वं बोध्यम्।

र्भावेण लक्षणया सामानाधिकरण्ये तत्पुरुषत्वमिति विभागसंभवात् । [1]सत्यन्तेन च पञ्चमूलीत्यादि[2]व्यावृत्तिरिति चेत् ।

——

तत्पुरुषे राजपदस्य लक्षणाङ्गीकारेण तत्र विशेषणान्वयापत्तिपरिहारेऽपि समासस्य प्रातिपदिकसंज्ञासिद्धये एकार्थीभावस्वीकारः आवश्यकः इति निरूपणम्

तथापि समासस्थले समुदायशक्त्यनङ्गीकारे तत्र एकार्थीभावस्वरूपार्थवत्त्वाभावेन प्रातिपदिकसंज्ञा [या असंभवात्] प्राचीनविभक्तिलोप–विभक्त्यन्तरोत्पत्त्यादिकं वृत्तिकार्यं न स्यात् । न च समासस्य विशिष्टैकार्थकत्वाभावेन [3]अर्थवदादिसूत्रेण प्रातिपदिकसंज्ञायाः असंभवेऽपि 'कृत्तद्धितसमासाश्च' (पा. सू. 1-2-46) इति सूत्रान्तरेणैव प्रातिपदिकसंज्ञायाः

---

1 सत्यन्तेन — कर्मधारयलक्षणप्रविष्टेन समासघटकपदार्थस्य विशेष्यत्वे सतीति विशेषणेन ।

2 व्यावृत्तिरिति — पञ्चमूली इत्यत्र समाहारस्यैव विशेष्यत्वादिति भावः ।

3 अर्थवदादिसूत्रेण — 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रेण ।

संभवात् न दोष इति वाच्यम् । कृदादिसूत्रेऽपि अर्थवद्ग्रहणानुवृत्त्या तेनापि सूत्रेण तत्संज्ञाया असंभवात् । अन्यथा अर्थवदादिसूत्रे (अर्थवद) धातुप्रत्ययानां पर्युदासबलादेवा[1]र्थवत्त्वे लब्धे अर्थवद्ग्रहणस्यानर्थक्यप्रसङ्गात् । कृदादिसूत्रे (षु) [ऽनु] वृत्त्यर्थमेव तदुपादानात् । [2]कृत्तद्धितान्तलाभाय कृत्तद्धितयोरर्थवद्ग्रहणानुवृत्तेरावश्यकत्वाच्च ।

---

### अर्थवत्सूत्रमेव प्रातिपदिकसंज्ञाविधायकं, न कृत्तद्धितेति सूत्रम्, परन्तु प्रपञ्चमात्रम्

वस्तुतस्तु, कृदादिसूत्रं न विधायकम् । (तदासत्ति) [तथा सति] 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति न्यायेन मूलकेनोपदंशमित्यन्तवाक्यग्रहणापत्तिः । तद्धितग्रहणेन तद्धितान्तमात्रे प्रातिपदिकसंज्ञाविधौ बहुगुडः इत्यादौ

---

1 अर्थवत्त्वे लब्धे इति — धातुभिन्नत्वोक्तेः, तद्भिन्नं तत्सदृशमिति न्यायेन धातु-प्रत्ययवदर्थवत्त्वं लभ्यते इति भावः ।

2 कृत्तद्धितान्तलाभायेति—विशेषणत्वे एव 'येन विधिस्तदन्तस्य' इत्यनुशासनेन तदन्तलाभादिति भावः ।

[1]तदभावप्रसङ्गाच्च । न च तद्धितग्रहणेन तद्धितविशिष्टमेव गृह्यते, न तद्धितान्तमिति वाच्यम् । तथासति पचतकि इत्यादि मध्यस्थिततद्धितकेऽपि प्रातिपदिकसंज्ञापत्तेः । इत्थं च अर्थवदादिसूत्रमेव (पा. सू. 1-2-45) प्रातिपदिकसंज्ञा-विधायकं, कृदादिसूत्रन्तु (पा. सू. 1-2-46) प्रपञ्चमात्रम् ।

---

प्रातिपदिकसंज्ञाप्रयोजकमर्थवत्त्वं वृत्तिमदविषयकप्रतीत्यविषयत्वं व्यपेक्षासाधारणम् । तच्च समासेऽपीति न समुदायशक्तिः सिद्ध्यतीति आक्षेपः

अथ एकार्थीभावाभ्युपगमाय कृद्वृत्तिमात्रस्योपसंग्रहात् सुबन्ततिङन्तयोश्च व्यावर्तनात् प्रत्ययान्तपर्युदासः, कृदादि-सूत्रप्रपञ्चश्चायुक्तः स्यात् । अतः अर्थवत्त्वं अर्थस्मारकवृत्ति-मत्त्वमत्र [व्यं] पेक्षासाधारणं निर्वाच्यं वृत्तिमदविषयकप्रतीत्य-विषयत्वस्वरूपम् । तद्विद्यते वृत्तिमदवयवके समुदायेऽपीत्यतः [2]प्रकृतिप्रत्ययार्थवत्तया कृदन्तादेरर्थवत्तासिद्धौ प्रातिपदिक-

---

1 तदभावप्रसङ्गाच्चेति — बहुचः पूर्वनिपातादिति भावः ।

2 प्रकृतिप्रत्ययार्थवत्तया — कृदन्तघटकप्रकृतेः कृत्प्रत्ययस्य चार्थ-वत्तया ।

संज्ञासिद्धौ च, सुबन्ततिङन्तयोरप्यर्थवत्त्वात् तयोः, वाक्यस्य च प्राति [पदि] कसंज्ञावारणाय कृत्तद्धितेति नियमसूत्रम् । प्रकृतिप्रत्ययसमुदायस्य चेत् प्रातिपदिकसंज्ञा, कृत्तद्धितान्तयोरेव, वाक्यस्य चेत्, समासस्यैवेति । प्रत्ययान्तपर्युदासस्तु न कर्तव्य एव प्रयोजनाभावात् । न च धातुपर्युदासात् क्वि (द) [ब] न्तधातोः प्रातिपदिकसंज्ञाऽनुपपन्नेति कृत्तद्धितेत्यादि सूत्रं विधायकमेवेति वाच्यम् । काल्पनिकविभक्त्यादिविशिष्टे, 'राजन् ङस् पुरुष सु' इत्यलौकिकप्रक्रियावाक्ये समाससंज्ञेव, काल्पनिककृदादिविशिष्टे प्रातिपदिकसंज्ञेत्युपगमात् । अन्यथा कृत्तद्धितेति सूत्रेणापि [1]तद्ग्रहणानुपपत्तेः । नचैवं धनं, वनं, इत्यादौ प्रत्येकं (करणानां) [वर्णानां] प्रातिपदिकसंज्ञा तत्प्रयुक्तो नकारलोपश्च स्यादिति वाच्यम् । वर्णानां समुदायवृत्त्या अर्थवत्त्वं, प्रत्येकवर्णवृत्त्या वा । नाद्यः । वृत्तिमद्घटितत्वस्वरूपस्यार्थवत्त्वस्य तदवयवेष्वभावात् । नान्त्यः । शाब्दबोधजनकपदार्थोपस्थितिजनकवृत्तेरधिकरणं यत्समुदायः तदविषयकप्रतीत्यविषयत्वमर्थवत्त्वम् । न हि समुदायावयवे प्रत्येकवर्णे विद्यमानापि

---

1 तद्ग्रहणानुपपत्तेः — क्विबन्तधातुग्रहणानुपपत्तेः ।

वृत्तिः पदार्थं स्मारयति, तज्जनिता वा स्मृतिः शाब्दबोधमर्जयति ।

भवतु वा अखण्डवृत्तिमत्समुदायावयवानामनर्थकत्वमेव । स्वीक्रियतां च पङ्कजादिपदे पङ्कजनिकर्तृत्वावच्छिन्ने विशिष्टे रूढिः । न ह्येतावता केवल (रूढि) यौगिके समासे रूढिसिद्धिरिति चेत् ।

---

चित्रगुरित्यादौ चित्रगोस्वामिबोधाय समुदायशक्तिरावश्यकी

तथापि बहुव्रीहौ शक्तिकल्पनं विना चित्रगुः इत्यादौ चित्रगोस्वामिनो बोधोपपादनमशक्यमेव । न गोपदस्य गोस्वामिनि लक्षणया तल्लाभः । पदार्थैकदेशे गवि चित्रादेरनन्वयप्रसङ्गात् । नापि गोपदस्यैव चित्राभिन्नगोस्वामिनि लक्षणा, चित्रपदं तात्पर्यमात्रग्राहकमिति युक्तम् । चित्रगोपदयोः [1]व्यपेक्षास्वरूपसामर्थ्यस्याप्यभावे समासानुपपत्तेः ।

---

1 व्यपेक्षास्वरूपसामर्थ्यस्याप्यभावे इति— चित्रपदार्थ-गोपदार्थयोरन्वयाभावेन तत्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वलक्षणैकवाक्यतात्मकव्यपेक्षासामर्थ्यस्य चित्रगोपदयोरभावादिति भावः ।

न च गोपदात् (क्त्या) [शक्त्या] गोः, लक्षणया स्वामिनः उपस्थितौ, लक्ष्यार्थविशेषणीभूतायां [1]गवि चित्रायाः तादात्म्येनान्वयात् चित्रगोस्वामीत्यन्वयबोधोपपत्तिः । [2]एकपदोपात्तयोरपि कृतिवर्तमानत्वयोः परस्परान्वयबोधदर्शनेन प्रकृतेऽप्यनुपपत्त्यभावादिति वाच्यम् । प्रातिपदिकार्थयोः गो–स्वामिनोः भेदेनान्वयबोधस्याव्युत्पन्नत्वात् । न च चित्रापद–गोपदयोरुभयोरपि चित्राभिन्नगोस्वामी लक्ष्यः । परस्परं तादात्म्येनान्वयात् [व्य] पेक्षाप्यक्षतैव । अत एव तत्पुरुषापेक्षया (मिव) बहुव्रीहिर्जघन्यः इति प्रवादः । बहुव्रीहावुभयपदस्यैव लाक्षणिकत्वादिति वाच्यम् । बहुव्रीहौ एकशेषद्वन्द्वान्यतरप्रसङ्गात् । समानरूपावच्छिन्नयोरभेदान्वयबोधस्या[3]व्युत्पन्नत्वाच्च ।

---

1 गवि — गोपदार्थे ।

2 एकपदेति — तिङादिरूपैकपदेत्यर्थः ।

3 अव्युत्पन्नत्वाच्चेति— घटो घटः इति वाक्यादभेदान्वयबोधानुत्पत्त्या विरूपोपस्थितयोरेवाभेदान्वयव्युत्पत्तेः स्वीकारादिति भावः ।

## एकदेशान्वयस्य एकप्रातिपदिकोपस्थितयोर्भेदान्वयस्य चोपगमेन चित्रगोस्वामिबोधोपपत्तिः ।

यदि च, [1]क्वचिदेकदेशान्वयस्यापीष्टतया गोसंबन्धिलाक्षणिकगोपदार्थैकदेशगवि चित्रापदार्थान्वयो नानुपपन्नः । भिन्नाभ्यां प्रातिपदिकाभ्यामुपस्थितयोरेव न भेदेनान्वयबोधः । एकप्रातिपदिकोपस्थितयोस्तु [2]भवत्येवेति गोपदलक्ष्ये स्वामिनि गोपदशक्यस्य भेदेनान्वयबोधोपगमेऽपि क्षतिविरहादिति विभाव्यते ।

---

## प्राप्तोदको ग्रामः इत्यादौ एकार्थीभावानङ्गीकारे अभिमतबोधानुपपत्तिः

तथापि, अषष्ठ्यर्थबहुव्रीहौ प्राप्तोदको ग्रामः इत्यादौ व्यपेक्षारूपसामर्थ्योपगमे, कथमपि नाभिमतान्वयबोधनिर्वाहः ।

---

1 क्वचिदेकदेशान्वयस्यापीति— स्तोकनम्रः परमसुन्दरः इत्यादौ स्तोकपदार्थस्याभेदेन पदार्थैकदेशे नमने, परमपदार्थस्य चाभेदेन सुन्दरपदार्थैकदेशे सौन्दर्ये चान्वयदर्शनादिति भावः ।

2 भवत्येवेतीति — व्युत्पत्तिवैचित्र्येणेति शेषः ।

तथाहि—प्राप्नोतेः उत्तरदेशोपहितं [1]कर्म, क्तप्रत्ययस्य कर्ता अर्थः। तेन प्राप्तिकर्तृ प्राप्तपदार्थः। उदकपदं च [2]त्वन्मते जल-संबन्धिनि [3]लाक्षणिकम्। तदेकदेशे जले प्राप्तस्य तादात्म्ये-नान्वयः। नह्येतावतापि उदककर्तृकप्राप्तिकर्म ग्रामः इत्यन्वय-बोधनिर्वाहः। अभिमतश्च तादृश एवान्वयबोधः। तस्मात् व्यपेक्षारूपसामर्थ्योपगमेनानिर्वाहात् एकार्थीभावरूपसामर्थ्य-मुपेयम्। तच्च समुदायशक्तिं विना न निर्वहतीति समासे शक्तिसिद्धिः इति वदन्ति।

---

## एकार्थीभाववादिनव्यवैयाकरणमततिनिराकरणम्

अत्रोच्यते—

---

1 कर्म — क्रिया।

2 त्वन्मते — व्यपेक्षावादिमते।

3 लाक्षणिकमिति — अभेदान्वयानुरोधादित्यादिः।

## अषष्ठ्यर्थबहुव्रीहौ अभिमतबोधोपपादनम्

[1]प्राप्तोदको ग्रामः इत्यादौ अषष्ठ्यर्थबहुव्रीहौ समुदायशक्तिं विनापि अभिमतबोधः संभवत्येव। तथाहि—तत्र प्राप्तिप्रकृतिक [क्त] प्रत्ययस्य कर्ता कर्म चार्थः। उदकं तादात्म्येन कर्तरि, सः निरूपकतया प्राप्तौ, सा च कर्मणि इत्येवं विशेषणविशेष्यभावव्यत्यासमात्रेण क्लृप्तपदार्थैरे (को) [वो] दककर्तृकप्राप्तिकर्म ग्रामः इत्यभिमतबोधः निर्वाहयितुं शक्यते। न च विशेषणविशेष्यभावव्यत्यासकल्पने गौरवमिति वाच्यम्। [2]समुदायातिरिक्तशक्तिकल्पनमपेक्ष्य तत्कल्पने एव लाघवात्।

---

1 समासशक्तिं साधयद्भिः वैयाकरणैः व्यपेक्षापक्षे उद्भावितानि, दूषणानि तत्र तत्र व्यपेक्षावादितार्किकप्रत्यवस्थाननिरूपणेन परिहृतानि। अषष्ठ्यर्थं बहुव्रीहौ अभिमतबोधानिर्वाहदूषणमेवावशिष्टं नैयायिकैः परिहरणीयमिति, तद्दूषणपरिहारेण सिद्धान्तमुपक्रमते—प्राप्तोदक इति।

2 समुदायातिरिक्तशक्तिकल्पनं— पदसमुदायात्मके समासे अतिरिक्तायाः शक्तेः कल्पनम्।

## समासस्थले समुदायशक्तिस्वीकारे, शशश्रृङ्गपदे समासानुपपत्तिः शक्तिग्रहानुपपत्तिश्च

किञ्च, समासस्थले समुदायशक्तिकल्पने शशश्रृङ्गं नास्तीत्यादौ शशश्रृङ्गपदे समासानुपपत्तिः। तत्र शशश्रृङ्गस्यालीकतया विशिष्टार्थे समुदायशक्तेरसंभवात्।

अपि च, यदि समासस्याखण्डस्य शक्तिः, तदा तस्या अगृहीताया (मु) [नो] पयोग इति गृहीताया एवोपयोगित्वं वाच्यम्। न हि शशश्रृङ्गादिशब्दानामपदार्थैः सह शक्तिरूपसंबन्धग्रहः संभवति। तथाहि—परबुद्धिविषयतया विशेषतः उपस्थिते अलीके शक्तिग्रहः, सामान्यत उपस्थिते तत्र वा शक्तिग्रहः। परबुद्धिविषयतया विशेषत उपस्थितिरपि, परबुद्धिनिरूपकतया परबुद्धिनिरूपणेनावश्यवेद्यत्वात्, व्यवहारविशेषेण परबुद्धावुन्नीयमानायां बुद्धिविशेषणत्वेनोपस्थितत्वाद्वा। तत्र नाद्यः। परबुद्धेरुल्लेखो यदि प्रत्यक्षरूपः स्यात्, तदा तस्मिन्नुल्लेखे विषयोऽप्युल्लिख्येत। न ह्येवम्। परबुद्धेरनुल्लेखात्। न द्वितीयः। नहि कश्चिदलीके व्यवहारोऽस्ति, येनोन्नीयमानायां बुद्धौ विशेषतः शशश्रृङ्गादिर्भासते। न च शब्दान्तरोपस्थिते शशश्रृङ्गादौ शशश्रृङ्गादिपदसंकेतग्रह

इति वाच्यम् । [1]पदान्तरस्याप्यगृहीतसंगतिकत्वेनाप्रतिपादकत्वात् ।

न च शशशृङ्गादिशब्दः उच्चारयितृतात्पर्यपूर्वकः, बालशुकादिभिन्नोच्चरितशब्दत्वात् इत्यनुमानेन सिद्धे तात्पर्ये, तत्तात्पर्यं सविषयकम् इत्यनुमित्या गृहीते तात्पर्यविषये, शशशृङ्गादिशब्दसंकेतग्रहः इति सामान्यत उपस्थितिपक्षो युक्त इति वाच्यम् । एतादृशसमयग्रहसंभवेऽपि तस्य शाब्दबोधानुपयोगित्वात् । न हि तात्पर्यविषयत्वोपलक्षिते धर्मिणि शक्तिग्रहः शाब्दबोधोपयोगी, किन्तु गोत्वादिविशिष्टे । अन्यथा गां बधानेति वाक्यात् तात्पर्यविषये सामान्यतो गृहीतसंकेतैः पदैः [2]अगृहीतविशेषसंगतिकानां शाब्दबुद्धिप्रसङ्गात् ।

---

1 पदान्तरेति — शशशृङ्गोपस्थापकत्वेनाभिमतपदान्तरेत्यर्थः ।

2 अगृहीतविशेषसंगतिकानां — गोत्वादिप्रवृत्तिनिमित्तविशेषविशिष्टे शक्तिग्रहविरहिणाम् ।

शशशृङ्गादिपदजन्यशाब्दबोधः बुद्धिविषयत्वरूपोपलक्षण-धर्ममात्रपुरस्कारेण शक्तिग्रहमपेक्षते इत्याक्षेपः, तन्निरासश्च

ननु विशेषान्तरीभूतप्रवृत्तिनिमित्तगोत्वादिधर्मविशिष्टे गवादौ गवादिपदशक्तिग्रहो गोत्वादिविशिष्टमेव बोधयति । शशशृङ्गादीनां तु निर्धर्मकाणां शाब्दबोधो बुद्धिविषयत्वस्वरूपो-[प] लक्षणधर्ममात्रं पुरस्कृत्य शक्तिग्रहमपेक्षते । तदुक्तम्- 'विशेषान्तरविनाकृतः कल्पनामात्रविषयोऽस्य वाच्यः' इति । इति चेन्न ।

एवं सति कूर्मरोम-शशशृङ्ग [1]विकल्पयोर[2]विशेष-प्रसङ्गात् । न हि प्रवृत्तिनिमित्तस्याभावे कूर्मरोम न शशशृङ्गपदार्थः इति वक्तुं शक्यम् । किमपरम, घटोऽपि [3]भवतां मते अलीक इति सर्वेऽपि शब्दाः तुल्यमेव विकल्पं जनयेयुः ।

---

1 विकल्पयोरिति— 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति पातञ्जलयोगसूत्रे शशशृङ्गादिशब्दज्ञानजन्यः वस्त्वविषयकः वृत्तिविशेषः विकल्पः इत्यभिहितं बोध्यम् ।

2 अविशेषप्रसङ्गात् — विलक्षणविषयकत्वाभावप्रसङ्गात् ।

3 भवतां मते — विज्ञानातिरिक्तं बाह्यं वस्तु नास्तीति वादिनां मते ।

यत्तु सर्वेऽपि प्रतिपत्तारः स्वस्ववासनातो गृहीतशशशृङ्गशब्दादिसंगतिका इति । तदसत् । अतिप्रसङ्गात्, अनुभवं विना संस्कारापरपर्यायवासनाया असंभवाच्च ।

---

तत्तदर्थे समासविधायकेन व्याकरणेन शशशृङ्गादिपदशक्तिनिर्णयः इति पक्षप्रतिक्षेपः

एतेन, तत्तदर्थे समासं विदधता व्याकरणेन तेषु तेष्वर्थेषु समासस्य शक्तिरेव प्रतिपाद्यते । अन्यथा क्वचिदपि व्याकरणात् शक्तिनिर्णयासंभवः । तथाच शशशृङ्गाद्यखण्डशब्दप्रतिपाद्यं किंचिदवश्यमेषितव्यम्, यत्र व्याकरणेन तत्तत्समासानां साधुत्वानुशासनमित्यपि परास्तम् । उक्तरीत्या शशशृङ्गादिशब्दे शक्तिग्रहासंभवात् ।

---

समासपदादुद्देश्यविधेयभावेनान्वयाभावोपपादनादिना समुदायशक्तिसिद्धिरिति आधुनिकशाब्दिकोक्तिनिरूपणम्

अत [एव], पण्डितो ब्राह्मणः, पाचकः पाठकः [1]इतिवत्,

1 इति वत् — इत्यादाविवेति यावत् ।

पण्डितब्राह्मणः, पाचकपाठकः इत्यादौ उद्देश्यविधेयभावेनान्वयवारणाय समुदायशक्तिमूलक एकार्थीभाव आवश्यकः। सति हि तस्मिन् घटपदात् घट—घटत्वयोरिव [1]इतरसं [सृ]ष्टस्वार्थस्यैव समासादुपस्थित्या उद्देश्यविधेयभावेनान्वयनियामिकायाः पृथगुपस्थितेरभावान्न दोषः ।

---

समासे उद्देश्यविधेयभावेनानन्वये, प्रथमभक्षः इत्यत्र प्राथम्यविशिष्टभक्षान्तरविधिरिति मीमांसकसिद्धान्तस्यानुकूलता

अत एव वषट्कर्तुः प्रथमभक्षः इत्यत्र वषट्कर्तृविशिष्टभक्षानुवादेन प्राथम्यविधानापत्तिमा[2]रोप्य, प्रथमभक्षः इति समस्तमेकपदम्। तत्रैकप्रसरत्वात् नैकांशेन वषट्कर्तृवशिष्टभक्षणमुद्दिश्य प्रा [थम्यविधानं] युक्तम्। तथा सति

---

1 इतरसंसृष्टस्वार्थस्यैवेति — घटत्वविशिष्टवाचकात् घटपदात् घटत्वविशिष्टस्यैवोपस्थितिः, न घट-घटत्वयोः स्वातन्त्र्येणोपस्थितिः। तथा अभेदेन पण्डितविशिष्टब्राह्मणे शक्तात् पण्डितब्राह्मणपदात् पण्डितविशिष्टब्राह्मणयोरुपस्थितिः, न तयोः स्वातन्त्र्येणोपस्थितिरित्यर्थः।

2 आरोप्य — पूर्वपक्षतया प्राप्य।

प्रसरभेदात् सामर्थ्यविघातेन समासो न स्यात् । [1]एतेन, केवलभक्षानुवादेन प्राथम्यं विधीयते इत्यप्यपास्तम् । न च सविशेषणत्वात् वृत्तिर्न स्यात् । [2]प्रधानस्य तत्त्वे क्षत्यभावात् । तस्मात् [3]प्राथम्यविशिष्टभक्षान्तरविधिः इति मीमांसकाः ।

तस्मात् [4]तथान्वयबोधे उद्देश्यवाचकपदसमभिव्याहृत-तदसंसृष्टार्थबोधकविधेयवाचकपदजन्योपस्थितिरेव तन्त्रम् । न च तथा शाब्दबोधं प्रति उद्देश्य–विधेयवाचकपदघटितैक-समस्तपदभिन्नपदजन्योपस्थितिर्हेतुः इति [5]पूर्वोक्ते, पीतवासाः चतुर्भुजः इत्यादौ च न दोष इति वाच्यम् । [6]सकलवृत्ति-भेदघटितगुरुतरकार्यकारणभावकल्पनापेक्षया एकार्थीभाव-स्वीकारे लाघवात् ।

---

1 एतेन — समासघटकपदार्थयोरुद्देश्यविधेयभावेनान्वये साम-र्थ्याभावात् समासासाधुत्वेन ।

2 प्रधानस्य तत्त्वे — विशेष्यीभूतस्य समासघटकपदार्थस्य सविशेषणत्वे ।

3 प्राथम्यविशिष्टभक्षान्तरविधिरितीति — सिद्धान्तयन्ति इति शेषः ।

4 तथान्वयबोधे — उद्देश्यविधेयभावेनान्वयबोधे । एवमग्रेऽपि ।

5 पूर्वोक्ते — पण्डितब्राह्मणः, पाचकपाठकः इत्यादौ ।

6 सकलवृत्तिभेदेति — वृत्तित्वमनुगतं दुर्वचमिति भावः ।

नचैवं 'सप्तदशारत्निः वाजपेयस्य यूपो भवति' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या, इत्यादौ वाजपेययूपारत्नि, उष्णीषं, अवत्तं चानूद्य, सप्तदशत्व–लौहित्य–(थैव) [पञ्च] त्वानां विधानं न स्यादिति वाच्यम् । अत्र यूपारत्नि–उष्णीषावत्तानामतिदेशप्राप्ततया, अतिदेशादुपदेशस्य बलवत्त्वेन तत्प्रवृत्तेः पूर्वमेतैः विशिष्टविध्यङ्गीकारेणाक्षतेः । तत्पर्यालोचनायां तु सप्तद (स्य) [शत्व] लौहित्य–पञ्चत्वमात्रेषु तात्पर्यं गम्यते इति तावन्मात्रविधित्वव्यपदेशः । नचैवमनया रीत्या प्रथमभक्षः इत्यत्रापि प्राथम्यविशिष्टभक्षान्तरविधिर्न स्यादिति वाच्यम् । [1]तत्रोभयोरप्युपदेशेन तथा वक्तुमशक्यत्वादिति आधुनिकशाब्दिकोक्तिरपि परास्ता ।

---

## उक्तशाब्दिकोक्तिनिरासः

पण्डितब्राह्मणः इत्यादौ उद्देश्यविधेयभावेनान्वयबोधाभावस्य आनुभविकत्वे विवादसंभवेन तादृशान्वयबोधे बाधकाभावेन तद्वारणाय निरुक्तैकार्थीभावस्यानावश्यकत्वाच्च ।

1 उभयोः — प्राथम्य –भक्षयोः ।

घटपदे घट-(प) [घ] टत्वयोः पृथगुपस्थित्यभावेन तथाऽन्वयबोधाभावेऽपि (यत) [पण्डित] ब्राह्मणः इत्यादौ समुदायशक्तिजन्यविशिष्टोपस्थितेः [1]अपृथगग्रहत्वेऽपि, समासघटकपण्डितपद-ब्राह्मणपदजन्योपस्थित्योः [2]पृथग्रूपतया तथाऽन्वयबोधस्य भवतामपि दुर्वारत्वाच्च ।

अत एवेत्यादिकमपि मन्दम् । मीमांसकैः तादृशैकार्थीभावानभ्युपगमेन तेषां तन्मूलक (प) [भ] क्षान्तरविध्युपगमस्यासंगतत्वात् । न च तदेकदेशिभिः तादृशैकार्थीभावोऽभ्युपेयते इति वाच्यम् । तदनभ्युपगन्तृणां मीमांसकानामपि (प) [भ] क्षान्तरविध्युपगमेन तदुपपादनवर्त्मनैव [3]सर्वेषां भक्षान्तरविध्युपगमसंभवात् ।

---

1 अपृथगग्रहत्वेऽपि — स्वतन्त्रोपस्थितित्वाभावेऽपि ।

2 पृथग्रूपतया — पृथगुपस्थितिरूपतया । समासशक्तिवादिभिः प्रत्येकपदशक्तिज्ञानसहकृतसमुदायशक्तिज्ञानेन विशिष्टार्थोपस्थितेः स्वीकारात्, प्रत्येकपदशक्तिज्ञानरूपकारणबलेन प्रत्येकपदार्थोपस्थितिः (पृथगुपस्थितिः) अवर्जनीयेति भावः ।

3 सर्वेषामिति— मीमांसकानामिति शेषः ।

## समासे समुदायशक्तिस्वीकारे निषादस्थपत्यधिकरणविरोधः

किंच, भवतां समासे समुदायशक्तौ, 'एतयैव निषादस्थपतिं याजयेत्' इत्यत्र निषादस्थपतिपदे कर्मधारय एव न तु तत्पुरुषः, तत्पुरुषात् कर्मधारयस्य [1]लघुत्वादिति निषादस्थपत्यधिकरणीयमीमांसासिद्धान्तविरोधो दुष्परिहरः । सर्वत्र समासे एकार्थीभावानुरोधेन समुदायशक्तेरावश्यकत्वेन कर्मधारयतत्पुरुषयोर[2]विशेषेण लाघवाभावात् ।

---

## निषादस्थपत्यधिकरणसिद्धान्तस्य प्रकारान्तरेण लाघवमूलकत्वे प्रथमभक्षः इत्यत्रापि लाघवमूलक एव प्राथम्यविशिष्टभक्षविधिरिति निरूपणम्

अथ उक्तसिद्धान्तो [3]नोक्तलाघवमूलकः, येनोक्तानुपपत्तिः स्यात् । किन्तु वैदिकसमासस्य कर्मधारय–तत्पुरुषा-

---

1 लघुत्वादिति -- लक्षणाया अकल्पनेन लाघवादित्यर्थः ।

2 अविशेषेण — समुदायशक्त्या विशिष्टस्वार्थबोधने सामग्रीवैलक्षण्याभावेन ।

3 उक्तलाघवमूलकः — लक्षणाया अकल्पनेन कर्मधारयस्य लाघवमूलकः ।

न्यतरत्वसन्देहे कर्मधारयत्वमेव न तत्पुरुषत्वमित्यनादितात्पर्यमूलकनियममूलक एवेति न तद्विरोधः । यद्वा, समासस्य विशिष्टार्थशक्तौ, निषादरूपस्थपतिः समासार्थः, निषादानां स्थपतिः त्रैवर्णिको निषादभिन्नः समासार्थो वेति सन्देहे, निषादभिन्नोपस्थित्यकल्पनप्रयुक्तलाघवेन निषादरूपस्थपतिरेव समासार्थः इति लाघवमूलक एवोक्तसिद्धान्तः इति न तद्विरोध इति चेत् ।

तुल्यं [1]ममापि । तथाहि — वषट्कर्तुः प्रथमभक्षः इत्यत्र [2]विशिष्टोद्देश्यकत्वं, [3]विशिष्टविधेयकत्वं वेति सन्देहे, वैदिकवाक्यस्य विशिष्टविधायकत्वमेव, न तु विशिष्टोद्देश्यकत्वमिति अनादितात्पर्यमूलकनियममूलक एव विशिष्टविधिरिति भक्षान्तरविधिसिद्धान्ताविरोधः । यद्वा, [4]विशिष्टोद्देश्यकत्वे, भक्षानुवादेन प्राथम्यवषट्कर्तो-

1 ममापि — व्यपेक्षावादिनो नैयायिकस्यापि ।

2 विशिष्टोद्देश्यकत्वं — वषट्कर्तृविशिष्ट (संबन्धि) भक्षोद्देश्यकत्वम् । प्राथम्यमात्रस्य विधेयत्वमिति भावः ।

3 विशिष्टविधेयकत्वं — प्राथम्यविशिष्टभक्षविधेयकत्वम् ।

4 विशिष्टोद्देश्यकत्वे — वषट्कर्तृविशिष्टभक्षोद्देश्यकत्वे । अस्य 'प्राप्तस्यैवानुवादेन' इत्यनेनान्वयः ।

विधायकत्वे वाक्यभेदप्रयुक्तगौरवेण, प्राप्तस्यैवानुवादेन वचनान्तरप्राप्त्युपसन्धानप्रयुक्तगौरवेण च न विशिष्टोद्देश्यकत्वं, न वा भक्षानुवादेन प्राथम्यवषट्कर्त्रोः विधायकत्वं, किन्तु विशिष्टविधायकत्वं लाघवादिति लाघवमूलक एव [1]भक्षान्तरविधिरिति न तत्सिद्धान्तविरोधः। नचैवमेकवाक्यत्वाय भक्षान्तरविधिरिति, [2]पर्यवसितं तादृशैकार्थीभावेनेति वाच्यम्। तादृशैकार्थीभावानभ्युपगन्तृभिरपि मीमांसकै[3]रन्यैश्च समासादिवृत्तौ तद्भिन्नवाक्यैकवाक्यताया अभ्युपगमेनैकवाक्यत्वस्य तादृशैकार्थीभावस्वरूपत्वाभावात्। न च तादृशैकार्थीभावस्वरूपमेकवाक्यत्वम्। समासादिवृत्तिमात्रस्थलीयातिरिक्तैकवाक्यत्वकल्पने प्रमाणाभावात्। न च 'समर्थः पदविधिः' (पा.सू.2-1-1) इत्य (यम) न्यदेवास्माभिरुपगम्यते, (इति वाच्यम्) वृत्तिभिन्नस्थलीयक्लृप्तैकवाक्यतयैव [4]निर्वाहे

---

1. भक्षान्तरविधिः — प्राथम्यविशिष्टभक्षान्तरविधिः।

2 पर्यवसितमिति — तादृशैकार्थीभावेन पर्यवसितमित्यन्वयः। समासघटकयोरेकवाक्यत्वे विशिष्टैकार्थवाचकत्वरूपैकार्थीभावः स्वीकृतः इति भावः।

3 अन्यैश्च — तार्किकादिभिश्च।

4 निर्वाहे इति — सतीति शेषः।

वृत्तिमात्रस्थला[1]नुशासनमेव [2]तत्र प्रमाणमिति वाच्यम् । तत्र सामर्थ्यस्य व्यपेक्षारूपस्यैवोपगमेऽपि निर्वाहात् । तस्मात् वषट्कर्तुरित्यादौ भक्षोद्देश्यकप्राथम्यविधेयकबोधे सति वषट्कर्त्रुद्देश्यकप्राथम्यविशिष्टभक्षान्तरविधेयकशाब्दबोधे बाधकाभावेन, समासे नोद्देश्यविधेयभावेनान्वयः इति स्ववासनामात्रविजृम्भितमेव ।

युज्यते चैतत् । महावाक्यार्थबोधे अवान्तरवाक्यार्थबोधस्य हेतुतया भक्षोद्देश्यकप्राथम्यबोधं विना वषट्कर्त्रुद्देश्यकप्राथम्यविशिष्टभक्षान्तरविधेयकबोधस्यानुपपत्तेरिति मात्सर्यमपहाय सुधीभिरालोचनीयम् ।

---

1 अनुशासनं — 'समर्थः पदविधिः' इत्यनुशासनम् ।

2 तत्र — विशिष्टैकार्थवाचकत्वरूपैकार्थीभावे ।

### समासे उद्देश्यविधेयभावेनान्वयबोधे, समासे अविमृष्टविधेयांशस्य दोषत्वोक्तिरसंगता स्यादिति आक्षेपः

यत्तु समासे उद्देश्यविधेयभावेनान्वयबोधे, नीलघटः, घटो नीलः इति समासव्यासयोः अविशेषेण बोधात् आलंकारिकाणामविमृष्टविधेयांशस्य समासे दोषत्वोक्तिरसंगता स्यादिति, घटो नीलः इत्यत्रैव नीलविधेयकबोधादसमासे प्राङ्निर्दिष्टस्यैवोद्देश्यत्वं चरमनिर्दिष्टस्यैव विधेयत्वमिति नियमादिति ।

---

### अविमृष्टविधेयांशस्य दोषत्वप्रयोजकनिष्कर्षनिरूपणेनोक्ताक्षेपनिरासः

तदसत् । तन्नियमस्य समासे [1]तैरप्यनभ्युपगमात् । अन्यथा, 'विधेयस्यान्यत्रानुपसर्जनत्वे सति उद्देश्यानन्तरं निर्देशाभावः [2]दोषताप्रयोजकः । समासे विधेयस्योपसर्जनत्वात् दोषत्वम् । वाक्ये तु उद्देश्यानन्तर्याभावात्तत्त्वम् ।'

---

1 तैः — आलंकारिकैः ।

2 दोषताप्रयोजकः इति— अविमृष्टविधेयांशस्येत्यादिः । अविमृष्टविधेयांशः समासपदे, वाक्ये च दोषः ।

इति तदुक्तेरसंगतेः । उद्देश्यानन्तरनिर्देशाभावस्यैव दोषताप्रयोजकत्वोक्तेरुचितत्वात् ।

एवं च अविमृष्टविधेयांशस्य उद्देश्यविधेयभावेन बोधाजनकत्वं न दूषकताबीजम् । किन्तु पूर्वपदेन स्वार्थे सिद्धत्वस्य उत्तरपदेन साध्यत्वस्याभिव्यक्त्या अपकर्षादिप्रतीतिः । 1'मिथ्यामहिम्नाम्' इत्यादौ मिथ्यात्वस्योपसर्जनत्वेन सिद्धत्वबुद्ध्या (मूर्धाभयकेषामं) [महिमापकर्षा] भिव्यक्तेः । 2'न्यक्कारो ह्ययमेव' इत्यादावपि, न्यक्कारस्य सिद्धत्वाभिव्यक्त्या

---

1 मिथ्यामहिम्नामिति —

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत् प्रयासः ।

इति संपूर्णः श्लोकः । रावणस्योक्तिरियम् । मिथ्यामहिम्नामिति समासपदे अविमृष्टविधेयांशो नाम काव्यदोषः ॥

2 न्यक्कारइति —

न्यक्कारो ह्ययमेव मे यदरयः तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

इति संपूर्णः श्लोकः । इयमपि रावणस्योक्तिः । अत्राविमृष्टविधेयांशो वाक्यदोषः ।

अभिमानिनो रावणस्यापकर्षप्रतीतेः तस्य समासे वाक्ये च दोषत्वम् ।

वस्तुतस्तु, उक्तस्य दोषताप्रयोजकं (त्वे) उपसर्जनत्वं समासे । उद्देश्यानन्तर्याभावश्च वाक्ये तत्प्रयोजकम् । एवं च समासे विधेयस्य यत्रोपसर्जनत्वं, तत्र यथा तथाऽस्तु । यत्र तु तस्य नान्यत्रोपसर्जनता, तत्र समासे उद्देश्यविधेय-भावेनान्वये न किमपि प्रतिबन्धकं पश्यामः ।

किञ्च, अविमृष्टविधेयांशस्थले उद्देश्यविधेयभावेनान्वय-बोधानुपगमे, तस्या[1]विमृष्टविधेयांशत्वमेवानुपपन्नम्, विधेयांशस्यैवाभावात् । अपि च व [च] सामक्रमेण चमत्कारा-भावस्यैव दोषताप्रयोजकत्वेन रसवति काव्ये अविमृष्टविधेयां-शस्थले उद्देश्यविधेयभावेन बोधाभावेऽप्य[2]न्यत्र समासे [3]तद-ङ्गीकारे बाधकाभावः इत्याद्यन्यत्र सुव्यक्तमिति दिक् ।

---

1 अविमृष्टविधेयांशत्वं — अविमृष्टविधेयांशपदप्रतिपाद्यत्वम् ।
2 अन्यत्र — काव्यादन्यत्र ।

3 तदङ्गीकारे — उद्देश्यविधेयभावेन बोधाङ्गीकारे ।

समासप्रयोजकं सामर्थ्यं एकार्थीभावरूपम्, तच्च एकवाक्यतात्मकमेव, तदभ्युपगमेऽपि न समुदायशक्तिसिद्धिरिति स्वाशयकथनम्

वस्तुतस्तु, समासे एकार्थीभावाभ्युपगमेऽपि न समुदायशक्तिसिद्धिः । तथाहि—एकार्थीभावो न विशिष्टैकार्थप्रतिपादकत्वम्, विशिष्टस्य [विशेष्य] विशेषणाभ्यामनतिरिक्तत्वेन [1]ऐक्यासंभवात् । किन्तु, विशिष्टविषयताकबोधप्रयोजकत्वरूपमेकवाक्यत्वमेव । तच्च समुदायशक्तिं विनापि आकाङ्क्षादिसाचिव्यात् तादृशविषयताशालिबोधजनकत्वादेवोपपन्नम् । नचैवं धवखदिरौ इत्यादौ समासानुपपत्तिः, तस्य धवत्वाद्य[2]वच्छिन्ननानाविषयताकबोधजनकत्वादिति वाच्यम् । तत्प्रयोज्यविषयतया साक्षात् परम्परया वा निरूपिता या वि(धे) [ष] यता तत्प्रयोजकत्वात्मकतदेकवाक्यत्वस्यैव निरुक्तप्रयोजकत्वरूपत्वात् । धवखदिरौ इत्यादौ च धवत्वाद्यवच्छिन्ननानाविशेष्यता-

---

1 ऐक्यासंभवादिति — विशेष्यविशेषणयोर्द्वयोरेकत्वासंभवादित्यर्थः ।

2 नानाविषयताकेति — धवत्वावच्छिन्नविशेष्यता खदिरत्वावच्छिन्नविषयता चेति नानाविषयताकेत्यर्थः ।

निरूपितैकद्वित्वादिप्रकारताशालिबोधोदया[1]ऩ्नानुपपत्तिः । इत्थं अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राजपुरुषपदादीनां समासवारणाय समर्थपदयोरेव यत् समासानुशासनं, तत्र सामर्थ्यं निरुक्तैकवाक्यतारूपमेव । तदेव चैकार्थीभावः । [2] [त] योर्भेदाभिमानवतां परस्परं कलहोऽप्यज्ञानमूलक एवेति युक्तमुत्पश्यामः ।

---

**समासे समुदायशक्त्यङ्गीकारे, भिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्रीप्रतिबन्धकतायां विशिष्टविषयकैकोपस्थितिः निवेश्यते इति लाघवमित्याक्षेपः, तन्निरासश्च**

एतेन, समासे समुदायशक्त्यङ्गीकारे राजपुरुषः इत्यादि-

---

1 नानुपपत्तिरिति — खदिरपदप्रयोज्यखदिरत्वावच्छिन्नविशेष्यतायाः धवपदप्रयोज्यधवत्वावच्छिन्नविषयतया साक्षान्निरूपितत्वविरहेऽपि स्वनिरूपित — द्वित्वप्रकारतानिरूपितत्वात् परम्परया निरूपितत्वात् धवपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वरूपं धवपदैकवाक्यत्वं खदिरपदे वर्तते इति भावः ।

2 तयोः — 'समर्थः पदविधिः' इत्यनुशासनोक्तस्य एकार्थीभावसामर्थ्यस्य निरुक्तैकवाक्यत्वस्य च ।

शाब्दसामग्र्या अनन्तघट–पटादि–प्रत्यक्षप्रतिबन्धकतायां सामग्रीघटकतया विशिष्टविषयकोपस्थितिरे (कै) का निवेश्यते इति [1]लाघवम् । [न च [2]वाक्य] वृत्त्योः को विशेष इति वाच्यम् । वाक्ये हि फलबलात् पदार्थोपस्थितिसमये नियमतः संसर्गांशे उद्बोधकासमवधानकल्पनेन[3]पृथगुपस्थितयोः पदार्थयोः पश्चात् संसर्गबोधः । वृत्तौ च पदार्थोपस्थितिसमय एव नियमतः संसर्गांशे उद्बोधककल्पनेन विशिष्टैवोपस्थितिरिति विशेषात् । अत एव प्राप्तोदकः इत्यादौ विशेष्यविशेषणभाववैपरीत्येन[4]बोधः । तत्राप्रयुज्यमानषष्ठ्याद्यर्थः, [5]संसर्गश्चेत्युभयमेव [6]समुदायशक्तिसाध्यम् । अनन्यलभ्यत्वात् ।

---

1 लाघवमिति — समुदायशक्त्यनङ्गीकारे राजपदजन्योपस्थितिः पुरुषपदजन्योपस्थितिश्चेति उपस्थितिद्वयनिवेशेन गौरवमिति भावः ।

2 वाक्यवृत्त्योः — राज्ञः पुरुषः इति वाक्यस्य राजपुरुषः इति समासस्य च ।

3 पृथगुपस्थितयोः — स्वातन्त्र्येणोपस्थितयोः ।

4 बोधः — उदककर्तृकप्राप्तिकर्म इति बोधः ।

5 संसर्गः — स्वत्वस्य आश्रयत्वरूपसंबन्धः ।

6 समुदायशक्तिसाध्यं — समुदायशक्तिप्रयोज्यविषयताकम् ।

तत्तत्क्लृप्तशब्दैरेव राजादेरुपस्थितिसंभवे [1]तत्र समुदायस्यापि शक्तिकल्पने गौरवाच्च । नामार्थयोरभेदान्वयादिव्युत्पत्तयश्च पृथगुपस्थितनामार्थादिविषयाः । अत एव राजपुरुषैकदेशे राज्ञि वाक्ये इव ऋद्धस्येत्यादिविशेषणान्वयो न । तस्य पदार्थैकदेशत्वादिति । इत्थमेव वैयाकरणनवीनैः एकार्थीभावपक्षे समुदायशक्तिरित्यस्य निष्कर्षः कृतः । एवं च नैयायिकमते प्रत्येकं राजपदपुरुषपदजन्योपस्थितिद्वयघटिता शाब्दसामग्री । वैयाकरणमते च राजपद–पुरुषपद–समुदायैतत्त्रितयजन्यैकविशिष्टोपस्थितिघटिता शाब्दसामग्रीति [परास्तम्] एकत्र त्रितयजन्यत्वनिवेशे विशेष्यविशेषण [भावे] विनिगमनाविरहेण कारणतावृद्धिः, [2]अवच्छेदकगौरवं च वैयाकरणमते । नैयायिकमते च लाघवमिति स्पष्टमेव ।

---

1 तत्र – राजादौ ।

2 अवच्छेदकगौरवं चेति— विशिष्टोपस्थितेः शाब्दसामग्रीघटकत्वेऽपि तस्याः राजप्रकारकत्वविशिष्टपुरुषविशेष्यकत्वेन, पुरुषविशेष्यतानिरूपितराजप्रकारताशालित्वेन च निवेशे विनिगमनाविरहेण द्वेधा भिन्नविषयकप्रत्यक्षप्रतिबन्धककोटौ निवेशप्रयुक्तगौरवमप्यस्त्येवेति बोध्यम् ।

तस्मात् राजपुरुषः इत्यादिसमासे राजादिपदलक्षणयैव शब्दबोधः इति सिद्धम् ।

---

## राजपुरुषः इत्यादौ राजपदस्य न लक्षणा, नामार्थस्यापि राज्ञः समासे व्युत्पत्तिसंकोचेन पुरुषे भेदान्वयः इति नवीनानां मतनिरूपणम्

नवीनास्तु, राजपुरुषः इत्यादिसमासे न राजादिपदस्य राजसंबन्ध्यादौ लक्षणा, न वा समुदाये शक्तिः । किन्तु स्वत्वसंबन्धेन राजादेः पुरुषादावन्वयेन राजकीयः पुरुषः इत्यादिरेवान्वयबोधः । न च नामार्थयोः भेदान्वयस्याव्युत्पन्नतया कथमुक्तरीत्या अन्वयबोध इति वाच्यम् । घटः पटो न [1]इत्याद्यनुरोधेनेव समासानुरोधेनापि तादृशव्युत्पत्तेः [2]संकोचकल्पनात् ।

---

1. इत्याद्यनुरोधेनेव – इत्यादौ नामार्थस्य नामार्थेन (निपातार्थेन) भेदान्वयबोधानुरोधेनेव । एवं समासानुरोधेनेत्यस्यापि समासजन्यभेदान्वयबोधानुरोधेनेत्यर्थो बोध्यः ।
2. संकोचकल्पनादिति —निपातातिरिक्तविषयत्वस्येव समासातिरिक्तविषयकत्वस्य कल्पनादित्यर्थः ।

## नामार्थयोः भेदेनानन्वयव्युत्पत्तिरेव नास्तीति प्रतिपादनम्

वस्तुतस्तु, तादृशव्युत्पत्तौ मानाभावः । न च तादृशव्युत्पत्त्यनङ्गीकारे राजा पुरुषः इत्यादावपि पुरुषादिविशेष्यकराजादिप्रकारकस्वत्वसंसर्गकबोधापत्तिरिति वाच्यम् । तादृशबोधस्याप्रसिद्ध्यै[1]वापत्त्यसंभवात् । न च राज्ञः इत्यादौ यत्र षष्ठ्यादिविभक्तेरेव स्वारसिकलक्षणया शक्तिभ्रमेण वा पुरुषाद्युपस्थितिः तत्र तद्विशेष्यकराजादिपदार्थप्रकारकस्वत्वसंसर्गकान्वयबोधस्य प्रसिद्ध्योक्तापत्तिः संभवतीति वाच्यम् । तत्र तादृशप्रकृतिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानसहकृत– तद्विभक्तिजन्यपुरुषाद्युपस्थितिघटित सामग्र्या एव तादृशबोधोत्पत्तिनियामकतया [2]तदभावादेवोक्तापत्त्यसंभवात् ।

अत एव, स्वत्वसंबन्धेन राजादिविशिष्टपुरुषादितात्पर्यकतदादिपदघटितात् सः सुन्दरः इत्यादिवाक्यात् पुरुषादिविशेष्यकस्वत्वसंसर्गकराजादिप्रकारकबोधस्य प्रसिद्ध्या राजा पुरुषः

---

1 आपत्त्यसंभवादिति – बोधस्याप्रसिद्धौ तत्सामग्र्या अकल्पनेन सामग्रीरूपापादकाभावादापत्तिर्न संभवतीति भावः ।

2 तदभावादेवेति — राजा पुरुषः इत्यादाविति शेषः ।

सुन्दरः इत्यादौ तादृशबोधापत्तिः संभवतीति तादृशव्युत्पत्ति-कल्पनमावश्यकमित्यपि परास्तम् ।

सः सुन्दरः (राजादि) [इत्यादि] वाक्याधीनशाब्दबोध-सामग्र्याः, तत्पदत्वाद्यवच्छिन्नविशेष्यकसुन्दरादिपदसमभि-व्याहारज्ञानसहकृत—तदादिपदजन्य [1]तादृशविशिष्टार्थोपस्थिति-घटिततया, तदभावादेव राजा पुरुषः सुन्दरः इत्यादौ तादृ-शान्वयबोधापत्ति[2]वारणसंभवात् ।

---

### समासाघटकपदार्थस्य समासघटकपदार्थे नान्वयः

समासघटकपदोपस्थाप्येन समासाघटकपदार्थस्य च नान्वयः, आकाङ्क्षाविरहात् । अत एव, 'ऋद्धस्य राज-मातङ्गाः' इत्यादौ ऋद्धादिपदार्थस्य राजादौ योग्यतासत्त्वेऽपि

---

1 तादृशविशिष्टार्थोपस्थितीति— स्वत्वसंबन्धेन राजविशिष्टपुरुषो-पस्थितीत्यर्थः ।

2 तादृशान्वयबोधापत्तिवारणसंभवादिति— एवमीदृशबोधवारण-सरणिः गदाधरभट्टाचार्याणां व्युत्पत्तिवादेऽपि लक्ष्यते इति बोध्यम् ।

नान्वयः । यद्यपि समभिव्याहाररूपाकाङ्क्षा संभवति । तथापि [1]समभिव्याहारमात्रं नाकाङ्क्षा । अपि तु, अन्वयबोधविशेषे पदविशेषयोः समभिव्याहारः । नामार्थयोरभेदान्वयबोधे च समानविभक्तिकयोः नाम्नोः समभिव्याहारः आकाङ्क्षा । उक्तस्थले च राजपदस्य [2]निर्विभक्तिकतया न तत्समभिव्याहारः ऋद्धराज्ञोरभेदान्वयबोधौपयिकाकाङ्क्षा । [यदि] राजपदोत्तर (पद) लुप्तषष्ठी प्रतिसन्धीयते । तदा शोभनं दधि इत्यादाविव तत्रापि तादृशाकाङ्क्षा वर्तते एव, अन्वयबोधोऽपि भवति । (पदं) [परं] तु, [3]असाधुतया न तथा प्रयुज्यते । [4]अत एव, शोभने वनेचरः, विरूपाया दास्याःपुत्रः इत्यादौ वन–दास्यादौ शोभन–विरूपाद्यभेदान्वयबोधौपयिकाङ्क्षासत्त्वेनान्वयबोधसंभवेऽपि न तथा प्रयुज्यते ।

---

1 समभिव्याहारमात्रमिति — कृञर्थयत्नबोधकयतधातोः द्वितीयान्तपदेन समभिव्याहारस्याकाङ्क्षात्वाभावादिति भावः ।

2 निर्विभक्तिकतयेति — समासावयवसुपः लुप्तत्वादिति भावः ।

3 असाधुतयेति — असाधुत्वं च व्याकरणव्युत्पाद्यत्वाभावरूपं, न बोधौपयिकाकाङ्क्षाशून्यत्वमिति भावः ।



4 अत एवेति — अलुक्समासस्थले इति शेषः ।

असाधुता च तत्रासामर्थ्यातिदेशात् । 'सापेक्षमसमर्थवद्भवति' इति स्मृतेः ।

---

## असामर्थ्यप्रयोजकस्य सापेक्षत्वस्य प्रतिपादनम्

सापेक्षत्वं च प्रकृतसमासानिविष्टपदार्थान्वितस्वार्थपरत्वम्। प्रधानार्थबोधकपदस्य सापेक्षत्वेऽपि समासः साधुः । राजपुरुषो दर्शनीयः इत्यादौ उत्तरपदस्य दर्शनीयादिसापेक्षत्वेऽपि समाससाधुत्वात् । प्रधानत्वं चार्थस्य समासजन्यबोधे मुख्यविशेष्यत्वम् । राजपुरुषमानयेत्यादौ पुरुषादेः कर्मत्वादिविशेषणतया भानेऽपि, समासजन्ये अवान्तरवाक्यार्थबोधे मुख्यविशेष्यतया, दर्शनीयं राजपुरुषमानयेत्यादौ समासः साधुः । न चैवं चित्रगुरित्यत्र गोपदस्य लक्षणया गोस्वामिबोधकतया समासजन्यबोधे च तस्य मुख्यविशेष्यतया गोपदं प्रधानार्थकमेव । तदुपस्थाप्यायां गवि समासानिविष्टशोभनादिपदार्थान्वयविवक्षायामपि स [[1]मास] साधुता

---

1 समाससाधुता — शोभनायाः चित्रगुः इति समाससाधुता ।

स्यादिति वाच्यम् । [1]प्रधानार्थे [3]इतरान्वये एव समासस्साधुत्वात् । [3]उक्तस्थले च स्वामिविशेषणतया गोरप्रधानत्वात् ।

---

## सापेक्षपदे समासासाधुत्वे, चैत्रस्य दासभार्या इत्यत्र समासस्यासाधुत्वाक्षेपः

अथ सापेक्षपदे समासस्यासाधुत्वे, चैत्रस्य दासभार्या, शरैः शातितपत्रो वृक्षः इत्यादौ [4]दासशातितादिपदस्य चैत्रशरादिपदसापेक्षतया समासो न साधुः स्यात् । [5]अभेदेनेत-

---

1 प्रधानार्थे — समासजन्यबोधमुख्यविशेष्ये ।

2 इतरान्वये — समासाघटकपदार्थान्वये ।

3 उक्तस्थले चेत्यादि—चित्रगुरित्यत्र गोपदलक्ष्यार्थस्य गोस्वामिनः प्रधानत्वेऽपि तत्र शोभनान्वयाभावात्, शोभनान्वयिगोश्च प्रधानार्थत्वाभावात् न शोभनायाः चित्रगुः इत्यस्य साधुतेति समुदितार्थः ।

4 दासशातितादिपदस्येति — समासे विशेषणपदस्येति शेषः ।

5 अभेदेनेति — चैत्रस्येति षष्ठ्यन्तार्थस्य चैत्रसंबन्धस्य दासे, शरैरिति तृतीयान्तार्थस्य शरकरणकत्वस्य शातितपदार्थैकदेशे शातने च आश्रयतारूपभेदसंबन्धेनान्वयान्न सापेक्षतेति भावः ।

रान्वयिताया: सापेक्षताघटकत्वे, चैत्रस्य गोरूपमित्यादेरपि गवि चैत्रादिसंबन्धान्वयविवक्षया प्रयोगापत्तेः । एवं, चैत्रस्य सख्युर्धन [मित्य] र्थे चैत्रसखिधनमिति समासो न स्यात् । पदत्र [य] स्थले तत्पुरुषाभावात्, सख्युर्धनं सखिधनमित्यादि-[1]समासानन्तरं, चैत्रपदमुख्यार्थस्याभेदेन सखिपदार्थान्व-यित्वात् ।

---

### कारकपद-प्रतियोगिपदातिरिक्तपदसापेक्षत्वे एव समासासाधुता इति पक्षः, तन्निरासश्च

एतेन, [2]कारकप्रतियोगिपदातिरिक्तपदसापेक्षपदेनैवा-समासः । तदुक्तं (कान्तत्रय) [कातन्त्र] परिशिष्टकृता—'कारकप्रतियोगिभ्याम्, इत्यादि । चैत्रस्य दासभार्या इत्यादौ दासत्वं सप्रतियोगिकमिति चैत्रपदस्य दासपदार्थप्रतियोगिबोध-

---

1 समासानन्तरमिति — चैत्रसखिधनमित्यत्र घटकस्य सखिधन-मिति समासस्य साधुता न स्यादिति पर्यवसितोऽर्थः ।

2 कारकेत्यादि — अस्मिन्नर्थे —

प्रतियोगिपदादन्यद्यदन्यत्कारकादपि ।
वृत्तिशब्दैकदेशेन न तस्यान्वय इष्यते ॥ इति वाक्यपदीय-मपि प्रमाणं बोध्यम् ।

कतया, शरैः शातितपत्रः इत्यादौ शरादिपदस्य शातनादिक्रियायां [1]कारकबोधकतया, समासः साधुः इत्यपि परास्तम् । चैत्रसखिधनमित्यादौ [2]चैत्रादिसंबन्ध्यर्थक चैत्रादिपदस्य प्रतियोगिपदत्वाभावात् चैत्रसंबन्धिनः सखित्वाद्यप्रतियोगित्वात् ।

---

समस्यमानपदार्थे विशेषणे इतरपदार्थान्वये समासासाधुता, तादृशपदार्थतावच्छेदके तथान्वये समाससाधुता इति निरूपणम्

मैवम् । यत्र हि समस्यमा[3]नपदार्थे विशेषणरूपे इतरान्वयविवक्षा, तत्र समासो न भवति । यत्र तादृशपदार्थतावच्छेदके इतरान्वयः, तत्र भवत्येव । चैत्रस्य दासभार्या इत्यत्र [दासत्वे] चैत्रादिसंबन्धस्यान्वयः, न तु [4]दासपदाथ

---

1 कारकबोधकतया — करणत्वबोधकतया ।

2 चैत्रादिसंबन्ध्यर्थकेति— चैत्रादिरूपः यः संबन्धी तदर्थकेत्यर्थः । एवमग्रे चैत्रसंबन्धिनः इत्यस्यापि चैत्ररूपसंबन्धिनः इत्यर्थो बोध्यः ।

3 पदार्थे — पदजन्योपस्थितिविशेष्ये ।

4 न दासपदार्थे इति-तथान्वये अन्यं प्रति दासस्य गुरुशिष्यभावसंबन्धेन चैत्रसंबन्धिनः भार्यातात्पर्येण चैत्रस्य दासभार्या इति प्रयोगापत्तिः । अतः षष्ठ्यन्तचैत्रपदबोध्यस्य चैत्रनिरूपितत्वसंबन्धस्य दासत्वे एवान्वयो वक्तव्यः इति भावः ।

दासे । शरैः शातितपत्त्रः इत्यादौ शातने शरकरणकत्वादे-रन्वयः, न तु शातितपदार्थे शातनकर्मणि । अतो भवत्येव समासः । चैत्रसखिधनमित्यादौ सखित्वे एव चैत्रसंबन्धिनोऽन्वयः । [1]न तु सखिपदार्थे सख्यौ इति नानुपपत्तिः ।

नचैवं दासत्वादौ प्रमेयादिपदार्थान्वयविवक्षणेन प्रमेयं दासभार्या इति प्रयोगापत्तिरिति वाच्यम् । प्रमेयो दासः इत्यादावपि पदार्थैकदेशे दासत्वादौ प्रमेयाद्यभेदान्वयविरहात्, तत्रैकदेशान्वयस्या[2]व्युत्पन्नतया तथा प्रयोगविरहात् । षष्ठ्या [स] मुपस्थितप्रतियोगित्वस्य, लक्षणया समस्यमानपदोपस्थाप्य-तत्तत्प्रतियोगिकत्वावच्छिन्नस्य च भेदाभेदाभ्यां ससंबन्धिक-[3]दासत्वादावन्वयो व्युत्पत्त्यविरुद्ध एव । चैत्रस्य दासः,

---

1 न तु सखिपदार्थे इति — तथान्वये चैत्रान्यनिरूपितसखित्व-वतः चैत्रसंबन्धिनः पुत्रादेर्धनतात्पर्येण चैत्रसखिधनमिति प्रयोगापत्तिर्बोध्या ।

2 अव्युत्पन्नतया — निराकाङ्क्षतयेति यावत् ।

3 दासत्वादाविति — आदिपदेन सखित्वपरिग्रहः । प्रतियोगित्व-स्य निरूपकताख्यभेदसंबन्धेन, समस्यमानपदोपस्थाप्यस्य अभेदसंबन्धेन सखित्वे अन्वय इति योजना ।

चैत्रदासः इत्यादौ तादृशान्वयबोधोदयात् । अतः चैत्रस्य [1]दासभार्या इत्यादौ निर्वाहः ।

---

## पितुः स्वर्गकामः इति वाक्यस्यासाधुत्वशङ्का

अथैवं, पितुः स्वर्गकामः इत्यादि प्रामाणिकानां दानादिवाक्यं न साधु स्यात् । तत्र समस्यमानस्वर्गादिपदार्थे स्वर्गादावपि पित्रादिसंबन्धान्वयादिति चेन्न ।

कामनायामेव पित्रादिसंबन्धान्वयात्, कामनायाः क्रियात्वात् क्रियाभिन्नप्रधानार्थकपदोपस्थाप्ये विशेषणे इतरान्वय एव सापेक्षत्वात् पितुः स्वर्गकामः इति वाक्यं साध्वेवेति प्रतिपादनम्

कामनायामेव [2]पित्रादिसंबन्धस्य स्वर्गभागित्वेन विषयताविशेषरूप (साधुत्वा) [स्यान्व] यो, न तु स्वर्गादा-

---

1 दासभार्या इत्यादाविति — आदिना चैत्रसखिधनमित्यादेः परिग्रहः ।

2 पित्रादिसंबन्धस्येति — पितुः स्वर्गकामः इति वाक्ये षष्ठ्यर्थः विषयताविशेषरूपः संबन्धः । तस्य निरूपकतया कामपदार्थैकदेशकामनायामन्वयः । तथा च समस्यमानपदार्थतावच्छेदके समासाघटकपदार्थान्वयाय सापेक्षतेति समुदायार्थः ।

वित्युपगमेन सामञ्जस्यात् । [1]अतः मुक्तपितरमुद्दिश्य दानादिस्थले पितरि [2]स्वर्गस्य बाधेऽपि न तादृशवाक्यस्यायोग्यता ।

नचैवमपि कामनाबोधकपदस्यैव समासाघटकपदसापेक्षतया न समासः स्यात् । तत्पदस्य प्रधानार्थकत्वेऽपि प्रधानार्थे [3]मुख्यविशेष्ये इतरानन्वयेन सापेक्षतया समासविरहात् । अन्यथा शोभनस्य चित्रगुः इत्यादिप्रयोगप्रसङ्गरूपपूर्वोक्तदोषापत्तिरिति वाच्यम् । [4]क्रियाभिन्नप्रधानार्थकपदोपस्थाप्ये विशेषणांशे इतरान्वयेनैव प्रधानार्थकपदस्य सापेक्षत्वात्, प्रकृते च कामनायाः क्रियात्वात् । चैत्रस्य कृतोपकारोऽयमित्यादिप्रयोगोऽपीष्यत एव । क्रियाभिन्नत्ववत् सप्रतियोगिकान्यत्वमपि [5]अर्थे विशेषणं देयम् ।

---

1 स्वर्गपदार्थे पितृपदोत्तरषष्ठ्यर्थसंबन्धान्वये बाधकमाह — अत इति ।

2 स्वर्गस्य बाधेऽपीति — तथाच तत्र स्थले पितुः स्वर्गकाम इति वाक्यमयोग्यं स्यादिति भावः ।

3 मुख्यविशेष्ये — कामनावति ।

4 क्रियाभिन्नेति — प्रधानार्थकपदोपस्थाप्ये विशेषणम् ।

5 अर्थे — क्रियाभिन्ने प्रधानार्थकपदोपस्थाप्ये विशेषणांशे ।

अतः चैत्रस्य सुन्दरपुत्रमित्यादौ [1]पुत्रत्वादौ चैत्रसंबन्धान्वयेऽपि न समासानुपपत्तिः । नचैवं चैत्रस्य दृष्टपुत्रो मैत्रः इत्यपि स्यादिति वाच्यम् । इष्टत्वादिति दिक् इति प्राहुः ॥

---

### गङ्गायां घोषः इत्यादौ शैत्यपावनत्वादिप्रतीतिः व्यञ्जनयेति आलंकारिकमतम्

अथ गङ्गायां घोषः इत्यादौ कथं तीरे शैत्यपावनत्वादिविशेषस्य बोधः । तत्र गङ्गापदशक्तिलक्षणयोरभावादिति चेन्न । व्यञ्जनयैव तस्य बोधात् । व्यञ्जना च वृत्त्यन्तरमिति आलंकारिकाः ।

---

### लक्षणयैव तत्प्रतीतेरुपपत्तेः न व्यञ्जना नाम वृत्त्यन्तरमिति नैयायिकसरणिनिरूपणम्

तन्न चारु । गङ्गायां घोषः इत्यादौ शैत्य—पावनत्वादिविशेषविशिष्टस्य लक्षणयैव प्रतीतिसंभवेन व्यञ्जनायां

---

1 पुत्रत्वादाविति — निरुक्तविशेषणांशे इति शेषः ।

मानाभावात् । न च शैत्यविशेषादिविशिष्टस्य व्यङ्ग्यस्य पूर्वमनुपस्थितौ तत्र शक्यसंबन्धाग्रहात् न लक्षणया निर्वाह इति वाच्यम् । विशिष्टस्यानुपस्थितौ व्यञ्जनाया अपि [1]तदीयत्वेनाग्रहादबोधकत्वापत्तेः । न च सा स्वरूपसती तद्बोधिका । तर्हि अर्थान्तराणामपि बोधापत्तेः । गङ्गा-पदेन कदा चिदर्थान्तराणामपि व्यञ्जनया बोधनात् तत्र व्यञ्जनासत्त्वात् ।

अथ, गङ्गापदेन लक्षणया गङ्गात्वेन त (द) [ट] प्रतीतिः, तत्सहितेन गङ्गापदेन शैत्यपावनत्वादिविशेषविशिष्टस्य स्मृतिः, तदा [2]तदीयत्वेन व्यञ्जनाग्रहात् तद्धर्मविशिष्टशाब्द-धीः । यदि च तद्धर्मविशिष्टे लक्षणाग्रहादेव तद्बोधः, तदा लक्षणया गङ्गात्वेन तटप्रतीतेः जनितत्वात् न तया पुनर्बोध-जननमिति चेन्न ।

सैन्धवेन स्थीयते इत्यादौ [3]उभयपरत्वे शक्त्या एकबोधे

---

1 तदीयत्वेन — शैत्यादिशिष्टसंबन्धित्वेन ।

2 तदीयत्वेन — शैत्यपावनत्वादिविशेषविशिष्टसंबन्धित्वेन ।

3 उभयपरत्वे — अश्वलवणरूपार्थद्वयतात्पर्ये ।

जनितेऽपि [1]आ (द्द) [वृ] त्त्या शक्त्यैव बोधान्तरजननवत् तद्धर्मविशिष्टशाब्दधिय [2]उपपत्तेः ।

अथ स्वज्ञाप्य [त्व] संबन्ध एव व्यञ्जना । प (न्न) [द] शक्तेः, शक्यसंबन्धस्य वा न [3]पदार्थयोः संबन्धमर्यादया भानम् । किन्तु, स्वज्ञाप्य [त्व] संबन्धस्यैव संसर्गता । (तत्र) [सर्वत्र] व्यञ्जनयैव शाब्दधीः । अत एव अपभ्रंशादावपि व्यञ्जना, स्वज्ञाप्यत्वसंबन्धस्य सत्त्वादि (त्यन्त) ति चेन्न ।

पदशक्तेः, शक्यसंबन्धस्य वा [4]अभाने शाब्दप्रतीतेरसिद्धेः ।

अथ गौर्वाहीकः इति पदादस्ति जाड्यविशेषविशिष्टप्रतीतिरानुभविकी । सा च न शक्यधीः, जडोऽयं, जडतमोऽयम्, इत्यादितः [5]तादृशप्रतीत्यनुत्पत्तेः । न वा लक्षणया तद्धीः ।

---

1 आवृत्त्या — सैन्धवपदस्य पुनरनुसन्धानेन ।

2 उपपत्तेरिति — लक्षणयैवेत्यादिः ।

3 पदार्थयोः — पदस्य तद्बोध्यार्थस्य च ।

4 अभाने — अज्ञाने ।



5 तादृशप्रतीत्यनुत्पत्तेः — जाड्यविशेषविशिष्टप्रतीत्यनुत्पत्तेः ।

पदान्तरेण लक्षणयापि तथा प्रतीतेरनुदयात् । अतो व्यञ्जनाधीनैव सा प्रतीतिः । लक्षणया तादृशप्रतीतौ च लक्षणाधीनलाक्षणिकप्रतीतौ लाक्षणिकप्रतीतेर्हेतुत्वापातादिति चेन्न ।

लाक्षणिकप्रतीतिसामान्ये [1]अहेतुत्वेऽपि लक्षणया गोपदाधीनायां जाड्यविशेष (ण) विशिष्टस्य प्रतीतौ लक्षणया गोत्वेन वाहीकप्रतीतेर्हेतुत्वस्वीकारात् । [2]वृत्त्यन्तरकल्पनापेक्षया ईदृशहेतुत्वकल्पनाया एव लघीयस्त्वात् ।

अथ, सत्यपि बाधग्रहे क्वचिदर्थविशेषाणां प्रतीतिरस्ति । सा च व्यञ्जनयैव, न तु लक्षणया । लाक्षणिकबोधे बाधग्रहस्य विरोधित्वात् । व्याञ्जनिकबोधे तु न तस्य (विशेषत्वं) [विरोधित्वम्] दोषविशेषाजन्यत्वस्येव व्यञ्जनाऽजन्यत्वस्यापि [3]प्रतिबध्यतावच्छेदककोटौ प्रवेशादिति चेन्न ।

---

1 अहेतुत्वेऽपीति — लाक्षणिकप्रतीतेरित्यादिः ।

2 वृत्त्यन्तरेति — व्यञ्जनाख्यवृत्त्यन्तरेत्यर्थः ।

3 प्रतिबध्यतावच्छेदकेति — बाधज्ञानप्रतिबध्यतावच्छेदकेत्यर्थः ।

लक्षणाविशेषाजन्यत्वस्यैव दोषविशेषाजन्यत्ववत् [1]प्रतिबध्ये प्रवेशयितुमुचितत्वात्, वृत्त्यन्तरकल्पने गौरवादिति संक्षेपः, इति नैयायिकसिद्धान्तानुसारिणी सरणिः ।

---

**विस्तरेण व्यञ्जनावादिनामालंकारिकधुरन्धराणां मतप्रतिपादनम्**

**काव्यपरमप्रयोजनरसप्रतीतये व्यञ्जनाव्यापारः स्वीकरणीयः**

[2]अत्रालंकारिकधुरन्धराः,

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥' इति

काव्यप्रकाशकारोक्त्या,

'अदोषं गुणवत् काव्यमलंकारैरलंकृतम् ।
रसान्वयं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति ॥'

इति व्यासोक्त्या चानेकप्रयोजनवत्त्वेऽपि,

'नीरसो हि निबन्धो यः सोऽपशब्दो महान् कवेः ।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः ॥' इति ध्वनि-

---

1 प्रतिबध्ये — बाधज्ञानप्रतिबध्ये ।

2 आलङ्कारिकधुरन्धरा इति—अस्य अत्यन्तं व्यवहितेन 'यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुतेरिति वदन्ति' इत्यनेन संबन्धः ।

कारोक्त्या,

'स्वादुपाकेऽप्यनास्वाद्यं भोज्यं निर्लवणं यथा ।

तथैव नीरसं काव्यं स्यान्नो रसिकतुष्टये ॥' इति

चोक्त्या, रसप्रतीतिर्मुख्यप्रयोजनम्, दोषाभाव–गुणालंकारवच्छब्दार्थोभयरूपस्य काव्यस्येत्यवगम्यते ।

रसश्च 'रसो वै सः' इत्यादिश्रुतिप्रतिपादितं विभावानुभावादिसंवलितं आनन्दांशे भग्नावरणं मनोवृत्तिविशेषरूपरत्याद्यवच्छिन्नचैतन्यम् । तत्प्रतिपत्तिश्च ब्रह्मप्रतिपत्तिवदवश्यमपेक्षिता सहृदयानाम् । सा च काव्यादिति काव्यस्य रसस्य च संबन्धमन्तरा अतिप्रसङ्गसंभवभयादवश्यमेषितव्यो व्यापारः कश्चित् । स च शक्ति–लक्षणातिरिक्त एवेति व्यञ्जनाख्य एव भवतीति [1]महामुनिमतसिद्धान्तः ।

———

1 महामुनीति — नाट्यशास्त्रकार–भरतमुनीत्यर्थः ।

## शक्त्यैव रसप्रतीतिरिति केषांचिन्मतस्य शक्तिस्वरूपनिरूपणपूर्वकं निरासः

अत्र केचिदाहुः शक्त्यैव [1]तत्प्रतिपत्तिसंभवे व्यञ्जनाख्यवृत्त्यन्तरकल्पनमयुक्तमिति ।

तन्न । अस्माच्छब्दादयमर्थो बोद्धव्यः इतीश्वरेच्छारूपसंकेतः शक्तिरिति तार्किकमते, ईश्वरेच्छायाः सर्वविषयकत्वेन सर्वशब्दानामेकैव शक्तिः स्यात् । [2]उपाधिभेदात् भेद इति यदि, तदा प्रतिशब्दं (शब्द) [शक्ति]भेदापत्तिः । शक्यतावच्छेदकैक्या[3]दनुगमे पर्यायशब्दानां शक्यतावच्छेदकैक्येऽपि शक्ततावच्छेदकभेदात् शक्तिभेदस्वीकारो न सामञ्जस्यमावहेत् । किञ्च, ईश्वरेच्छायाः शब्दावृत्तित्वात् शक्तेः शब्दनिष्ठत्वं न स्यात् । विषयत्वरूपसंबन्धस्य तु अर्थादावति-

---

1 तत्प्रतिपत्तीति — रसप्रतीतीत्यर्थः ।

2 उपाधिभेदात् — तत्तत्पदबोध्यत्वादिकस्य संकेतविषयस्य भेदात् ।

3 अनुगमे — शक्तेरैक्ये ।

प्रसक्तत्वात् । [1]लाक्षणिकशब्दस्यापि ईश्वरेच्छाविषयत्वेन शक्तत्वसंभवेन लक्षणोच्छेदप्रसङ्गाच्चेति ।

'[2]औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः'(पू. मी–1-1-5) इति (पराः मर्शत्वा) [पारमर्षसूत्रा] नुरोधेन स्वाभाविक एव अर्थप्रतीतिजननसामर्थ्यरूपः शब्दसंबन्धः शक्तिः । न च घटपदे गृहीतैतादृशशक्तिकस्य कलशपदश्रवणोत्तरमर्थबोधः स्यात्, शक्तेरेकत्वादिति वाच्यम् । कलशपदनिष्ठत्वेनाग्रहात् । नचैतादृशसंबन्धरूपशक्तेः लाक्षणिकेऽपि सत्त्वात् लक्षणोच्छेद इति वाच्यम् । अन्वितशक्तिवादे लाक्षणिके अन्वितानुभवजननसामर्थ्यरूपशक्तेः तत्रासत्त्वात् । लक्षणायास्तु पदार्थस्मरणमात्रहेतुत्वात् । अत एव लाक्षणिकं पदं नानुभावकमिति प्रसिद्धिः ।

---

1 लाक्षणिकशब्दस्यापीति — गङ्गायां घोषः इति वाक्ये गङ्गापदेन तीरबोधात् सन्मात्रविषयिण्याः ईश्वरेच्छायाः तीरं गङ्गापदबोध्यं भवतु इत्याकारकत्वस्य वाच्यतया, विषयताविशेषसंवन्धेन ईश्वरेच्छायाः तीरलाक्षणिकगङ्गापदे सत्त्वात् शक्तत्वसंभव इत्यर्थः ।

2 औत्पत्तिकः — सहजः - स्वाभाविकः- नित्य इति यावत् ।

[1]अभिहितान्वयवादे तु दशक्त्योपस्थितेषु पदार्थेषु अन्वययोग्यताप्रतिसन्धाने, तात्पर्यानुपपत्तिप्रतिसन्धाने वा पदार्थेनैव स्वसंबन्धिपदार्थान्तरं वाक्यार्थान्वययोग्यमुपस्थाप्यते। तत्र [2]पदार्थनिष्ठैव लक्षणा, न पदनिष्ठा। पदार्थैरेव च वाक्यार्थो [3]लक्ष्यते, न तु पदैरिति न लाक्षणिके शक्तत्वप्रसङ्गः। पदे लाक्षणिकत्वव्यवहारस्तु [4]परम्परयेति स्थितेः।

विभावानुभावादिपदानां विभावाद्यर्थेष्वेव शक्तेः सत्त्वात् पदान्तराश्रुतेश्च न रसस्य वाच्यत्वम्। न च विभावादिशक्तिरेव (न) [रसे] शक्तिरिति वाच्यम्। रसस्य विभावादिमात्ररूपत्वाभावात्। अत एव, भरतेनाभिहितस्य 'व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः।' इत्यस्य सहार्थतृतीयया विभा-

---

1 अभिहितान्वयवादे इति — पदैः पदार्था अभिधीयन्ते। अभिहितैः पदार्थैः पदार्थसंसर्गरूपान्वयबोधो भवति। अन्वयबोधे पदार्थः करणं, न पदमिति भाट्टसंमतः अभिहितान्वयवादः।

2 पदार्थनिष्ठैव — गङ्गापदार्थप्रवाहनिष्ठैव।

3 लक्ष्यते — बोध्यते। पदबोध्यः पदार्थः, पदार्थबोध्यः लक्ष्यः इति तन्मते व्यवस्थितत्वात् सर्वत्र वाक्यार्थः लक्ष्य इति सारः।

4 परम्परया — लाक्षणिकप्रवाहरूपार्थोपस्थापकतया।

वादिसहितस्तैः व्यक्तः स्थायी रसः इत्यर्थोऽभिहितः अभियुक्तैः । अन्यथा तै (रे) [रित्ये] तावतैव विभावाद्यर्थलाभे, विभावाद्यैः इत्यस्य वैयर्थ्यापत्तेः । विभावत्वादिरूपेण शक्तिविरहाच्च ।

---

## इषुरिव एकेनैव शक्त्याख्यव्यापारेण शब्दः रसप्रतीतिपर्यन्तानेकप्रतीतीः करोतीत्याक्षेपः, तत्प्रतिक्षेपश्च

अथ यथा बलवता प्रेर्यमाणो बाणः एकेनैव वेगाख्यव्यापारेण अरेः मर्मभेदमुरोभेदं प्राणापहरणं च करोति, तथा एक एव शब्दः एकेनैव शक्त्याख्यव्यापारेण पदार्थस्मृतिं, वाक्यार्थानुभवं, रसादिप्रतीतिं च [1]कुर्यादिति चेन्न ।

न हि शब्द (स्तु) [2][श्रु] त्यनन्तरं प्रतीयमानो यावानर्थः तत्र शब्दशक्तिः । तथात्वे, ब्राह्मण पुत्रस्ते जातः,

---

1 कुर्यादिति — यत्परः शब्दः स शब्दार्थः इत्यभियुक्तोक्तेरिति भावः ।

2 शब्दश्रुत्यनन्तरं — शब्दश्रवणानन्तरम् ।

कन्या ते गर्भिणी इत्यादिवचःश्रवणोत्तरं प्रतीयमानं हर्षशोकादिकमपि तद्वचसो वाच्यं स्यात् । यदि च तद्वचःप्रतिपाद्ये सर्वत्र शक्तिरेव । हर्षशोकादिकं तु वदनप्रसाद–[1]मालिन्यादिप्रत्याय्यमिति । तदा लक्षणी [य] मप्यर्थं शक्तित एव प्रतीयादिति लक्षणोच्छेदः ।

किञ्च, 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्' (पू मी. सू. 3-3-14) इति सूत्रोदीरितपूर्वपूर्वबलीयस्त्वाभिधानमनर्थकमेव भवेत् । [2]सर्वत्रैव श्रुत्यर्थत्वप्रसङ्गेनोत्तरोत्तरदौर्बल्ये बीजाभावात् ।

विषमश्चायमिषुदृष्टान्तः । तत्र वेगाख्यव्यापारस्य स्वरूपसत एव जनकत्वेन दीर्घदीर्घत्वसंभवात् । शक्तेस्तु ज्ञाताया एवोपयोगित्वात् [3]व्यङ्ग्यनिष्ठत्वेन (तत्तत्) [4]तज्ज्ञानमपेक्षितम् । न च तत् सं [भवति] [सं] केतग्रहाभावात् ।

---

1 मालिन्यादिप्रत्याय्यमिति – तथाच हर्षशोकादेः पुत्रस्ते जातः इत्यादिवचःप्रतिपाद्यत्वाभावान्न वाच्यत्वमिति भावः ।

2 सर्वत्रैव — लिङ्गादिना अङ्गताबोधस्थलेऽपि ।

3 व्यङ्ग्यनिष्ठत्वेन — व्यङ्ग्यत्वाभिमतार्थनिष्ठत्वेन ।

4 तज्ज्ञानं — शक्तिज्ञानम् ।

विना पदशक्तिं संसर्गमर्यादया रसस्य बोध इति पक्षस्यायुक्तता

यद्पि, [1]संसर्गमर्यादयैव रसबोधो भविष्यतीति ।

तदतिमन्दम् । संसर्गमर्यादायाः वृत्त्या तत्तत्पदोपस्थापितानां विभावादीनां परस्परसंसर्गमात्रबोधकत्वं, न रसस्य, असंसर्गरूपत्वात् ।

---

अन्विताभिधानमतेऽपि अन्वयविशेषस्य प्रतीतिः व्यञ्जनयेति स्वीकरणीयमिति निरूपणम्

किञ्च, अन्विताभिधानवादिन (वे) [ये] अन्वयसामान्ये शक्ता (बाध्या) [वप्य] न्वयविशेषे अवश्यमेषितव्यं व्यापारान्तरम् । न च न निर्विशेषं सामान्यमिति, सामान्यरूपेण [2]विशेषे एव शक्तिरिति वाच्यम् । एवं सत्यपि विशेषरूपेणाशक्यत्वात्, तद्रूपेण तद्बोधे व्यञ्जनमेव व्यापारः । विशेषरूपेणैव श(क्त) [क्य] त्वे, गामानयेत्यत्र गवान्वितानयनत्व-

---

1 संसर्गमर्यादयेति— संसर्गस्य मर्यादा-ज्ञानं-यया इति व्युत्पत्त्या संसर्गमर्यादापदार्थः आकाङ्क्षा । तयेत्यर्थः ।

2 विशेषे — अन्वयविशेषे ।

रूपेण आनयनपदस्य शक्यत्वे, अश्वमानयेत्यत्र तदशक्तत्वेन अर्थभेदात्पदभेदः इति नये अर्थभेदात्पदभेदे, तदेवेदमानयनपदमिति प्रत्यभिज्ञानं न स्यात् । [1]स्याच्च गवाद्यन्वितानयनस्योपस्थापकान्तराभावेन तस्माच्छब्दादेवोपस्थितिर्वाच्या । सा च संकेतग्रहसाध्या । सति (वा) च [2]तस्मिन् शब्दात्तदुपस्थितिः, तादृक्तदुपस्थितौ च संकेतग्रहः इत्यन्योन्याश्रयः ।

---

### नैमित्तिकानुसारेण निमित्तकल्पनात् रसादिपर्यन्तार्थप्रतीतिनिमित्तं शब्दः कल्प्यते इति पक्षः, तन्निराकरणं च

अत एव, शब्दश्रवणानन्तरं यावानर्थः प्रतीयते, तत्र सर्वत्र शब्द एव निमित्तम् । यतो नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते इत्युक्त[मिति] ।

(तत्र) [तन्न] शब्दस्य कारकत्वरूपं निमित्तत्वमसंभव्येव, अर्थस्य शब्दाजन्यत्वात् । [3]ज्ञापकत्वं वाच्यम् ।

---

1 स्याच्चेति — अस्य इत्यन्योन्याश्रयः इत्यनेनान्वयः ।

2 तस्मिन् — संकेतग्रहे ।

3 ज्ञापकत्वमिति — निमित्तत्वमिति शेषः ।

तच्च संकेतवत्त्वेन ज्ञातस्य । अज्ञातस्य, स्वरूपमात्रेण वा ज्ञातस्य ज्ञापकत्वे [1]अतिप्रसङ्गात् । न च व्यङ्ग्ये अन्वयविशेषे च संकेतः । तत्रापि संकेत इति यदि, तदा पूर्वोक्तान्योन्याश्रयः इत्यादिदोषात् ।

---

### 'यत्परः शब्दः स शब्दार्थः' इत्यस्यार्थवर्णनेन रसादिपरस्य शब्दस्य रसो नार्थः इति प्रतिपादनम्

यच्चोक्तं—यत्परः शब्दः स शब्दार्थः इति, तदपि न । तद्वाक्यवर्तिपदोपस्थापित एव विधेये तस्य तात्पर्यं, न तु प्रतीतमात्रे इत्यर्थकत्वात्त[2]स्य । यथा सिद्धसाध्यसमभिव्याहारे, सिद्धं साध्यायोपदिश्यते इति न्यायेन दध्ना जुहोति इति वाक्येन, [3]हवनस्यान्यवाक्यात् सिद्धौ, दधि विधीयते । तस्याप्यन्यतः सिद्धौ [4]करणत्वमात्रं विधीयते, तस्य तृती-

---

1 अतिप्रसङ्गात् — असंकेतितार्थबोधप्रसङ्गात् ।
2 तस्य — यत्परः शब्दः स शब्दार्थः इत्यभियुक्तवचनस्य ।
3 अन्यवाक्यात् । अग्निहोत्रं जुहोतीति वाक्यात् ।
4 करणत्वमात्रमिति — दध्नेन्द्रियकामस्य जुहुयादिति वाक्ये इत्यादिः ।

योपस्थापितत्वात् । यथा तद्वाक्यवर्तिपदोपस्थापितत्वं [1]तस्य, तथा न (व्यापार) [वाक्या] र्थस्य तदस्ति, [2]तद्वाक्यार्थानभिज्ञत्वात् । न च तद्वाक्यवर्तिपदोपस्थापित एवार्थे तात्पर्यमिति न नियमः, विषं भुङ्क्ष्व मा चास्य गृहे भुंक्था इत्यत्र विषं भुङ्क्ष्वेत्यस्य मा चेत्याद्यर्थे तात्पर्यादिति वाच्यम् । एकवाक्यतासूचकचकारसत्त्वात् [3]इदमेकमेव वाक्यम् । एवं च 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्'(पू. मी. सू. 3-1-22)इति न्यायादाख्यातवाच्यक्रिययोः परस्परमन्वयाभावेन विषं भुङ्क्ष्वेत्यस्य सुहृद्वाक्यतया विषभोजनोपदेशासंभवेन अन्वयसिद्ध्यर्थं विषभक्षणाद (स्ये) [प्ये] तद्गृहभोजनमनिष्टसाधनम्, अतः सर्वथा अस्य गृहे मा भुङ्क्था इति वाक्यार्थे तद्वाक्यस्य [4]शब्दोपस्थापित एव तात्पर्यसिद्धेः ।

---

1 तस्य — विधेयस्य ।

2 वाक्यार्थानभिज्ञत्वादिति — वाक्यार्थस्यापूर्वत्वादिति भावः ।

3 इदमिति — विषं भुङ्क्ष्व मा चास्य गृहे भुंक्थाः इतीदं वाक्यं एकमेवेत्यर्थः ।

4 शब्दोपस्थापिते — मा चास्येत्यादिशब्दोपस्थापिते ।

## तात्पर्यवशादेव गङ्गायां घोषः इत्यादौ शैत्यपावनत्वादिप्रतीतिरिति पक्षनिराकरणम्

एतेन, लक्षणामूलव्यञ्जनास्थले तात्पर्यवशादेव शैत्यपावनत्वादिप्रतीतिरिति परास्तम् । तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यग्रहस्य [1]तत्प्रतीतिघटितत्वेन तत्प्रतीतिप्रतीतौ तात्पर्यप्रतीतिहेतुत्वं, तात्पर्यप्रतीतेर्हेतुत्वे सिद्धे तत्प्रतीतिरित्यन्योन्याश्रयात् तात्पर्यज्ञानस्य हेतुत्वमेव न इत्यप्यवधेयम् । [2]तेनैव लक्ष्यार्थबोधसंभवे लक्षणोच्छेदः इत्यपि ॥

---

## लक्षणयैव व्यङ्ग्यस्य प्रतीतिरस्तु इत्याक्षेपः, तत्परिहारश्च

ननु, अस्तु तर्हि लक्षणयैव [3]भवदभिमतव्यङ्ग्यप्रतीतिः, किं व्यञ्जनयेति चेन्न ।

---

1 तत्प्रतीतिघटितत्वेनेति— विशेषणज्ञानविधयेति शेषः ।

2 तेनैव — तात्पर्यवशेनैव ।

3 भवदभिमतव्यङ्ग्यप्रतीतिः — व्यङ्ग्यत्वेन भवदभिमतस्य प्रतीतिः ।

मुख्यार्थबाधाद्यभावात् । न च काकेभ्यो दधि रक्ष्यतामित्यादाविव[1] तात्पर्यानुपपत्त्या सेति[2] वाच्यम् । लक्षणायाः रूढिप्रयोजनान्यतरवत्त्वनियमेन, व्यङ्ग्येऽर्थे प्रयोगप्राचुर्याभावान्न रूढिः । किन्तु प्रयोजनवती वाच्या । तत्र चान्यस्य[3] प्रयोज (क) [न] स्यासत्त्वात् । न च लक्ष्यप्रतीतिरेव प्रयोजनम् । लक्षणायास्तु प्रयोजनवत्त्वनियमः, न तु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्त्वनियमः, गौरवादिति [वाच्यम्] (अप्रयोजनलक्षणा मास्तु, प्रयोजनवत्त्वनियमो न तु) लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्या एवादुष्टलक्षणात्वं तदतिरिक्तायास्तु दुष्टत्वमिति विभागाभावप्रसङ्गात् । [यदि] लक्ष्यप्रतीतिरूपप्रयोजनस्य सर्वत्र संभवापातात् अन्यदेव किञ्चित् प्रयोजनमुच्येत । तदा, तदपि[4] लक्षणयैव । सा च प्रयोजनवतीत्यनवस्था स्यात् ।

---

1 इत्यादाविवेति — मुख्यार्थबाधाभावेऽपीति शेषः ।

2 सा — लक्षणा ।

3 अन्यस्य — शैत्यादिप्रतीतिभिन्नस्य ।

4 तदपि — प्रयोजनान्तरमपि ।

अत एव, [1]विशिष्टे लक्षणेत्यपास्तम् । तथाहि-'ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्' इत्युक्तदिशा ज्ञानजनक-विषयस्य यथा ज्ञानादन्यत्वं, तथा फलस्यापि ततोऽन्यत्वं वाच्यम् । कारणस्येव कार्यस्यापि [2]भिन्नकालत्वेन [3]भिन्नत्वात् । लक्ष्यज्ञानमेव यदि व्यङ्ग्यज्ञानं, तदा व्यङ्ग्यज्ञानं प्रयोजनं न स्यात् ।

किञ्च गङ्गापदार्थस्य तीरे संयोगसंबन्धस्य सत्त्वात् शैत्यपावनत्वा (त्) [दौ] च तदन्यशक्यसंबन्धरूपा लक्षणा एका न [संभवति] (रावर्चा) नैकविधशक्यसंबन्धानां [4]प्रयोजकत्वमपेक्ष्य एकस्या व्यञ्जनाया अतिरिक्ताया एव प्रयोजकत्व-मुचितम् । न च तेषां तत्त्वं सिद्धमिति वाच्यम् । [5]तदन्तः-पातिनामेव प्रयोजनान्तरसहितानां लक्षणासंज्ञा, [6]प्रयोजनान्तर-

---

1 विशिष्टे लक्षणा — शैत्यपावनत्वादिविशिष्टतीरे गङ्गापदस्य लक्षणा ।

2 भिन्नकालत्वेनेति — कारणस्य पूर्वकालवृत्तित्वं कार्यस्य तूत्तर-कालवृत्तित्वमित्यर्थः ।

3 भिन्नत्वात् — लक्ष्यज्ञानाद्भिन्नत्वात् ।

4 प्रयोजकत्वं — तत्तदर्थप्रतीतिप्रयोजकत्वम् ।

5 तदन्तःपातिनामेव — लक्षणान्तर्गतानामेव ।

6 प्रयोजनान्तररहितानां—लक्ष्यप्रतीत्यतिरिक्तप्रयोजनशून्यानाम् ।

रहितानां व्यञ्जनेति संज्ञाऽस्तु । [1]भूरिप्रयोगाभावीयलक्षणायाः प्रयोजनवत्त्वस्योक्तत्वात् । किञ्च विशिष्टं लक्ष्यं तदा स्यात्, यदि लक्ष्यतावच्छेदकविशिष्टत्वं पूर्वप्रतीतं स्यात् । [2]न च तत्तथा । पावनत्वादिविशेषवैशिष्ट्यस्य प्रमाणान्तरेण तटे अविषयीकरणात्, [3]तत्र तदसत्त्वात् । न च पावनत्वादि-सामान्यवैशिष्ट्यमेव लक्ष्यतावच्छेदकमस्तु, पूर्वं प्रतीतत्वात् तत्र सत्त्वाच्चेति वाच्यम् । विवक्षितपावनत्वविशेषप्रतीत्यनापत्तेः । तटनिष्ठशैत्यपावनत्वादेः गङ्गातटे घोषः इत्यतोऽपि [4]सिद्धि-संभवात्, गङ्गायां घोषः इति प्रयोगानापत्तेश्च ।

किञ्च, शक्तिलक्षणे ज्ञाते प्रयोजके । (लक्षणानु) [व्यञ्जना तु] [5]स्वरूपसती । नचातिप्रसङ्गः, वक्त्राद्यौ-

---

1 भूरिप्रयोगाभावीयलक्षणायाः — निरूढेतरलक्षणायाः ।

2 न च तत् तथा — लक्ष्यतावच्छेदकविशिष्टत्वं पूर्वप्रतीतं न ।

3 तत्र तदसत्त्वात् — तटे पावनत्वादिविशेषवैशिष्ट्यस्यासत्त्वात् ।

4 सिद्धिसंभवात् — प्रतीतिसंभवात् ।

5 स्वरूपसतीति — प्रयोजिकेति विपरिणतमनुषज्यते ।

(वितास्थ) [चित्य] ज्ञानस्य सहकारित्वाभ्युपगमात् । न [1]चैवमलं व्यञ्जनयेति वाच्यम् । सत्यप्यौचित्यज्ञाने [2]वीर-वाङ्निष्ठमाधुर्यादिघटनात् (तन्त्रोजः प्रभूतेः) त्रिरक्तवाक्यस्थ-कमलादिपदात् कदा (प्यसौ) [पि] रसादेरव्यक्तेः । अन्यथ प्रतिकूलवर्णादेर[3]दोषत्वापत्तेः ।

न च [4]संबन्धज्ञानाभावे कथं संबन्ध्यन्तरस्मृतिः, तदभावे च कथं तस्य शाब्दबोधविषयत्वमिति वाच्यम् । व्यञ्जनाभिन्नस्थल एवैतादृशनियमाङ्गीकारात् । प्रकारान्त-रेणोपस्थितार्थेष्वेव व्यञ्जनायाः शाब्दबोधनियामकत्वात् ।

———

1 एवं — औचित्यज्ञानस्य बोधकारणत्वे । औचित्यज्ञानादेव व्यङ्ग्यार्थप्रतीतिसंभवादिति भावः ।

2 वीरवाङ्निष्ठमाधुर्यघटनात् -- वीरस्य वचने माधुर्यगुणव्य-ञ्जकवर्णादिघटनात् ।

3 अदोषत्वापत्तेरिति — प्रकृतरसानभिव्यक्तेरेव दूषकताबीज-त्वादिति भावः ।

4 शब्दार्थसंबन्धाज्ञाने — शब्दस्य व्यङ्ग्यार्थस्य च संबन्धात्मक-व्यञ्जनाया अज्ञाने ।

## बोध्यसंबन्धस्य व्यञ्जनात्वम्

अस्तु वा, शक्यसंबन्धो लक्षणा, बोध्यसंबन्धो व्यञ्जनेति । न च बोध्यसंबन्ध एव लक्षणेति वाच्यम् । अपभ्रंशस्यापि साधुत्वं स्यात् । तस्य शक्तिलक्षणान्यतरवत्त्वप्रयोज्यत्वनियमात् ।

---

## अपभ्रंश–चेष्टादिसाधारणः बोधकताविशेषः व्यञ्जना

अथवा, साधुशब्दमात्रनिष्ठो बोधकत्वविशेषः शक्तिः । मुख्यार्थबाधप्रयोज्य एव तादृशबोधकत्वविशेषो लक्षणा । व्यञ्जना तु, अपभ्रंश–पद–तदेकदेश–अर्थ–चेष्टादिसाधारणो बोधकत्वविशेषः इत्येवास्तु । न चापभ्रंशे [1]लक्षणाभ्रमेणैव निर्वाहे व्यञ्जनाकल्पने गौरवमिति वाच्यम् । लक्षणाभ्रमस्य, शक्तिभ्रमस्य, साधुशब्दस्मरणस्य वा कल्पनमिति विनिगमनाविरहात् । वस्तुतः, शक्तिभ्रमादपभ्रंशादौ शाब्दबोधाङ्गीकारे [2]तत एव घोषाद्यधिकरणताबोधोपपत्तेर्लक्षणोच्छेदापत्तिः । न

---

1 लक्षणाभ्रमेणेति — अपभ्रंशस्यावाचकत्वेन स्वशक्यसंबन्धरूपलक्षणाया अभावात् भ्रमेणेत्युक्तम् ।

2 तत एव — शक्तिभ्रमादेव ।

च पदार्थादीनां न व्यञ्जकत्वं, किन्तु पदस्यैवेति वाच्यम् । तत्तदर्थादिप्रतीत्युत्तरमपि व्यङ्ग्यप्रतीतेः । न च [1]पदावृत्ति-रुचिता, गौरवात् । व्यञ्जनया लक्षणान्यथासिद्धिप्रसङ्गाच्च ।

---

### प्रामाणिकव्यवहारेणातिरिक्तव्यञ्जनासिद्धिः

वस्तुतस्तु, इदं पदमेतदर्थस्य न वाचकम्, न वा लाक्षणिकम्, किन्तु व्यञ्जकमिति प्रामाणिकव्यवहारादेव व्यञ्जनासिद्धिः । अन्यथा अभिधयार्थसिद्धौ लक्षणापि विलीयेत ।

किञ्च, शक्तिलक्षणाज्ञानविधुराणां पामराणामपि चेष्टातः पदार्थज्ञानस्य सकलसंमततया व्यञ्जनमवश्यमेषितव्यम् । न च [2]चेष्टैवार्थज्ञानहेतुरस्त्विति वाच्यम् । [3]अतिप्रसङ्गभङ्गाय

---

1 पदावृत्तिः — पदस्य पुनरनुसन्धानम् ।

2 चेष्टैवेति — एवेन तन्निष्ठव्यञ्जनाव्यापारस्य व्यवच्छेदः ।

3 अतिप्रसङ्गेति— अङ्गुलीद्वयचेष्टया त्रित्वादिबोधापत्तिरूपाति-प्रसङ्गेत्यर्थः ।

संबन्धविधया चेष्टानिष्ठव्यञ्ज (का) [ना] ङ्गीकारस्यावश्य-कत्वात् ।

---

रसादिकस्य व्यङ्ग्यस्यानुमानेन प्रतीतेः व्यञ्जना नाङ्गीकरणीया इत्याक्षेपः

ननु, विभावादिप्रतीतेः रत्यादिप्रतीतिकारणत्वात्, तन्तुः पटवान् तन्तुसंयोगादितिवत्, अयं रत्यादिज्ञानरूपरसवान् विभावादिज्ञानवत्त्वात् [1]इत्यनुमित्या रसप्रतीतिः । तथा,

[2]'भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारियो देण ।
गोलाणईकच्छकुडङ्गवासिणा दरियसीहेण ॥'

इत्यादौ, संकेतस्थानीभूतगोदावरीपरिसरनिकुञ्जे पुष्पाद्यपचयार्थं परिभ्रमतो धार्मिकस्य तद्गमननिवारणाय अविनयवत्यास्ताव-

---

1 अनुमित्येति — अभेदे तृतीया । अनुमित्यभिन्ना रसप्रतीति-रित्यर्थः ।

2 भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥ इति छाया ।

दुक्तौ, निकुञ्जनिवासिसिंहसंपादितया सदननिवासिसारमेय-[1]निकृत्या स्वसदनपरिभ्रमणविधिर्वाच्यः । स (वै) एव गोदावरीतीरनिकुञ्जे भ्रमणायोग्यतामनुमापयति । इदं गोदावरीतीरनिकुञ्जं भीरुभ्रमणायोग्यं सिंहवत्त्वात्, [2]य(त्रै)[न्नै]वं त (वै)[न्नै]वं यथा गृहम् इत्येवमाद्यनुमानेनैव व्यङ्ग्यार्थ-बोधसंभवे अतिरिक्तव्यञ्जनाङ्गीकरणमयुक्तमिति चेन्न ।

---

## अनुमितरत्यादिज्ञानस्य रसत्वाभावात् अनुमानेन रसप्रतीतिः न भवतीति निरुक्ताक्षेपप्रतिक्षेपः

शब्दसमर्पितविभावादिप्रतीत्यनुमितरामादिरत्यादिज्ञानस्य रसत्वाभावात् । किन्तु, शब्दादिसमर्पितविभावादिभावनया भावकैर्भाव्यमानस्य [3]स्वानन्दांशे भग्नावरणक[4]रत्याद्यवच्छिन्न-

---

1 निकृत्या — मारणेन ।

2 यत् नैवं — भीरुभ्रमणायोग्यं न, तत् नैवं-न सिंहवत् । अनेन व्यतिरेकव्याप्तिः प्रदर्शिता ।

3 स्वानन्दांशे — आत्मस्वरूपानन्दांशे ।

4 रत्याद्यवच्छिन्नेति — अनवच्छिन्नानन्दानुभवस्तु ब्रह्मास्वादः इति ज्ञेयम् ।

स्वप्रकाशानन्दस्य रसरूपत्वात् । तत्र च व्याप्तिग्रहासंभवात् । न च यत्र यत्र विभावादिप्रतीतिः तत्र तत्र रसः इति व्याप्तिग्रहः सुलभ इति वाच्यम् । एवंविधव्याप्तिज्ञानजन्यप्रतीतेरास्वादजनकत्वाभावात्, पर्वतो वह्निमान् धूमादित्याद्यनुमानजन्यवह्निप्रतीतिवत् । किन्तु, स्वप्रकाशमात्रविश्रान्त (सत्वा) [स्वा] नन्दप्रतीतेः । तथाच एतादृशसिषाधयिषितार्थातिरिक्तार्थसाधने [1]हेतोराभासत्वात् ।

---

### भम धम्मिअ इत्यत्र भीरुभ्रमणायोग्यत्वस्य नानुमितिः हेतोः व्यभिचारित्वादिति प्रतिपादनम्

'भम धम्मिअ वीसत्थो' इत्यत्रानुमाने तु, अवीरस्य भीरुभ्रमणायोग्यत्वं साध्यम्, उत वीरस्य, आहोस्वित् विशेषौदासीन्येन तत्सामान्यस्यैव वा । आद्ये, प्रभोः गुरोर्वा निदेशेन, प्रियानुरागेण, निधिलाभशङ्कया वा [2]तादृशस्यापि पुंसः सिंह-

---

1 आभासत्वादिति—अनभिलषितसिद्धिरूपमर्थान्तरं नाम निग्रहस्थानमभिसंहितम् ।

2 तादृशस्यापि — अवीरस्यापि ।

वन्निकुञ्जभ्रमणदर्शनेन व्यभिचारात् । न च प्रभुनिदेशाद्यनुपाधिकत्वस्य भ्रमणविशेषणत्वात् [1]न स इति वाच्यम् । एतादृशसाध्यस्य (यधा) [पदा] द्यनुपस्थितत्वात् उपस्थितस्य च व्यभिचारित्वात् । अत एव नान्त्यः । न मध्यमश्च । [2]स्पर्शादिशङ्कया पुरुषार्थाभावतया च सारमेयात् बिभ्यतोऽपि मृगयादरेण, वीरतया वा सिंहवति प्रदेशे वीरस्य भ्रमणात् व्यभिचारः । किञ्च निकुञ्जे सिंहसद्भावो न मानान्तरादवधृतः । किन्तु अविनयवतीवचनात् । न च तन्निश्चायकम्, अर्थेन समं [3]संबन्धानियमात् अनिश्चयरूपासिद्धिश्च ।

---

1 न सः — न व्यभिचारः ।

2 स्पर्शादिशङ्कयेति — सारमेयस्पर्शस्याशुद्धिसंपादकत्वादिति भावः ।

3 संबन्धानियमादिति — अविनयवतीवचनानां अर्थव्यभिचारित्वाद्दृष्टेरिति भावः ।

'दृष्टिं हे प्रतिवेशिनि' इत्यत्रापि न लिङ्गेन परकामुकोपभोगस्य व्यङ्ग्यस्य अनुमितिः व्यभिचारित्वादिति कथनम्

एतेन,

[1]दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न त्रिरसाः कौपीर(थः) [पः] पास्यति ।
एकाकि(त्व)[न्य]पि यामि(द्ध्रमिपि[सत्वरमितः]स्रोतस्तमालाकुलं
नीर (व्रा) [न्ध्रा] स्तनुमुल्लिखन्तु जरठच्छेदा नलग्रन्थयः ॥'

इत्यत्र [2]नलग्रन्थि (स्तनलिखनादि) [तनूल्लिखनादि] लिङ्गेन परकामुकोपभोगानुमितिरिति परास्तम् । [3]पतिस्नेहेनापि तत्संभवे व्यभिचारात् ।

---

1 दृष्टिमिति—साहित्यदर्पणे स्वतः संभविवस्तुना वस्तुध्वनेरुदाहरणत्वेन प्रतिपादितोऽयं श्लोकः । परकामुकोपभोगार्थं स्रोतस्तीरं सरसजलाहरणमिषेण गच्छन्त्याः अविनयवत्याः गृहरक्षणाय प्रतिवेशिनीं प्रत्युक्तिरियम् । कौपीः अपः–कूपजलानि ।

2 नलग्रन्थितनूल्लिखनादीति –नलग्रन्थीनां नायिकातनौ उल्लिखनमित्यर्थः । आदिना एकाकिन्यागमनं गृह्यते ।

3 पतिस्नेहेनापीति—पत्यौ स्नेहश्च 'प्रायेणास्य पिता' इत्यादिना प्रदर्शितो बोध्यः ।

'निःशेषच्युतचन्दनम्' इत्यत्रापि न व्यङ्ग्यस्यानुमानं संभवति

एवं, '[1]निश्शेषच्युतचन्दनं स्तनतटम् निर्मृष्टरागोऽधरः

नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।

मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे

वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥'

इत्यत्र [2]निषेधो वाच्यः । [3]विधिर्व्यङ्ग्यः ।

(इत्यत्र) [यत्तु अत्र] चन्दन (व्यञ्जना) [च्यवना] दिभिः विधिरनुमीयते [इति] । तदपि [4]तोयस्नानकार्यत्वसंभवात् व्यभिचारादसमञ्जसम् । न च व्यञ्जनावादिमतेऽपि उक्तहेतूनामनैकान्त्यात् कथं व्यञ्जनयापि तत्प्रतीतिरिति वाच्यम् । अधमपदसाहचर्यात् । अधमत्वं जात्या, कर्मणा वा । तत्रोत्तमनायिका नायकस्य जात्याऽपकर्षरूपं

---

1 निश्शेषेति-नायकस्यानयनाय तन्निकटं प्रेषितां तेनोपभुक्तां दूतीं प्रतिनिवृत्तां प्रति कुपितायाः नायिकाया उक्तिरियम् ।

2 निषेधः— नायकसमीपगमननिषेधः ।

3 विधिः — दूतीसंभोगः ।

4 तोयस्नानकार्यत्वसंभवादिति – चन्दनच्यवनादेरिति शेषः ।

न वक्ति, किन्तु कर्मणा । तत्र [1]चैतत्पूर्वं तदभावः स्वयं दूतीप्रेषणान्यथानुपपत्त्यैव सिद्धः । तस्मात् दूतीसंभोगकारित्वमेव [2]तदिति तत्साहाय्यात् संभोगव्यञ्जनायां बाधकाभावात् । नचानुमितिवादिमतेऽपि तत्साहित्यात् तथास्त्विति वाच्यम् । अधमत्वस्य प्रमाणान्तरानवधृतत्वात् संदिग्धासिद्धेः । [3]नचैतत् व्यञ्जनाङ्गीकारेऽपि सममिति वाच्यम् । व्यञ्जनावादिमते व्याप्त्यादिनिश्चयादेरप्रयोजकतया संभावितार्थमात्रादेव बोधकत्वस्वीकारात् ।

किञ्च, कविप्रौढोक्तिमात्रनिष्पन्नकाव्यादौ प्रामाण्यानावश्यकतया संदिग्धासिद्ध्या [4]उपपादनसंभवेनावश्यं व्यञ्जना स्वीकार्या ।

---

1 एतत्पूर्वं — दूतीप्रेषणात् पूर्वम् ।

2 तत् — अपकर्षाधायकं कर्म ।

3 एतत् — संदिग्धासिध्दत्वम् ।

4 उपपादनसंभवेन — व्यङ्ग्यार्थप्रतीतेरुपपादनसंभवेन ।

### अनुमानेन व्यञ्जनाया अन्यथासिद्धत्वे शब्दस्यापि तेनान्यथासिद्धिप्रसङ्गः

अपिच, अनुमानेन व्यञ्जनान्यथासिद्धौ [1]शब्दान्यथासिद्धिरपि स्यात् । तथाहि—घटमानयेत्यत्र कर्मत्वं घटवृत्ति तन्निरूपिताकाङ्क्षायोग्यतासत्तिमत्त्वात् इत्याद्यनुमानेन शाब्दबोधसमानज्ञानसंभवात् । न च योग्यताज्ञानस्य [2]ज्ञानत्वेन शाब्दबोधे हेतुत्वात्, अनुमितौ तु लिङ्गनिश्चयत्वेन हेतुत्वात् योग्यता न लिङ्गविशेषणमिति वाच्यम् । [3]हेतुत्वस्यैकस्याभावात् अनुमितित्वावच्छिन्नं प्रति [4]लिङ्गनिश्चयत्वेनाकारणत्वात् । किन्तु धूमादिनिश्चयत्वेन । [[5]अनु-

---

1 शब्दान्यथासिद्धिः—शब्दस्यातिरिक्तप्रमाणत्वाभाव इति यावत् ।

2 ज्ञानत्वेनेति — योग्यतासंशयादपि शाब्दबोधोदयात् संशयनिश्चयसाधारणज्ञानत्वेनैव योग्यताज्ञानस्य शाब्दबोधहेतुता बोध्या ।

3 हेतुत्वस्यैकस्याभावादिति — व्याप्तिमत्त्वं हेतुत्वम् । व्याप्तिश्च साध्यतावच्छेदक-हेतुतावच्छेदकघटिता तद्भेदेन भिन्ना नैकेति हेतुत्वं नैकमनुगतमिति भावः ।

4 अकारणत्वात् — अनुगतैककारणत्वाभावात् ।

5 अनुमितिकारणतायामिति — कर्मत्वं घटवृत्ति इति प्रकृतानुमितिविशेषकारणतायाम् ।

मिति] कारणतायामपि योग्यताज्ञानस्य ज्ञानत्वेनैव कारणतायां दोषाभावात् । यदि शब्दस्थले व्याप्त्यादिप्रतिसन्धानं विनापि अन्वयबोधदर्शनात् नानुमानेन शब्दान्यथासिद्धिरिति । तदा[1]प्रकृतेऽपि तुल्यम् ।

---

## व्यञ्जनैव सर्वत्र वृत्तिः, सा च तत्तद्धीजनकत्वरूपा इति प्रतिपादनम्

वस्तुतस्तु, तत्तद्धीजनकत्वमेव व्यञ्जना । सैव सर्वत्र वृत्तिः, न शक्तिर्लक्षणा वा । [2]शक्तिघटकतया एतस्यान्य(द) [वा] प्यङ्गीकरणीयत्वात् । न च [3]शक्तिलक्षणाभिधानं तान्त्रिकाणां कथमिति वाच्यम् । यदा तदेव व्याकरणादिभिरनुशिष्यते, तदा अभिधाव्यवहारः । यदा च बाध—तात्पर्यानुपपत्तिप्रतिसन्धानोत्तरमन्यार्थबोधकम्, तदा लक्षणेति

---

1 प्रकृतेऽपि तुल्यमिति — व्याप्त्यादिप्रतिसन्धानं विनापि व्यङ्ग्यार्थप्रतीतेः नानुमानेन व्यञ्जनाया अन्यथासिद्धिरित्यर्थः।

2 शक्तिघटकतयेति — तत्तत्पदे तत्तदर्थबोधकत्वेनेश्वरेच्छारूपशक्तौ तत्तदर्थबोधकत्वस्य घटकतयेत्यर्थः ।

3 शक्तिलक्षणाभिधानंमिति--व्यञ्जनातिरिक्ततया शक्तिः लक्षणा इति च व्यवहार इति यावत् ।

व्यवहारः । यदा च तत् बाधितार्थादिबोधकं, तदा व्यञ्जनाव्यवहारः इत्येक एव (व्यवहारः) [व्यापारः] । ननु तद्धीजनकत्वं, फलोपहितत्वं, स्वरूपयोग्यत्वं वा । नाद्यः, तस्य [1]पूर्वं ज्ञातुमशक्यत्वात् । न द्वितीयः । तथासति स्वरूपयोग्यतावच्छेदकस्य कस्यचित् वक्तव्यत्वेन शक्त्यादिरङ्गीकरणीय एवेति चेन्न । जनकत्वस्य पदार्थान्तरस्यैवाङ्गीकारात् ।

---

### व्यञ्जनयैवानुमानस्यान्यथासिद्धिरिति अतिनवीनमतम्

अतिनवीनास्तु व्यञ्जनयैवानुमानान्यथासिद्धिः । युज्यते च । एवं हि लाघवमपि भवति । हेतुज्ञानादीनां ज्ञानत्वेनैव हेतुत्वाङ्गीकारात् । व्यञ्जनायास्तु यथाकथंचित् [2]संभावनामात्रादेव व्यञ्जकत्वादिति वदन्ति ।

एवमर्थापत्तिरपि परास्ता । तस्या अपि प्राक्सिद्धेच्छामिच्छायोपजीवतोप प्रवृत्तत्वात् । ?

---

1 पूर्वमिति — तद्धीजननात्पूर्वमित्यर्थः ।
2 संभावना — सन्देहविशेषः ।

## व्यञ्जनास्वीकारे अन्येषां युक्तिनिरूपणम्

अन्येतु वर्ण-तद्गतसौकुमार्यादिविशेष–रचनाविशेष-चेष्टादीनामर्थविशेषबोधकत्वस्य सकलसहृदयसिद्धतया अपलापानर्हत्वेन, [1]तत्र [2]शक्तिलक्षणयोरसंभवेन अतिरिक्तव्यञ्जनाख्यव्यापारस्यावश्यमङ्गीकरणीयतया, शब्देऽप्यर्थविशेषबोधं प्रति तद्धेतुत्वे न का चित् क्षतिः। क्वचित् कदा चित् लक्षणादिकमपि चेत् न तदा कापि नः क्षतिरित्याहुः।

---

## काव्यज्ञरीत्या शक्तिमूलध्वनिस्थले व्यञ्जनाया आवश्यकता

किञ्च, काव्यज्ञरीत्यापिं,

'भद्रात्मनो दुरधिरोहतनोर्विशाल–
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत्' ॥
'असावुदयमारूढः कान्तिमान्रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥'

---

1 तत्र — वर्णादौ ।

2 असंभवेनेति — शक्तिलक्षणयोः पदमात्रवृत्तित्वादिति भावः ।

इत्यादौ प्रकरणादीनां [1]द्वितीयार्थाभिधायाः प्रति (बोध)[बन्ध] कत्वेनान्यतरमात्रार्थे स्मृतिहेतुत्वस्याभिहितत्वात् प्राकरणिक-बोधोत्तरं जायमानो द्वितीयार्थबोधो न शक्त्या, कुण्ठनात्तस्याः। तस्मात् तन्मूलव्यञ्जनया [2]स जायते इति व्यञ्जनासिद्धिः। न च प्राकरणिकबोधात्परं जायमानो द्वितीयार्थबोधो लक्षणयेति वाच्यम्। मुख्यार्थबाध–तात्पर्यग्राहकयोरभावात्। न चाभिधानियन्त्रणवत् [3]व्यञ्जनानियन्त्रणमपि न कुत इति वाच्यम्। अनुभवविरोधात्। अन्यथा, सुगन्धिमांस-भोजनप्रकरणे सुरभिमांसं भवान् भुङ्क्ते इत्यभिधाने [4]गोमां-

---

1 द्वितीयार्थाभिधायाः — राजादिपदस्य नृपति–चन्द्रोभयशक्त-स्यापि द्वितीयार्थे–प्राकारणिकनृपभिन्नचन्द्राद्यर्थे अभिधायाः शक्तेः, राजपदजन्यचन्द्रोपस्थितिं प्रति प्रतिबन्धकत्वेन, नृपस्यै-वोपस्थित्या प्रथमं प्राकरणिकार्थस्यैव शक्त्या बोध इति समुदा-यार्थः।

2 स जायते — अप्राकरणिकार्थबोधः जायते।

3 व्यञ्जनानियन्त्रणमपीति — प्रकरणादिनेति शेषः।

4 गोमांसाद्याने इत्यादि — सुगन्धिनि–गवि च शक्तस्य सुरभि-शब्दस्य प्रकरणेन सुगन्धिशक्तिनियन्त्रणेन शक्त्या, ततः गो-रूपस्थितिः न संभवति। सा चोपस्थितिरावश्यकी। तद्वा-क्यश्रवणे सति चतुरस्य पुंसः जुगुप्सायाः अनुभवसिद्ध-त्वात्। अतः व्यञ्जनयैवं तदुपस्थितिः। व्यञ्जना तु तद्ग्राहक-प्रमाणेनाप्राकरणिकार्थबोधकत्वेन सिद्धेति समुदायार्थः।

साज्ञाने चतुरस्य जुगुप्सानापत्तेः । व्यञ्जनायास्तु प्रकरणा द्यतिक्रम्यापि बोधकत्वस्य धर्मिग्राहकमानसिद्धत्वात् ।

अत एव काव्यान्तर्गतस्य प्राकरणिकैकार्था (निपात) भिधावतः पदस्यासभ्यान्तरप्रत्ययकारकस्य हेयत्वम् । अन्यथा, 'यस्याननं योनिरुदारवाचाम्' 'योनिरोधो मयारब्धः' 'जैमिनीयमलं धत्ते रसनायामयं द्विजः' इत्यादेरश्लीलत्वं न स्यात् । न च नानार्थस्थले अभिधाप्रसरणमेव कल्प्यम्, न तु व्यञ्जना, धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वादिति वाच्यम् । [1]तन्निरोधकस्यानपायात् ।

अपिच, एतादृशस्थले कविनिबद्धनानार्थशब्दघटनानुरोधात् शक्त्योभयार्थप्रतीतावपि, वर्णनीयस्यार्थस्य (उक्तत्वाभावेन) उत्तमत्वाभावेन कविप्रयासानर्थक्येन [2]अर्थद्वयस्याङ्गाङ्गिभावार्थमुपमानोपमेयभावः स्वीकार्यः । [3]स च न कदापि व्यञ्जनां विनेति तत्स्वीकारस्यावश्यकत्वे, [4]व्याप्त्यादिप्रतिसन्धाननियमाद्यङ्गीकारस्यानौचित्यात् ।

---

1 तन्निरोधकस्य—अप्रकृतार्थे अभिधाप्रसरणनिरोधकस्य प्रकरणादेः।
2 अर्थद्वयस्य — प्रकृताप्रकृतार्थद्वयस्य ।
3 स च —प्रकृताप्रकृतयोरुपमानोपमेयभावावगमश्च ।
4 व्याप्त्यादिप्रतिसन्धानेति — व्यङ्ग्यार्थप्रतीतिपूर्वमित्यादिः ।

एवं सकृदुच्चरितपदं सकृदर्थप्रत्यायकमिति नियमः शब्दस्या विरम्य (प्रकार) [व्यापार] कत्वादिकमपि साधु संगच्छते ।

---

## काव्यदोषेषु नित्यानित्यदोषत्वव्यवस्थापिका व्यञ्जना

अन्यच्च । व्यञ्जनानङ्गीकारे कष्टत्वादीनामनित्यदोषत्वम् असाधुत्वादीनां [1]नित्यदोषत्वमिति विभागो न स्यात् । शक्यार्थस्यैकरूपतया कष्टत्वादीनां सर्वत्र [2]दुष्टत्वमदुष्टत्वं वा स्यात् । तदभ्युपगमे तु व्यञ्जनीयार्थस्य बहुविधतया रौद्रादिव्यङ्ग्येऽर्थे अदुष्टत्वं, शृङ्गारादौ तु दुष्टत्वमिति घटते विभागः ।

---

## पर्यायपदविशेषस्य स्थलविशेषानुरोधेन काव्यानुगुणत्वव्यवस्थापिका व्यञ्जना

एवं, पर्यायेष्वपि कुत्रचिदेव, कस्य चिदेव, काव्यानुगुणत्वमिति व्यवस्था न स्यात्, वाच्यार्थस्यैकरूप्यात् । 'द्वय

---

1 नित्यदोषत्वं — सार्वत्रिकं दोषत्वम् ।

2 दुष्टत्वं — दोषत्वम् । अदुष्टत्वं । अदोषत्वम् । एवमुत्तत्रापि ।

गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः' इत्यादौ जुगुप्साव्यञ्जकत्वेन कपाल्यादिपदस्यैवानुगुण्यम्, न तु शौर्यादिव्यञ्जकपिनाक्यादिपदस्य । [1]तयोश्च कपालपिनाकमात्रशक्तत्वात् ।

---

### गतोऽस्तमर्कः इत्यादौ विना शक्तिलक्षणे अनेकार्थप्रतीतेः व्यञ्जना स्वीकरणीया

किञ्च, 'गतोऽस्तमर्कः' इत्युदासीनवाक्यश्रवणोत्तरं, अपो हर, नावः (मद) [बन्ध] नीयाः, सान्ध्यो विधिरुपास्यः, संजातोऽयमभिसारसमयः, कर्मकरणान्निवर्तध्वम्, नातिदूरगमनमुचितम्, गावो बन्धनीयाः, संतापोऽधुना निवृत्तः; [2]इत्यनेकार्थप्रत्ययो जायते । सचानुभवसिद्धः । स च शब्दान्वयव्यतिरेकानुविधानात् शाब्द एव । तत्र च शक्तिलक्षणयोरभावात् व्यञ्जनाख्यवृत्त्यन्तरमवश्यमेषितव्यम् । नचैवं वाक्यभेद इति वाच्यम् । शक्य ल(क्षणा) [क्ष्या] र्थ भेदादेव तदङ्गीकारात् ।

---

1 तयोश्चेत्यादि — कपालि-पिनाकिपदयोः जुगुप्सा-शौर्यवाचकत्वाभावेन तयोः प्रतीतिः व्यञ्जनयैवेति भावः ।

2 अनेकार्थप्रत्यय इति — तत्तद्बोद्धवैशिष्ट्येनेति शेषः ।

अत एव नार्थापत्त्यनुमाने । अन्वयव्यतिरेकाभ्यां शब्दस्यैवात्र कारणत्वावधारणात् । [1]व्याप्त्याद्यप्रतिसन्धानाच्च ।

*इदमत्रावधेयम् । गजज्ञानोत्तराधोरणज्ञानवत् गतोऽस्तमर्कः इति वाक्यात् सूर्यास्तज्ञानोत्तरं सूर्यास्तसंबन्धिसन्ध्याचन्दनादिकरणपदार्थज्ञानोपपत्तौ, किमर्थं तदर्थबोधे व्यञ्जनास्वीकारः । न च सर्वार्थस्य सूर्यास्तसंबन्धित्वादेकस्य पुंसः न कुतः सर्वज्ञानमिति वाच्यम् । गजसंबन्धिपदार्थबाहुल्ये, कदा चित् कस्य चिदेव उद्बुद्धादृष्टवशा [द]भि [ल]षितस्मृतिवदुप (पन्नः) [पत्तेः । ] नचैकसंबन्धिशक्तप(क्ष)[द]मेवापरसंबन्धिस्मारकमिति वाच्यम् । एवंविधनियमे प्रमाणाभावादनुभवविरोधाच्च ।

— —

1 व्याप्त्याद्यप्रतिसन्धानेति — आदिना अन्यथानुपपत्तिपरिग्रहः ।

* इदमत्रावधेयमित्यादिः अनुभवविरोधाच्च इत्यन्तग्रन्थः किञ्चेत्यादिनोक्तस्य निराकरणरूपः प्रकृते न घटनामर्हति । अतः कैश्चित् टिप्पणे खण्डनरूपेण लिखितः स्यात् । सोऽत्र ग्रन्थावयवतया संयोज्य लेखकैर्लिखित इति भाति ।

### व्यङ्ग्यस्य शक्यार्थात् स्वरूपाश्रयविषयभेदेन भिन्नत्वात् व्यञ्जना स्वीकार्या

अपि च वैयञ्जनिकोऽर्थः शक्यार्थभिन्नः, स्वरूपादिभेदात् । तथाहि—'निश्शेषच्युतचन्दनम्' इत्यादौ [1]निषेधो वाच्यः, [2]विधिर्व्यङ्ग्यः । एवं,

'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥'

इत्यत्र वाच्यार्थः संशयरूपः । व्यङ्ग्यस्तु शान्तशृङ्गारिणोः यथायथमन्यतरनिश्चयरूपः ।

'कथमवनिप, दर्पो यन्निशातासिधारा-
दलनविगलितमूर्ध्नां विद्विषां स्वीकृतश्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैः वल्लभा कीर्तिरेभिः ॥'

इत्यादौ वाच्यो निन्दारूपः । व्यङ्ग्यस्तु स्तुतिरूपः [3]इति स्वरूपभेदः । वाच्यार्थस्य प्रथमं प्रतीतिः, अनन्तरं व्यङ्ग्य-

---

1 निषेधः — नायकान्तिकगमनस्य निषेधः ।

2 विधिः — दूतीसंयोगः ।

3 स्तुतिरूप इति — स्वर्गव्यापिकीर्तिमत्त्वेन राजस्तुतिरूप इत्यर्थः ।

स्येति कालभेदः। वाच्यस्य शब्द एव प्रतिपादकतया आश्रयः। व्यङ्ग्यस्य तु शब्द-तदेकदेश-तदर्थ-वर्ण-घटना-चेष्टाद्या इत्याश्रयभेदः। [1]वाच्यस्य शब्दानुशासनज्ञानं निमित्तम्। व्यङ्ग्यस्य तु प्रति [भा] विशेषः इति निमित्त-भेदः।

[2]'कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमर(यत्रा)[पद्मा]घ्राणनशीले वारितवामे सहस्वेदानीम्॥'

इत्यत्र वाच्यार्थस्य नायिका [3]विषयः। व्यङ्ग्यस्य तु भ्रमरेणास्या अधरो दष्टः, न जारेणेति तत्पतिः, इदानीन्तनमेतन्मया कथं चित् समाहितं तद्रक्षणाय, अतः परं त्वयैव विधेयमिति उपपतिः, प्रियाया एव हि (सर्ववि) [सव्रणा] धरदर्शने प्रियस्य कोपो नाप्रियायाः इति सपत्नी, सखी अहमेव समाधाननिपुणा, अतो मय्येव विश्वसिहि इति प्रतिवेशिनी

---

1 वाच्यस्य — वाच्यप्रतीतेः। एवमेव व्यङ्ग्यस्येत्यस्यापि व्यङ्ग्यप्रतीतेरित्यर्थो बोध्यः।

2 कस्य वेति — जारेणोपभुक्तां नायिकां पतिकोपात् रक्षितुं सख्या उक्तिरियम्।

3 विषयः — बोधाश्रयत्वेन वक्तुरभिप्रायविषयः। तत्पतिः, उपपतिः, सपत्नी, प्रतिवेशिनी, इत्यत्रापि विषयपदानुषङ्गो बोध्यः।

इति विषयभेदः । गतोऽस्तमर्कः इत्यत्र दर्शितनयेन संख्याभेदः । एवं सत्यपि शक्यव्यङ्ग्ययोरभेदे नीलपीतादेरपि भेदो न स्यादिति ।

तस्मादुपदर्शितरीत्या काव्यात् रसादिप्रतिपत्त्यर्थं व्यञ्जनाख्यवृत्त्यन्तरमावश्यकम् । तत्प्रतीतिश्चेत्थम् । काव्यादौ [1]दर्शनश्रवणमहिम्ना सीतात्वादिविशेषत्यागेन साधारण्येन स्त्रीत्वादिना प्रतीतैः विभावाद्यैः [2]व्यञ्जितवृत्तिरूप–रत्याद्यवच्छिन्नचैतन्यं स्वप्रकाशमानन्दांशे भग्नावरणं [3]विभावादिसंभिन्नमभिव्यक्तं रसः । सा चाभिव्यक्तिः काव्यादौ शब्देनाप्यपरोक्षरूपैव । 'यत्साक्षाद[4]परोक्षा (द्ब्रह्म) [द्ब्रह्म]' इति श्रुतेरिति वदन्ति ॥

---

1 दर्शनश्रवणमहिम्नेति — नाट्ये दर्शनं, श्रव्यकाव्ये श्रवणमिति विभागः ।

2 वृत्तीति — अन्तःकरणवृत्तीत्यर्थः ।

3 विभावादिसंभिन्नं — विभावादिमिश्रितम् ।

4 अपरोक्षादिति — अपरोक्षमित्यर्थः ।

## विभावाद्युपस्थितरत्यादेर्भानमेव रसाभिव्यक्तिरिति व्यञ्जना न स्वीकरणीयेति नैयायिकानुयायिमतम्

अत्र नैयायिकानुयायिनो वदन्ति । अस्त्वेवमापाततः प्रक्रिया। तथापि चैतन्यस्यातिप्रसक्ततया वृत्तिरूपस्य अन्यस्य वा रत्यादेरेव रसत्वं पर्यवस्यति । एवं चोक्तरीत्या विभावाद्युपस्थितस्य रत्यादेर्भानसंभवे रसाभिव्यक्तिः इत्यस्तु, किं व्यञ्जनया । रसाभिव्यक्तौ काव्यादिजन्यत्वप्रवादोऽपि रत्याद्युस्थापकविभावाद्युपस्थितेः काव्यादिजन्यत्वेन काव्यादिप्रयोज्यत्वपर एव । एवं रसाभिव्यक्तेरुक्तरूपायाः आनन्दजनकत्वादेवानन्दविषयकत्वोपचारः ।

---

## कल्पितदुष्यन्तत्वावच्छादिते स्वात्मनि जायमानः अनिर्वचनीयः शकुन्तलाविषयकरतिरेव रसः इति मतनिरूपणं, तन्निरासश्च

[1]एतेन, काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ

---

1 एतेनेति — अस्य परास्तमित्यत्रान्वयः । इदं च मतं नव्यमतमिति रसगङ्गाधरे प्रतिपादितं बोध्यम् ।

गृहीतायां अनन्तरं च सहृदयोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्यन्तत्वावच्छादिते स्वात्मनि, [1]अज्ञानावच्छन्ने (ष्टकिं) [शुक्ति]काशकल इव रजतखण्डः समुत्पद्यमानो[2]ऽनिर्वचनीयः [3]साक्षिभास्यः शकुन्तलादिविषयकरत्यादिरेव रसः। अयं च कार्यो दोषविशेषस्य, नाश्यश्च तन्नाशस्य। स्वोत्तरभाविना लोकोत्तरानन्देन भेदाग्रहादानन्दपदव्यवहार्यो भवति। [4]स्वपूर्वोपस्थितरत्यादिना तदग्रहात्, रतित्वेनैकत्वाध्यवसानाद्वा व्यङ्ग्यो वर्णनीयश्चोच्यते। अवच्छादकं दुष्यन्तत्वमपि अनिर्वचनीयमेव। अव (च्छे) [च्छा] दकत्वं च रत्यादिविशिष्टबोधे विशेष्यतावच्छेदकत्वम्।

---

1 अज्ञानावच्छन्ने — शुक्तित्वप्रकारकाज्ञानविषये।

2 अनिर्वचनीयः — सत्त्वेन असत्वेन च निर्वक्तुमशक्यः, सदसद्विलक्षणः।

3 साक्षिभास्यः — दुष्यन्तोऽहं शकुन्तलाविषयकरतिमानिति साक्षिज्ञानविषयः।

4 स्वपूर्वोपस्थितेति — स्वस्य-अनिर्वचनीयरतेः उत्पत्तिपूर्वं व्यञ्जनया काव्याद्गृहीत-दुष्यन्तनिष्ठशकुन्तलाविषयकरत्यादिना भेदाग्रहादिति पर्यवसितोऽर्थः।

[1]अत एव, दुष्यन्तादिनिष्ठस्य रत्यादेः अनास्वाद्यत्वात् न रसत्वम् । स्वनिष्ठस्य तस्य शकुन्त [लाविषयत्वं नेति शङ्काया अ] प्यनवकाशः, इत्यादिकं परास्तम् ।

व्यञ्जनाव्यापारस्य अनिर्वचनीयख्यातेश्चानुपगमेऽपि [2]प्रागुक्तदोषमहिम्ना स्वात्मनि दुष्यन्ताद्यभेदावगाहिनः शकुन्तलादिविषयकरत्यादिमदभेदबोधस्य काव्यार्थचिन्तनाजन्यस्य विलक्षणविषयताशालिनः रसत्वाभ्युपगमे बाधकाभावात् । स्वाप्नादिताद्दशबोधस्य काव्यार्थचिन्तनाऽजन्यतया न रसत्वम् । अत एव न तत्र ताद्दशानन्दोऽपि ।

अथैवमपि स्वस्मिन्नविद्यमानस्य रत्यादेः कथं स्वस्यानुभवः स्यादिति चेत् । मैवम् । नह्ययं लौकिकःसाक्षात्कारो रत्यादेः, येन लौकिकसाक्षात्कारे विषयस्य हेतुतया अवश्यं विषयसद्भावापेक्षा स्यात् । अपि तु भ्रमात्मकः अलौकिकः ।

---

1 अत एव – सहृदये अनिर्वचनीयस्य-शकुन्तलाविषयकरति-दुष्यन्तत्वादेरुत्पादादेव ।

2 दोषेति – भावनारूपदोषेत्यर्थः ।

तत्र च न [1]विषयापेक्षा । [2]आस्वादस्य रसविषयकत्वव्यवहारस्तु रत्यादिविषयत्वावलम्ब एव । एवं, चेष्टादिस्थलेऽपि । चेष्टाद्युपस्थापिततदर्थानां मानस एव बोधः । युज्यते चैतत् । अन्यथा वृत्तेः पदव्यापारत्वनियमेन व्यञ्जनायाः [3]पारिभाषिकवृत्तित्वोपगमापत्तेः । तदुपगमे प्रमाणाभावाच्च ।

अत एव, तात्पर्याविषयीभूतस्याप्यर्थस्य काव्यादितो बोध उपपद्यते । मानसबोधे तात्पर्यज्ञानस्याहेतुत्वात् । न च बाधितार्थस्य [4]कथं मानसो बोधः । व्यञ्जनायास्तु [5]तद्बोधकत्वेन धर्मिग्राहकमानसिद्धतया न दोष इति वाच्यम् ।

---

1 न विषयापेक्षेति — शुक्तौ रजतभ्रमः अलौकिकसाक्षात्कारः । तत्र आपणादौ पूर्वं ज्ञातमेव रजतं ज्ञानलक्षणप्रत्यासत्त्या भासते । न पुरोवर्तिदेशे साक्षात्कारविषयरजतमस्ति इत्यन्यथाख्यातिवादिनां सिद्धान्तो बोध्यः ।

2 रत्यादिबोधस्य रसत्वे, आस्वादस्य कथं रसविषयत्वमित्याशङ्क्याह — आस्वादस्येति ।

3 पारिभाषिकवृत्तित्वेति—आलंकारिकसंकेतरूपपरिभाषया वृत्तिपदप्रतिपाद्यत्वेत्यर्थः ।

4 कथमिति — बाधज्ञानस्य प्रतिबन्धकस्य सत्त्वादिति भावः ।

5 तद्बोधकत्वेन बाधितार्थबोधकत्वेन ।

तत्रोक्तदोषमहिम्ना बाधाप्रतिसन्धानात् । 'धर्मिकल्पनातः' इति न्यायेन व्यञ्जनाकल्पनमपेक्ष्य [1]तादृशदोषाजन्यत्वस्यैव बाधप्रतिबध्यतावच्छेदकत्वकल्पनौचित्याच्चेति संक्षेपः ।(आहार्य-स्यापीच्छाया अनैयत्येनासंभवः) ॥

---

योगरूढिस्थले रूढ्यर्थाविषयस्य योगार्थविशिष्टस्य प्रतीतये व्यञ्जना स्वीकार्येति आधुनिकालंकारिकमतप्रतिपादनम्

केचित् [2]आधुनिकालंकारिकास्तु, योगरूढिस्थले [3]रूढि-शक्तेः अवयव[4]शक्तिप्रतिबन्धकत्वस्य सर्वतान्त्रिकसंप्रतिपन्नतया रूढ्य [र्था] विषयस्य योगालिङ्गितार्थान्तरस्य विना व्यञ्जनां प्रतीतिर्दुरुपपादा । तथाहि—

---

1 तादृशदोषेति — भावनारूपदोषविशेषेत्यर्थः

2 आधुनिकालंकारिकाः — रसगङ्गाधरकाराः जगन्नाथपण्डित-राजाः ।

3 रूढिशक्तेः — समुदायशक्तिज्ञानस्य ।

4 अवयवशक्तिप्रतिबन्धकत्वस्य — अवयवशक्तिग्रहजन्यबोधप्रति-बन्धकत्वस्य । एवमग्रेऽपि ।

1'अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम् ।
तिष्ठन्ति चपला यत्र स कालः समुपागतः ॥'

अत्र (नूक्तानां) [दुर्बलानां] द्रव्यमपहृत्य जलवाहकैः पुरुषैः सह पुंश्चल्यो रमन्ते इत्यर्थान्तरं, न तावत् अबला-वारिवाह-चपलाशब्दैः योगरूढ्या शक्यते(द्यपितुं),[बोधयितुं], (वित्वा)[विद्युदा] द्यघटितस्यैव 2तस्यार्थस्य प्रतीतेः । अन्यथा चमत्कारो न स्यात् । एतादृशार्थप्रतीतिरेव नास्तीति वक्तु-मयुक्तम् शब्दार्थव्युत्पत्तिमद्भिः सद्भिः । नापि केवलया [अवयव] शक्त्या । योगरूढिस्थले पङ्कजादिपदेषु पद्मत्व-प्रकारकबोधविषय एव पङ्कजनिकर्तृत्वान्वयस्य सर्वसंमतत्वात्। चपलादिपदात् पुंश्चलीत्वबोधस्य योगादसंभवाच्च । तदयं संग्रहश्लोकः—

'योगरूढस्य शब्दस्य 3योगे रूढ्या नियन्त्रिते ।
धियं 4योगस्पृशोऽर्थस्य(पा)[या]सूते व्यञ्जनैव सा॥'

इत्याहुः ।

---

1 अबलानामिति — वर्षाकालारम्भवर्णनम् । नायिकासदृश्यः विद्युतः जलपूर्णैः मेघैः सह सदा तिष्ठन्ति इति प्रकृतार्थः ।

2 तस्यार्थस्य —पुंश्चल्यादिघटितस्यार्थान्तरस्य ।

3 योगे — अवयवशक्तौ ।

4 योगस्पृशः — अवयवशक्तिबोध्यार्थविशिष्टस्य ।

## उक्तमतनिरासः

तदेतदालोचनीयम् । 'अबलानाम्' इत्यादि प (क्ष) [द्ये] तथाविधश्लिष्टपदोपादानकविसंरम्भोन्नीतकवि[1]तात्पर्य-सहित–योगशक्त्यैव तादृशबोधोदयाङ्गीकारस्य वक्तुमुचित-त्वात् । अन्यथा तादृशकविसंरम्भवैयर्थ्यापत्तेः । एवं च (यत्तु) [यत्र] न तथा कविसंरम्भः पङ्कजादिपदे, तत्र प्राचां रूढिः योगमपहरति इत्युक्तिः ।

वस्तुतस्तु, समुदाया (द)[वयव] शक्त्योः यत्र [2]विरोधः, तत्र अश्वबाल–मण्डप–गजकणादिपदेषु समुदायशक्तिः योग-शक्तिप्रतिबन्धिका, नान्यत्र । अन्यथा चन्द्रे रूढात् सोम-पदात् सह उमया वर्तते इति योगात् सदाशिवस्य, (विष्यौ) [विष्णौ] [3]तथाविधात् पुरुषोत्तमपदात् पुरुषविशेषस्य प्रतिपत्ति-र्न स्यात् सर्वसंमता ।

---

1 तात्पर्यसहितयोगशक्त्यैवेति – तृतीयायाः प्रयोज्यत्वमर्थः । एवेन व्यञ्जनाया व्यवच्छेदः ।

2 विरोधः – समुदायशक्तिबोध्ये अवयवशक्तिबोध्यार्थासंबन्ध इति यावत् ।

3 तथाविधात् – योगरूढात् ।

'चपलापदात् पुंश्चलीत्वबोधस्यासंभवाच्च' इत्युक्तिरपि, वपेरन्वोपधायाः (उ-सू.) इति सूत्रे, चोषति—मन्दं गच्छति जारान् प्रतीति चपला इत्यु(क्ता) [क्त्वा] 'चपला कमला विद्युत्पुंश्चली-पिप्पलीषु च' इति विश्व मेदिनीकोशादिकमुदाहरद्भिः उणादि-वृत्तिकृद्भिः प्रत्याख्याता ।

यच्चाभ्यधायि, रूढिशक्तेरवयवशक्तिप्रतिबन्धकत्वस्य सर्वता-न्त्रिकसंप्रतिपन्नतयेति । तदपि, 'पङ्कजादिपदे, न समुदाय-शक्तिः मानाभावात् । पङ्कजनिकर्तृत्वाश्रयत्वेनैव बोधः, न तु पद्मत्वेन । न नु तर्हि कुमुदादौ प्रयोगापत्तिरिति चेन्न । इष्टत्वात्, पद्मत्वस्य तत्प्रयोगो[1]पाधित्वाद्वा ।' इति मीमांसक-लिखनादर्शननिबन्धनमेवेत्यास्तां विस्तरः ।

---

1 प्रयोगोपाधित्वादिति -- पङ्कजपदप्रयोगे निमित्तत्वादित्यर्थः । मथुरानाथभट्टाचार्यैः उपाधिपदस्य निमित्तार्थकत्वमुक्तं बोध्यम् ।

## उपसर्गाणां द्योतकताविचारः

### प्रजयतीत्यादौ जये प्रकर्षबोधाय प्रेत्युपसर्गस्य प्रकर्षे व्यञ्जना स्वीकरणीयेत्याक्षेपः

ननु यदि शक्तिलक्षणे एव वृत्ती, तदा प्रजयतीत्यादौ कथं प्रकृष्टजयादिप्रतीतिः । न हि प्रकृष्टजयादेः प्राद्युपसर्ग-वाच्यतया तथा प्रतीतिः संभवति । तथा सति तस्याप्रकृत्यर्थ-त्वेन तस्याख्यातार्था [न]न्वयापत्तेः, प्रत्ययानां प्रकृत्यर्थान्वि-तस्वार्थबोधकत्वव्युत्पत्तेः । प्रकृत्येकदेशार्थस्य प्रत्ययार्थान्वये च राजपुरुषमानयेत्यादौ [1]राजानमानयेत्यादिबो (धोपपत्तः) [धापत्तेः] । नापि प्रकृष्टजयादेः ज्यादिधात्वर्थतया तथा प्रतीतिः । तथा सति जयतीत्यादौ प्राद्युपसर्गं विनापि प्रकृष्ट-जयादिप्रतीत्यापत्तेः । व्यञ्जनाङ्गीकारे तु ज्यादिधात्वर्थ-जयादौ प्राद्युपसर्गेण व्यञ्जनया प्रकर्षादिबोधे, प्रकृष्टजयादि-प्रतीतिः संभवतीति व्यञ्जनाख्यवृत्त्यन्तरमवश्यमङ्गीकार्यमिति चेन्न ।

---

1 राजानमानयेत्यादिबोधापत्तेरिति — राजानमानय इति वाक्य-जन्यबोधसमानाकारस्य राजकर्मकानयनबोधस्यापत्तेरित्यर्थः।

**ज्यादेः प्रकृष्टजये लक्षणा, प्राद्युपसर्गः लक्षणातात्पर्यग्राहकः द्योतकः इति सिद्धान्तकथनम्**

ज्यादिधातूनां प्रकृष्टजयादौ लक्षणयैव तादृशप्रतीतिसंभवात् । प्राद्युपसर्गाणां च धातोस्तादृशार्थे तात्पर्यग्राहकतयैवोपयोगः । अत एव प्राद्युपसर्गाणां द्योतकत्वप्रवादोऽपि । धातोः विशिष्टार्थे तात्पर्यग्राहकत्वस्यैव द्योतकत्वात् । न च प्राद्युपसर्गाणां प्रकर्षादौ शक्तिरेवास्त्विति वाच्यम् । अनन्यलभ्यस्यैव शब्दार्थतया उपसर्गाणां धातुमन्तरेण प्रयोगाभावेन धातुत एव तल्लाभे तत्रोपसर्गाणां शक्तिकल्पनानौचित्यात् ।

---

**प्राद्युपसर्गाणां प्रकर्षादौ शक्तिरेवोचिता इति पूर्वपक्षः**

ननु प्राद्युपसर्गाणां प्रकर्षादौ शक्तिरेवोचिता, प्राद्युपसर्गेण नियमतः प्रकर्षादेरुपस्थापनात् । तस्य च धात्वर्थजयादौ आश्रयतयाऽन्वयेनैव [1]विशिष्टजयादिलाभसंभात् ।

---

1 विशिष्टजयेति — प्रकर्षविशिष्टजयेत्यर्थः ।

न च [1]नामार्थयोर्भेदान्वयासंभवान्नैवमिति वाच्यम् । अव्ययातिरिक्तनामार्थयोरेव भेदान्वयस्याव्युत्पन्नत्वात् । घटो न इत्यादावन्वयानुरोधेन तादृशव्युत्पत्तिसंकोचस्यावश्यकत्वात् । युज्यते चैतम् । अन्यथा, यस्मात् यस्य नियमेनोपस्थितिः, तस्य तदशक्तत्वे विभक्तेरपि संख्यादिशक्तत्वं न स्यात्। तत्रापि प्रकृतिं विना प्रत्ययप्रयोगाभावेन प्रकृतित एव संख्याविशिष्टार्थबोधसंभवादिति चेन्न ।

---

1 नामार्थयोर्भेदान्वयासंभवादिति— उपसर्गार्थस्य प्रकर्षस्य आश्रयतारूपभेदसंबन्धेन धात्वर्थे जये अन्वयस्योक्तत्वात् नामार्थधात्वर्थयोर्भेदान्वयाभावशङ्कैव युज्यते, न नामार्थयोर्भेदान्वयशङ्का । नामार्थयोर्भेदान्वयस्य पूर्वमनुक्तेः । तस्मात्, 'न च तण्डुलः पचतीति प्रयोगवारणाय नामार्थधात्वर्थयोः भेदेनानन्वयव्युत्पत्तेरावश्यकतया नामार्थधात्वर्थयोः भेदान्वयासंभवान्नैवमिति वाच्यम् । अव्ययातिरिक्तनामार्थधात्वर्थयोरेव भेदान्वयस्याव्युत्पन्नत्वात् तण्डुलं पचति न तेमनमित्यादौ तेमनकर्मकत्वाभावस्य धात्वर्थे अन्वयानुरोधेन तादृशव्युत्पत्तिसंकोचस्यावश्यकत्वात् ।' इति ग्रन्थपाठः समीचीनः स्यात् ।

**प्रतिष्ठते इत्यादिस्थलानुरोधेन प्राद्युपसर्गाणां निरुक्तद्योतकत्वमेव न प्रकर्षादिवाचकत्वमिति समाधानम्**

प्रतिष्ठते इत्याद्यनुरोधेन उपसर्गाणां शक्त्युपगमासंभवात् । तथाहि—प्रतिष्ठते इत्यादौ गमनं शक्त्या, स्थाधातुना बोधयितुं न शक्यते । स्थाधातोः गतिनिवृत्तिरूपस्थितिशक्त (मात्र) त्वात्, 'ष्ठा गतिनिवृत्तौ' इत्यनुशासनात् । नापि प्रोपसर्गेण गमनं बोधयितुं शक्यते । तथासति तस्याख्यातार्थान्वयित्वानुपपत्तेः, [1]प्रत्ययानामिति व्युत्पत्तेः । किन्तु स्थाधातुरेव लक्षणया गमनबोधकः, प्रोपसर्गस्तु तात्पर्यग्राहकः इत्यवश्यमुपेयम् । न च स्थाधातुना गतिनिवृत्तिरुच्यते, प्रशब्देन चाभावः इति गत्यभावो नास्तीति प्रतीतौ गमनबोधः सुलभ एव, तदभावाभावस्य तद्रूपत्वादिति वाच्यम् । तावत गमनाभावाभावत्वेन गमनबोधेऽपि गमनत्वेन गमनबोधस्यानुभवसिद्धस्यानुपपन्नता [2]तादवस्थ्यात् ।

---

1 प्रत्ययानामिति — प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिः । आख्यातस्य प्रकृतिः धातुः, नोपसर्गः इति भावः ।

2 अनुपपन्नतातादवस्थ्यादिति — धात्वर्थगमनाभावस्य प्रोपसर्गार्थाभावान्वयेन गमनाभावाभावात्मकगमनबोधेऽपि, तस्य आख्यातप्रकृत्यर्थताविरहेण आख्यातार्थान्वयानुपपन्नतातादवस्थ्यमपि बोध्यम् ।

तस्मात् प्रतिष्ठते इत्यादावुपसर्गस्य उक्तरीत्या द्योतकत्वावश्यकत्वे, एकत्र निर्णीतः शास्त्रार्थः अन्यत्रापि भवति इति न्यायेन, सर्वत्र प्राद्युपसर्गाणां धातोर्विशिष्टार्थतात्पर्यग्राहकतयोपयोगमुपेत्य द्योतकत्वमेवोपेयमित्युपसर्गाणां द्योतकत्वमेव न वाचकत्वम् ।

---

**प्रोपसर्गस्य प्रतिष्ठते इत्यत्र द्योतकत्वेऽपि प्रजयतीत्यादौ वाचकत्वमेव युक्तमित्याशङ्का**

ननु प्रतिष्ठते इत्यत्र उपसर्गस्य उक्तयुक्त्या द्योतकत्वेऽपि प्रजयतीत्यादौ वाचकत्वमेव युक्तं, न तु द्योतकत्वम् । एकत्र द्योतकत्वेनैव सर्वत्र द्योतकत्वाङ्गीकारे, विभक्तेरपि संख्यावाचकत्वानुपपत्तेः, तत्रापि [1]प्रकृतिलक्षणयैव संख्याविशिष्टार्थबोधसंभवात् । किं बहुना, नञिवादिनिपातानामपि वाचकत्वविलोपप्रसङ्गः । तेषामपि [2]स्वातन्त्र्येण

---

1 प्रकृतिलक्षणयैवेति— घटः इत्यादौ घटप्रातिपदिकस्यैव एकत्वविशिष्टे घटे लक्षणयैवेत्यर्थः ।

2 स्वातन्त्र्येणेति — प्रातिपदिकान्तरसमभिव्याहारं विना केवलं, न, इति, इव, इति च प्रयोगाभावादित्यर्थः ।

प्रयोगाभावात् समभिव्याहृतप्रातिपदिकैरेव लक्षणया घटाभावादिबोधसंभवादिति चेत् ।

उपसर्गाणामवाचकत्वे कस्याप्यनुभवस्यापलापाभावात्, उपास्यते गुरुरित्यादौ कर्मणि लकारोपपत्तेश्च, उपसर्गाणां द्योतकत्वमेव

मैवम् । विभक्तेः संख्याद्यवाचकत्वे, चैत्रः इत्यादिशब्दात् जायमानस्य एकत्वादिप्रकारकचैत्रादिविशेष्यकशाब्दबोधस्य सकलानुभवसिद्धस्यापलापप्रसङ्गः । [1]एकपदार्थस्य शाब्दबोधासंभवात् । एवं, नञादिनिपातानामभावाद्यवाचकत्वे, घट इव, न इत्यादिशब्दात् लुप्तविभक्त्युपस्थित्यभावदशाया[2]मुक्तयुक्त्या शाब्दबोधापलापप्रसङ्ग इति, विभक्तेः नञादिनिपातानां च संख्याऽभावादिवाचकत्वमावश्यकम् । उपसर्गाणामवाचकत्वे तु न कस्याप्यनुभवस्य अपलाप इति प्राद्युपसर्गाणां द्योतकत्वमेव न तु वाचकत्वम् । किञ्च, उपसर्गाणां वाचकत्वे, उपास्यते गुरुः, अनुभूयते सुखम् इत्यादौ

---

1 एकपदार्थस्येति — पदद्वयार्थयोः संसर्गानुभवस्यैव शाब्दबोधरूपत्वमिति भावः ।

2 उक्तयुक्त्या — घटपदस्यैकस्यैव घटसादृश्याद्यर्थकत्वे, एकपदार्थस्य शाब्दबोधासंभवयुक्त्या ।

गुर्वादिकर्मणो[1]ऽभिधानं न स्यात्, तस्य धात्वर्थकर्मताविरहात्, उपासनादेरुपसर्गार्थत्वात् । तस्मात् तत्र कर्मणि लकारानुपपत्त्या उपसर्गाणां द्योतकत्वमेव ।

---

## उपसर्गाणामपि वाचकत्वमेवेति कन्दलीकारमतानुयायि पक्षनिरासः

अत एव, [2]उपदर्शितानुभवस्य विवादग्रस्ततया तस्यापलापे बाधकाभावेन विभक्तेः, निपातानां च संख्याऽभावादिवाचकत्वं न स्यादिति [3]प्रतिबन्द्या उपसर्गाणामपि वाचकत्वमेव । अन्यलभ्यस्य तु तत्रैव न शब्दार्थत्वम्, यत्र तदनङ्गीकारे न प्रतिबन्द्यादिदोषः इति कन्दलीकारमतानुयायिनां प्रलापोऽपि निरस्तः । [4]उक्तयुक्त्या उपसर्गाणां द्योतकत्वस्यावश्यकत्वात् ।

---

1 अभिधानं न स्यादिति— धात्वर्थकर्मण्येव धातोः लकारविधानादिति भावः ।

2 उपदर्शितानुभवस्येति — चैत्रः इत्यत्र एकत्वप्रकारकचैत्रविशेष्यकशाब्दबोधानुभवस्य ।

3 प्रतिबन्दी — समानं विरोध्युत्तरम् ।

4 उक्तयुक्त्या — उपास्यते इत्यादौ कर्मणि लकारानुपपत्तिरूपयुक्त्या ।

धात्वर्थव्यापारे अनुकूलतासंबन्धेन विशेषणतयान्वयित्वरूपस्य धात्वर्थतावच्छेदकत्वस्य [1]तत्र सत्त्वात् ।

---

## निपातानां वाचकत्वे प्रयोगातिप्रसङ्गशङ्कापरिहारौ

न च चादिनिपातानां वाचकत्वे, कीदृशः समुच्चयः इतिवत्, कीदृशः च इत्यस्यापत्तिः । एवं शोभनः समुच्चयो द्रष्टव्यः इतिवत्, शोभनः च द्रष्टव्यः इत्यस्य प्रयोगस्याप्यापत्तिरिति वाच्यम् । (त्वादि)[चादि] निपातानां स्वार्थस्य परविशेषणतयैव बोधकत्वस्य व्युत्पत्तिसिद्धतया [2]विशेषणान्वयप्रसङ्गाभावेन तथाऽऽपत्तिविरहात् ।

---

## निपातानां वाचकत्वे, शरैरुस्रैरिवेत्यत्र उस्रपदोत्तरतृतीयानैरर्थक्याक्षेपपरिहारौ

यत्तु, निपातानां वाचकत्वे, 'शरै (हस्ते) [रुस्रै] रिवोदीच्यानुद्धरिष्यन् रसानिव' इत्यादौ (रुस्र) [उस्र] सदृशैः

---

1 तत्र — साक्षात्पदार्थे प्रत्यक्षरूपफले ।

2 विशेषणान्वयप्रसङ्गाभावेनेति — तथाच शोभनादिपदार्थविशेष्यतया भानं न संभवतीति भावः ।

(शब्दैः) [शरैः] रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थकतया तत्रो-(क्त) [स्त्र] पदार्थस्या[1]करणतयोस्रपदोत्तरतृतीयाया नैरर्थक्य-प्रसङ्गः । निपातानां द्योतकत्वे तु न दोषः, (नञ्) [उस्र] पदार्थस्योस्रसदृशस्य करणत्वसंभवेन उस्रपदोत्तरतृतीयायाः सार्थकत्वादिति ।

तदसत् । उपमानोपमेयवाचकपदयोः समानविभक्तिकत्वे एव उपमानोपमेयभावस्य साधुतया उस्रपदोत्तरतृतीयायाः साधुतासंपादकत्वेन नैरर्थक्यप्रसङ्गाभावात् ।

---

## निपातानां वाचकत्वे घटश्च इत्यत्र षष्ठीं विना अन्वयानुपपत्ति-शङ्कापरिहारौ

यदपि, निपातानां वाचकत्वे घटश्च इत्यादौ विना षष्ठी-मनन्वयापत्तिः, प्रातिपदिकार्थयोः विभक्त्यर्थमद्वारीकृत्य भेदे-नान्वयायोगात् । अन्यथा राजा पुरुषः [2]इतिवदन्वयापत्तेरिति ।

---

1 अकरणतया —उध्दरणक्रियायां करणत्वाभावेन ।

2 इति वत् — इति वाक्यादिव ।

तदप्यसत् । प्रातिपदिकार्थे [त्यत्र] निपातातिरिक्त-त्वेन विशेषणात् । किञ्च, चादीनां समुच्चिताभिधायकत्वान्न [1]भेदनिबन्धना षष्ठी । समुच्चितो घटः इत्यभेदेनैवान्वयः । न च समुच्चिते धर्म्यंशे शक्तिकल्पने गौरवमिति वाच्यम् । प्रामाणिकगौरवस्यादोषत्वात् । एवं च समुच्चय[2]स्यैकदेश-त्वात् तत्र [न] सुन्दरादिविशेषणान्वयोऽपि ।

---

घटश्चेत्यत्र घटसमुच्चययोरभेदान्वयापत्तिनिरासः

[3]एतेन, घटश्चेत्यादौ विरुद्धविभक्त्यनवरुद्धप्रातिपदि-कार्थत्वादभेदान्वयापत्तिः घटसमुच्चययोरित्यपि निरस्तम् । [4]घटपदस्य घटप्रतियोगिके लक्षणया अभेदान्वये इष्टापत्तेश्च ।

---

1 भेदनिबन्धनेति — समुच्चयस्य चकारार्थत्वे तस्य घटाद्भिन्नतया तस्मिन् घटसंबन्धबोधिका षष्ठी अपेक्ष्येतेति भावः ।

2 एकदेशत्वात् — चकारार्थैकदेशत्वात्, पदार्थैकदेशत्वा-दिति यावत् ।

3 एतेन — चकारस्य समुच्चिताभिधायकत्वात् समुच्चयस्य पदा-र्थैकदेशत्वेन ।

4 चकारस्य समुच्चयार्थत्वं स्वीकृत्याप्याह — घटपदस्येति ।

## धातुलोपस्थले व्यतिसे इत्यादौ उपसर्गस्य वाचकत्वमावश्यकमित्याक्षेपः, संप्रदायमतेन तत्परिहारश्च

ननु, व्यतिसे इत्यत्रोपसर्गस्य वा (न्व) [च] कत्वमावश्यकम् । तत्र धातोर्लोपिन तत्र लक्षणाया असंभवात् । तथाहि विपूर्वातिपूर्वासधातोः लडात्मनेपदमध्यमपुरुषैकवचनान्तं व्यतिसे इति । अस भुवि [इति] धातुः । अयं धातुरदादिगणमध्यस्थः परस्मैपदी । 'कर्तरि कर्मव्यतिहारे' (पा. सू. 1-3-14) इति सूत्रेणात्मनेपदम् । सूत्रार्थश्च, धातोः (कर्त्राष्या)[कर्तर्या]त्मनेपदं स्यात् क्रियाविनिमये(प्रति)[सति । ] अस् था इति स्थिते 'थासः से' (पा. सू. 3-4-80) इति लस्य थासः से स्यात् । व्यति अस् से इति जाते, कर्तरि शप् । अदिप्रभृतिभ्यः शपो लुक् । (स्नसोरल्लोपः) '[अतो लोपः' (पा. सू. 6-4-48)] इति सूत्रेणाकारलोपः । ततः 'तासस्त्योर्लोपः' (पा. सू. 7-4-50) इति सूत्रेण सलोपः । सूत्रार्थश्च, तासस्त्योः सस्य लोपः स्यात् सादौ प्रत्यये परे । व्यतिसे इति सिद्धम् । इत्थं चात्र धातोः लुप्तत्वात् तेन व्यत्ययबोधासंभवात् उपसर्गस्यैव [1]तद्वाचकत्वमुपेयमिति चेन्न ।

1 तद्वाचकत्वं — व्यत्ययवाचकत्वम् ।

लुप्तधातोः स्मरणादेवात्र शाब्दबोधाङ्गीकारात् । नचैवं यत्पुरुषस्य लुप्तधातोर्न स्मरणं तस्य शाब्दबोधो न स्यादिति वाच्यम् । इष्टापत्तेरिति संप्रदायः ।

---

व्यतिसे इत्यतः धातुलोपमजानतोऽपि बोधः इति निरूपणम्

अत्र—वदन्ति 'कर्तरि कर्मव्यतिहारे' (पा. सू. 1-3-14) इत्यनुशासनात् व्यतिसे इत्यादौ व्यत्ययः आत्मनेपदस्यैवार्थः । स च शक्त्या लक्षणया वेत्यन्यदेतत् । उभयथापि उपसर्गस्य द्योतकत्वमव्याहतम् । एवं च तत्र धातुलोपमजानतोऽपि शाब्दबोधो भवत्येवेति न तत्रानुभवापलापः इति दिक् ॥

---

नञर्थविचारः

नाभावो नञर्थः, किन्तु आरोपितत्वमिति शाब्दिकमतनिरूपणम्

[1]अथ प्रसङ्गात् नञाद्यर्थो निरूप्यते ।

---

1 उपसर्गवादान्तः चिन्तामणिशब्दखण्डः । तदुक्तानामर्थानां निष्कर्षो निरूपितः । उपसर्गाणां द्योतकत्वनिरूपणे निपातानां चादीनां वाचकत्वमुपन्यस्तम् । तत्प्रसङ्गात् नञ्-एवकार-इवादीनां, दीधितिकारैः स्वातन्त्र्येण रचितनञ्वादादिग्रन्थार्थनिष्कर्षपूर्वकमर्थवर्णनाय प्रतिजानीते — अथ प्रसङ्गात् नञाद्यर्थो निरूप्यते इति ।

अत्र शाब्दिकाः—नञर्थो नाभावः । (तेष्वासय) [तथा सति] अघटः इत्यादौ घटभिन्नः इति बोधे, [1]तत्पुरुषस्योत्तरपदार्थप्राधान्यभङ्गापत्तेः । किं च, असः इत्यादौ सर्वनामकार्याभावप्रसङ्गः, अतिसर्वायेत्यादिवत् । अभावे प्रतियोगिनो विशेषणत्वस्य सर्वसिद्धत्वेनोप[2]सर्जनत्वात् । इतरपदार्थविशेषणत्वस्यैवोपसर्जनत्वात् । तस्मादारोपविषयत्वं नञर्थः । [3]आरोप एव वा, विषयत्वं तु संसर्गः । एवं च अघटः इत्यादौ आरोपितो घटः इत्यादिबोधः । असः इत्यादौ च तत्पदार्थस्य विशेष्यत्वा[4]न्न दोषः । घटो नास्तीत्यादावपि आरोपितं घटास्तित्वमित्यादिबोधः । एवञ्च घटो नास्तीत्यादौ आर्थिकं [5]घटाभाव-

---

1 उत्तरपदार्थप्राधान्येति—पूर्वपदार्थप्रधानः अव्ययीभावः, उत्तरपदार्थप्रधानः तत्पुरुषः, सर्वपदार्थप्रधानः द्वन्द्वः, अन्यपदार्थप्रधानो बहुव्रीहिः, इति समासश्चतुर्विध इति कथितं बोध्यम् ।

2 उपसर्जनत्वादिति — संज्ञोपसर्जनानां सर्वादिबहिर्भावात् सर्वनामसंज्ञा नास्तीति भावः ।

3 शक्यतावच्छेदकलाघवादाह — आरोप एव वेति ।

4 न दोषः -- उपसर्जनत्वप्रयुक्तसर्वनामसंज्ञाऽभावनिबन्धनः सर्वनामकार्याभावरूपदोषः नेति यावत् ।

5 घटाभावज्ञानमिति — मानसमिति यावत् ।

ज्ञानमादाय, नञर्थविशेष्यको बोधः इति व्यवहारः, प्रतियोगि-ज्ञानप्रतिबन्धकत्वादिकं च संगमनीयमित्याहुः ।

---

## समासे एवारोपितत्वं नञर्थः इति शाब्दिकनव्यमतम्

शाब्दिकनव्यास्तु, समास एवारोपितत्वं नञर्थः । असमासे घटो नास्तीत्यादौ तु अभाव एव नञर्थः । अनुभव-सिद्धाभावबुद्धेरपलापे मानाभावादित्याहुः ।

---

## शाब्दिकमतद्वयनिरासः, सर्वत्राभावः नञर्थः इति प्रतिपादनम्

तदुभयमप्यसत् । सर्वत्राभावबोधस्यानुभविकत्वात् । आरोपत्वस्याननुगतस्य ब्रह्मणोऽपि दुर्वचत्वेनारोपस्य नञर्थत्वे गौरवाच्च । न चोक्तदोषः । अर्धपिप्पली इत्यादितत्पुरुषस्य पूर्व [पदार्थ] प्राधान्येन तत्पुरुषस्योत्तरपदार्थप्राधान्यनियमस्यै-[1]वासिद्धेः । नापि असः इत्यादौ सर्वनामकार्याभावप्रसङ्गरूपो

---

1 असिद्धेरिति — पूर्वपदार्थप्राधान्यादिना समासश्चतुर्विधः इति प्रायोवादः इति वैयाकरणैरेवोक्तमिति बोध्यम् ।

दोषः। तत्र तच्छब्दस्य सर्वनामसंज्ञायाः 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' (पा. सू. 6-1-132) इति [1]ज्ञापकादेव संभवात्। अन्यथा असः शिवः इत्यादौ [2]प्राप्तेरेवाभावात्। [3]अकोरिति अकच्सहितव्यावृत्त्या [4]सर्वनाम्न एव प्राप्तेः। तस्मात् सर्वत्र नञर्थोऽभावः। तेन—

[5]'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥'

इत्यपि परास्तम्। सादृश्यादिबोधस्य लक्षणयैवोपपत्तौ अभावमात्रस्यैव नञर्थत्वात्। तदुक्तं दीधितिकृता—'संसर्गाभावः अन्योन्याभावश्च नञोऽर्थः' इति।

---

1 ज्ञापकात् — अनञ्समासग्रहणात् ज्ञापकात्।

2 प्राप्तेरेवेति —तच्छब्दस्य सर्वनामसंज्ञाविरहेण तदुत्तरस्य सोर्लोपस्य इत्यादिः।

3 सूत्रे सर्वनामसंज्ञकयोरेतत्तदोरेव ग्रहणे गमकमाह — अकोरिति।

4 सर्वनाम्न एवेति — असर्वनाम्नः सर्वनामविहिताकजसंभवेन तत्पर्युदासात् सर्वनाम्नोरेव तयोर्ग्रहणं निश्चीयते इति भावः।

5 तत्सादृश्यमिति—अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गो अश्वेभ्यः, अधर्मः, इति क्रमेणोदाहरणानि बोध्यानि।

## संसर्गाभावत्वान्योन्याभावत्वविचारः

अथ किमिदं संसर्गाभावत्वं, अन्योन्याभावत्वं च ।

### केषांचिन्मतेन संसर्गाभावत्वान्योन्याभावत्वपरिष्कारः

अत्र [1]केचित्—[2]भेदसंसर्गारोपजन्यप्रतीतिविषयाभावत्वं संसर्गाभावत्वम् । अभेदसंसर्गारोपजन्यप्रतीतिविषयाभावत्वमन्योन्याभावत्वम् । तद्धर्मिविशेष्यकतत्संबन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षे तद्धर्मिकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकज्ञानस्य [3]हेतुत्वाल्लक्षणसमन्वयः ।

---

### अभावप्रत्यक्षे प्रतियोग्यारोपस्य स्वातन्त्र्येण हेतुत्वं नास्तीत्याक्षेपः

ननु, अधिकरणज्ञान – प्रतियोगिज्ञानयोरभावबुद्धिहेतुतया तत एवोपपत्तौ उपदर्शितातिरिक्तकार्यकारणभावे माना-

---

1 केचिदिति — अस्य व्यवहितेन आहुः इत्यनेनान्वयः ।

2 भेदसंसर्गेति — अभेदातिरिक्तसंसर्गेत्यर्थः ।

3 हेतुत्वादिति—अत एव प्रसक्तं हि प्रतिषिध्यते इत्यभियुक्तवचनमुपपद्यते । प्रसक्तस्यारोपात्मकत्वात् ।

भावः । न च प्रतियोग्यधिकरणयोः [1]स्वतन्त्रज्ञानसत्वे अधिकरणे प्रतियोगिमत्ताज्ञानाभावदशायां अभावप्रत्यक्षवारणायोक्तकार्यकारणभाव आवश्यक इति वाच्यम् । तदानीमभावप्रत्यक्षाङ्गीकारे बाधकाभावात् । अधिकरणानुपरक्तस्य प्रतियोग्यनुपरक्तस्य वा अभावस्य लौकिकबुद्धेरनुभवविरुद्धतया अधिकरण- प्रतियोगिज्ञानशून्यतादशायामेवाभावलौकिकप्रत्यक्षानङ्गीकारात् ।

---

एककारणताकल्पने लाघवादारोपस्य हेतुतेति अवान्तराक्षेप-तन्निरासौ

यत्तु, अधिकरण-प्रतियोगिज्ञानयोः पृथक् कारणताद्वयकल्पनापेक्षया प्रतियोगिविशिष्टाधिकरणज्ञानस्यैककारणताकल्पनमेवोचितमिति उक्तकार्यकारणभावसिद्धिरिति ।

तदसत् । प्रतियोगिप्रकारतानिरूपिताधिकरणविशेष्यताशालित्वेन, अधिकरणविशेष्यतानिरूपितप्रतियोगिप्रकारताशालित्वेन वा हेतुत्वे विनिगमनाविरहेण [2]तवापि कारणताद्वय-

---

1 स्वतन्त्रज्ञानेति — परस्परसंसर्गानवगाहिज्ञानेत्यर्थः ।
2 तवापि — प्रतियोगिविशिष्टाधिकरणज्ञानहेतुतावादिनोऽपि ।

स्यावश्यकत्वात्। प्रतियोगिसहस्रस्य एकैकं निवेश्य अधिकरणसहस्रभेदेन सहस्रकार्यकारणभावो भवतामिति, यत्र [1]सहस्रगुणित सहस्रकार्यकारणभावकल्पनं, [2]तत्रास्माकं सहस्रद्वयमात्रतत्कल्पनमित्यति लाघवाच्च। एवं प्रतियोगितावच्छेदकसंबन्धभेदेनापि कारणताबाहुल्यं भवतां दुर्वारमिति चेत्।

---

## कदाचिदेव क्वचिदेव कस्य चिदेवाभावः प्रत्यक्षः इति अनुभवनिर्वाहकतया प्रतियोग्यारोपस्याभावप्रत्यक्षहेतुतेति पूर्वोक्ताक्षेपपरिहारः

मैवम्। प्रतियोग्यारोपस्याहेतुत्वे अनेकाधिकरणसंनिकर्षदशायां तज्ज्ञानसत्त्वेऽपि, क्वचिदेवाधिकरणे उपस्थितानां प्रतियोगिनां कस्य चिदभावः प्रतीयते, न तु सर्वत्र सर्वेषा-

---

1 सहस्रगुणितेत्यादि — एकैकस्य प्रतियोगिनः प्रत्येकं सहस्राधिकरणसंबन्धावगाहिज्ञानानां सहस्रं कार्यकारणभावः। एवं सहस्राणां प्रतियोगिनां प्रत्येकं सहस्राधिकरणसंबन्धज्ञानानां सहस्रगुणितसहस्रकार्यकारणभावः इत्यर्थः।

2 अस्माकं सहस्रद्वयमात्रतत्कल्पनमिति — प्रतियोगिज्ञानाधिकरणज्ञानयोः पृथक् कारणतावादिनां प्रतियोगिज्ञानसहस्रस्य, अधिकरणज्ञानसहस्रस्य च प्रत्येकं सहस्रं कार्यकारणभावा इति सहस्रद्वयमात्रकार्यकारणभावकल्पनमित्यर्थः।

मित्यत्र नियामकाभावः । एवं भूतलादावधिकरणे कदाचित् घटादेरत्यन्ता[1]भाव:, कदाचिदन्योन्याभावः, अत्यन्ताभावेऽपि कदाचित् संयोगसंबन्धावच्छिन्नप्रतियोगिताकः, कदाचित् समवायादिसंबन्धावच्छिन्नप्रतियोगिताक: प्रतीयते इत्यत्रापि नियामकाभाव: । अनियमे च सर्वे एवाभावाः सर्वत्र प्रतीयेरन्निित्यनुभवविरोध: । प्रतियोग्यारोपस्य हेतुत्वे च यत्राधिकरणे यस्य येन संबन्धेन[आरोप:, तत्राधिकरणे तेन संबन्धेन तस्याभावः प्रतीयते इति नानुभवविरोधः ।]

[ननु आरोप] दशायामुपस्थितानां प्रतियोगिनां कस्यचिदेव प्रतियोगिनः केन चित्संबन्धेन कुत्रचित् कदाचिदारोपः इत्यत्र नियामकाभवाः । तन्नियामकस्याननुगतस्य तत्र विशेषणज्ञानादेः कारणस्य कल्पने च, प्रतियोगिज्ञानव्यक्तिविशेषाणामेव तत्तदधिकरणधर्मिकतत्तत्संबन्धावच्छिन्नतत्तद्रूपावच्छिन्नाभावप्रत्यक्षहेतुत्वमास्ताम् । किमन्तर्गडुना प्रतियोग्यारोपेणेति चेन्न ।

---

1 अत्यन्ताभाव इति — अस्य प्रतीयते इत्युत्तरेणान्वयः । एवमग्रेऽपि ।

अभावबुद्धावनुगतनियामकसंभवे अननुगतनियामककल्पनागौरवस्यान्याय्यत्वात्, लाघवेन [1]तत्रानुगतप्रतियोग्यारोपस्य हेतुत्वसिद्धौ, [2]तत्राननुगतनियामककल्पनागौरवस्य च फलमुखत्वेनादोषात्। अन्यथा, प्रवृत्तौ विशिष्टज्ञानादेर्हेतुतया अन्यथाख्यात्यसिद्धिप्रसङ्गात्। अन्यथाख्यातिहेतु – दोष–[3]असंसर्गाग्रहादेरत्र प्रवृत्तिहेतुताकल्पनेनोपपत्तिसंभवात्।

---

प्रतियोग्यारोपस्याभावबुद्धिप्रतिबन्धकत्वेन न हेतुत्वमित्याक्षेपः तन्निरासश्च

यत्तु, प्रतियोग्यारोपस्य समानधर्मिकस्याभावबुद्धौ विपरीतज्ञानत्वेन प्रतिबन्धकतया न हेतुत्वसंभवः। न चाहार्य एव प्रतियोग्यारोपो हेतुः, स च न प्रतिबन्धक इत्यदोष इति

---

1 तत्र — अभावबुद्धौ।

2 तत्र — प्रतियोग्यारोपे।

3 असंसर्गाग्रहादेः — पुरोवर्तिनि इष्टरजतभेदग्रहाभावादेः। तथाच पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानात्मकान्यथाख्यातिः न सिद्ध्यतीति भावः।

वाच्यम् । आहार्यज्ञानस्य पूर्वं [1]बाधबुद्धिमन्तरेणासंभवात् । प्रतियोग्यारोपस्याहार्यत्वानिर्वाहाय तत्पूर्वमभावबुद्ध्यन्तरोपगमे, तत्रापि प्रतियोग्यारोपस्य हेतुतया अनवस्थाप्रसङ्गात् । न चारोपात्पूर्वं परोक्षरूपाभावबुद्धिरेव स्वीकार्या । तत्र च नारोपान्तरापेक्षेति नानवस्थेति वाच्यम् । लिङ्गपरामर्श—शब्दज्ञानादिघटितपरोक्षधीसामग्र्या अनियतत्वादिति ।

तदप्यसत् । अभावलौकिकप्रत्यक्षे एव प्रतियोग्यारोपस्य हेतुतया तादृशारोपस्य [2]चोपनीतभानात्मकतया लौकिक[3]प्रत्यक्षाविरोधित्वेन तद्धेतुतायामुक्तबाधकासंभवात् ।

---

1 बाधबुद्धिमन्तरेणेति — बाधज्ञानकालीनेच्छाजन्यज्ञानस्यैवाहार्यत्वादिति भावः ।

2 उपनीतभानात्मकतया — उपनयशब्दितज्ञानलक्षणसंनिकर्षाधीनज्ञानतया । एतेन, प्रतियोग्यारोपस्याहार्यत्वेन तत्पूर्वं बाधज्ञानापेक्षा इति दूषणस्य नावकाशः ।

3 लौकिकप्रत्यक्षाविरोधित्वेनेति — लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यानाहार्यतद्वत्ताज्ञाने एव तदभाववत्ताबुद्धेर्विरोधित्वादिति भावः ।

### प्रतियोग्यारोपस्य अभावबुद्धौ हेतुत्वे तत्र प्रतियोगिज्ञानस्य स्वतन्त्रहेतुताविलोपः इत्याक्षेपः

अथ अभावबुद्धौ प्रतियोग्यारोपस्य हेतुत्वे, प्रतियोगिज्ञानस्य स्वतन्त्रहेतुताविलोपापत्तिः । न च प्रतियोग्यारोपस्य हेतुत्वे प्रतियोगितावच्छेदकविशेषो न निवेश्यते गौरवादिति' घटत्वादिनिर्विकल्पकानन्तरं घटत्वाद्यवच्छिन्नाभावप्रत्यक्षवारणाय प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य स्वतन्त्रहेतुताकल्पनमावश्यकमिति वाच्यम् । घटत्व—तद्व्यक्तित्वादिनानाधर्मप्रकारेणोच्छृङ्खलप्रतियोगिज्ञानदशायां कदाचित् तद्व्यक्तिर्नास्ति, कदाचित् घटो नास्ति इति प्रतीतिरिति नियमनिर्वाहाय [1]प्रतियोग्यारोपे हेतुतायां प्रतियोगितावच्छेदकविशेषान्तर्भावस्यावश्यकत्वादिति चेन्न ।

---

### उक्ताक्षेपपरिहारः

दण्डो रक्तो न वेति संशयानन्तरं रक्तदण्डो नास्तीति अभावप्रत्यक्षवारणाय तादृशाभावबुद्धौ दण्डादिधर्मिकरक्तत्वादि-

---

1 आरोपे हेतुतायां — आरोपनिष्ठायामभावबुद्धिहेतुतायाम् ।

प्रकारकनिश्चयत्वेन कारणत्वस्यावश्यकत्वात् । रक्तत्वादि-विशेषितदण्डाद्यारोपहेतुतायां रक्तत्वाद्यंशे निश्चयत्वानिवेशेन अप्रामाण्यज्ञानाभावादेर्निवेशेऽप्युक्तदिशा अनन्तस्थले हेतुताव-च्छेदकगौरवात्, तन्निवेश्य प्रतियोगितावच्छेदकप्रकारकज्ञान-स्यैकैकहेतुताकल्पनात् ।

एवं, घटत्वादिनिर्विकल्पकोत्तरं विशेष्ये विशेषणमित्या-दिरीत्या घटो नास्तीत्याद्युपनीतभानवारणायापि तत्तद्धर्मविशेषित-प्रतियोगिविशेषिताभावबुद्धौ तत्तद्धर्मप्रकारकज्ञानहेतुत्वकल्पन-मावश्यकम् । दर्शितयुक्त्या लौकिकप्रत्यक्षे एव प्रतियोग्या-रोपस्य हेतुतया [1]तत्रोक्तापत्तिवारणासंभवादित्याहुः ।

———

### उक्तयोः संसर्गाभावत्व–अन्योन्याभावत्वपरिष्कारयोः दूषणम्

तदसत् । अतीन्द्रियसंसर्गाभावान्योन्याभावयोरव्याप्तेः । न च तादृशप्रतीतिविषयवृत्त्यभावविभाजकोपाधिमत्त्वविवक्ष-

---

1 तत्र — विशेष्ये विशेषणमिति रीत्या ज्ञानस्थले । उक्तापत्तीति-घटत्वनिर्विकल्पकानन्तरं उक्तरीत्या घटो नास्तीति बुद्ध्या-पत्तीत्यर्थः ।

णान्नोक्ताव्याप्तिरिति वाच्यम् । तथापि अभावाधिकरणका-भावस्या[1]नतिरिक्तत्वम् । ततश्च अत्यन्ताभाववृत्त्यन्योन्या-भावस्यात्यन्ताभावतया, अन्योन्याभाववृत्त्यन्ताभावस्या(त्यन्ता) [न्योन्या]भावतया, संसर्गाभावलक्षणस्य अन्योन्याभावे, अन्यो-न्याभावलक्षणस्यात्यन्ताभावे चातिव्याप्तेर्दुर्वारत्वात् ।

---

### प्रकारान्तरेण अन्येषां मतेन संसर्गाभावान्योन्याभावयोर्लक्षणं तन्निरासश्च

अन्येतु, भेदसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वं संसर्गा-भावत्वम्, अभेदसंसर्गावच्छिन्नप्रतियोगिताका [भाव] त्वं अन्योन्याभावत्वमित्याहुः ।

तदप्यसत् । ध्वंसप्रागभावयोः अन्योन्याभावस्य च प्रतियोगितावच्छेदकसंबन्धे मानाभावेन आद्यलक्षणे ध्वंसप्राग-भावयोरव्याप्तेः, अन्त्यलक्षणे चासंभवात् ।

---

1 अनतिरिक्तत्वं — अधिकरणीभूताभावानतिरिक्तत्वम् ।

यत्तु अत्यन्ताभावप्रतियोगितावच्छेदकसंबन्धेऽपि माना-भावादाद्यलक्षणेऽप्यसंभवः। न च तेन संबन्धेन तत्प्रकारक-बुद्धौ तत्संबन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभाववत्तानिर्णयस्य प्रतिबन्धकतया अत्यन्ताभावप्रतियोगितावच्छेदकसंबन्धसिद्धि-रिति वाच्यम्। वक्ष्यमाणरीत्या तदसिद्धेः। तथाहि—विषयितया प्रमेयं नास्तीति प्रतीतौ यथा, विषयिताया [1]वृत्त्य-नियामकत्वेन तत्संबन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताया अप्रसिद्धया, प्रतियोगितायां विषयितावच्छिन्नत्वादे[2]र्भ्रमः। तथा, तेन तत्प्रकारकबुद्धौ तत्संबन्धावच्छिन्नतन्निष्ठप्रतियोगि-ताकाभाववत्तानिर्णयत्वेन प्रतिबन्धकतायां तत्संबन्धावच्छि-न्नत्वनिष्ठसांसर्गिकविषयतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिक -

---

1 वृत्त्यनियामकत्वेनेति — येन संबन्धेन वर्तते इति बुद्धि तेनैव संबन्धेन तन्नास्तीति बुद्धिरिति, वृत्त्यनियामकसंबन्धस्याभाव-प्रतियोगितावच्छेदकत्वं नेति भावः।

2 भ्रमइति — संसर्गघटकविषयितावच्छिन्नत्वादेः प्रकारताविरहेण तदभाववति तत्प्रकारकत्वरूपं भ्रमत्वं न संभवति। परन्तु संसर्गघटकयोः प्रतियोगित्व-विषयितावच्छिन्नत्वयोः विशेष्य-विशेषणभावस्वीकारात्, तदभाववन्निष्ठविशेष्यतानिरूपिततन्नि-ष्ठविशेषणताशालित्वरूपं भ्रमत्वं संभवतीति बोध्यम्।

विषयतानिरूपिताभावप्रकारताया निवेशनी [यत] या प्रतियोगितायां संबन्धावच्छिन्नत्वादे[1]भ्र्मस्वीकारेण अभावस्य प्रतियोगितावच्छेदकसंबन्धासिध्देरिति । तदसत् । वृत्त्यनियामकसंबन्धस्याप्यभावप्रतियोगितावच्छेदकत्वे बाधकाभावेन दृष्टान्तासिध्देः, इति चेत् ।

## संसर्गाभावत्वान्योन्याभावत्वनिष्कर्षः

न, विशेषणताविशेषसंबन्धेन वृत्तिमत्त्वस्यैव संसर्गाभावत्वान्योन्याभावत्वरूपत्वात् । अतिरिक्ताखण्डोपाधी संसर्गाभावत्वान्योन्याभावत्वे इत्यस्य सुवचत्वाच्च ।

---

## प्राचीनमते ध्वंसप्रागभावयोरपि नञ्पदवाच्यता

इदन्तु बोध्यम्। प्राचां मते ध्वंसप्रागभावयोरत्यन्ताभावविरोधितया ध्वंसप्रागभाववति अत्यन्ताभावाभावेन [2]तत्र

---

1 भ्रमस्वीकारेणेति — भ्रमस्य च नार्थसाधकत्वमिति भावः।

2 तत्र — ध्वंसस्य प्रागभावस्य चाधिकरणे ।

घटो नास्तीत्यादिप्रतीतेरत्यन्ताभावविषयकत्वासंभवेन ध्वंस-प्रागभावविषयकतया तयोरपि नञ्पदवाच्यत्वमावश्यकम् । एतदभिप्रायेणैव अत्यन्ताभावः इत्युपेक्ष्य दीधितिकृता संसर्गाभावः इत्युक्तम् ।

---

### नव्यमते अत्यन्ताभावः अन्योन्याभावश्च नञर्थः

वस्तुतस्तु [1]तादृशविरोधे मानाभावेन ध्वंसप्रागभाववति घटो नास्तीत्यादिप्रतीतेरत्यन्ताभावविषयकत्वे बाधकाभावेन अत्यन्ताभावः अन्योन्याभावश्च नञोऽर्थः इत्येव युक्तम् । तत्र घटो नास्तीत्यादौ यदि अभावत्वेनैव बोधः, तदा अभावत्वमेव नञ्शक्यतावच्छेदकम् । यदि च अत्यन्ताभावत्वादिना बोधः, तदा अत्यन्ताभावत्वं, अन्योन्याभावत्वं च नञ्शक्यतावच्छेदकम् ।

---

1 तादृशविरोधे — ध्वंसप्रागभावयोरत्यन्ताभावविरोधे ।

## प्रतियोगिनः नञर्थे अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्व-संबन्धेनान्वयः

न चैवमपि यत्किञ्चिद्घटवत्यपि घटान्तराभावसत्त्वात् घटो नास्तीत्यादिप्रतीत्यापत्तिरिति वाच्यम् । नञ्समभिव्याहारे अन्वयितावच्छेदकावच्छिन्नप्रतियोगितानिरूपितानुयोगिता-संबन्धेनैव अभावांशे प्रतियोगिनो भानस्य व्युत्पत्तिसिद्धतया अदोषात् । [न च] कम्बुग्रीवादिमान्नास्ति, प्रमेयघटो नास्ति इत्यादौ [1]कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नप्रतियोगित्वा-प्रसिद्ध्या नोक्तव्युत्पत्तिसंभव इति वाच्यम् । गुरुधर्मस्या-[2]प्यनुभवबलेन प्रतियोगितावच्छेदकत्वाङ्गीकारात् । न च पीतः शङ्खो नास्तीत्यादावगतिः, पीतशङ्खत्वादेरन्वयिताव-

---

1 कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नप्रतियोगित्वाप्रसिद्ध्येति — लघुधर्मसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वेन अखण्डैकजातिरूपघटत्वसमनियतस्य कम्बुग्रीवादिमत्त्वस्य प्रतियोगितानवच्छेदकत्वादिति भावः ।

2 अनुभवबलेनेति — यत्किञ्चित्कम्बुग्रीवादिमद्वति कम्बुग्रीवादिमान्नास्तीति प्रतितेरनुदयेन सा प्रतीतिः कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावं विषयीकरोति । कम्बुग्रीवादिमत्त्वे गौरवज्ञानदशायामपि सा प्रतीतिर्भवति । अतः तादृशप्रतीतिबलात् गुरोरप्यवच्छेदकत्वं सिद्ध्यतीति भावः ।

च्छेदकस्याप्रसिद्धत्वादिति वाच्यम् । तत्र पीतपदस्य पीतत्वप्रकारकज्ञानविषये लाक्षणिकतया[1]ऽप्रसिद्ध्यभावात् । एवमन्यत्रापि ।

---

**नञर्थाभावे प्रतियोगिनः अन्वयितावच्छेदकावच्छिन्नप्रतियोगितया अन्वयव्युत्पत्तेः न कुत्रापि भङ्गः**

एतेन, पुष्करिण्यां जलं नास्ति, चैत्रस्य ज्ञानं नास्ति, तस्माद्यज्ञे वधोऽवधः, इत्यादावुक्तव्युत्पत्तिभङ्गोऽपि परास्तः । तत्र जलादिपदस्य प्रकृष्टजलत्वाद्यवच्छिन्ने, नञ्समभिव्याहृतवधशब्दस्य पापसाधनवधत्वावच्छिन्ने [2]लाक्षणिकत्वोपगमात् ।

---

1 अप्रसिद्ध्यभावादिति — पीतत्वप्रकारकज्ञानविषयत्वावच्छिन्नप्रतियोगिताकाभावस्यैव तत्र बोधेन तस्य च प्रसिद्धत्वादित्यर्थः ।

2 लाक्षणिकत्वोपगमादिति —चैत्रात्मनि ज्ञानत्वावच्छिन्नाभावस्य बाधेऽपि, चैत्रस्य ज्ञानं नास्तीत्यत्र ज्ञानपदस्य शास्त्रजन्यज्ञानविशेषे लाक्षणिकत्वात्, ज्ञानविशेषत्वावच्छिन्नाभावबोधः इति बोध्यम् ।

## पीतः शङ्खो नास्तीत्यत्र पीतपदस्य लक्षणां विनैव निर्वाहः इति केषां चिन्मतम्

केचित्तु, नञ्समभिव्याहारभेदेन व्युत्पत्तेर्भेदेन, पीतः शङ्खो नास्ति इत्याद्युक्तस्थले [1]व्युत्पत्तेरनङ्गीकारेण प्रतियोगितानिरूपितानुयोगितासंबन्धेनैव प्रतियोगिनः अभावान्वयेन लक्षणां विनैव निर्वाहः इत्याहुः ।

---

## नञा अत्यन्ताभावस्य अन्योन्याभावस्य च बोधे नियामकनिरूपणम्

अथ, भूतले घटो नास्तीत्यादावत्यन्ताभावबोधः, भूतलं न घटः इत्यादौ चान्योन्याभावबोधः इत्यत्र किं नियामकम् । वैपरीत्येनापि बोधे बाधकाभावादिति चेन्न ।

नञ्विनिर्मोके [2]यत्र भेदसंबन्धेनान्वयबोधः, तत्र नञा अत्यन्ताभावो बोध्यते । [3]यत्र च तद्विनिर्मोके अभे-

---

1 व्युत्पत्तेः — अन्वयितावच्छेदकावच्छिन्नप्रतियोगितानिरूपितानुयोगितया प्रतियोगिनः अभावेऽन्वयव्युत्पत्तेः ।

2 यत्र — भूतले घटः इत्यादौ ।

3 यत्र च — घटः पटः इत्यादौ ।

देनान्वयः, तत्र नञा अन्योन्याभावो बोध्यते इत्युपगमात् । न च नञ्विनिर्मोके [क्वचित्]भेदेनान्वयबोधः, क्वचिच्चाभेदेनैव इत्यत्रैव किं नियामकमिति वाच्यम् । [1]तत्तदाकाङ्क्षाज्ञानादेरनुगतस्यैव तत्र नियामकत्वात् ।

---

## अभेदान्वयबोधे विशेषणवाचकपदसमानविभक्तिकं विशेष्यवाचकपदं, विरुद्धविभक्तिराहित्यं वा अनुगतमेव नियामकमिति मतनिरूपणम्

यत्तु, अभेदेनान्वयबोधे विशेषणवाचकपदसमानविभक्तिक-विशेष्यवाचकपदमनुगतमेव नियामकम् । दधि सुन्दरम् इत्यादौ च लुप्तविभक्तेरनुसन्धानादेव बोधः ।

यदि च, स्तोकं पचतीत्यादौ स्तोकाद्यभेदान्वयबोधे व्यभिचारेण नोक्तस्याभेदान्वयनियामकत्वसंभवः, तत्र[2]विशेष्यवाचकपदोत्तरं सुब्विभक्तेरभावात् । एवं वैयाकरणमते चैत्रः

---

1 तत्तदाकाङ्क्षाज्ञानादेरिति— सप्तम्यन्तभूतलादिपदसमभिव्याहारज्ञानस्य भेदान्वयबोधे, समानविभक्तिकप्रथमान्तपटादिपदसमभिव्याहारज्ञानस्याभेदान्वयबोधे, नियामकत्वमिति भावः ।

2 विशेष्यवाचकपदेति — पचधातुपदेत्यर्थः । धात्वर्थे पाके स्तोकस्याभेदसंबन्धेन विशेषणत्वादिति भावः ।

पचतीत्यादौ चैत्रे पाककर्तुरभेदेनान्वयबोधेऽपि व्यभिचारः । तत्र विशेषणवाचकाख्यातपदोत्तरविभक्तेरभावादिति विभाव्यते । तदा विरुद्धविभक्तिराहित्यमेवाभेदेनान्वयबोधे नियामकम् । [1]न चात्राप्युक्तस्थले व्यभिचारोऽस्त्येवेति वाच्यम् । क्वचित् विशेष्यबोधकपदोत्तरविभक्तिवृत्तिप्रथमात्वाद्यभाववद्विभक्त्यभाव-विशिष्टविशेषणबोधकपदम्, [2]क्वचिच्च विशेषणबोधकपदो-त्तरविभक्तिवृत्तिप्रथमात्वाद्यभाववत्सुब्विभक्त्यभावविशिष्टविशेष्य-बोधकपदं नियामकमिति व्यवस्थया विरुद्धविभक्तिराहित्यस्या-भेदेनान्वयबोधे नियामकत्वोपगमेन दोषाभावादिति ।

---

## उक्तमतनिरासः

तदसत् । [3]वस्तुतो विरुद्धविभक्तिराहित्यस्य तादृश-बोधनियामकत्वे, नीलादिपदस्य विरुद्धविभक्तिमत्त्वभ्रमकालेऽपि

---

1 अत्रापि — विरुद्धविभक्तिराहित्यस्याभेदान्वयबोधनियामकत्वेऽपि, उक्तस्थले — स्तोकं पचतीत्यादौ ।

2 क्वचिच्च — स्तोकं पचतीत्यत्र च ।

3 वस्तुतः — वस्तुसतः, विद्यमानस्येति यावत् ।

नीलघटमानयेत्यादावभेदान्वयबोधापत्तेः । ज्ञानस्य तथात्वे च विरुद्धविभक्तेरनुपस्थितिकाले [1]उक्तस्थले विद्यमानस्यापि विरुद्धविभक्तिराहित्यस्य ज्ञानासंभवेन शाब्दबोधानुपपत्तेः । न च विरुद्धविभक्तिमत्त्वेनाज्ञायमानत्वं तादृशबोधे नियामकमिति वाच्यम् । उक्तस्थले मैत्रस्य विरुद्धविभक्तिमत्तया ज्ञाने चैत्रस्यापि तादृशबोधानुपपत्तेः । न च चैत्रीयतादृशबोधे विरुद्धविभक्तिमत्त्वेन चैत्रेणाज्ञातत्वं नियामकमिति वाच्यम् । तथासति पुरुषभेदेनानन्तहेतुतापत्तेः । किञ्च, विरुद्धविभक्तिमत्त्वेनाज्ञायमानत्वं नाम वस्तुगत्या विरुद्धा या विभक्तिः तत्त्वेनाज्ञायमानत्वं, विरुद्धविभक्तित्वावच्छिन्नप्रकारकज्ञानाविशेष्यत्वं वा । नाद्यः, नीलो घटः इत्यादौ नीलादिपदोत्तरविभक्तेरम्पदत्वादिग्रहदशायामप्यभेदान्वयबोधापत्तेः । नान्त्यः । नीलो घटः इत्यादाव (भाव)[मा] देर्विशेषणवाचकपदानुत्तरत्वरूपविरुद्धत्वं विभक्तित्वं चाजानतामभेदान्वयबोधा[प्र] सङ्गादित्यादिकमूह्यम् ।

---

1 उक्तस्थले — नीलघटमानयेत्यादौ । एवमग्रेऽपि ।

पर्युदासः प्रसज्यप्रतिषेधश्च नञर्थः इति प्रवादोऽपि उक्तार्थपरः

इदन्तु बोध्यम् ।

'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥' (भ-वा.)
(विधेर्यत्राप्रधानत्वं प्रतिषेधे प्रधानता)

(निवृत्ति) [इति] लक्षणलक्षितपर्युदासः, प्रसज्यप्रतिषेधश्च नञोऽर्थः इति यः प्रवादः, तस्यापि अन्योन्याभावः अत्यन्ताभावश्च नञोऽर्थः इत्यत्रैव पर्यवसानम् । तथाहि—

## पर्युदासस्थले अन्वयबोधवर्णनम्

पर्युदासस्तावत्, यजतिषु येयजामहं करोति, नानुयाजेषु इत्यादौ । अत्र नञो निषेधार्थकत्वे वाक्यभेदस्य, येयजामहं करोतीत्यनुषङ्गस्य च कल्पने गौरवात् नञो भेदार्थकत्वमुपेत्य, अनुयाजभिन्नेषु येयजामह इत्यादिवाक्यवन्मन्त्रपाठं करोतीत्येकवाक्यतया अन्वयबोधः ।

## यजतिपदात् यागलाभविचारः

ननु 'इक्‌श्तिपौ धातुनिर्देशे' (वा. 2226) इत्यनुशासनविहितस्य श्तिपः धातुस्वरूपार्थकतया यजतिपदात् कथं यागलाभः । नचात्र यजतिपदं न श्तिबन्तं, किन्तु क्तिन्प्रत्ययान्तमेवेति वाच्यम् । तथासति क्तिन्प्रत्यये परे संप्रसारणस्यावश्यकतया इष्टि (धि) [रि] त्यस्यैव साधुतया यजतिषु इत्यस्यासाधुतापत्तेरिति चेत् ।

---

## प्राचीनानुयायिनां यजतिपदार्थ—तदन्वयनिरूपणम्

अत्र प्राचीनानुयायिनः, शबादिविकरणवत् इक्‌श्तिपोर्निरर्थकत्वमेव । पचत्यादिपदे च पचादिधातुनैव लक्षणया स्वात्मकधातुः प्रत्याय्यते । श्तिपश्च तात्पर्यमात्रग्राहकतयोपयोगः ।-[1]उक्तानुशासनेऽपि धातुनिर्देशे इत्यस्य प्रकृतिस्वरूपे इत्यर्थः ।

---

1 उक्तानुशासानेऽपि —इक्‌श्तिपौ धातुनिर्देशे इत्यनुशासनेऽपि । प्रकृतिपदस्य प्रकृतिस्वरूपे तात्पर्यग्राहकौ इक्‌श्तिपौ इति अनुशासनार्थो बोध्यः ।

प्रकृतिपदस्य तात्पर्यग्राहकौ इति च शेषः। इत्थं च यजतिषु इत्यत्र श्तिप्समभिव्याहृतयजधातुना लक्षणया स्वरूपोपस्थितौ अन्यत्र क्लृप्तशक्तिकेन यजधातुस्वरूपेण यागलाभः। न चैवं यजतीति [1]प्रकृत्यर्थस्याप्रसिद्ध्या तत्र सप्तम्यर्थान्वयासंभव इति वाच्यम्। इष्टापत्तेः। निरर्थ (कोणादि) [क] भाव-कृदन्त[2]पाकादिपदोत्तरविभक्तेरिव निरर्थकोणादिप्रत्ययान्तपदोत्तर-विभक्तेः [प्रकृ] त्यर्थान्वितस्वार्थबोधकत्वानङ्गीकारात्। नचैवं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिभङ्ग इति वाच्यम्। तत्रत्य [प्रत्यय] पदस्यार्थवत्प्रकृतिकप्रत्ययपरत्वात्। प्रकृतित्वस्य प्रत्ययत्वस्यचानुगतानतिप्रसक्तस्याभावेन एतत्प्रकृतिप्रत्ययान्तर्भावेण तादृशव्युत्पत्त्यकल्पनाच्च। किन्तु, तत्र तादृशप्रत्ययप्रकृतिभूतधातावेव लक्षणया धातूपस्थापिते तदर्थान्वयः। तत्र तथैव व्युत्पत्तेः।

---

1 प्रकृत्यर्थस्याप्रसिद्ध्येति — यजतिषु इत्यत्र सप्तम्याः श्तिबन्तं यजतिपदं प्रकृतिः। श्तिपो निरर्थकत्वेन तदन्तार्थः अप्रसिद्ध इति सप्तम्यर्थस्य प्रकृत्यर्थेऽन्वयः न संभवतीत्यर्थः।

2 पाकादिपदोत्तरविभक्तेरिवेति — पाकं पश्यति इत्यत्र द्वितीयार्थस्य विषयत्वस्य न स्वप्रकृतिभूतपाकपदार्थे अन्वयः। भावार्थकघञः केवलं साधुतासंपादकत्वेन कृदन्तपाकशब्दस्य पाकवाचकत्वाभावात् कृत्प्रत्ययप्रकृतिपचधातुनैव पाकबोधादिति भावः।

यत्तु तथासति तत्रान्वयप्रतियो (रनु) [ग्यु] पस्थापक-पदान्तरविरहेण केवलतिबन्तपचत्यादिपदात् पाकादेरिव, केवल-शितबन्तपचत्यादिपदादपि पदार्थोपस्थितिमात्रसंभवेऽपि [1]शाब्द-बोधासंभवः । न चेष्टापत्तिः । तत्र [2]पचादिधातोः शाब्दबोधस्यानुभवसिद्धत्वेनानुभवविरोधादिति । तदसत् । तिबन्तपचत्यादिपदे प्रकृतिप्रत्ययरूपपदद्वयसत्त्वेन पाकानु-कूलकृतिशाब्दबोधोदयेन दृष्टान्तासिद्धेः । केवलप्रकृतितः शाब्दानुदयेनेष्टापत्तावनुभवे विरोधाभावाच्चेति वदन्ति ।

---

शितपः धातुत्वविशिष्टे शक्तिः, पचतिपदात् पाकप्रतिपादको धातुरिति, यजतिषु इत्यत्र धातुप्रतिपाद्ययागेषु इति च बोधः

वस्तुतः, शितपो धातुत्वरूपेण धातुरेवार्थः । समभिव्या-हृतपचादिधातेश्च न स्वरूपे लक्षणा । किन्तु पाकादिरेवार्थः ।

---

1 शाब्दबोधासंभव इति — पदद्वयार्थसंसर्गावगाहित्वाच्छाब्द-बोधस्येति भावः ।

2 पचादिधातोरिति — पञ्चम्यन्तम् ।

तस्य च प्रतिपादकतासंबन्धेन श्तिबाद्यर्थे विशेषणतयाऽन्वयः। एवं च पचत्यादिपदात् पाकप्रतिपादको धातुः इत्यादिरेव शाब्दबोधः। नचैवं पाकादिप्रतिपादकधात्वन्तरस्यापि बोधापत्तिरिति वाच्यम्। सर्वनाम्नि बुद्धिस्थत्ववत् अत्रापि स्वप्रकृतित्वस्य नियामकत्वात्। यजतिषु येयजामहं करोति इत्यादौ च धात्वर्थे यागादौ प्रतिपाद्यतासंबन्धेन श्तिबर्थधातोर्विशेषणतयाऽन्वयः। धातुप्रतिपाद्येषु यागादिष्वित्यर्थः।

---

### धातुत्वविशिष्टशक्तस्यापि श्तिपः यजतिषु इत्यत्र यागस्वरूपे लक्षणया बोधनिर्वाहः

यद्वा, श्तिपो धातुस्वरूपे शक्तावपि, [1]अत्र यागादिस्वरूपे अर्थे लक्षणा। यजादिधातुः लक्षणया [2]स्वपरः। तस्य च प्रतिपाद्यतासंबन्धेन श्तिबर्थे यागादौ विशेषणतयाऽन्वयः। तथा च यजप्रतिपाद्येषु यागेषु इत्यादिरेव तत्र बोधः। इत्थं च प्रत्ययानां प्रकृत्यर्थेत्यादिव्युत्पत्तिभङ्गोऽपि नास्ति। न च

---

1 अत्र — यजतिषु येयजामहं करोति इत्यत्र।



2 स्वपरः — यजधातुस्वरूपतात्पर्यकः।

शितपो[1]ऽर्थान्तरे असाधुत्वात् कथमेतदिति वाच्यम् । स्वप्रकृत्यर्थातिरिक्तार्थान्तरे एव तस्यासाधुत्वात् । तस्यार्थान्तरासाधुत्वे मानाभावाच्च ।

[2]अनयैव रीत्या 'ईक्षतेर्नाशब्दम्' (ब्र. सू. 1-1-5) इति वेदान्तसूत्रे, 'आज्यद्रव्यमनादेशे यजतिषु विधीयते' इति कात्यायनसूत्रे [च] ईक्षण- [याग] योरन्वयबोधविषयतोपपादनीया ।

एतेन 'ईक्षतेर्नाशब्दम्' (ब्र. सू. 1-1-5) इत्यत्र ईक्षतिशब्दस्य ईक्षणवाचकत्ववत्, यजतीत्यादावपि यजतिशब्दस्य यागवाचकत्वमिति नवीनोक्तिः परास्ता । 'इक्श्तिपौ धातुनिर्देशे' (वा. 2226 ) इति अनुशासनविरोधात् । न च श्तिपो धातुत्वविशिष्टे शक्तौ पचतिः धातुः इत्यादौ पौनरुक्त्यप्रसङ्ग इति वाच्यम् । दण्डो रक्तदण्डः इतिवत् [3]पौनरुक्त्य-

1 अर्थान्तरे — धातुस्वरूपातिरिक्ते अर्थे ।

2 अनयैव रीत्या — लक्षणया इक्षधात्वर्थं ईक्षधातोः प्रतिपाद्यतासंबन्धेन श्तिबर्थे ईक्षणे अन्वयः । तेन तदुत्तरपञ्चमीविभक्त्यर्थान्वयः इति रीत्येति यावत् ।

3 पौनरुक्त्यविरहादिति — पचतिः धातुः इत्यत्र धातुपदार्थो विशेष्यः । धातुः पचधात्वभिन्नः इति बोधः विधेयांशे अधिकावगाहीति न निराकाङ्क्षतेति भावः ।

विरहात् । न च तथापि पचतिपदार्थविशेष्यकधातुपदार्थ-प्रकारकप्रतीतीच्छयोच्चरितस्य पचतिः धातुरित्यादिवाक्यस्य रक्तदण्डो दण्डः इत्यादिवाक्यवत् निराकाङ्क्षत्वापत्तिर्दुर्वारेति वाच्यम् । तत्र धातुपदस्य धातुपदवाच्ये [1]लक्षणोपगमात् ।

---

श्तिपः धातुत्वमर्थः, यजतिषु इत्यत्र यजधातुलक्ष्यार्थैकदेशे तदन्वयः, धातुयज्प्रतिपाद्ययागेषु इति बोधः इति केषांचिन्मतम्

केचित्तु, श्तिपो धातुत्वे शक्तिः । 'इक्श्तिपौ' (वा. 2226) इत्यनुशासनेऽपि 'धातुनिर्देशे' इत्यस्य धातुत्वे इत्यर्थः । धातुत्वं च [2]संकेतविशेषसंबन्धेन धातुपदवत्त्व-मेव । तच्च विध्यर्थेष्टसाधनत्वादिवत् समभिव्याहृतधात्वर्थे विशेषणतयाऽन्वेति । समभिव्याहृतधातोश्च स्वरूपे लक्षणा । तथाच श्तिबन्तपचत्यादिपदात् धातुत्ववान् पच् इत्यादिरेव

---

1 लक्षणोपगमादिति — तथाच पचधातुः धातुपदवाच्यः इति बोधो बोध्यः ।

2 संकेतविशेषेति — पाणिन्यादिसंकेतसंबन्धेनेत्यर्थः ।

बोधः । तदुत्तरसुबर्थोऽपि धात्वर्थे एवान्वेति । [1]प्रकृत्यर्थगतेत्यादिव्युत्पत्तेरकल्पनात् । नि (चसा) [र] [2]र्थकप्रत्ययान्तसमभिव्याहृतसुबर्थस्य (द्रव्याद्यन्त) प्रकृत्यर्थे अन्वयादर्शनेन व्यभिचाराच्च ।

यजतिषु येयजामहं करोतीत्यादौ च शितपो धातुत्वमर्थः । यजादिधातोश्च यज्प्रतिपाद्ययागादौ लक्षणा । तदेकदेशे यजादौ च धातुत्वस्य विशेषणतयाऽन्वयः [3]व्युत्पत्तिवैचित्र्यात् । इत्थं च धातुयज्प्रतिपाद्ययागेष्वित्यादिरेव तत्र बोधः इत्याहुः ।

---

**शितपः धातुत्वावच्छिन्ने शक्तिः, यजतिषु इत्यत्र धात्वभिन्नयज्प्रतिपाद्ययागेषु इति बोधः इति अन्येषां मतं, तन्निरासश्च**

अन्येतु, शितपो धातुत्वेन धातावेव शक्तिः । तत्र च प्रकृतिलक्ष्यार्थस्य प्रकृतिस्वरूपस्य तदात्म्येनान्वयः ।

---

1 प्रकृत्यर्थगतेति — प्रत्ययानां स्वप्रकृत्यर्थगतान्वयवत्स्वार्थबोधकत्वव्युत्पत्तेरित्यर्थः ।

2 निरर्थकेति — भावक्तन्तपाकादिपदोत्तरसुबर्थस्य ।

3 व्युत्पत्तिवैचित्र्यात् — आकाङ्क्षावैचित्र्यात् ।

तथाच श्तिबन्तपचत्यादिपदात् पचभिन्नो धातुरित्याद्याकारको बोधः। यजतिषु येयजामहं करोतीत्यादौ यज्प्रतिपाद्ययागादेः धात्वर्थतया तदेकदेशे यजादौ श्तिबर्थस्य धातुत्वावच्छिन्नस्याभेदेनान्वयः इत्याहुः।

तदसत्। एकदेशेन समं भेदेनान्वयेऽपि [1]अभेदेनान्वयानुपगमात्। [2]प्रकृत्यर्थप्रत्ययार्थयोरभेदान्वयस्य काप्यदृष्टत्वाच्च। नचागत्या अन्यत्रादृष्टोऽपि तादृशान्वयः स्वीक्रियते इति वाच्यम्। गतेरुक्तत्वात्।

अत एव श्तिपो धातुत्वेन धातौ शक्तिः। यजधातुः स्वपरः। तेन यजभिन्नधातुरिति बोधः। एवमन्यत्रापि। एवं च यजधातुबोधे सति तेन शक्त्या यागः उपस्थाप्यते इत्यपि निरस्तम्।

---

1 अभेदेनान्वयानुपगमादिति —स्तोकनम्रा, परमसुन्दरः, इत्यादौ पदार्थैकदेशे नमन-सौन्दर्यादौ स्तोकपदार्थस्य परमपदार्थस्य चाभेदान्वयाच्चिन्त्यमिदम्।

2 प्रकृत्यर्थप्रत्ययार्थयोरभेदान्वयस्य क्वाप्यदृष्टत्वाच्चेति — देवतातद्धितान्ते ऐन्द्रं दधि इत्यादौ इन्द्राभिन्नदेवताकं दधि इति शाब्दबोधोदयेन तत्र प्रत्ययार्थैकदेशदेवतायां प्रकृत्यर्थस्येन्द्रस्याभेदान्वयदर्शनात् चिन्त्यमिदम्।

## यजतिषु इत्यत्र वर्धमानोपाध्यायानुयायिमैथिलानां मते बोधः

वर्धमानोपाध्यायानुयायिनो मैथिलास्तु, 'इक्श्तिपौ धातुनिर्देशे' (वा. 2226) इति [1]सूत्रेण सिद्धस्य यजतिशब्दस्य द्विरेफशब्दस्येव [2]स्ववाच्यवाच्ये लक्षणाबलाद्यागलाभः।

अथ अत्र न श्तिप्प्रत्ययस्य यागलक्षकत्वं, तस्य प्रकृतिभागस्वरूपतात्पर्यग्राहकतया उपसर्गवत् द्योतकत्वात्। अन्यथा तत्तद्धातूपसन्दानेनानन्तशक्तिकल्पनागौरवप्रसङ्गात्। प्रकृतिरूपेण यज्धातुना पौनरुक्त्याच्च। न च यज्धातोरेव यागे लक्षणेति वाच्यम्। तस्य तत्र शक्तत्वात्। न च धातुत्वविशिष्टे शब्दत्वविशिष्टे वा श्तिपः शक्तिः। तत्र [3]प्रकृत्युपस्थापितस्य धातुस्वरूपस्य तादात्म्येनान्वयात् यज-

---

1 सूत्रेणेति — सूचनात्सूत्रं वार्तिकमत्राभिप्रेतम्।

2 स्ववाच्यवाच्ये इति — श्तिबन्तवाच्यधातुवाच्ये यजतिपदस्य लक्षणा। यद्यपि द्विरेफशब्दवाच्यं रेफद्वयमेव न तु तत्संबन्धि-भ्रमरपदं। तथापि, स्ववाच्यवाच्ये इत्यस्य स्वबोध्यवाच्य इत्यर्थंकरणान्न दोषः।

3 प्रकृत्युपस्थापितेति — लक्षणयेत्यादिः।

भिन्नः शब्दः इति स्वाभाविको बोधः । यजतिषु इत्यादौ तु यजभिन्नधातुवाच्ये (या)ज्ञाप्यसंबन्धादिरूपा श्तिपो लक्षणा । तेन यागलाभ इति वाच्यम् । अर्थपरतायां श्तिपो[1]ऽसाधुत्वात् । श्तिपो धातुत्वविशिष्टे, शब्दत्वविशिष्टे वा शक्तौ, यजतिः धातुः, भवतिः शब्दः इत्यादावनन्वयप्रसङ्गाच्चेति चेत्।

मैवम् । अनुशासनानां नियमार्थत्वेऽपि, इक्श्तिपावेव धातुनिर्देशे साधू, न क्तिन्नादिरित्येव नियम्यते । न तु श्तिपः अन्यत्रासाधुत्वमनेनानुशिष्यते । एवं, कर्मणि द्वितीयैव इत्येव नियमः, न तु द्वितीया कर्मण्येवेति । अत एव, घटं जानाति, आत्मानं वेत्ति इत्यादौ [2]विषयतामात्रे लक्षणया द्वितीयाप्रयोगः । श्तिपश्च धातुस्वरूपत्वावच्छिन्ने वृत्तिरवश्यमुपेया । तेन श्तिबन्तयजतिपदात् यज्स्वरूपमिति स्वाभाविको बोधः । स्वरूपत्वं तु (गगनाभावादिः) अखण्डो

---

1 असाधुत्वादिति -- धातुनिर्देशे एव श्तिपः साधुत्वानुशासनादिति भावः ।

2 विषयतामात्रे इति — ज्ञानविषयत्वं न कर्मत्वम्, तस्य क्रियाजन्यफलाश्रयत्वरूपत्वात् । कर्मण्येव द्वितीया इति नियमाङ्गीकारे घटं जानातीत्यत्र द्वितीया न साधुः स्यादिति भावः ।

धर्मः । स चानवच्छिन्नो [1]भावप्रत्ययादीनां प्रवृत्तिनिमित्तम् । अन्यथा यजतिर्मधुरः इत्यादौ मधुरतादात्म्यस्य यजस्वरूपे प्रत्ययानुपपत्तेः । न च धात्वर्थे एव तदन्वय इति वाच्यम् । [2]धातुसमानाधिकरणविशेष्यनिघ्नस्य नपुंसकत्वापत्तेः, [3]'संचारो रतिमन्दिरावधि' इतिवत् । तेन स्वरूपार्थकप्रत्ययसामानाधिकरण्ये तल्लिङ्गसंख्याग्राहकत्वं, धातुसामानाधिकरण्ये नपुंसकैकवचनत्वं विशेष्यनिघ्नपदानामित्यवश्यमभ्युपेयम् । अभ्युपगच्छन्ति च धातुनिर्दिष्टस्याप्यर्थस्य भावप्रत्ययवाच्यत्वमभियुक्ताः—

'क्रियायाः साध्यतावस्था धातुरूपनिबन्धना ।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥'(वा.प)इति ।

---

1 भावप्रत्ययादीनामिति — पाकः इत्यादौ भावार्थकघञादिप्रत्ययानामित्यर्थः । तेन पाकपदात् पाकस्वरूपमिति बोधः ।

2 धातुसमानाधिकरणविशेष्यनिघ्नस्येति— अभेदेन धात्वर्थान्वितस्वार्थबोधकस्य नियतलिङ्गकभिन्नपदस्येत्यर्थः ।

3 संचार इति — रतिमन्दिरावधिपदार्थस्याभेदेन धात्वर्थे एवान्वयात् रतिमन्दिरावधिपदस्य नपुंसकत्वमिति भावः ।

[1]साध्यता–लिङ्गसंख्यानन्वयः । सिद्धभावः – तदन्वयः, इत्याहुः ॥

---

## नव्यमैथिलमतम्

नव्यमैथिलास्तु यजतिपदमिह [2]स्वरूपार्थकमेव । यजतिषु इति सप्तम्युपात्तमधिकरणत्वमर्थधर्मोऽपि[3]शब्देऽप्युपचर्यते । यथा, [4]'गमिकर्मीकृतनैकनीवृता' इत्यत्र । एवमेव अनुयाजभिन्नता यागरूपार्थनिष्ठापि [5]शब्दस्यार्थसंबन्धादुपचर्यते इत्याहुः । इत्यलं प्रसङ्गागतेन ।

---

1 साध्यतेत्यादि — पाकं पश्यतीत्यादौ पाकस्वरूपकर्मकदर्शनबोधः। धातूपस्थाप्ये न विभक्त्यर्थान्वयः, अपितु घञर्थे पाकस्वरूपे इति समुदायार्थो बोध्यः ।

2 स्वरूपार्थकमेवेति — एवेन लक्षणया यागार्थकत्वव्यवच्छेदः ।

3 उपचर्यत इति— तथाच यजतिषु इत्यत्र सप्तम्यर्थाधिकरणतायां प्रकृत्यर्थस्य धातुस्वरूपस्य स्ववाच्यनिरूपिताधेयतासंबन्धेनान्वयः इति पर्यवसितोऽर्थः ।

4 गमिकर्मीकृतेति — अनेकजनपदकर्मकत्वस्य गमनरूपधात्वर्थधर्मस्य गमिधातावुपचारवदिति यावत् ।

5 अर्थसंबन्धादुपचर्यत इति — नानुयाजेषु इत्यत्र अनुयाजान्वितस्य नञर्थभेदस्य स्वाश्रयवाचकत्वसंबन्धेन यजतिपदार्थे यज् धातुस्वरूपेऽन्वयः पर्यवस्यति ।

## प्रसज्यप्रतिषेधनिरूपणम्

### रात्रौ श्राद्धं न कुर्वीत इत्यत्रान्वयबोधस्य पर्युदासाभावस्य च प्रतिपादनम्

प्रसज्यप्रतिषेधस्तु रात्रौ श्राद्धं न कुर्वीतेत्यादौ । अत्र नञः प्रसज्यप्रतिषेधोऽर्थः । तत्त्वं चात्यन्ताभावत्वमेव । सचात्यन्ताभावः लिङर्थेष्टसाधनतान्वयी । तथाच रात्रिश्राद्धकरणमिष्टसाधनत्वाभाववदित्यन्वयबोधः । नचात्र नञः पर्युदासात्मकभेदार्थकतामुपेत्य रात्रीतरकाले श्राद्धकरणविधायकत्वमेवास्तु,किं निषेधार्थकतयेति वाच्यम् । तथासति अमावास्यायां पितृभ्यो दद्यात् इति वाक्येन रात्रौ [1]श्राद्धप्राप्त्या तत्करणापत्तेर्दुर्वारत्वात् । निषेधार्थकत्वे तु विशेषनिषेधस्थले सामान्यविधेः विशेषेतरपरतायाः, ब्राह्मणेभ्यो दधि देयम्, न कौण्डिन्याय दातव्यमित्यादौ [2]व्युत्पत्तिसिद्धतया अमावास्यायामित्यादिविधेः रात्रीतरामावास्यायां श्राद्धविधायकतया न रात्रौ श्राद्धकरणापत्तिः, तत्प्रापकवचनाभावात् ।अमा-

---

1 श्राद्धप्राप्त्येति—अमावास्यापदस्य रात्रि–दिवसोभयसाधारणत्वादिति भावः ।

2 व्युत्पत्तिसिद्धतयेति— ब्राह्मणेभ्यो दधि दीयतामित्यत्र ब्राह्मणपदस्य कौण्डिन्येतरब्राह्मणार्थकत्वमिति भावः ।

वास्यायामित्यादिविधेः रात्रीतरपरतोपपादकतया च न निषेधवैयर्थ्यम् ।

---

रात्रिश्राद्धस्य प्रसक्तत्वाभावेन निषेधासंभवशङ्कापरिहारौ

न च तथापि प्रसक्तं हि प्रतिषिध्यते इति नियमेन, [1]रात्रिश्राद्धस्याप्रसक्त्या निषेधासंभव इति वाच्यम् । यदि निषेधो न स्यात् तदा अमावास्यायामित्यादिवाक्यस्य रात्रीतरपरता न स्यात् । तदा रात्रिश्राद्धं प्रसज्येतेत्यापादितप्रसक्तेः सत्त्वात् । न पृथिव्यां, नान्तरिक्षे, हिरण्यं [निधा] याग्निश्चेतव्यः इत्यादौ अन्तरिक्षे अग्निचयनस्याप्रसक्तावपि प्रतिषेधेन [2]तादृशनियमे मानाभावाच्च ।

वस्तुतः, तादृशनियमसत्त्वेऽपि न क्षतिः । यद्धर्ममन्वयितावच्छेदकीकृत्य शास्त्रतो लोकतो वा इष्टसाधनत्वमवगतं तद्धर्माश्रय एव धात्वर्थे इष्टसाधनत्वात्यन्ताभावसंसर्गः

---

1 रात्रिश्राद्धस्याप्रसक्त्येति — विशिष्य रात्रौ श्राद्धकर्तव्यताबोधकवचनाभावादिति भावः ।

2 तादृशनियमे — प्रसक्तस्यैव प्रतिषेधः इति नियमे ।

विधिसमभिव्याहृतनञा प्रत्याय्यते, न तु तदनाश्रये धात्वर्थे इत्येव [1]तादृशनियमार्थः। इत्थंचामावास्याश्राद्धत्वस्य रात्रिश्राद्धेऽपि सत्त्वात् तादृशनियमाभङ्गः इति सारम्।

---

रात्रौ श्राद्धं न कुर्वीत इत्यत्र पर्युदासः, नञो भेदवति लक्षणया रात्रिभिन्ने श्राद्धकरणमिष्टसाधनमिति बोधः इति निरूपणम्

अत्र वदन्ति—सामान्यशास्त्रविरोधिविषयकबोधजनकनञः पर्युदासपरत्वनियमेन, रात्रौ श्राद्धं न कुर्वीतेत्यत्रापि नञः [2]पर्युदासपरतैव, न तु निषेधपरता। अत्र न [3]कलञ्जं भक्षयेदिति वाक्यस्थनञि व्यभिचारवारणाय जनकान्तं तद्विशेषणम्।

---

1 तादृशनियमार्थः — प्रसक्तं हि प्रतिषिध्यते इति नियमार्थः। एवमग्रेऽपि।

2 पर्युदासपरतैवेति — अमावास्यायामिति शास्त्रेण रात्रि-दिवससाधारणामावास्याकाले श्राद्धकरणे इष्टसाधनत्वबोधात् तद्विरोधिविषयकबोधजनकं रात्रौ श्राद्धं न कुर्वीतेति वाक्यमिति बोध्यम्।

3 न कलञ्जमित्यादि — अत्र लिङर्थबलवदनिष्टाननुबन्धित्वाभावस्य धात्वर्थे बोधनादिति भावः।

अतिरात्रे षोडशिनं गृह्णाति, [1]नातिरात्रे षोडशिनं गृह्णातीत्यादिविधिवाक्यस्थनञि व्यभिचारवारणाय सामान्येति शास्त्रविशेषणम् । सामान्यशास्त्रत्वमत्र [स्व] घटितशास्त्रान्वयितावच्छेदकव्यापकीभूतधर्मावच्छिन्ननिष्ठेष्टसाधनताबोधकत्वम् । स्वपदं नञ्परम् । इत्थं च रात्रौ श्राद्धं न कुर्वीतेत्यत्र नञो लक्षणया भेदवत्परतया, रात्रिभिन्ने श्राद्धकरणमिष्टसाधनमित्यन्वयबोधः । भेदवद्बोधकत्वेऽपि भेदबोधकत्वानपायात् पर्युदासपरत्वमव्याहतम् । [2]घटादन्यः, घटादितरः इत्यादाविव, पदार्थैकदेशेऽपि भेदे अपरपदार्थान्वयो व्युत्पत्तिवैचित्र्यात् ।

---

### नञः भेदपरतां स्वीकृत्य रात्रौ इति वाक्यस्य अमावास्यायामिति वाक्ये नैकवाक्यतया रात्रिभिन्नामावास्यायामित्यादिबोधस्वीकारशङ्का, तन्निरासश्च

अथ भेद एव नञर्थ आस्ताम् । तस्य च अमावास्यायां पितृभ्यो दद्यादिति विधिवाक्यस्थामावास्यादिपदार्थे

---

1 नातिरात्रे इत्यादि — अत्र अतिरात्रे षोडशिग्रहणाभावः इष्टसाधनमिति बोधो बोध्यः ।

2 घटादन्यः इत्यादाविति — अन्यशब्दस्य इतरशब्दस्य च भेदविशिष्टार्थकत्वात् तदेकदेशे भेदे पञ्चम्यर्थप्रतियोगित्वान्वय इति भावः ।

विशेषणतयाऽन्वयोऽस्तु । एवं च रात्रिभिन्नायाममावास्यायां पितृभ्यो दद्यादित्याद्याकारक एवान्वयबोधः इत्येकवाक्यतैव न भिन्नवाक्यत्वमिति चेन्न ।

तथा सति रात्रिकृतस्यापि अष्टकाः कार्याः इत्यादिविधिबोधिताष्टकादिश्राद्धस्य सफलतापत्तेः । [1]तत्र विधौ सप्तम्यन्तकालवाचकपदेन रात्रिभिन्नकालकर्तव्यत्वस्यालाभात् ।

किञ्च, अमावास्यायां पितृभ्यो दद्यादित्यादौ दद्यादिति क्रियापदस्य, रात्रौ श्राद्धं न कुर्वीतेत्यत्र कुर्वीतेति क्रियापदस्य च [2]वैयर्थ्यप्रसङ्गः । [3]अत एव वाक्यभेदोपगमोऽपि न दोषाय । न च यथा चैत्रः पचतीत्यादौ संभेदे नान्यतरवैयर्थ्यमिति न्यायेन सुबाख्याताभ्यामेकमेवैकत्वं बोध्यते, तद्वदत्रापि द्वाभ्यामेव क्रियापदाभ्यामेकैव क्रिया बोध्यते इति वाच्यम् । कुत्र-

1 तत्र विधौ— अष्टकाविधायकवाक्ये ।

2 वैयर्थ्यप्रसङ्ग इति — एकवाक्यतायाः एकेनैव क्रियापदेनोपपत्तेरिति भावः ।

3 अत एव — क्रियापदद्वयसत्त्वादेव ।

धातु-दाधात्वोः [1]समानार्थकत्वाभावात् । [2]यथा कथञ्चित् समानार्थत्वोपगमेन वैयर्थ्यपरिहारेऽपि निष्प्रयोजनकत्वस्य दुर्वारत्वात् । चैत्रः पचतीत्यादौ च सा (ध्य) ) [धु]त्वस्यैक-[3]वचनद्वयोपादानप्रयोजनत्वात् ।

— ——

### विधिबलात् रात्रिकृतामावास्याश्राद्धस्यापि अमावास्याश्राद्धत्वात् फलजनकत्वापत्तिः, तत्परिहारश्च

यत्तु, रात्रिभिन्ने श्राद्धं कुर्वीतेति भिन्नवाक्यतया अन्वयबोधेऽपि अमावास्यायां पितृभ्यो दद्यात् इति विधिबलात् रात्रिकृतस्याप्यमावास्यादिश्राद्धस्य फलजनकत्वापत्तिर्दुर्वारा । अमावास्यादेः षष्टिदण्डावच्छिन्नतया अमावास्यादिश्राद्धत्वेन रात्रिश्राद्धस्यापि फलस्वरूपयोग्यतालाभादिति ।

तदसत् । रात्रौ श्राद्धं न कुर्वीतेत्यस्य शुचिना कर्म कर्तव्यमितिवत् अधिकारविधिरूपतया, कर्मसामान्ये कर्तृ-

---

1 समानार्थकत्वाभावादिति — कृञः यत्नोऽर्थः, दाधातोः स्वस्वत्वध्वंसानुकूल परस्वत्वप्रकारकेच्छाऽर्थः इत्यर्थभेदादित्यर्थः ।

2 यथाकथंचित् — लक्षणया ।

3 एकवचनद्वयेति — सुबाद्यात[illegible]दिः ।

विशेषणत्वेन शुचित्वस्याधिकारतया अशुचिकृतकर्मणः फलस्व-रूपयोग्यत्वेऽपि फलानुपधायकत्ववत् [1]विशेषरात्रिश्राद्धातिरिक्त-श्राद्धसामान्ये कालविशेषणतया रात्रिभेदस्याधिकारतया रात्रि-कृतामावास्यादिश्राद्धादेः फलस्वरूपयोग्यत्वेऽपि फलानुपधाय-कत्वात् । न च तत्र मानाभाव इति वाच्यम् । कर्म-सामान्ये शुचित्वस्य फलस्वरूपयोग्यत्वेऽपि अमावास्यादिश्राद्ध-जन्यतावच्छेदकपुण्यत्वावान्तरनिखिलजातिव्यापकजातिविशेषा-वच्छिन्नं प्रति रात्रिभिन्नकालकृतश्राद्धस्यापि सामान्यतः कारणत्वात् । नचैवमपि रात्रिश्राध्दस्य रात्रिभिन्नमहाकाल-कृततया, ततः फलापत्तिर्दुर्वारैवेति वाच्यम् । रात्र्यवृत्ति-श्राध्दत्वेन [2]तस्य कारणत्वात् । न हि येन रूपेण वेदादव-गम्यते तेनैव रूपेण कारणतेति नियमः, मानाभावादिति ।

---

1 विशेषरात्रिश्राध्दातिरिक्तेति — रात्रावेव कर्तव्यतया विहितः सोमोपरागादिनिमित्तकश्राध्दविशेषः तदतिरिक्तेत्यर्थः ।

2 तस्य — रात्रिभिन्नकालकृतश्राध्दस्य ।

## नञर्थो भेदः अमावास्यापदार्थेऽन्वेति, रात्रिभिन्नामावास्यायां पितृभ्यो दद्यादिति वाक्यैकवाक्यतयाऽन्वयः इति अपरेषां मतनिरूपणम्

अपरेतु, नञो [1]भेद एवार्थः । तस्य च अमावास्यायां पितृभ्यो दद्यादित्यत्र अमावास्यादिपदार्थे अन्वयः । तथाच रात्रिभिन्नामावास्यायां पितृभ्यो दद्यादिति वाक्यैकवाक्यतया अन्वयः । संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते इति न्यायात् । एवं सति लक्षणाविरहेण लाघवमपि । अत्यन्ताभावत्वान्योन्याभावत्वयोरुभयोरेवाखण्डोपाधिरूपयोः समशरीरतया विनिगमकाभावेन शक्यतावच्छेदकतया लक्षणाविरहात् । [2]ततोऽत्यन्ताभावत्वेन प्रत्ययवदन्योन्याभावत्वेनापि प्रत्ययस्य स्वारसिकत्वात् सकलप्रामाणिकसिध्दत्वाच्च ।

न च तथापि दद्यात्, कुर्वीत इति क्रियापदयोरन्यतरवैयर्थ्यापत्तिर्दुर्वारैव, दाधातु–कृधात्वोः समानार्थकत्वाभावेन

---

1 भेद एवेति — एवकारेण भेदवतः नञर्थताव्यवच्छेदः ।

2 ततः — नञपदात् ।

संभेदे नान्यतरवैयर्थ्यमिति न्यायाविषयत्वादिति वाच्यम् । तथा सति क्रियापदवैयर्थ्यभिया भिन्नवाक्यत्वे [अनु] याजे [षु] येयजामहपाठनिषेधक[1]वाक्येऽपि नञो निषेधपरत्वापत्तेः । तत्र पर्युदासपरत्वस्यैव पर्युदासाधिकरणसिद्धत्वात् । तत्र पर्युदासपरत्वाभावे पर्युदासस्थलस्यैव दुर्लभत्वापत्तेः ।

न च यजतिषु येयजामहं करोति, नानुयाजेषु इत्यस्यैव तत्र [2]निषेधविधितया क्रियापदद्वयाभावेन तद्वैयर्थ्याभावेन, येयजामहमित्यनुषङ्गप्रसङ्गा (पन्नश्च) [भावेन च] नैकवाक्यतात्याग इति वाच्यम् । यजतिषु येयजामहं करोति नानुयाजेषु इत्याकारकस्य वाक्यस्य श्रौतत्वाभावेन तद्वाक्यस्य श्रौतवाक्यद्वयतात्पर्यविषयार्थकपृथक्संग्रहकृद्वाक्यत्वात् । तथाहि—एष वै सप्तदश प्रजापतिः, यज्ञं यज्ञमन्वायत्तः' इत्येकं वाक्यम् । 'नानुयाजेषु येयजामहं करोति' इति द्वितीयम् ।

---

1 निषेधकवाक्येऽपीति — तत्रापि वाक्ये येयजामहं करोति इति पदद्वयस्यानुषङ्गेन क्रियापदद्वयसत्त्वादिति भावः ।

2 निषेधविधितयेति — निषेधवाक्यमपि अज्ञातज्ञापकतया विधिपदेन शास्त्रकारैः व्यवह्रियते इति बोध्यम् ।

अत्र प्रजापतिः इत्यन्तेन प्रथमवाक्यैकदेशेन, आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, येयजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशाक्षरो मन्त्रगणः प्रजापतित्वेन स्तूयते । प्रजापतेः[1]सप्तदशकलिङ्गशरीरसमष्टिरूपत्वात् । यज्ञेऽन्वायत्तः—अनुगतः इत्यनारभ्याधीतेन वाक्यैकदेशेन सर्वयज्ञेषु मन्त्रगणो विनियुक्तः । नानुयाजेष्वित्यादि द्वितीयवाक्यं च मन्त्रगणविधेरेव वाक्यशेषीभूतं सत् अनुयाजातिरिक्तयागेषु येयजामहविधिरूपं पर्युदासपरमिति ।

न चैवमतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति इत्यत्रापि पर्युदासपरत्वापत्तिरिति वाच्यम् । षोडशिपात्रग्रहणे तद्भेदाभावेन अनन्यगत्या [2]गौरवग्रस्तो (पिकल्प्यः)

---

1 सप्तदशकलिङ्गशरीरसमष्टिरूपत्वादिति — पृथिव्यादीनि पञ्च भूतानि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनः, बुद्धिः इत्येतत्सप्तदशः गणः लिङ्गशरीरं-सूक्ष्मशरीरं जीवानां वर्तते । तत्समष्टिशरीरोपाधिकः प्रजापतिः सूत्रात्मेत्यर्थः ।

2 गौरवग्रस्तः — प्रसिद्धा[illegible]कारेण गौरवग्रस्तः ।

[विकल्पः] आस्थीयते, इति पर्युदासाधिकरण एव सिद्धान्तितत्वात् ।

---

### रात्रौ श्राध्दं न कुर्वीत इत्यत्र अनुयोगिकालवाचकपदाभावान्न पर्युदासपरत्वमिति शङ्का, तन्निरासश्च

अथ रात्रौ श्राध्दं न कुर्वीतेत्यस्य पर्युदासपरत्वं न संभवति । पर्युदासस्य भेदरूपतया [1]तदनुयोगिकालवाचकपदाभावात् । न च सप्तम्यन्तकालपदाध्याहारान्न दोष इति वाच्यम् । तथा सति गौरवापत्त्या प्रसज्यप्रतिषेधपरत्वाङ्गीकारस्यैवौचित्यादिति चेन्न ।

[2]तद्वाक्यस्य प्रतिषेधपरत्वे, विशेषनिषेधे सामान्यविधेः तदितरपरत्वस्य ब्राह्मणेभ्यो दधि दातव्यम्, न कौण्डिन्यायेत्यादौ व्युत्पत्तिसिध्दतया 'अमावास्यायां पितृभ्यो दद्यात्' इत्याद्यनेकश्राध्दविधिषु अमावास्यादिपदानां रात्रीतरामावास्या-

---

1 तदनुयोगिवाचकेत्यादि — समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदयोरुपादाने एव नञः भेदबोधकत्वादिति भावः ।

2 तद्वाक्यस्य — रात्रौ श्राध्दं न कुर्वीत इति वाक्यस्य ।

[र्दि]परत्वे [1]लक्षणापत्तिरूपगौरवप्रसङ्गात् । तदपेक्षया पर्युदासपरत्वमुपेत्य सप्तम्यन्तैककालपदाध्याहारकल्पने लाघवेन पर्युदासपरत्वस्यैव युक्तिसहत्वात् । शेषं पूर्ववदिति प्राहुः ।

## रात्रौ श्राध्दं न कुर्वीत इति, दिवाश्राद्धप्राशस्त्यपरमिति केषांचित् मतनिरूपणम्

[2]केचित्तु 'अमावास्यायामि'त्यादिवाक्येन दिवाश्राध्द-रात्रिश्राध्दयोरुभयोरेव प्रागेव प्राप्तत्वात्, रात्रौ श्राध्दं न कुर्वीतेति वाक्यं दिवाश्राध्दे [3]प्राशस्त्यपरम् । तथाच रात्रीतरकालीनश्राध्दकरणं [4]प्रशस्तमित्यन्वयबोधेन, दिवाश्राध्दस्य प्राशस्त्यं शब्दतः, अर्थतश्च रात्रिश्राध्दस्याप्राशस्त्यं लभ्यते । प्राशस्त्याप्राशस्त्ये उत्कृष्टापकृष्टादृष्टजनकत्वे । उत्कर्षापकर्षौ चादृष्टगतौ फलोत्कर्षापकर्षप्रयोजकौ जातिविशेषरूपौ । एवं

1 लक्षणेति — रात्रीतरतत्तत्कालविशेषेषु लक्षणेत्यर्थः ।

2 केचित्तु इत्यस्य व्यवहितेन आहुः इत्यनेन संबन्धः ।

3 प्राशस्त्यपरमिति — न तु रात्रिभिन्नकाले श्राध्दविधायकमिति भावः ।

4 प्रशस्तमिति — लिङः प्राशस्त्ये लक्षणेति भावः ।

च [1]दिवाश्राद्धजन्यतावच्छेदकपुण्यत्वावान्तरजातिविशेषाव-च्छिन्ने दिवाश्राद्धस्य कारणत्वमेकम् । रात्रिश्राद्धजन्यतावच्छेदकपुण्यत्वावान्तरजातिविशेषावच्छिन्नं प्रति रात्रिश्राद्धस्य [2]चापरम् ।

---

अमावास्यादिश्राद्धजन्यतावच्छेदकजात्या सांकर्यात् दिवाश्राद्धादिजन्यतावच्छेदकवैजात्यं न संभवतीत्याक्षेपः

अथैवं, दिवाश्राद्धजन्यतावच्छेदकवैजात्यस्य, दिवाश्राद्धरात्रिश्राद्धजन्यादृष्टसाधारणेन अमावास्यादिश्राद्धजन्यतावच्छेदकेन पुण्यत्वावान्तरजातिविशेषेण समं अमावास्यादिवाश्राद्धजन्यादृष्टे सांकर्यापत्तिः । अष्टकादिदिवाश्राद्धजन्यादृष्टा-

---

1 दिवाश्राद्धजन्यतावच्छेदकेति — पुण्यत्वावान्तरजातिविशेषेऽन्वेति । एवमग्रेऽपि ।

2 अपरमिति — कारणत्वमित्यनुषज्यते ।

(वान्तरजातिविशेषेणसमम्) मावास्यादिरात्रिश्राध्दजन्यादृष्टयोः [1]परस्परं व्यभिचारात् ।

एवं, रात्रिश्राध्दजन्यतावच्छेदकवैजात्यस्यापि [2]तेन सममावास्यादिरात्रिश्राध्दजन्यादृष्टे सांकर्यापत्तिः । अष्टकादिरात्रिश्राध्दजन्यादृष्टामावास्यादिदिवाश्राध्दजन्यादृष्टयोः परस्परं व्यभिचारादिति चेत् ।

---

## दिवाश्राद्धजन्यादृष्ट-रात्रिश्राध्दजन्यादृष्टोभयसाधारणजात्यनङ्गीकारेणाक्षेपपरिहारः

[3]स्यादेवम्, अमावास्यादि श्राध्दजन्यतावच्छेदकवैजात्यस्य दिवाश्राध्दजन्यादृष्ट- रात्रिश्राद्धजन्यादृष्टसाधारणत्वे ।

---

1 परस्परं व्यभिचारादिति — सामान्यतः दिवाश्राध्दजन्यतावच्छेदकजातिः अष्टकादिवाश्राध्दजन्यादृष्टे वर्तते, तत्र अमावास्याजन्यतावच्छेदकवैजात्यं नास्ति। सामान्यतः अमावास्याजन्यतावच्छेदकजातिः अमावास्यारात्रिश्राद्धजन्यादृष्टे वर्तते। तत्र च सामान्यतः दिवाश्राध्दजन्यतावच्छेदकजातिर्नास्तीति दिवाश्राध्दजन्यतावच्छेदकवैजात्यस्य अमावास्याजन्यतावच्छेदकवैजात्यस्य च परस्परं व्यभिचारो बोध्यः ।

2 तेन समं — दिवाश्राध्द-रात्रिश्राध्दजन्यादृष्टसाधारणेन अमावास्यादिश्राध्दजन्यतावच्छेदकेन जातिविशेषेण ।

3 स्यादेवं—परस्परपरिहारेण वर्तमानयोः जात्योः अमावास्यादिवाश्राध्दादिजन्यादृष्टे समावेशेन सांकर्यं स्यादित्यर्थः ।

तदेव न। अमावास्याश्राध्दत्रैजात्यं हि दिवाश्राद्ध-रात्रिश्राद्धजन्यादृष्टसाधारणं नैकम्। किन्तु, एकं दिवाश्राध्दजन्यादृष्टमात्रवृत्ति। अपरं च रात्रिश्राद्धजन्यादृष्टमात्रवृत्ति। कारणतापि प्रत्येकं दिवाश्राद्धत्व-रात्रिश्राद्धत्वाभ्यामित्युपगमात्।

---

### रात्राविति वाक्यस्य प्राशस्त्यपरत्वे अब्दविशेषे श्राद्धलोपापत्तिशङ्का, तत्परिहारश्च

अथ, रात्रौ श्राध्दमिति वाक्यस्य प्राशस्त्यपरत्वे, यस्मिन्नब्दे [1]उभयदिन एव मध्याह्ने मरणतिथ्यभावः, तस्मिन्नब्दे एकोद्दिष्टविलोपप्रसङ्गः। प्रत्यब्दं कुर्यादिति वीप्साभङ्गप्रसङ्गश्च। एवं यस्मिन् मासे दिनद्वय एव मरणतिथ्यभावः, तस्मिन् मासे प्रेतषाण्मासिकैकोद्दिष्टविलोपापत्त्या षोडशश्राद्धाभावेन प्रेतत्वापरिहारापत्तिः।

'पूर्वा (स्तु) [ह्णे] मातृकं श्राद्धमपराह्णे च पैतृकम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥' इति

---

1 उभयदिने इति — मरणतिथिसंबन्धिनि दिनद्वयेऽपीत्यर्थः।

ब्रह्मपुराणवचनेन एकोद्दिष्टकरणस्य मध्याह्नमात्रकर्तव्यताबोधनात्, कालान्तरविधायकवचनाभावेन प्राशस्त्यपरं वचनमिदमिति वक्तुमशक्यत्वात् । रात्रौ इत्यादिवाक्यस्य रात्रिभिन्ने श्राद्धं कुर्वीतेति पर्युदासपरत्वे तु तस्यैव कालान्तरप्रापकतया मध्याह्नविधेः प्राशस्त्यपरत्वस्य वक्तुं शक्यत्वादिति चेन्न ।

कालान्तरस्य विधितः अप्राप्तावपि 'प्रत्यब्दम्' इति वीप्साद्यन्यथानुपपत्त्यैव मध्याह्नविधेः प्राशस्त्यपरत्वसंभवादित्याहुः ।

---

## रात्राविति वाक्यस्य प्राशस्त्यपरत्वखण्डनम्

तदसत् । रात्रावित्यादिवाक्यस्य प्राशस्त्यपरत्वे, सकलप्रामाणिकसंमतविधित्वानुपपत्तेः । [1]अनेकवैजात्यकारणतादिकल्पनाप्रयुक्तगौरवापत्तेश्च ।

---

1 अनेकवैजात्यकारणतादीति— तत्तच्छ्राद्धजन्यतावच्छेदकवैजात्यानां कारणतानां च बहूनां कल्पनेत्यर्थः ।

## रात्राविति वाक्यं रात्रिश्राध्दे अप्राशस्त्यपरमिति मतनिरासः

[1]एतेन, रात्रौ इत्यादिवाक्यं नञः अप्राशस्त्ये लक्षणया रात्रिश्राध्दस्याप्राशस्त्यं बोधयति। रात्रिश्राध्दकरणमप्रशस्तमिति बोधः। शेषं पूर्ववत्, इत्यपि परास्तम्। नञः अप्राशस्त्यलक्षणाकल्पनप्रयुक्तगौरवापत्तेश्चेति दिक् ।

---

## रात्रिपदार्थविचारः

निरस्तैतद्द्वीपवर्तिरविरश्मिजालः कालविशेषो[2]ऽत्र रात्रिः। निरस्तं एतद्द्वीपवर्तिरविरश्मिजालं यदा इति व्युत्पत्त्या, एतद्द्वीपवर्तिरविरश्मिजालाभाववान् कालविशेषोऽत्र द्वीपे [3]रात्रिरित्यर्थः । रात्रिसामान्यस्य लक्ष्यत्वे एतद्द्वीपवर्तिरविरश्मिसत्त्वकालीनद्वीपान्तरीयरात्रावव्याप्तिप्रसङ्गात्, अत्र द्वीपे इति लक्ष्यघटकम् । दिवसेऽपि कतिपयरश्मीनामभावसत्त्वा-

---

1 एतेनेति — प्रामाणिकसंमतस्य विधित्वस्यानुपपत्त्या, अनेकवैजात्यादिकल्पनागौरवेण चेत्यर्थः ।

2 अत्र — एतद्द्वीपे ।

3 इत्यर्थः — निरस्तेत्यादिनिरुक्तवाक्यार्थः इति यावत् ।

दतिव्याप्तिवारणाय जालपदं सामान्याभावलाभाय। तथाच एतद्द्वीपवर्तिरविरश्मिसामान्याभावाधिकरणीभूतः कालविशेषः, अत्र द्वीपे रात्रिरिति फलितम्।

[1]एतेन, अत्र निरासः न प्रागभावः। अतीतरविरश्मीनां जालान्तर्गतानां प्रागभावविरहेणासंभवापत्तेः। नापि ध्वंसः। अनागतरविरश्मीनां जालान्तर्गतानां ध्वंसविरहेणासंभवापत्तेरिति निरस्तम्।

न च [2]दिवसेऽपि (द्वितीया) [द्वीपा] न्तरावच्छेदेन तादृशसामान्याभावसत्त्वादतिव्याप्तिरिति वाच्यम्। निरवच्छिन्नतादृशसामान्याभावाधिकरणत्वस्य विवक्षितत्वात्।

[3]अन्योन्याभावो यदि नाव्याप्यवृत्तिः, तदा तादृशरश्मिमत्सामान्यभिन्नत्वमेव वा विवक्षणीयम्।

---

1 एतेन — उक्तफलितार्थकथनेन।

2 दिवसेऽपि — एतद्द्वीपीयदिवसेऽपि।

3 अन्योन्याभावस्यापि अत्यन्ताभावस्येव अव्याप्यवृत्तित्वाङ्गीकारे, एतद्द्वीपवर्तिरविरश्मिमत्सामान्यभिन्नत्वनिवेशेऽपि दिवसे अतिव्याप्तिः दुर्वारा। द्वीपान्तरावच्छेदेन तादृशभेदस्य दिवसेऽपि सत्त्वात्। अतः भेदस्य अव्याप्यवृत्तित्वाभावपक्षमवलम्बते— अन्योन्याभावः यदि नाव्याप्यवृत्तिरिति।

रात्रावपि द्वीपान्तरवर्तिरविरश्मिसत्त्वेनासंभववारणाय एतद्द्वीपवर्तीति रश्मिविशेषणम् । द्वीपोऽत्र भारतवर्षादिरूपो भूखण्डविशेषः । तद्वर्तित्वं च तत्संयुक्तत्वम् । तेन रात्रावपि जम्बूद्वीपान्तर्गतस्य सुमेरोरुत्तरदिशि रविरश्मिसत्त्वेऽपि नाव्याप्तिः । न च भारतवर्षादिपरत्वेऽपि उत्कलदेशे यदान्तरद्वयं रात्रिः, तदा [1]कामरूपादौ रविरश्मिसत्त्वादव्याप्तिर्दुर्वारेति वाच्यम् । तदानीं कामरूपादौ रविरश्मिसत्त्वे मानाभावात् । अस्तुवा, यावद्देशावच्छेदेन रविरश्मिसंबन्धाभावे, प्रामाणिकानां रात्रिव्यवहारः, [2]तत्परमेव द्वीपपदम् । स च गौड-मैथिलादिरूपभूखण्डविशेष एव । रात्रावपि चन्द्रादीनां रश्मिसत्त्वादसंभवावारणाय, रवीति ।

---

### रश्मिपदवैयर्थ्यशङ्का, तन्निरासश्च

अथ एतद्द्वीपवर्तिरविसामान्याभाववान् कालविशेष इत्येवास्तु, किं रश्मिपदेन । न च रात्रावपि एतद्द्वीपवर्ति-

---

1 कामरूपादौ — भारतवर्षान्तर्गते प्रदेशविशेषे ।

2 तत्परमेव — तावद्देशपरमेव ।

रवेः द्वीपान्तरावच्छेदेन सत्त्वात् असंभववारणाय रश्मिपदम् । तादृशरश्मयस्तु न द्वीपान्तरावच्छेदेन, रात्रौ एतद्द्वीपसंबद्धरविरश्मीनां द्वीपान्तरगमने मानाभावादिति वाच्यम् । एतद्द्वीपवर्तित्वविशिष्टरव्यभावविवक्षयैव[1]तद्वारणसंभवादिति चेन्न ।

[2]अखण्डाभावतया वैयर्थ्याभवाात् । द्वीपस्य भूखण्डविशेषात्मकतया तद्वर्तित्वस्य रवावभावादप्रसिद्धिवारणाय रश्मिपदस्यावश्यकत्वाच्च ।

---

## रश्मिपदार्थकथनम्

न च रात्रावपि सौरतेजोभिः तप्तवालुकादीनां रविरश्मिमत्त्वात् तत्र त्रसरेणुसत्त्वाच्चासंभव इति वाच्यम् । रश्मिपदस्य प्रकृष्टमहत्वोद्भूतरूपवत्तेजःपरत्वात् ।

---

1 तद्वारणसंभवात्— असंभववारणसंभवात् । गुणे विशिष्टसत्ताभाववत् विशिष्टरव्यभावः संभवतीति भावः ।

2 अखण्डाभावतयेति — अतिरिक्ताभावतयेति यावत् । रविरश्मिसामान्याभावे रव्यभावस्याघटकत्वान्न तेन रविरश्मिसामान्याभावस्य वैयर्थ्यमिति भावः ।

वस्तुतस्तु रविरश्मिपदं चन्द्रप्रभादिव्यावृत्त–सौरप्रभावृत्तिप्रभात्वव्याप्यानुभवसिद्धजातिविशेषविशिष्टपरम् । प्रभात्वं च चाक्षुषजनकतावच्छेदकतया सिद्धः महदुद्भूतरूपवत्तेजोमात्रवृत्तिः त्रसरेणुव्यावृत्तो जातिविशेषः, [1]अन्यथा रविरश्मित्वस्यैव दुर्वचत्वात् । तद्धि न रविसंयुक्तरश्मित्वम्, तारकादिरश्मिसाधारणत्वात् ।

तादृशरविरश्मीनां तत्संयोगानां वा कालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य [2]गगनादावपि सत्त्वात् तत्रातिव्याप्तिवारणाय कालपदम् । प्रलये अतिव्याप्तिवारणाय विशेषपदम् । 'ना (दो) [हो] न रात्रिः' इत्यागमात् [3]तस्य रात्रिभिन्नत्वावधारणात् । विशेषत्वं च सूर्याधारत्वम् । महाकालादौ च निरवच्छिन्नतादृशाभावाधिकरणत्वविरहान्नातिव्याप्तिः ॥

---

1 अन्यथा — रविरश्मित्वस्य सूर्यप्रभावृत्तिप्रभात्वव्याप्यजातिविशेषरूपत्वानङ्गीकारे ।

2 गगनादावपीति — नित्येषु कालिकायोगादिति भावः ।

3 तस्य — प्रलयस्य ।

## निरस्तेत्यादिरात्रिलक्षणवाक्यस्य केषांचिन्मतेनार्थवर्णनम्

केचित्तु, निरस्तेत्यादेः एतद्द्वीपावच्छेदेन रविरश्मिसामान्याभावाधिकरणत्वमर्थः । एवं च निरवच्छिन्नाधिकरणत्वं न विवक्षणीयम् । दिवसे द्वीपान्तरावच्छेदेन रविरश्म्यभावसत्त्वेऽ[पि एतद्द्वीपावच्छेदेन रविरश्मिसामान्याभावासत्त्वा]देवातिव्याप्तिविरहात् । [1]अत एव (तत्रापि) सायमेतद्द्वीपसंयुक्तानां रविरश्मीनां द्वीपान्तरे द्विलिक्षणावस्थानेऽपि नासंभवोऽव्याप्तिर्वा । द्वीपान्तरे तत्सत्त्वेऽपि एतद्द्वीपावच्छेदेन तदभावसत्त्वात् । नापि प्रलये अतिव्याप्तिः । तदानीमेतद्द्वीपाभावेन तदवच्छेदेन रविरश्म्यभावस्य [2]तत्रासंभवात् । महाकाले अतिव्याप्तिवारणाय विशेषपदम् । विशेषत्वं च क्षणात्मकत्वम् । अन्यत् सर्वं पूर्ववदित्याहुः ।

---

## निरस्तेत्यादिवाक्यस्य प्राचीनमतेनार्थविवरणम्

प्राञ्चस्तु, निरासोऽत्र ध्वंसः । तथाच एतद्द्वीपवर्तियावद्रविरश्मिध्वंसविशिष्टः कालविशेषः अत्र द्वीपे रात्रिरित्यर्थः ।

---

1 अत एव — एतद्द्वीपावच्छेदेनेति विशेषणादेव ।
2 तत्र — प्रलये ।

अन्यथा अत्यन्ताभावपरत्वे ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वाद[1]संभवापत्तेः । न च रात्रावपि अनागतरविरश्मीनां ध्वंसविरहादसंभव इति वाच्यम् । स्ववृत्तिध्वंसप्रतियोग्युत्पत्तिकत्वेन रविरश्मिविशेषणात् । [2]स्वपदं लक्ष्यत्वेनाभिप्रेतपरम् । न च ध्वंसस्य [3]सामान्याभावत्वानङ्गीकारात् तादृशयावद्रविरश्मिप्रतियोगिको ध्वंसोऽप्रसिद्ध इति वाच्यम् । तथाविधाः यावन्तो रविरश्मयः तत्प्रत्येकध्वंसविशिष्टत्वस्य, तथाविधरविरश्मीनां यावन्तो ध्वंसाः तद्विशिष्टत्वस्य वा विवक्षितत्वात् - न च तथापि रात्रिशेषे द्वीपान्तरोत्पन्नानां प्रातरेतद्द्वीपसंबद्धानां रविरश्मीनां नाशस्य तत्राभावादव्याप्तिः । एतद्द्वीपवर्तित्वपदेन एतद्द्वीपोत्पन्नत्वविवक्षणेऽपि सायमेतद्द्वीपोत्पन्नरविरश्मीनां रात्रौ द्वीपान्तरे द्वित्रिक्षणावस्थानसंभवादव्याप्तिरिति वाच्यम् । द्वीपान्तरोत्पन्नरविरश्मीनामेतद्द्वीपागमने, एत-

---

1 असंभवापत्तेरिति — रविरश्मित्वावच्छिन्नात्यन्ताभावस्य, रविरश्मिध्वंसाधिकरणे रात्रावभावादिति भावः ।

2 रविरश्मिविशेषणघटकस्वपदस्य रश्मिपरत्वशङ्काव्युदासायाह— स्वपदमिति ।

3 सामान्याभावत्वेति — सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावत्वेत्यर्थः ।

द्द्वीपवर्तिरविरश्मीनां द्वीपान्तरगमने च मानाभावात् । एतद्द्वीपवर्तिरविरश्मिपदेन एतद्द्वीपनिष्ठरविरश्मिसंयोगस्य विवक्षितत्वात् । भाविप्रलये महाकाले चातिव्याप्तिवारणाय विशेषपदम् । विशेषत्वं प्रलयान्यत्वम् ।

यद्वा, निरासपदं प्रागभावपरम् । तथाच एतद्द्वीपवर्तियावद्रवि [रश्मि] प्रागभावविशिष्टः कालविशेषः अत्र द्वीपे रात्रिरित्यर्थः । स्ववृत्तिध्वंसाप्रतियोगित्वेन रश्मिर्विशेषणीयः । स्वपदं लक्ष्यत्वेनाभिमतपरम् । तेन रात्रावतीतरश्मीनां प्रागभावविरहेऽपि नासंभवः । [1]वृत्तप्रलयेऽतिव्याप्तिवारणाय च विशेषपदम् । विशेषत्वं च सूर्याधारत्वम् । सर्वमन्यत् पूर्ववदित्याहुः ।

---

## प्राचीनानां वाक्यार्थवर्णननिरासः

तदसत् । प्रलयाव्यवहितैतद्द्वीपाद्यकालस्य रात्रितासंन्देहात् ध्वंसघटितलक्षणस्य सन्दिग्धाव्याप्तेः । एतद्द्वी-

---

1 वृत्तप्रलये — पूर्वं वृत्ते प्रलये ।

पीयप्रलयोत्तरकालस्य रात्र्यव्यवहितोत्तरभावितासन्देहात् प्राग-भावघटितस्यापि सन्दिग्धाव्याप्तिकत्वाच्च । [1]तस्मात् ध्वंस-प्रागभावयोरत्यन्ताभावविरोधित्वे मानाभावात् अत्यन्ताभावगर्भ-तैव ज्यायसी, इत्यलं विस्तरेण ।

---

## क्त्वाप्रत्ययार्थविचारः

### अचार्यानुयायिमतनिरूपणम्

क्त्वाप्रत्ययस्य प्रधानक्रियापूर्वकालीनत्वमर्थः । न च भुक्त्वा वर्षोत्तरं गते चैत्रे, चैत्रो भुक्त्वा व्रजतीति प्रयोगवारणाय प्रधानाव्यवहितपूर्वकालीनत्वे एव क्त्वाप्रत्ययस्य शक्तिरुचितेति वाच्यम् । भोजनानन्तरं घटिकादिविलम्बेन गते चैत्रो भुक्त्वा व्रजतीति प्रयोगानुपपत्त्या [2]तथा वक्तुमशक्यत्वात् । न चैवं भुक्त्वा वर्षोत्तरं गते चैत्रे, चैत्रो भुक्त्वा व्रजतीति प्रयो-गापत्तिर्दुर्वारेति वाच्यम् । यतः प्रधानक्रियापूर्वकालत्वस्य

---

1 अत्यन्ताभावघटितलक्षणस्य पूर्वोक्तासंभवशङ्कां निराकुर्वन्नुप-संहरति — तस्मादिति ।

2 तथा — प्रधानक्रियाव्यवहितपूर्वकालीनत्वे शक्तिरिति ।

प्रधानक्रियाप्रागभावाधिकरण घटिका–मुहूर्तादि नानाविधकाल-वृत्तित्वरूपस्य नानात्वेन, [1]अव्ययानामनेकार्थतया क्त्वाप्रत्ययस्याव्ययकृत्प्रत्ययत्वेन च नानार्थतया, भुक्त्वा व्रजतीत्यादौ वर्षात्मकस्थूलकालघटित–प्रधानक्रियापूर्वकालवृत्तित्वं न क्त्वा-प्रत्ययार्थः किन्तु प्रधानक्रियाप्रागभावाधिकरण–घटिकादिरूप-पूर्वकालवृत्तित्वं [2]तथेत्युपगमेनोक्तापत्त्यभावात् ।

अत्र पूर्वकालीनत्वमात्रं [3]क्त्वाप्रत्ययशक्यम् । प्रधान-क्रियायाः तिङादिप्रकृतित एव लाभः । एवं [4]समानकर्तृ-कत्वमपि क्त्वाप्रत्ययस्यार्थः । अन्यथा मैत्रभोजनानन्तरं गते चैत्रे, चैत्रो भुक्त्वा व्रजति इति प्रयोगापत्तेः । एवं च चैत्रो भुक्त्वा व्रजतीत्यादौ गमनक्रियापूर्वकालीनभोजन-

---

1 प्रधानक्रियापूर्वकालीनत्वस्य नानात्वे क्त्वाप्रत्ययस्य नानार्थतया शक्तिभेदापत्तिशङ्कामिष्टापत्त्या परिहरति -- अव्ययानामिति ।

2 तथा — क्त्वाप्रत्ययार्थः ।

3 शक्यमिति — तस्य च तिङ्प्रत्ययप्रकृत्यर्थप्रधानक्रियाविशेष्यतया अन्वितस्य प्रकृत्यर्थभोजनादिक्रियायामन्वयो बोध्यः ।

4 समानकर्तृकत्वमपीति — स्वप्रकृत्यर्थभोजनादिसमानकर्तृकत्वमपीत्यर्थः । प्रधानक्रियायां विशेषणतयान्वयीति शेषः ।

समानकर्तृकं यद्गमनं तदनुकूलकृतिमांश्चैत्रः इत्याकारको-ऽन्वयबोधः ।

---

## पूर्वकालीनत्वान्वयानुपपत्तिशङ्का-समाधाने

अथ मुखं व्यादाय स्वपितीत्यादौ, झणात्कृत्वा पतितः कंसः इत्यादौ च क्त्वाप्रत्ययार्थपूर्वकालीनात्वान्वयानुपपत्तिः । मुखव्यादानस्य [1]स्वापजन्यत्वेन, झणात्कारस्य कंसपतनजन्य-त्वेन च मुखव्यादान-झणात्कारयोः स्वाप-कंसपतनपूर्व-कालीनत्वासंभवादिति चेन्न ।

मुखं व्यादाय स्वपितीत्यादौ सु (प्तो) [प्त्वा] मुखं व्यादत्ते इति [2]व्यत्ययेनान्वयात् । एवं झणात्कृत्वा पतितः कंसः इत्यादावपि कंसः पतित्वा झणात्करोति इति व्यत्ययेना-न्वयान्नानुपपत्तिः ।

---

1 स्वापजन्यत्वेनेति — स्वापोत्तरकालीनत्वादिति शेषः । एवं, पतनजन्यत्वेनेत्यस्यापि पतनोत्तरकालीनत्वादिति शेषो बोध्यः ।

2 व्यत्ययेनेति—व्यत्ययेन वाक्यमनुसन्धाय, व्यादानपूर्वकालीन-स्वापसमानकर्तृकव्यादानानुकूलकृतिमानित्यन्वयबोध इति भावः ।

वस्तुतः, क्त्वाप्रत्ययस्य [1]नानार्थकतया मुखं व्यादाये-त्यादौ क्त्वाप्रत्ययेन जनकत्वस्य बोधनात्, मुखव्यादानजनकः स्वापः इत्याद्यन्वयबोधोपगमान्न कोऽपि दोषः ।

---

## समानकर्तृकत्वान्वयानुपपत्तिशङ्का-समाधाने

न च, 'अवजानासि मां यस्मादतस्ते न भविष्यति ।

मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥' [रघु.1-77]

इत्यत्र क्त्वाप्रत्ययार्थसमानकर्तृकत्वान्वयानुपपत्तिः । प्रजा-कर्तृ[2]कोत्पत्तिरूपप्रधानक्रियासमानकर्तृकत्वस्य दिलीपकर्तृ-काराधनक्रियायामभावादिति वाच्यम् । तत्र अनाराध्येत्य-नन्तरं स्थितस्येत्यध्याहारेण [3]स्थितिरूपप्रधानक्रियामादाय (य) [त]त्र समानकर्तृकत्वान्वयबोधसंभवादिति आचार्यानुयायिनः ।

---

1 नानार्थतयेति — अव्ययकृत्प्रत्ययत्वेनेत्यादिः ।

2 उत्पत्तिरूपप्रधानक्रियेति — न भविष्यति इत्यत्र भूधातोरुत्पत्ति-रर्थः इति भावः ।

3 स्थितिरूपेति — स्थितिकर्तुः दिलीपस्यैवाराधनक्रियाकर्तृत्वा-दिति भावः ।

## चिन्तामणिकारानुयायिमतेन क्त्वाप्रत्ययार्थप्रतिपादनम्

चिन्तामणिकारानुयायिनस्तु-पूर्वकालीनत्वं न क्त्वाप्रत्ययार्थः । किन्तु [1]आनन्तर्यम् । भुक्त्वा व्रजतीत्यादौ गमनक्रियायां भोजनानन्तर्यबोधस्यानुभविकत्वात् । एवं समानकर्तृकत्वमपि क्त्वाप्रत्ययार्थः । अतो न, मैत्रभोजनानन्तरं गते [चैत्रे भुक्त्वा व्रजति चैत्रः इति प्रयोगः । भोजनानन्तरं भोजनसमानकर्तृकं यत् गमनं] तदनुकूलकृतिमान् चैत्रः इत्यन्वयबोधः । तदानन्तर्यं च तध्द्वंसाधिकरणक्षणवृत्तित्वरूपं बोध्यम् । न तु तदधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वं [2]तत् । पाककाले भुञ्जाने पुरुषे, पक्त्वा भुङ्क्ते इत्यादिप्रयोगापत्तेः, पाकाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वस्य तत्र भोजने सत्त्वात् ।

अथैवमपि मैत्रभोजनानन्तरं गते चैत्रे, चैत्रो भुक्त्वा गच्छति इति प्रयोगो दुर्वारः । मैत्रभोजनानन्तर्यस्य, गम-

---

1 आनन्तर्यं — उत्तरकालवृत्तित्वम् ।

2 तत् — तदानन्तर्यम् ।

नोत्तरचैत्रकर्तृकभोजनमादाय समानकर्तृकत्वस्यापि संभवादिति चेन्न ।

यद्भोजनानन्तर्यं यद्गमने प्रतीयते, तद्भोजनसमानकर्तृकत्वस्यैव तत्रान्वयनियमेनानुपपत्त्यभावात् ।

चैत्रः स्थित्वा पश्यतीत्यादौ, [मुखं व्यादाय स्वपितीत्यादौ] [1]मुखव्यादानजनके, झणात्कृत्वा पतितः कंसः इत्यादौ झणात्कारजनके क्त्वाप्रत्ययस्य लक्षणेति वदन्ति ।

---

## भावः क्त्वाप्रत्ययार्थः, समानकर्तृकत्वादिकं द्योत्यमिति वैयाकरणानुयायिमतनिरूपणम्

वैयाकरणानुयायिनस्तु—क्त्वाप्रत्ययस्य भाव एवार्थः । समानकर्तृकत्वादिकं च क्त्वाप्रत्ययस्य द्योत्यमेव । द्योतकत्वं [2]चार्थयोः संसर्गे तात्पर्यग्राहकत्वम् । तथाहि—अत्र [3]भावः साध्यावस्थ एव । स च धातुना लब्धः । क्त्वा-

---

1 मुखव्यादानजनके इति — भावप्रधानो निर्देशः । जनकत्वे इत्यर्थः । एवमुत्तरत्रापि ।

2 अर्थयोः — क्त्वाप्रत्ययप्रकृतिधात्वर्थस्य प्रधानक्रियायाश्च ।

3 भावः — धात्वर्थः ।

प्रकृत्यर्थभूता च क्रिया क्रियान्तरे विशेषणम्, धातुसंबन्धाधिकारात् । (तयोः) [1]'समानकर्तृकयोः पूर्वकाले क्त्वा' (पा. सू. 3-4-21) इति सूत्रमपि [2]द्योतकत्वाभिप्रायेणैवोपपन्नम्। समानकर्तृकत्वादिप्रकारकबोधस्तु [3]विवादग्रस्त एव । एवं च, भुक्त्वा व्रजतीत्यादौ गमने भोजनस्य समानकर्तृकत्वानन्तर्योभयसंबन्धेन, मुखं व्यादाय स्वपितीत्यत्र स्वापे मुखव्यादानस्य समानकर्तृकत्व-समानकालीनत्वोभयसंबन्धेन, अधीत्य तिष्ठतीत्यादौ अवस्थाने अध्ययनस्य समानकर्तृकत्व–व्याप्यत्वोभयसंबन्धेन, तमेव विदित्वातिमृत्युमेतीत्यादौ [4]अतिमृ (त्व) [त्य्वा] पने तद्वेदनस्य समानकर्तृकत्वजन्यत्वोभयसंबन्धेनान्वयः । एवमन्यत्रापि यथानुभवमूह्यमित्याहुः ।

---

1 समानकर्तृकयोरिति — अत्र पाणिनिसूत्रे क्त्वा इति पदं नास्ति । अथापि क्त्वाप्रत्ययविधायकत्वात् 'समानकर्तृकयोः पूर्वकाले क्त्वा' इति सूत्रनिर्देशः कृतः।

2 द्योतकत्वाभिप्रायेणेति — पूर्वकाले इत्यत्र सप्तम्या द्योतकत्वमर्थो बोध्यः ।

3 विवादग्रस्त एवेति — तथाच तादृशबोधानुरोधेन समानकर्तृकत्वस्य क्त्वाप्रत्ययवाच्यत्वं न स्वीकरणीयमिति भावः ।

4 अतिमृत्य्वापने इति — इदं च अतिमृत्युं-मोक्षं एति-आप्नोतीति श्रुत्यर्थं इत्याशयेन । मृत्युं-अविद्यां अत्येतीति वैदिकानां श्रुतिव्याख्या बोध्या ।

## नञ्समभिव्याहारस्थलानुरोधेन समानकर्तृकत्वादेः वाच्यत्वमिति उक्तमतनिरसनम्

तदसत् । भुक्त्वा व्रजति न तु स्नात्वा इत्यत्र गमने स्नानसमानकर्तृकत्वानन्तर्ययोः, मुखं व्यादाय स्वपिति न तु संवृत्य इत्यत्र स्वापे मुखसंवरणसमानकर्तृकत्व—समानकालीनत्वयोः, अधीत्य तिष्ठति न तु शयित्वा इत्यत्रावस्थाने शयन [समान] कर्तृकत्वव्याप्यत्वयोः, भुक्त्वैवाहं तृप्तः न तु पीत्वा इत्यादौ तृप्तौ पानसमानकर्तृकत्वजन्यत्वोभयोः, अभावो नञा बोध्यते इति यथायथं समानकर्तृकत्वानन्तर्यादौ क्त्वाप्रत्ययार्थत्वस्यावश्यकत्वात् । न च तत्र समानकर्तृकत्वानन्तर्यादिसंबन्धावच्छिन्नप्रतियोगिताकाभावस्यैव नञा बोधनात् न तेषां क्त्वाप्रत्ययार्थत्वमिति वाच्यम् । समानकर्तृकत्वादेः [1]वृत्त्यनियामकतया नञा तत्संबन्धावच्छिन्नप्रतियोगिताकाभावस्य बोधयितुमशक्यत्वात् ।

---

1 वृत्त्यनियामकतयेति — अभावप्रतियोगितावच्छेदकसंबन्धत्वाभावेनेति शेषः । येन संबन्धेन वर्तते इति बुद्धिः, तेनैव संबन्धेन तन्नास्तीति बुद्धिरनुभवसिद्धेति भावः ।

## शाब्दसामग्रीप्रतिबन्धकत्वाकल्पनलाघवात् समानकर्तृकत्वादेः क्त्वाप्रत्ययार्थत्वनिरूपणम्

[1]वस्तुतस्तु, समानकर्तृकत्वादौ क्त्वाप्रत्ययार्थत्वोपगमे भुक्त्वा व्रजतीत्यादिशाब्दसामग्र्याः, गमनं भोजनसमानकर्तृकत्वाभाववदित्याद्यनेकविधमानसादौ प्रतिबन्धकत्वाकल्पनेन लाघवात्, समानकर्तृकत्वादेः क्त्वाप्रत्ययार्थत्वमेवोचितम् । अन्यथा तादृशशाब्दसामग्रीकाले तादृशमानसादिवारणाय अनेकप्रतिबन्धकतायां गौरवापत्तेः । [2]मन्मते तु तादृशशाब्दसामग्रीकाले योग्यताज्ञानविधया गमनादौ भोजनसमानकर्तृकत्वादिनिर्णयस्यावश्यकतया, बाधनिर्णयविधया[3]क्लृप्तप्रतिबन्धकतयैव तद्वारणात् । न च संशयनिश्चयसाधारण-

---

1 द्रव्यं गच्छति नाभाववमित्यत्र अभावसमवेतत्वस्याप्रसक्त्या तद्भावबोधासंभवेन द्वितीयार्थे समवेतत्वे निरूपितत्वेन(वृत्त्यनियामकेन)संबन्धेन प्रकृत्यर्थाभावस्याभावबोध एव स्वीकार्यः । ततश्च वृत्त्यनियामकस्यापि संबन्धस्य अभावप्रतियोगितावच्छेदकत्वमनुभवानुरोधात् स्वीकरणीयमित्याशयेनाह — वस्तुतस्त्विति ।

2 मन्मते — क्त्वाप्रत्ययार्थस्य समानकर्तृकत्वादेः प्रकारतया शाब्दबोधे भानाङ्गीकर्तृमंते ।

3 क्लृप्तप्रतिबन्धकतयैवेति — गमनं भोजनसमानकर्तृकत्वाभाववदिति मानसं प्रतीत्यादिः ।

योग्यताज्ञानस्य शाब्दबोधहेतुतया, योग्यतासंशयसत्त्वे तद्वारणाय योक्तप्रतिबन्धकताकल्पनमावश्यकम्, बाधसंशयस्याप्रतिबन्धकत्वादिति वाच्यम्। भ्रमसंशयोत्तरप्रत्यक्षनिर्णये विशेषदर्शनस्य हेतुतया [1]तदानीं तदभावादेव तद्वारणसंभवात्, विशेषदर्शनसत्त्वे च मानसस्यैवो[2]त्पत्त्या शाब्दबोधस्यैवानुत्पादात्। न च तादृशनिर्णये विशेषदर्शनस्य हेतुत्वमेव नास्तीति वाच्यम्। तस्यान्यत्र व्यवस्थापितत्वात्।

---

## कृतिरेव क्त्वाप्रत्ययार्थः इति नवीनमतनिरासः

एतेन, कृतिरेव क्त्वाप्रत्ययार्थः, कृतित्वस्य जातिरूपतया तस्य शक्यतावच्छेदकत्वे लाघवात्। न तु समानकर्तृकत्वानन्तर्यादौ क्त्वाप्रत्ययस्य शक्तिः, समानकर्तृकत्वत्वानन्तर्यत्वादेः गुरुतया तत्र तच्छक्यतावच्छेदकत्वकल्पने गौरवप्रसङ्गात्।

---

1 तदानीमित्यादि-तदानीं — योग्यतासंशयसत्त्वकाले, तदभावादेव — विशेषदर्शनाभावादेव. तद्वारणसंभवात् — भोजनसमानकर्तृकत्वाभावमानसप्रत्यक्षवारणसंभवात् इत्यर्थः।

2 उत्पत्त्येति — तथाच न तत्र प्रतिबन्धकता कल्पनीयेति भावः।

एवं च आनन्तर्यादौ क्त्वाप्रत्ययो लाक्षणिकः । कृतावेव शक्तः । तादृशकृतिश्च गौणक्रियाया विशेष्यत्वेन, प्रधानक्रियायाश्च विशेषणत्वेनान्वेति । एवं च चैत्रो भुक्त्वा व्रजतीत्यादौ भोजनानुकूलकृतिजन्यं यत् भोजनानन्तरगमनं तदनुकूलकृतिमांश्चैत्रः इत्याद्यन्वयबोधः । [1]अत्रानुकूलत्वं जन्यत्वं च संसर्गमर्यादया भासते । एवमन्यत्रापि यथानुभवमूह्यमिति नवीन [मत] मपि परास्तम्, इति [सं] क्षेपः ।

---

## एवकारार्थविचारः

एवकारस्यार्थत्रयकथनम्, अर्थत्रयस्य सोदाहरणमन्वयबोधवर्णनम्

एवकारस्य अत्यन्तायोगव्यवच्छेदः, अयोगव्यवच्छेदः, [अन्ययोगव्यवच्छेद] श्चार्थः । अत्यन्तायोगव्यवच्छेदार्थश्च [2]अक्षरतात्पर्याभ्यां अन्वयितावच्छेदकव्यापकत्वाभावविशिष्टो

---

1 अनुकूलत्वं जन्यत्वं चेति — गौणक्रियायाः भोजनादिकायाः अनुकूलतासंबन्धेन क्त्वाप्रत्ययार्थकृतौ, तादृशकृतेः जन्यतासंबन्धेन प्रधानक्रियायां गमनादिकायामन्वयो बोध्यः ।

2 अक्षरतात्पर्याभ्यां — श्रूयमाणपदेन तात्पर्येण च ।

योऽभावः [1]प्रतियोगितासंबन्धेन तद्विशिष्टव्यवच्छेदः । तत्र अत्यन्तपद-नञ्पद-योगपद-व्यवच्छेदपदैः व्यापकत्वाभाव-वैशिष्ट्य-व्यवच्छेदानां लाभः । इतरांशस्य तु तात्पर्यवशाल्लाभः । एतादृशात्यन्तायोगव्यवच्छेदबोधस्तु नीलं सरोजं भवत्येवेत्यादिक्रियासमभिव्याहृतैवकारस्थले भवति । तथाविधबोधे तादृशानुपूर्वीज्ञानस्य हेतुत्वात् । तथाच नीलं सरोजं भवत्येवेत्यादौ [2]सरोजत्वव्यापकत्वाभावविशिष्टाभावव्यवच्छेदवत् नीलभवनाश्रयत्ववत् सरोजमित्याद्याकारकः शाब्दबोधः । [3]भवनमत्राभेदः । [4]तत्संबन्धाभावः व्यवच्छेदे प्रतियोगितयाऽन्वेति ।

---

1 प्रतियोगितासंबन्धेन तद्विशिष्टव्यवच्छेदः — तत्प्रतियोगिकाभावः ।

2 सरोजत्वेत्यादि — सरोजत्वव्यापकत्वाभावविशिष्टः यः नीलभवनाश्रयत्वाभावः तत्प्रतियोगिकः यः व्यवच्छेदः-अभावः तद्वदित्यर्थः । नीलतादात्म्यरूपनीलभवनाश्रयत्वाभावः न सरोजत्वव्यापकः, नीलस्यापि सरोजस्य सत्त्वात् । तादृशनीलतादात्म्याश्रयत्वाभावस्याभावः नीलतादात्म्याश्रये सरोजे वर्तते इति बोध्यम् ।

3 भवनमत्रेति — नीलं सरोजं भवत्येवेति वाक्ये भूधातोरर्थः इति यावत् ।

4 तत्संबन्धाभावः — अभेदाश्रयत्वाभावः ।

तादात्म्याभावव्यवच्छेद एव अयोगव्यवच्छेदः । तस्य च शङ्खः पाण्डर एवेत्यादिविशेषणसंगतैवकारस्थले बोधः । तादृशायोगव्यवच्छेदबोधे तादृशानुपूर्वीज्ञानस्य हेतुत्वात् । इत्थं च शङ्खः पाण्डर एवेत्यादौ पाण्डरतादात्म्याभावव्यवच्छेदवान् शङ्खः इत्याद्याकारकान्वयबोधः ।

अन्ययोगव्यवच्छेदश्च अन्यतादात्म्यादिव्यवच्छेदः । एतद्बोधश्च विशेष्यसंगतैवकारस्थले पार्थ एव धनुर्धरः इत्यादौ बोध्यः । तादृशबोधे तादृशानुपूर्वीज्ञानस्य हेतुत्वात् । एवं च पार्थ एव धनुर्धरः इत्यादौ पार्थान्यतादात्म्याभाववद्धनुर्धराभिन्नः पार्थः इत्याद्याकारकोऽन्वयबोधः ।

---

### ज्ञानमर्थं गृह्णात्येवेतिवत् ज्ञानं रजतं गृह्णात्येवेति प्रयोगप्रसङ्गः इत्याक्षेपः, तत्प्रतिक्षेपश्च

ननु क्रियासमभिव्याहारे एवकारस्य अत्यन्तायोगव्यवच्छेदबोधकत्वे, ज्ञानमर्थं गृह्णात्येव, ब्राह्मणो वेदानधीते एव इत्यादिवत्, ज्ञानं रजतं गृह्णात्येव, नरो वेदानधीते एवेत्यादि-

प्रयोगप्रसङ्गः । तत्र [1]ज्ञानत्वादिव्यापकत्वाभावविशिष्ट-रजतनिरूपितविषयिताश्रयत्वाभावादिव्यवच्छेदस्य ज्ञानत्वादि-सामानाधिकरण्येन बोधसंभवात् । न चान्वयितावच्छेदका-वच्छेदेनैव अत्यन्तायोगव्यवच्छेदबोधाङ्गीकारात् न दोष इति वाच्यम् । नीलं सरोजं भवत्येवेत्यादौ सरोजत्वाद्यवच्छेदेन नीलभवनाश्रयत्वायोगव्यवच्छेदासंभवेन [2]तथा वक्तुमशक्य-त्वादिति चेन्न ।

ज्ञान-अध्ययनाद्यर्थकधा(त्व)[तु]समभिव्याहृताख्यात-समभिव्याहृतैवकारस्य अन्वयितावच्छेदकावच्छेदेनैव अत्यन्ता-योगव्यवच्छेदबोधकत्वाङ्गीकारेणो[3]क्तापत्तेरभावात् । ज्ञानमर्थं

---

1 ज्ञानत्वादीत्यादि — ज्ञानत्वादिव्यापकत्वाभावविशिष्टः यः रजतनिरूपितविषयिताश्रयत्वाभावादिः, तद्व्यवच्छेदस्येत्यर्थः। रजतं गृह्णाति इत्यत्र धात्वर्थः विषयिता, तदन्वयि निरूपितत्वं द्वितीयार्थः, आश्रयत्वमाख्यातार्थः। रजतनिरूपितविषयिता-श्रयत्वाभावः न ज्ञानत्वव्यापकः, रजतविषयकस्य ज्ञानस्य सत्त्वात् । तादृशविषयिताश्रयत्वाभावस्य व्यवच्छेदः रजत-ज्ञाने वर्तते इति ज्ञानं रजतं गृह्णात्येवेति प्रयोगापत्तिरिति समु-दायार्थः ।

2 तथा वक्तुं— अन्वयितावच्छेदकावच्छेदेनैव अत्यन्तायोगव्य-वच्छेदस्य बोधः इति वक्तुम् ।

3 उक्तापत्तेः — ज्ञानं रजतं गृह्णात्येव, नरो वेदानधीते एवेति प्रयोगापत्तेः ।

गृह्णात्येवेत्यादौ च ज्ञानत्वादिव्यापकत्वाभावविशिष्ट – अर्थविषयिताश्रयत्वाद्यभावव्यवच्छेदस्य [1]ज्ञानत्वाद्यवच्छेदेन सत्त्वान्न दोषः ।

---

## क्रियासंगतैवकारस्यात्यन्तायोगव्यवच्छेदबोधकत्वमित्यादिः न नियमः

अत्रेदं बोध्यम् । उक्तरीत्या क्रियादिसंगतैवकारस्यात्यन्तायोगादिव्यवच्छेदबोधकत्वमिति न सर्वथा नियमः । किन्तु उत्सर्गः । तात्पर्यवशादनुभावानुसारेण क्वचिदन्यथापि बोधात् । एवं च यथानुभवं तादृशबोधे तादृशानुपूर्वीज्ञानस्य हेतुत्वं बोध्यम् । [2]अत एव चैत्रस्यैवेदं धनम्, पृथिव्यामेव गन्धः इत्यादौ एवकारस्य विशेषणसंगतत्वेऽपि [3]चैत्रान्यस्वत्वव्यवच्छेद-

---

1 ज्ञानत्वाद्यवच्छेदेन सत्वादिति—अर्थाविषयकस्य ज्ञानस्याभावादिति भावः ।

2 अत एव—विशेष्यसंगतस्यैवकारस्य अन्ययोगव्यवच्छेदबोधकत्वं, विशेषणसंगतस्य अयोगव्यवच्छेदबोधकत्वं, क्रियासंगतस्य अत्यन्तायोगव्यवच्छेदबोधकत्वमिति नियमस्याभावादेव ।

3 चैत्रान्यस्वत्वेति – चैत्रस्यैवेत्यत्र षष्ठ्यर्थः स्वत्वमन्ययोगः, पृथिव्यामेवेत्यत्र सप्तम्यर्थः समवेतत्वमन्ययोगः इति बोध्यम् ।

पृथिव्यन्यसमवेतत्वव्यवच्छेदरूपान्ययोगव्यवच्छेदबोधकत्वमुप-पद्यते ।

---

ऋतौ स्वदारान् गच्छेदेवेत्यत्रायोगव्यवच्छेदबोधः

एवं ऋतौ स्वदारान् गच्छेदेवेत्यादौ एवकारस्य क्रिया-संगतत्वेऽपि अयोगव्यवच्छेदबोधकत्वम् । तत्र ऋतुकाला-वच्छिन्न–स्वदारनिष्ठकर्मताकगमनाभावाभावः प्रत्यवायाभाव-रूपेष्टसाधनमित्याद्याकारकः [1]एवकारार्थविशेष्यको बोधः । नचैतादृशवाक्येन ऋतुकालीनस्वदारकर्मकगमनाभावस्य प्रत्य-वाय[2]हेतुत्वालाभेन ऋतुकालीनस्वदारकर्मकगमनाभावात् प्रत्य-वायोत्पादो न स्यादिति वाच्यम् । तादृशबोधोत्तरं यदभावो यदभावेष्टसाधनं, तत् तत्साधनमिति व्याप्तिबलात् उपदर्शित-गमनाभावे प्रत्यवायहेतुत्वस्यानुमितिसंभवेन तादृशगमनाभावस्य प्रत्यवायहेतुत्व[3]लाभेनोक्तदोषाभावात् ।

---

1 एवकारार्थविशेष्यकेति — प्रथमान्तार्थस्यैव शाब्दबोधमुख्य-विशेष्यत्वमिति नियमाभावादिति भावः ।

2 प्रत्यवायहेतुत्वालाभेनेति —प्रत्यवायहेतुत्वविषयकशाब्दबोधा-नुदयेनेति यावत् ।

3 लाभेन — ज्ञानेन ।

## ऋतुकालीनस्वदारगमनाभावस्य प्रत्यवायहेतुत्वविचारः

(तत्तु) [ननु] ऋतुकालीनस्वदारकर्मकगमनाभावेत्यत्र स्वपदं तत्तदात्मपरम् । तथा च कायव्यूहस्थले एकशरीरावच्छेदेन स्वदारकर्मकगमनसत्त्वे शरीरान्तरावच्छेदेन प्रत्यवायो न स्यात्, तादृशगमनाभावरूप[1]हेतुत्वभावात् । न च प्रत्यवाये तच्छरीरावच्छिन्न–ऋतुकालीन स्वदारकर्मकस्वकृतिजन्यगमनाभावस्य हेतुत्वकल्पनान्न दोष इति वाच्यम् । तथा सति यस्य पुरुषस्य ऋतुकालीनं स्वदारकर्मकगमनमप्रसिद्धम्, तस्य तदभावाप्रसिद्ध्या प्रत्यवायो न स्यादिति चेन्न ।

[2]स्वदारनिष्ठस्य ऋतुकालावच्छिन्न तत्तच्छरीरावच्छिन्नस्वकृतिजन्याभिगमनसंबन्धावच्छिन्न तत्तदात्माभावकूटस्यैव प्रत्यवायं प्रति हेतुत्वेनोक्तदोषाभावात् । यस्य तादृशाभिगम [नम] प्रसिद्धं, तस्यैतादृशसंबन्धस्य व्यधिकरणतया तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावस्य स्वदारे [ष्व] पि सत्त्वात् ।

---

1 हेत्वभावादिति — स्वपदार्थस्यात्मनः शरीरभेदेऽप्यभेदादिति भावः ।

2 स्वदारनिष्ठस्येति–तादृशाभावस्य स्वाश्रयनिरूपितपतित्वसंबन्धेन प्रत्यवाये हेतुत्वं बोध्यम् ।

वस्तुतस्तु, स्वदारकर्मकत्व-स्वकर्तृकत्वोभयाभावविशिष्टतत्तच्छरीरावच्छिन्न ऋतुकालावच्छिन्न गमनाभावानां प्रत्यवायहेतुत्वान्नानुपपत्तिः । न च यस्य तादृशगमनमेवाप्रसिद्धं तस्य कारणाभावात् प्रत्यवायो न स्यादिति वाच्यम् । तस्यापि ऋतुकालावच्छेदेन तत्तच्छरीरावच्छेदेन च देशान्तरे ग्रामान्तरे [1]गमनसंभवेनाप्रसिद्ध्यभावादिति संक्षेपः ।

---

## सर्वत्र एवकारस्य अन्ययोगव्यवच्छेद एवार्थः इति नव्यानां मतनिरूपणम्

नव्यास्तु, [2]सर्वत्र एवकारस्य अन्ययोगव्यवच्छेद एवार्थः । अन्ययोगश्च अन्यसंबन्धमात्रम् । एवं (बलीनां) [च नीलं] सरोजं भवत्येवेत्यादौ आख्यातस्याश्रये धर्मिणि लक्षणया नीलभवनवदन्यत्वव्यवच्छेदः [3]सरोजत्वसामानाधिकरण्येन

---

1 गमनसंभवेन — संयोगानुकूलव्यापारसंभवेन ।

2 सर्वत्रेति — क्रियासंगतत्वे, विशेषणसंगतत्वे, विशेष्यसंगतत्वे-चेति यावत् ।

3 सरोजत्वावच्छेदेन उक्तव्यवच्छेदस्य बाधादाह — सरोजत्व-सामानाधिकरण्येनेति ।

प्रतीयते । शङ्खः पाण्डर एवेत्यादौ शङ्खत्वावच्छेदेन पाण्डरान्यत्वव्यवच्छेदबोधः । पार्थ एव धनुर्धरः इत्यादौ धनुर्धरत्वावच्छेदेन पार्थान्यत्वव्यवच्छेदबोधः । पृथिव्यामेव गन्धः इत्यादौ (द्रव्यत्वाभावे घटत्वाभाववदन्यत्रिशेषणत्वाभावः) [गन्धे पृथिव्यन्यवृत्तित्वाभावः,] ऋतौ स्वदारान् [ग]च्छेदेवेत्यत्र तादृशगमनवदन्यत्वव्यवच्छेदे प्रत्यवायपरिहाररूपेष्टसाधनत्वं प्रतीयते इत्यादि बोध्यम् । न च पृथिव्यामेव गन्धः इत्यादौ पृथिव्याः सप्तम्यर्थविशेषणतयोपस्थित्या कथमेवकारार्थान्यत्वेऽन्वयः । [1]एकविशेषणत्वेनोपस्थितस्यान्यत्रान्वयस्याव्युत्पन्नत्वादिति वाच्यम् । एवकारस्थले तादृशव्युत्पत्तिसंकोचात् । एव [2]मन्यादृशव्युत्पत्तिविरोधोऽपि, तत्तद्व्युत्पत्तेः एवकारस्थले संकोचमङ्गीकृत्य परिहरणीयः इति वदन्ति॥

---

1 एकविशेषणत्वेनोपस्थितस्यान्यत्रान्वये राजपुरुषमानयेत्यादौ कर्मत्वे राज्ञः अन्वयापत्तिर्बोध्या ।

2 अन्यादृशव्युत्पत्तिविरोधोऽपि —ऋतौ स्वदारान् गच्छेदेवेत्यादौ लिङर्थस्य प्रत्यवायाभावरूपेष्टसाधनत्वस्य एवकारार्थे व्यवच्छेदे अन्वये, प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधोऽपि ।

### चैत्रस्यैवायं भ्राता इति वाक्यजबोधविचारः

अथ चैत्रस्यैवायं भ्राता इत्यत्र कीदृशान्वयबोधः इति चेत् ।

---

### केषांचिन्मतेन चैत्रान्यभ्रातृकत्वव्यवच्छेदबोधवर्णनं, तन्निरासश्च

अत्र केचित्, चैत्रान्यभ्रातृकत्वाभाववानयं मैत्रः इति बोधः । अत्र चैत्रान्यभ्रातृकत्वं, न चैत्रान्यजनकजन्यत्वम् । चैत्रान्यस्य [1]स्वस्यैव यज्जनक [त्वं] तन्निरूपितजन्यत्वस्य स्वस्मिन् सत्त्वेन तद्व्यवच्छेदबोधासंभवात् । नापि चैत्रान्यभिन्नत्वे सति [2]तज्जनकजन्यत्वं चैत्रान्यभ्रातृकत्वम् । चैत्रान्ययत्किञ्चित्प्रतियोगिकभेदस्यापि [3]स्वस्मिन् सत्त्वात् । चैत्रान्यत्वावच्छिन्नभेदविशिष्टस्य तज्जनकजन्यत्वस्य चैत्रे एव सत्त्वेन

---

1 स्वस्यैव यज्जनकत्वं — प्रथमान्तपदार्थमैत्रनिरूपितं पितृनिष्ठं जनकत्वमिति यावत् । स्वस्मिन्नित्यत्रापि स्वपदार्थः मैत्र एवेति बोध्यम् ।

2 तज्जनकजन्यत्वं — चैत्रान्यजनकजन्यत्वम् ।

3 स्वस्मिन् सत्त्वादिति — तथाच विशेषणाभावप्रयुक्तः विशिष्टाभावः मैत्रे न संभवतीति भावः ।

[1]चैत्रमैत्रोभयभ्रातृकेऽपि चैत्रस्यैवायं भ्राता इत्यादिप्रयोगप्रसङ्गात्।' चैत्रान्यतत्तद्व्यक्तीनां प्रातिस्विकरूपेण भेदघटितस्य चैत्रान्यभ्रातृकत्वस्य च युगसहस्रेणापि दुर्ज्ञेयत्वात्। किन्तु तद्भेदावच्छिन्नस्वरूपसंबन्धेन तज्जनकजन्यतावत्त्वं तद्भ्रातृकत्वम्। चैत्रभेद एव च चैत्रजनकजन्यत्वस्यैव संबन्धो नान्यस्येति वक्तव्यम्। चैत्रे चैत्रभेदावच्छिन्नस्वरूपसंबन्धेन चैत्रजनकजन्यत्वस्या [2]सत्त्वेन चैत्रे चैत्रभ्रातृकत्वस्य न प्रसङ्गः। तद्भेदश्च एककालीनद्व्यावृत्तिधर्मावच्छिन्नप्रतियोगिताको बोध्यः। न तु एकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकः। तेन चैत्रीयशिशुशरीरभिन्नत्वेऽपि तदीययुवशरीरस्य न तद्भ्रातृकत्वप्रसङ्गः, न चोभयत्वावच्छिन्नभेदमादाय [3]तत्र तद्भ्रातृकत्वप्रसङ्गः इत्याहुः।

---

1 चैत्रमैत्रोभयभ्रातृकेऽपीति -- देवदत्तादाविति शेषः।

2 असत्त्वेनेति — तथाच चैत्रान्य (स्व) जनकजन्यत्वस्य स्वरूपसंबन्धः(चैत्रान्यभेदः)स्वस्मिन् मैत्रे नास्तीति चैत्रान्यभ्रातृकत्वव्यवच्छेदः मैत्रे वर्तते इति भावः।

3 तत्र — युवशरीरे।

तदसत् । चैत्रभेदावच्छिन्न स्वरूपसंबन्धः चैत्रजनक-जन्यत्वस्यैव संबन्धः, नान्यस्येति न नियमः । किन्तु यस्य स्वरूपसंबन्धः भेदोऽपि तस्यैवेत्येव नियमात् ।

---

चैत्रान्यभ्रातृकत्वस्य परिष्कारान्तरं, तन्निराकरणं च

(यत्र)[यत्तु] चैत्रान्यावधिकपृथक्त्वाश्रयत्वे सति चैत्रान्यजनकजन्यत्वमेत्र चैत्रान्यभ्रातृकत्वम्, तस्य च मैत्रे व्यवच्छेदः । चैत्रीययुवशरीरस्य तदीयशिशुशरीरावधिकपृथक्त्वाश्रयत्वेऽपि तस्य [न] तद्भ्रातृकत्वं, तज्जनकाजन्यत्वात्, प्रथमशरीरस्यैव तज्जन्यत्वात् । [1]एवं च युवशरीरे भ्रातृत्वव्यवहारः तादृशशिशुशरीरवृत्ति चैत्रत्वादिजातिनिबन्धनः इति ।

तदसत् । शुक्रशोणितसंनिपातादिपरम्पराद्वारा प्रथमशरीरवत् युवशरीरेऽपि पितुर्जनकत्वात् । अन्यथा प्रथमशरीरेऽपि पितुर्जनकत्वं न स्यात् । न हि रेतस्सेकेन [2]आहत्यैव प्रथमशरीरमुत्पाद्यते । न च तदवधिकपृथक्त्वे तज्जनक-

---

1 एवं च — युवशरीरस्य शिशुशरीरजनकजन्यत्वाभावे च ।
2 आहत्यैव — साक्षादेव ।

जन्यत्वे च भ्रातृत्वप्रतियोगिनां प्रातिस्विकरूपेण प्रवेशान्न दोष इति वाच्यम् । तथासति अनन्तशक्त्या दुर्ज्ञेयत्वापत्तेः ।

---

### स्वरूपसंबन्धविशेषेण चैत्रान्यजनकजन्यत्वस्य व्यवच्छेदबोधः इति केषांचिन्मतनिरूपणम्

केचित्तु स्वाश्रयसमानाधिकरणवृत्तिएककालीनद्वयावृत्तिधर्मावच्छिन्नचैत्रान्यवृत्तिप्रतियोगिताकान्योन्याभावावच्छिन्नस्वरूपसंबन्धेन चैत्रान्यजनकजन्यत्वस्य व्यवच्छेदो मैत्रे भासते । सामानाधिकरण्यं च फलोपधानाख्यजनकतासंबन्धेन बोध्यमिति प्राहुः ।

---

### भ्रातृपदस्य अनुगतैकशक्तिं स्वीकृत्योक्तस्थले चैत्रान्यभ्रातृकत्वस्य व्यवच्छेदबोधं वर्णयतां अपरेषां मतनिरूपणम्

[1]अपरे तु, अवच्छिन्नमनोनिष्ठान्योन्याभावप्रतियोगितावच्छेदके जनकजन्ये एव भ्रातृपदार्थे भ्रातृपदस्य शक्तिरेकैव ।

1 अपरे त्विति — अस्य व्यवहितेन आहुः इत्यनेन संबन्धः ।

न तु चैत्रमैत्राद्यन्तर्भावेणानन्तशक्तिः । अवच्छिन्नत्वे जनकत्वे च समभिव्याहृतपदार्थस्य भ्रातृप्रतियोगिनः चैत्रादे-[1]रन्वयः । मैत्रस्य भ्राता मैत्रः इत्यादिप्रयोगवारणाय [2]अवच्छेदकान्तस्य शक्तावन्तर्भावः । चैत्रस्य भ्राता मैत्रः इत्यत्र चैत्रशरीरावच्छिन्नमनोनिष्ठान्योन्याभाव[3]प्रतियोगितावच्छे-दकत्वस्य, चैत्रजनकजन्यत्वस्य च मैत्रे सत्त्वात् भ्रातृत्वबोधः ।

अथैवमपि, मैत्रस्य भ्राता मैत्रः चैत्रः सुन्दरः इत्यादि-प्रयोगापत्तिः । मैत्रशरीरावच्छिन्नमनोनिष्ठान्योन्याभावप्रति-योगितावच्छेदकत्वस्य चैत्रे, मैत्रशरीरजनकजन्यत्वस्य मैत्रे सत्त्वादिति चेन्न ।

यत्र विशेष्यविधया भ्रातृपदार्थान्वयः, तत्रैव तादृशा-न्योन्याभावप्रतियोगितावच्छेदकत्वबोधो नान्यत्रेति व्युत्पत्तेः । मैत्रस्य भ्राता चैत्रः इत्यत्र तु मैत्रशरीरावच्छिन्नमनोनिष्ठान्यो-याभावप्रतियोगितावच्छेदकत्वे सति मैत्रजनकजन्यश्चैत्रः

1 अन्वय इति — निरूपितत्वसंबन्धेनेत्यादिः

2 अवच्छेदकान्तस्य — अवच्छिन्नमनोनिष्ठभेदप्रतियोगितावच्छेदकस्य ।

3 प्रतियोगितावच्छेदकत्वस्येति — चैत्रशरीरावच्छिन्नमनसि मैत्र-शरीरावच्छिन्नमनोभेदसत्त्वादिति भावः ।

इत्येवान्वयबोधः । इत्थं च मैत्रस्य भ्राता मैत्रः इत्यादिप्रयोगो न संभवति । अत्र हि भ्रातृपदार्थस्य विशेष्यविधया अन्वयो भविष्यति मैत्रे । स च न मैत्रशरीरावच्छिन्नमनोनिष्ठान्योन्याभावप्रतियोगितावच्छेदकः, मैत्रशरीरावच्छिन्नमनसि मैत्रावच्छिन्नभेदासत्त्वात् । नचैवमपि कायव्यूहस्थले अयमस्य भ्रातेति प्रयोगापत्तिरिति वाच्यम् । इष्टापत्तेः । एकस्यैव मनसः नानाशरीरावच्छिन्नत्वाभ्युपगमेनोक्तापत्त्यभावाच्च ।

---

### भ्रातृपदशक्तौ अवच्छेदकान्तं न निवेशनीयमिति अवान्तराक्षेपः तत्परिहारश्च

यत्तु,विशेष्यविधया यत्र जनकजन्यरूपभ्रातृपदार्थान्वयः, तत्र विशेषणताविशेषसंबन्धेन भ्रातृपदार्थप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकान्योन्याभावस्य [1]स्वरूपतः सत्त्वमपेक्षितमिति, न मैत्रस्य भ्राता मैत्रः इति प्रयोगापत्तिः । इत्थं च [2]शक्तावपि अवच्छेदकान्तं न निवेशनीयमिति ।

---

1 स्वरूपतः सत्त्वमिति — न तस्य बोधविषयतेति भावः ।

2 शक्तावपि — भ्रातृपदशक्यतावच्छेदकेऽपि ।

तदसत् । तथासति मैत्रे एव मैत्रान्यत्वभ्रान्त्या मैत्रस्य भ्रातायमिति प्रयोगानापत्तेः । तत्र भ्रातृपदार्थविशेष्ये मैत्रे स्वरूपतो मैत्रान्योन्याभावस्यासत्त्वात् ।

एवं च चैत्रस्य भ्राता मैत्रः इत्यादौ चैत्रावच्छिन्नमनो-निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वे सति चैत्रजनकजन्य-तावान् मैत्रः इत्याद्याकारकोऽन्वयबोधः । चैत्रस्यैवायं भ्राता मैत्रः इत्यत्र च चैत्रान्यशरीरावच्छिन्नमनोनिष्ठान्योन्याभावप्रति-योगितावच्छेदकत्वविशिष्ट- चैत्रान्यजनकजन्यत्वाभाववानित्या-कारकोऽन्वयबोधः ।

न च चैत्रमात्रभ्रातृकेऽपि चैत्रस्यैवायं भ्रातेति प्रयोग-स्याप्रमाणत्वापत्तिः, चैत्रान्यदेवदत्तशरीरावच्छिन्नमनोनिष्ठान्यो-न्याभावप्रतियोगितावच्छेदकत्वस्य। चैत्रान्यमैत्रजनकजन्यत्वस्य च मैत्रे सत्त्वेन तद्व्यवच्छेदबोधस्याप्रमात्वादिति वाच्यम् । अवच्छिन्नत्वे भ्रातृत्वप्रतियोगि (म) [य] द्व्यक्तेरन्वयः, तद्व्यक्तेरेव जनकत्वेऽन्वयः इति [1]व्युत्पत्तिस्वीकारेणादोषा-दित्याहुः ।

---

1 व्युत्पत्तिस्वीकारेणेति — अवच्छिन्नत्वे चैत्रान्यदेवदत्तस्य, जन-कत्वे चैत्रान्यमैत्रस्य चान्वयो न संभवतीति नोक्तापत्तिरित्यर्थः ।

विधान्तरेण चैत्रस्यैवायं भ्रातेत्यत्र बोधं वर्णयतामन्येषां मतम्

अन्येतु, स्वाश्रयीभूततत्तच्छरीरजनकत्वसंबन्धेन चैत्रान्यत्वविशिष्टो यः तस्य (ए) [ये] तत्तद्व्यक्तिभिन्नत्वविशिष्टजन्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावाः, ते एवेदंपदार्थे तत्र प्रतीयन्ते । चैत्रमैत्रोभयभ्रातृके स्वाश्रयमैत्रजनकत्वसंबन्धेन चैत्रान्यत्वविशिष्टो [1]यः तस्योपदर्शितजन्यतासंबन्धेन सत्त्वेन तावदभावकूटासत्त्वात् तथाविधबोधासंभवेन न तादृशप्रयोगापत्तिः । न च चैत्रमात्रभ्रातृकेऽपि मैत्रे स्वाश्रयीभूतमैत्रीयबालकशरीरजनकत्वसंबन्धेन चैत्रान्यत्वविशिष्टस्योपदर्शितसंबन्धेन मैत्रीययुवशरीरे [2]सत्त्वात् तथाविधबोधासंभवेन तादृशप्रयोगानुपपत्तिरिति वाच्यम् । तत्तद्व्यक्ति [3]शरीरमात्रवृत्ति-

---

1 यः — चैत्रमैत्रोभयजनकः (पिता) तस्य उपदर्शितजन्यतासंबन्धेन-तद्व्यक्तिभूतमैत्रान्यत्वविशिष्ट जन्यतासंबन्धेन सत्त्वेन मैत्रान्यदेवदत्ते चैत्रमैत्रोभयभ्रातृके सत्त्वेन इत्यर्थः ।

2 सत्त्वादिति —तावदभावकूटाभावादिति शेषः ।

3 शरीरमात्रवृत्तीति — मैत्रत्वजातेः मैत्रीयबाल-युवशरीरसाधारणत्वादिति भावः ।

जात्यभावविशिष्टजन्यतासंबन्धावच्छिन्नप्रतियोगिताकतावदभाव-कूटस्य तत्र बोधोपगमेनानुपपत्त्यभावादित्याहुः ॥

---

भ्रातृपदप्रवृत्तिनिमित्तस्य, चैत्रस्यैवायं भ्रातेति वाक्यजबोधस्य च निष्कर्षः

अत्र वदन्ति—स्वावच्छिन्नभिन्नत्व—स्वाश्रयजनकजन्यत्वोभयसंबन्धेन तद्वृत्तिजातिमत्त्वमेव भ्रातृपदप्रवृत्तिनिमित्तम् । [1]वृत्तौ चैत्रादिनिरूपितत्वान्वयः । चैत्रादिभ्रातरि तादृशोभयसंबन्धेन चैत्रत्वादिजातिसत्त्वात् चैत्रादिभ्रातृव्यवहारः । चैत्रमैत्रोभयादिभ्रातरि तादृशोभयसंबन्धेन चैत्रान्यसंबन्धयवृत्तिमैत्रत्वादिजातिसत्त्वात् चैत्रान्यादिभ्रातृव्यवहारः । तद्व्यक्तित्वाद्यवच्छिन्नभेदवति [2]स्वीयशरीरान्तरे स्वभ्रातृत्ववारणाय

---

1 वृत्तौ चैत्रादिनिरूपितत्वान्वय इति — चैत्रस्य भ्राता इत्यत्र षष्ठ्यन्तार्थस्य चैत्रनिरूपितत्वस्य भ्रातृपदार्थतावच्छेदकैकदेशे वृत्तौ-आधेयतायामाश्रयतासंबन्धेनान्वय इत्यर्थः ।

2 स्वीयशरीरान्तरे — स्वीये युवशरीरे ।

[1]धर्मस्य जातित्वेन निवेशः। न चैकमात्रशरीरकस्य भ्रातरि भ्रातृत्वं न स्यात्, भ्रातृशरीरावृत्ति–तद्वृत्ति[2]जातेरप्रसिद्धत्वादिति वाच्यम्। तादृशपुरुषे प्रमाणाभावात्। एककालीनोभया-वृत्तिजातिन्यूनवृत्त्यन्यधर्मविशिष्टत्वमेव वा वक्तव्यम्। तादृश-धर्मश्च [3]दर्शितस्थले तादृशशरीरनिष्ठतद्व्यक्तित्वमपीति न दोषः। तद्व्यक्तित्वमादाय स्वस्मिन् स्वभ्रातृत्ववारणायान्यान्तं धर्मविशेषणम्। तस्य तादृशचैत्रत्वादिन्यूनवृत्तित्वान्न दोषः। चैत्रत्वादेरपि द्रव्यत्वादिजातिन्यूनवृत्तित्वादसंभववारणाया (साव) [4]वृत्त्यन्तम्। द्रव्यत्वादेरेककालीनोभय–घटपटादिवृत्तित्वान्न दोषः। तद्व्यक्तित्ववारणाय जातित्वनिवेशः। इत्थं च चैत्र-

---

1 धर्मस्य जातित्वेन निवेश इति — भ्रातृपदप्रवृत्तिनिमित्तशरीरे उक्तोभयसंबन्धेन स्ववृत्तिधर्मवत्त्वमिति निवेशे धर्मपदेन बाल-शरीरवृत्तितद्व्यक्तित्वमादाय पूर्वोक्तदोष इत्यर्थः।

2 जातेरप्रसिद्धत्वादिति— एकव्यक्तिकत्वरूपजातिबाधकसत्त्वा-दिति भावः।

3 दर्शितस्थले — एकमात्रशरीरकस्थले।

4 अवृत्त्यन्तम् — एककालीनद्वयावृत्तित्वम्।

स्यैवायं भ्रातेत्यत्र निरुक्तचैत्रान्यभ्रातृत्वस्य [1]देवदत्तादौ प्रसिद्धस्य व्यवच्छेदो मैत्रादौ सुघट इति न काप्यनुपपत्तिरिति ।

---

**अन्ययोगप्रतियोगिकव्यवच्छेद इव अन्यानुयोगिको योगव्यवच्छेदोऽपि एवकारार्थः । सर्वत्र अन्यानुयोगिको योगव्यवच्छेद एव वा एवकारार्थः**

अत्रेदं बोध्यम् । चैत्रस्यैवेदं धनम्, पृथिव्यामेव गन्धः, [2]इत्यादौ यदि चैत्रान्यस्वत्व–पृथिव्यन्यसमवेतत्वव्यवच्छेदबोधः स्वीक्रियते । तदा स्वत्वं चैत्रान्यस्य न कस्यापि, पृथिव्यन्यस्मिन् न किञ्चित् समवैति, भोजनं न जलान्यस्य कस्य चित्, भ्राता न चैत्रान्यस्य कस्य चिदित्यादिभ्रमदशायामुक्तस्थले शाब्दबोधानुपपत्तिः । [3]स्वत्वादौ चैत्रान्यीयत्वा-

---

1 देवदत्तादौ — चैत्रान्ययज्ञदत्तभ्रातरि देवदत्तादौ ।

2 इत्यादाविति — आदिना चैत्रो जलमेव भुङ्क्ते चैत्रस्यैवायं भ्राता इत्यनयोः परिग्रहः ।

3 स्वत्वादावित्यादि — स्वत्वे चैत्रान्यप्रतियोगिकत्वाभावस्य, समवेतत्वे पृथिव्यन्यनिरूपितत्वाभावस्य, भोजने जलान्यकर्मकत्वाभावस्य, भ्रातृत्वे चैत्रान्यप्रतियोगिकत्वाभावस्य च भ्रमरूपनिर्णयेनेत्यर्थः । उक्तभ्रमेण प्रतिबन्धात् चैत्रनिरूपितस्वत्वादिप्रतियोगिज्ञानानुदयेन तदभावबोधासंभव इति भावः ।

द्यभावनिर्णयेन चैत्रान्यीयस्वत्वादिव्यवच्छेदबोधासंभवात् । एवं प्राणिन एव धनम्, जातिमत्येव सत्ता, द्रव्यमेव भुङ्क्ते, प्राणिन एव भ्राता इत्यादावपि शाब्दबोधानुपपत्तिः । प्राणिभिन्नस्वत्वाद्यप्रसिद्ध्या तद्व्यवच्छेदबोधासंभवादिति, अन्ययोगप्रतियोगिकव्यवच्छेद इव अन्यानुयोगिको योगव्यवच्छेदोऽप्येवकारार्थः ।

अन्यानुयोगिको योगव्यवच्छेद एव वा सर्वत्र एवकारार्थः इत्यभ्युपेयः । इत्थं च चैत्रस्यैव धनमित्यादौ चैत्राद्यन्यस्मिन् धनस्वामित्वाद्यभावः, पृथिव्यामेव गन्धः इत्यादौ पृथिव्याद्यन्यस्मिन् गन्धसमवायाद्यभावः, चैत्रो जलमेव भुङ्क्ते इत्यादौ जलाद्यन्यस्मिन् चैत्रकर्तृकभोजनकर्मत्वाद्यभावः, चैत्रस्यैवायं भ्राता इत्यादौ चैत्राद्यन्यस्मिन् [1]तन्निष्ठभ्रातृत्वप्रतियोगित्वाद्यभावः प्रतीयते । तत्र च नानुपपत्तिलेशोऽपि ।

---

1 तन्निष्ठेति — चैत्रमात्रभ्रातृकमैत्रनिष्ठेत्यर्थः । सर्वत्र शाब्दबोधे प्रथमान्तार्थस्य मुख्यविशेष्यत्वनियमो नास्तीति पूर्वोक्तमनुसन्धेयम् ।

न च धनस्वामित्वत्वाद्यवच्छिन्नानुपस्थित्या तद्व्यवच्छेदबोधासंभव इति वाच्यम् । धनस्वामित्वत्वाद्यवच्छिन्ने लक्षणास्वीकारेणादोषात् ।

---

## अन्यानुयोगिको व्यवच्छेद एव सर्वत्र एवकारार्थः

वस्तुतस्तु, अन्यानुयोगिको व्यवच्छेद एव सर्वत्र एवकारार्थः । न तु योगांशस्यापि व्यवच्छेदप्रतियोगितया निवेशो मानाभावात् । व्यवच्छेदश्च द्विविधः, अन्योन्याभावः अत्यन्ताभावश्च । पार्थ एव धनुर्धरः इत्यत्र पार्थान्यस्मिन् धनुर्धरत्वावच्छिन्नभेदः, शङ्खः पाण्डर एवेत्यत्र पाण्डरान्यस्मिन् शङ्खत्वावच्छिन्नभेदः, नीलं सरोजं भवत्येवेत्यत्र [1]नीलभवनाश्रयान्यत्वसामानाधिकरण्येन सरोजत्वावच्छिन्नभेदः प्रतीयते । चैत्रस्यैव धनमित्यादौ चैत्राद्यन्यस्मिन् स्वामित्वादिसंबन्धावच्छिन्नप्रतियोगिताकः धनाद्यभावः, पृथिव्यामेव गन्धः इत्यादौ पृथिव्याद्यन्यस्मिन् समवायादिसंबन्धावच्छिन्नप्रति-

---

1 नीलभवनाश्रयान्यत्वसामानाधिकरण्येनेति – नीलस्यापि सरोजस्य सत्त्वादिति भावः ।

योगिताको गन्धाद्यभावः, चैत्रो जलमेव भुङ्क्ते इत्यादौ जलाद्यन्यस्मिन् कर्मतादिसंबन्धावच्छिन्नप्रतियोगिताको भोजनाद्यभावः, चैत्रस्यैवायं भ्राता इत्यादौ चैत्राद्यन्यस्मिन् प्रतियोगितादिसंबन्धावच्छिन्नप्रतियोगिताकः एत (त्काल) द्भ्रातृत्वाद्यभाव एव प्रतीयते इति । न च स्वामित्वादिसंबन्धस्य वृत्त्यनियामकतया प्रतियोगितावच्छेदकत्वाभावेन नोक्तरीतिः संभवतीति वाच्यम् । वृत्त्यनियामकसंबन्धस्याप्यभावप्रतियोगितावच्छेदकत्वे [1]बाधकाभावात् । एवमन्यत्राप्यूह्यम् ।

---

## एवकारस्य व्यवच्छेदादौ न शक्तिः, पार्थस्य पार्थान्यत्वव्यवच्छेदसंबन्धेन धनुर्धरे अन्वयः इति केषांचिन्मतम्

अत्र केचित्, पार्थ एव धनुर्धरः इत्यादौ पार्थान्यत्वव्यवच्छेदादिसंबन्धेन धनुर्धरादौ पार्थाद्यन्वयबोधसंभवात् अलमेवकारस्य व्यवच्छेदादौ शक्त्यादिकमभ्युपेत्य तदर्थविषयकबोधा-

---

1 बाधकाभावादिति—प्रतीतिबलेन वृत्त्यनियामकस्यापि प्रतियोगितावच्छेदकसंबन्धता सिद्ध्यति । द्रव्यं गच्छति नाभावमित्यादौ द्वितीयार्थे समवेतत्वे निरूपितत्वेन वृत्त्यनियामकसंबन्धेन प्रकृत्यर्थस्याभावस्याभावबोधायापि वृत्त्यनियामकसंबन्धस्यापि प्रतियोगितावच्छेदकता स्वीकरणीया इत्यपि बोध्यम् ।

भ्युपगमेन । न चैवं पार्थ एव धनुर्धरः इत्यादिवत्, पार्थो धनुर्धरः इत्यादावपि उपदर्शितसंबन्धेन धनुर्धरादौ पार्थाद्यन्वयबोधापत्तिरिति वाच्यम् । एवकारस्य तेन संबन्धेन तदर्थविषयकबोधे तात्पर्यग्राहकतया पार्थो धनुर्धरः इत्यादौ तादृशबोधतात्पर्यग्रहाभावेन तादृशशाब्दबोधापादनासंभवात् । [1]नामार्थयोरिति व्युत्पत्तिसंकोचाच्च न तद्विरोधः इत्याहुः ।

---

## व्यवच्छेदप्रकारकबोधाय शक्तिकल्पनमावश्यकमिति निरुक्तमतनिरासः

तदसत् । नामार्थयोरिति व्युत्पत्त्यसंकोचेन निर्वाहे तत्संकोचे मानाभावात् । पार्थ एव धनुर्धरः इत्यादौ पार्थान्यत्वव्यवच्छेदादिसंबन्धेन धनुर्धरादौ पार्थाद्यन्वयबोधाभ्युपगमे, भूतले न घटः इत्यादावपि स्वाभाववत्त्वादिसंबन्धेन भूतलवृत्तित्वादेः घटादावन्वयसंभवेन नञादेरप्यभावार्थकत्वविलोप-

---

1 ननु नामार्थस्य पार्थस्य पार्थान्यत्वव्यवच्छेदात्मकभेदसंबन्धेन नामार्थे धनुर्धरे अन्वयः नामार्थयोर्भेदेनानन्वयव्युत्पत्तिविरुद्धः, इत्यत आह—नामार्थयोरिति । एवकारस्थले व्युत्पत्तिवैचित्र्याधीनो बोधः सर्वपक्षसमान इति भावः ।

प्रसङ्गाच्च । सर्वानुभवसिद्धस्य धनुर्धरादौ पार्थान्यत्वव्यवच्छेदादिप्रकारकबोधस्यापलापप्रसङ्गाच्च । न च तादृशानुभव एवासिद्ध इति वाच्यम् । तथापि तादृशव्यवच्छेदादिसंबन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकबोधोपगमासंभवात् । न च वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वे बाधकाभावान्न दोष इति वाच्यम् । तथापि पार्थ एव धनुर्धरः इत्यादौ व्यवच्छेदप्रकारकबोधाङ्गीकारे तादृशशाब्दसामग्र्याः पार्थान्यत्वव्यवच्छेदाभाववान् धनुर्धरः इत्यादिमानसं प्रति स्वातन्त्र्येण प्रतिबन्धकत्वं न कल्प्येत । तादृशशाब्दसामग्रीकाले तादृशमानसप्रतिबन्धकस्य पार्थान्यत्वव्यवच्छेदप्रकारकबोधस्य सत्त्वेन [1]बाधप्रतिबन्धकतयैवोपपत्तेरिति लाघवेन, एवकारस्य व्यवच्छेदादौ शक्तिमुपेत्य व्यवच्छेदप्रकारकबोधाङ्गीकारस्यैवोचितत्वात् । अधिकं पूर्वोपदर्शितरीत्या बोध्यम् ।

---

1 बाधप्रतिबन्धकतयैवेति — तदभाववत्ताज्ञानविधया क्लृप्तप्रतिबन्धकतयैवेत्यर्थः ।

[1]एतेन, पार्थान्यत्वव्यवच्छेदविशिष्टाभेदादिसंबन्धेन पार्थादेः धनुर्धरादावन्वये, न नामार्थयोरिति व्युत्पत्तिविरोधः, न वा नञर्थानुपपत्तिरित्यपि परास्तम् । इत्यलं मन्दबुद्धीनां जामितापादकविचारेण ।

---

## इवार्थविचारः

चन्द्र इव मुखमित्यादौ इवार्थः सादृश्यम् । मुखे चन्द्रसादृश्यानुभवस्यानुभवसिद्धत्वात् ।

ननु अत्र कीदृशः शाब्दबोधः । नामार्थयो[2]र्भेदान्वयाभावेन चन्द्रसादृश्यवन्मुखमित्यादिशाब्दबोधासंभवादिति चेत् ।

---

1 एतेन — शाब्दसामग्र्याः मानसप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवेन ।

2 भेदान्वयाभावेन — इवार्थे सादृश्ये चन्द्रपदार्थस्य प्रतियोगितासंबन्धेनान्वयासंभवेन ।

## प्राचीनानुयायिमतेन शाब्दबोधः

अत्र प्राचीनानुयायिनः, चैत्रस्येदं धनमित्यादौ यथा स्वामिचैत्रीयं धनम् इत्याद्याकारकोऽन्वयः । तथा अत्रापि सादृशचन्द्रीयं मुखमित्याद्याकारकोऽन्वयबोधः । नामार्थयोर्भेदेनान्वयबोधे [1]प्रकारीभूतविभक्त्यर्थ-निपातार्थान्यतरोपस्थितेः हेतुत्वात् । फलानुरोधेन तथैव कल्पनादित्याहुः ।

## नव्यमतेन शाब्दबोधः

नव्यास्तु निपातातिरिक्तनामार्थयोरेव भेदान्वयाभावेन चन्द्रसादृश्यवन्मुखमित्याद्याकारक एव शाब्दबोधः इति वदन्ति ।

---

1 प्रकारीभूतेति — इवपदोपस्थापितस्य सादृश्यस्य आश्रयतासंबन्धेन चन्द्रे, चन्द्रस्य सादृश्यसंबन्धेन मुखे अन्वयः । सादृश्यस्य प्रकारतया संसर्गतया च भानमिति भावः ।

 

## संप्रदायमते इवार्थसादृश्यस्वरूपे चन्द्रपदार्थान्वयनिरूपणम्

अथ किमिदं सादृश्यमिवार्थः इति चेत् । भेद-[1]विशिष्टधर्मवत्त्वरूपं तदिति गृहाण ।

तत्र भेदे चन्द्रादेः चन्द्रत्वाद्यवच्छिन्नप्रतियोगिता-संसर्गेण, धर्मे चाधेयतासंसर्गेण तस्यान्वयः । तथाच चन्द्र-वृत्तिचन्द्रभिन्नत्वविशिष्टधर्मवत्त्ववन्मुखमित्याद्यन्वयबोधः । स च धर्मः चन्द्रवृत्तिविलक्षणरूपादिमत्त्वमेव । यथा कथं चित् धर्मस्यातिप्रसक्तत्वात् । न च चन्द्रवृत्तिरूपादेः समवायेन मुखेऽसत्त्वात् कथमन्वय इति वाच्यम् । तत्प्रकारकज्ञान-विशेष्यत्वसंबन्धेन तद्वत्त्वस्य मुखे सत्त्वात् । चन्द्रभेद-विशिष्टत्वमपि [2]धर्मस्य [3]स्वप्रकारकज्ञानविशेष्यत्वरूपसंबन्ध-घटितसामानाधिकरण्यसंबन्धेन बोध्यम् । न च चन्द्रभेद-

---

1 विशिष्टेति — वैशिष्ट्यं सामानाधिकरण्यरूपं बोध्यम् ।
2 धर्मस्य — चन्द्रवृत्तिविलक्षणरूपादिमत्त्वस्य ।

3 स्वप्रकारकेत्यादि—चन्द्रभिन्ने मुखे समवायेन तादृशरूपाभावेन समवायघटितसामानाधिकरण्याभावादिति भावः ।

विशिष्टधर्मस्य चन्द्रवृत्तित्वं न संभवतीति वाच्यम् । गुणाद्यन्यत्वविशिष्टसत्तायाः [1]गुणादिवृत्तित्ववत् तस्य संभवात् ।

यद्वा, चन्द्र [भेद] विशिष्टधर्मत्वावच्छिन्ने चन्द्रवृत्तित्वस्य नान्वयः । किन्तु, धर्मत्वावच्छिन्ने । तथाच चन्द्रभिन्नत्वविशिष्ट चन्द्रवृत्तिधर्मवन्मुखमित्याद्यन्वयबोधः ।

[2]अत्र चोपमानोपमेययोः समानविभक्तिकत्वं तन्त्रम् । तेन चन्द्रस्येव मुखमित्यत्र न मुखे चन्द्रसादृश्यबोधः । कालिदासस्येव यशः इत्यादौ च यशःपदाध्याहारेण कालिदासस्य यश इव यशः इत्यन्वयः । न च सादृश्यस्य भेदघटितत्वे 'रामरावणयोर्युद्धं रामरावणयोरिव' इति प्रयोगो न स्यादिति वाच्यम् । तत्र विशिष्टवाचकेवशब्दस्य तद्गतधर्मवत्त्वरूपकेवलविशेष्ये लाक्षणिकत्वात् ।

यद्वा, एवकारवत् इवशब्दस्यापि खण्डशः भेदे धर्मे च

---

1 गुणादिवृत्तित्ववदिति—गुणान्यत्वविशिष्टसत्ताधिकरणत्वस्यातिरिक्तस्य गुणे अस्वीकारात् गुणो विशिष्टसत्तावानिति न प्रतीतिरिति भावः ।

2 अत्र — सादृश्यान्वयबोधे ।

शक्तिः। तथाच रामरावणयोर्युद्धमित्यादौ भेदांशमपहाय शक्त्यैव केवलतद्गतधर्मान्वयबोधः इति संप्रदायः।

---

### भेदः वृत्तिसजातीयधर्मश्चेत्युभयरूपे इवार्थे सादृश्ये चन्द्रान्वयादेः केषांचिन्मतेन प्रतिपादनम्

केचित्तु, भेदः, वृत्तिसजातीयधर्मश्च सादृश्यम्। साजात्यं च यथानुभवं तत्तद्रूपेण। [1]एवं च नानार्थत्वेऽपि शक्तिग्रहः सर्वनामवदूह्यः। चन्द्र इव मुखमित्यत्र भेदे चान्वयितावच्छेदकावच्छिन्नप्रतियोगितया चन्द्रादेरन्वयः। तेन मुखं मुखमिवेति नान्वयबोधः। वृत्तित्वे च निरूपकतया। मुखे च भेदतादृशधर्मयोः अधिकरणतया। साजात्यं च तात्पर्यवशात् आह्लादनत्व-रूप-योग्यसंस्थानविशेषादिवृत्ति-धर्मेण। एवं च चन्द्रभिन्नत्वे सति चन्द्रवृत्त्याह्लादकत्वस-जातीयाह्लादकत्ववन्मुखमिति शाब्दबोधः।

कालिदासस्येव यशः इत्यत्र तु यशस्संबन्धित्वेन एत-स्येत्यस्यावश्याध्याहारात् [2]एतस्मिन्नेव इवार्थान्वयः। एवं च

---

1 एवं च — सादृश्यघटकसाजात्यस्याननुगतधर्मघटितत्वेन साद-श्यस्याननुगतत्वात्।

2 एतस्मिन्नेव — एतत्पदबोध्ये एव।

कालिदासभिन्नत्वे सति कालिदासनिष्ठयशस्सजातीययशस्विनः एतस्य यशः इति शाब्दबोधः। (शाब्दबोधं च) [साजात्यं च] बहुपुरुषवेद्यत्वादिना उत्तमकाव्यप्रभवत्वादिना वा। नियमेन तादृशसाजात्यबोधार्थं यशःपदम्। [1]प्रकारभेदाच्च न पौनरुक्त्यम्। 'गगनं गगनाकारम्' 'रामरावणयोर्युद्धम्' इत्यादौ च उपमेयवाचकपदोत्तरमेवकारोऽध्याहर्तव्यः। द्वितीये च उपमानवाचकं युद्धमिति च। तथाच [2]गगनभिन्ने गगनसादृश्यं, रामारावणयुद्धातिरिक्ते रामरावणयुद्धसादृश्यं नास्तीति शाब्दबोधः। अत्र [3]भावान्वयो न विवक्षितः, बाधात्। यत्तु अत्र भेदाघटितसादृश्यमात्रस्यान्वयबोधः इति संप्रदायमतं, तदतिप्रसङ्गादनुभवविरोधाच्चोपेक्षणीयमिति प्राहुः। अधिकमस्मत्कृतसादृश्यविचारे अनुसन्धेयम्। विस्तरभिया नोक्तम्।

---

1 प्रकारभेदाच्चेति — कालिदासस्येव एतस्य यशः इत्यत्र एतद्वृत्तियशस्त्वेन विशेष्यतया कालिदासवृत्तियशस्सजातीययशस्त्वेन एतत्पदार्थविशेषणीभूतसादृश्यघटकतया चेत्यर्थः।

2 गगनभिन्ने इति — अन्यानुयोगिकव्यवच्छेदः एवकारार्थः इत्याशयः।

3 भावान्वयबोधः — गगनं गगनसादृश्यवदिति बोधः।

### चन्द्र इवेत्यत्र इवशब्दस्य चन्द्रप्रतियोगिकसादृश्यमर्थः इति मतं, तन्निरासश्च

अत्र केचित्, चन्द्र इव मुखमित्यत्र चन्द्रप्रतियोगिकसादृश्यमेव इवार्थः । घटो नेत्यत्र घटप्रतियोगिकाभावस्य नञर्थतायाः क्लृप्तत्वात् । न च लाघवात् सादृश्यमेव इवार्थ इति वाच्यम् । तथा सति चन्द्रस्य सादृश्यमितिवत् चन्द्रस्येव मुखमित्यादेरापत्तेः, घटस्याभावः इतिवत् घटस्य न इत्यादेरप्यापत्तेः । इवशब्दस्य सादृश्यमात्रवाचकतया [1]ततः षष्ठ्यर्थसंबन्धालाभेन तद्बोधार्थं षष्ठीप्रयोगस्यावश्यकत्वात् । [2]अस्मन्मते तु सादृश्यप्रतियोगिताया इवादिपदार्थतया षष्ठ्यनपेक्षणान्नोक्तापत्तिरिति ।

तदसत् । तथासति अव्ययस्थले [3]अन्विताभिधानोपगमेन मीमांसकमतानुप्रवेशात् । असमस्तनञः अभावमात्रपरत्वेन प्रतियोगितांशस्य संसर्गमर्यादया भानसंभवाच्च ।

---

1 ततः — इवशब्दात्, षष्ठ्यर्थसंबन्धालाभेन —षष्ठ्यर्थस्य प्रतियोगित्वरूपसंबन्धस्याबोधेन ।

2 अस्मन्मते तु — चन्द्रप्रतियोगिकसादृश्यस्य इवशब्दवाच्यत्वमते तु ।

3 अन्विताभिधानोपगमेन — इतरपदार्थान्वयविशिष्टस्वार्थे पदशक्तिस्वीकारेण ।

न च घटस्याभावः इतिवत् घटस्य नेति षष्ठ्यापत्तिरिति वाच्यम् । नञ्पदजन्याभावोपस्थितौ प्रतियोगितांशस्य संसर्गतयैव भानं, अभावपदजन्यायां तु प्रकारतयैवेति नियमाभ्युपगमेनादोषात् । न चैवं गौरवमिति वाच्यम् । तवापि घटो नेत्यत्र पटाभावबोधवारणाय समभिव्याहृतपदार्थप्रतियोगिक एवाभावो भासते इति नियमस्यैव युक्तत्वात् । त्वन्मते घटपदस्यैव घटप्रतियोगिकाभावपरत्वं, नञ्पदं तु तात्पर्यग्राहकमित्यस्यापि विनिगमनाविरहेण वक्तुं शक्यत्वाच्च । एवं च प्रतियोगितांशस्य संसर्गतया भानसंभवेन [1]षष्ठ्यपेक्षा न स्यादिति वाच्यम् । [2]समानविभक्तिकनामार्थयोरभेदान्वयनियमेन प्रतियोगित्वस्य संसर्गतया भानसंभवात् । अन्यथा त्वन्मतेऽपि तत्र अभावपदस्यैव घटप्रतियोगिकाभाववाचकत्वसंभवेन तत्र षष्ठ्यपेक्षानापत्तेः । इत्थं च चन्द्र इव मुखमित्यत्र प्रतियोगित्वस्य संसर्गतयैव भानान्न षष्ठी । चन्द्रस्य

---

1 षष्ठ्यपेक्षा न स्यादिति वाच्यमिति —प्रतियोगित्वबोधार्थं षष्ठ्यपेक्षा नास्तीति वक्तव्यमित्यर्थः ।

2 समानविभक्तिकेति —नेति निपातोत्तरं विभक्तेरसत्त्वेन प्रथमान्तघटपदसमानविभक्तिकत्वाभावेन तदर्थे अभेदातिरिक्तेन प्रतियोगितासंबन्धेनान्वयः संभवतीति भावः ।

सादृश्यमित्यत्र तु संसर्गतया तल्लाभासंभवात् षष्ठ्यवेति, न चन्द्रप्रतियोगिकसादृश्यमिवार्थः, न वा घटप्रतियोगिकाभावो नञर्थः इत्युक्तरीतिरेव साध्वी ॥

---

चन्द्र इव मुखमित्यत्र उपमानोपमेयोभयविशेष्यकबोधः
इति मतनिरूपणम्

यत्तु, चन्द्र इव मुखमित्यत्र मुखसदृशश्चन्द्रः, चन्द्रसदृशं मुखमिति उभयविशेष्यको बोधः । यथा चन्द्रः तथा मुखमित्यत्र यादृशधर्मवांश्चन्द्रः तादृशधर्मवन्मुखमित्युपमानोपमेयोभयविशेष्यकबोधस्य [1]क्लृप्तत्वात् । न च तत्र प्रकारार्थकथाल्प्रत्ययेन यत्तच्छब्दाभ्यां वाक्यभेदावगमेन चोभयविशेष्यकबोधोपगमेऽपि [2]अत्रोभयविशेष्यकबोधे मानाभाव इति वाच्यम् । तथासति 'हंसीव धवलश्चन्द्रः' इत्यादौ

---

1 क्लृप्तत्वादिति — यथा चन्द्रः तथा मुखमिति वाक्याधीनबोधसमानाकारकः बोधः चन्द्र इव मुखमिति वाक्याज्जायते इत्यनुभवसिद्धमिति भावः ।

2 अत्र —चन्द्र इव मुखमित्यत्र । उभयविशेष्यकबोधे--उपमानोपमेयोभयविशेष्यकबोधे ।

हंसीसदृशश्चन्द्रो धवलः इत्युपमेयमात्रविशेष्यकबोधे बाधकाभावेन लिङ्गभेदस्य उपमा [दोष] त्वानुपपत्तेः । [1]मन्मते तु तत्र धावल्यवती हंसी धावल्यवांश्चन्द्रः इत्युभयविशेष्यकबोधेन पुल्लिङ्गधवलशब्दस्य हंस्यामन्वयासंभवात् लिङ्गभेदरूपदोषत्वोपपत्तेः । न च तादृशान्वयासंभव एव [2]कुत इति वाच्यम् । अनियतलिङ्गवचनकनामार्थप्रकारकतादात्म्यसंसर्गकशाब्दबोधे समानलिङ्गवचनकनामजन्योपस्थितेः हेतुत्वेन तादृशान्वयासंभवात् । न च तादृशहेतुतायां मानाभाव इति वाच्यम् । नील [स्य] घटः इत्यादावभेदान्वयबोधवारणाय तदावश्यकत्वात् । [3]अजहल्लिङ्गस्थले लिङ्गभेदेनान्वयात् अनियतत्वनिवेशः । अत एव, मणिकृताप्युक्तम्—'भिन्नविभक्तिकयोरिव भिन्नलिङ्गकयोरपि सामानाधिकरण्येन विशेषणविशेष्यभावाभावात् । अजहल्लिङ्गे तु लिङ्गनियमाननुशासनात्तथा' । इति ।

---

1 मन्मते — उपमानोपमेयोभयविशेष्यकबोधाङ्गीकर्तृमते ।

2 कुतः — कीदृशकारणाभावादिति यावत् ।

3 अजहल्लिङ्गस्थले — नियतलिङ्गकस्थले ।

 

युज्यते [1]चैतत् । अन्यथा, चन्द्र इव मुखमित्यादावुपमानोपमेययोरेकविभक्तिकत्वेनोभयत्र सादृश्यस्य शाब्दत्वात् श्रौती उपमा । चन्द्रेण तुल्यं मुखमित्यादौ विभक्तिभेदात् सादृश्यस्या[2]तथात्वेन आर्थी उपमा । (भन्मुखंच) [इदं मुखं च] तुल्यमित्यादौ विभक्तिसाम्येऽपि उपमानोपमेयभावस्य प्रसिद्धिवशादेव लाभ इति आर्थी उपमेति, श्रौत्यार्थीविभागानुपपत्तेरिति ।

---

## उपमानोपमेयोभयविशेष्यकबोधवादिमतनिराकरणम्

तदसत् । तथासति उभयविशेष्यकबोधाङ्गीकारेऽपि चन्द्र इव मुखं रमणीयमित्यादावप्युपमाया दुष्टत्वापत्तेः । तत्रापि उपमानोपमेययोः भिन्नलिङ्गतया रमणीयत्वस्य मुखान्वितस्य चन्द्रेऽन्वयासंभवात् । न च तत्र रमणीयं च रमणीयश्चेति द्वन्द्वे 'नपुंसकमनपुंसकेन'(पा. सू. 1-2-64-)इत्येकशेषे एकवद्भावे च, पुंल्लिङ्गरमणीयशब्दस्य चन्द्रे, नपुंसकस्य च मुखे-

---

1 एतत् — उपमानोपमेयविशेष्यकबोधस्वीकरणम् ।

2 अतथात्वेन — उपमानोपमेययोः अशाब्दत्वेन ।

न्वयान्न दोष इति वाच्यम् । तथापि कुवलयमिव श्यामः कटाक्षः, ध्वान्तमिव केशो नीलः, इत्यादावुपमाया दुष्टत्व-प्रसङ्गस्य दुर्वारत्वात् । न च तत्र दुष्टत्वमिष्टमेवेति वाच्यम्। मानाभावात् । 'इष्टः पुंनपुंसकयोः प्रायेण'(वा. सू. 4-12-3) इति वामनोक्तेरुभयत्र साम्यात् । न च [1]तत्राप्येकशेषा-श्रयणान्न दोष इति वाच्यम् । पुंल्लिङ्गोपमेयश (त्ता) [ब्द इ] चोपमानस्थले साधारणधर्मस्योपमेयसमानलिङ्गत्वेन तत्रापि न-पुंसकस्यैव श्रवणापत्तेः । [2]एवं सर्वत्राप्यदुष्टत्वे वामनोक्तौ प्रायशब्दविरोधाच्च । किञ्च, 'प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता' इत्यस्यापि दण्ड्यादिभिः आलंकारिकाचार्यैर-दुष्टत्वेनाङ्गीकृतस्य [3]दुष्टत्वप्रसङ्गाच्च ।

---

1 तत्राप्येकशेषाश्रयणादिति – श्यामं च श्यामश्चेति द्वन्द्वे, 'नपुं-सकमनपुंसकेन' इति एकशेषे एकवद्भावे च नपुंसकश्याम-शब्दस्य कुवलये, पुंल्लिङ्गश्यामशब्दस्य कटाक्षे अन्वयाङ्गी-कारादिति यावत् ।

2 एवं — एकशेषाश्रयणेन ।

3 दुष्टत्वप्रसङ्गादिति — प्राणा इवेत्यत्र उपमेयान्वयिनः प्रियः इत्येकवचनान्तस्य प्राणाः इति बहुवचनान्तेनान्वयासंभवेन, विद्या धनमिवेत्यत्र उपमेयविद्यान्वितस्य स्त्रीलिङ्गस्य आर्जिता इत्यस्य धनमिति नपुंसकलिङ्गशब्देनान्वयासंभवेन च दुष्टत्व-प्रसङ्गादित्यर्थः ।

अथैवं, 'हंसीव धवलश्चन्द्रः' इत्यादेः कथं दुष्टत्वम् । उपमेयमात्रविशेष्यकबोधे लिङ्गभेदस्याप्रतिकूलत्वादिति ।

मैवम् । न हि शाब्दबोधप्रतिकूलतयैव दोषत्वम् । उभयविशेष्यकबो[1]धाङ्गीकारेऽप्यतिप्रसङ्गस्योक्तत्वात् । हीनत्वादिदोषाणां तत्प्रतिकूलतायाः संभावयितुमप्यशक्यत्वाच्च ॥

अत एव, यत्र पुंलिङ्गेऽप्युपमेये स्त्रीलिङ्गस्योपमानस्य न पुंलिङ्गतासंभवः, यत्र एकवचनान्तेऽप्युपमेये नित्यबहुवचनान्तस्योपमानस्य नैकवचनान्तत्वसंभवः, तत्र न लिङ्गवचनभेदेऽपि दोषः । तदुक्तमाचार्यदण्डिना—

न लिङ्गवचने भिन्ने न न्यूनाधिकतापि च ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥
स्त्रीव गच्छति षण्ठोऽयं वक्तीयं स्त्री पुमानिव ।
प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता । इति ।

(काव्यादर्श) सहृदयोद्वेगबीजं तु उक्तरीत्या प्रकृतानुपयुक्तलिङ्गविशेषोपादानमेव । तच्च न नियतलिङ्गवचनेष्विति [न]

---

1 अतिप्रसङ्गस्य — चन्द्र इव मुखं रमणीयमित्यत्र दुष्टत्वप्रसङ्गस्य ।

तत्रोद्वेगः । नियतवचनत्वं तु [1]स्वशक्यार्थाभिधाननियतस्वकत्वम् । तत्त्वेनानुशासनतात्पर्यविषयत्वमिति यावत् । [2]प्राणो दाराः इत्यादेश्चै (व) [कवचन] स्य प्रयोगेण बहुत्वाभिधानानियतत्वात् । तेन प्राणशब्दस्य कोशादौ एकवचनान्तत्वेनानुशासनेऽपि 'पुंसि भूम्न्यसवः प्राणाः' इति बहुवचनान्तत्वेनापि अनुशासनमस्त्येवेति न दोषसंभवः इति ।

---

साधारणधर्मः तदुपादाने तद्रूपेण इवार्थः, अन्यत्र धर्मत्वेनेवार्थः

अत्रेदं बोध्यम् । यत्र साधारणधर्मस्य शाब्दत्वं तत्र [3]तद्रूपेणैव सः इवार्थः । अन्यत्र तु धर्मत्वेनैव । इत्थं च चन्द्र इव मुखं रमणीयमित्यत्र चन्द्रप्रतियोगिकभेदसमानाधिकरणं, यत् चन्द्रवृत्तिरमणीयत्वं तदाश्रयो मुखमिति बोधः । चन्द्र इव मुखमित्यत्र तु तादृश–चन्द्रवृत्तिधर्मवन्मुखमिति

---

1 स्वशक्येत्यादि — अत्र नियतवचनत्वं यत्र स्थाप्यं तस्य स्वपदाभ्यामुपादानं बोध्यम् ।

2 तत्त्वेनानुशासनतात्पर्यविषयत्वमिति पर्यवसितार्थकथने निमित्तमाह — प्राणो दारा इति ।

3 तद्रूपेणैव— शब्दबोध्यतावच्छेदकेन रमणीयत्वत्वादिनैव ।

बोधः । अत एवात्र श्रौतीत्वं, साधारणधर्मस्योपमानोपमेय- निष्ठतया इवशब्देन प्रतिपादनात् । तत्र समानाधिकरणान्ते- नोपमेयवृत्तित्वं, वृत्त्यन्तेनोपमानवृत्तित्वं [च] प्रतिपाद्यते । न च चन्द्रान्यवृत्तित्वस्य ततो लाभेऽपि मुखवृत्तित्वस्य (त्पा) [लाभा] भावात् [1]कथमेतदिति वाच्यम् । उपमेयस्यापि चन्द्रान्यतया सामान्यतः तद्वृत्तित्वलाभात्, [2]तावतैवोपपत्तेः । न च साधारणधर्मप्रयोगस्थले तस्यैव इवशब्देन रमणीयादिशब्देन च बोधने अन्यतरस्य व्यर्थत्वमिति वाच्यम् । उभाभ्यामेक- स्यैवोपस्थाप (का) [ना] दिति दिक् ।

---

गज इव गच्छतीत्यादौ बोधानुपपत्तिशङ्का, द्वेधा तत्परिहारश्च

ननु गज इव गच्छति, पिक इव रौति इत्यादौ कथं बोधः । गजसादृश्यस्य गमने, पिकसादृश्यस्य च शब्दा- त्मकरवणे बाधादिति चेन्न ।

1 कथमेतदिति — श्रौतीत्वमनुपपन्नमित्यर्थः ।

2 तावतैवोपपत्तेः — सामान्यरूपेण चन्द्रान्यत्वादिनोपमेये विद्य- मानत्वस्य इवशब्देन बोधादेव श्रौतीत्वोपपत्तेः ।

गजपदस्य गजगमनलाक्षणिकतया, पिकशब्दस्य च पिकरवणलाक्षणिकतया, गजगमनसदृशगमनकृतिमान्, पिकरवणसदृशरवणकृतिमानित्याद्याकारान्वयबोधाङ्गीकारात् । (यच्च) [यद्वा] तत्र स्ववृत्तिगमनसजातीयत्वस्य, स्ववृत्तिरवण[1]सजातीयत्वस्य च सादृश्यस्य इवार्थतया, गजवृत्तिगमनसजातीयगमनकर्ता, पिकवृत्तिरवणसजातीयरवणकर्ता इति शाब्दबोध इति ।

---

### इवार्थस्य कारणबाधात् धात्वर्थे अन्वयासंभवाक्षेपः, तत्परिहारश्च

ननु घटो न [प]श्यतीत्यत्र घटान्विताभावस्य दर्शने कर्मतासंसर्गेणान्वयबोधवारणाय, धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेन शाब्दबोधं प्रति विशेष्यतया विभक्तिजन्योपस्थितेः कारणत्वमवश्यमुपेयम् । एवं च गज इव गच्छति, पिक इव रौति इत्यादौ इवाद्यर्थस्य सादृश्यस्य धात्वर्थे गमना[2]दावन्वयासंभवः । न चैवं पाको न यागः इत्यादौ नञर्थ-

---

1 सजातीयत्वस्येति — स्ववृत्तिरवणसजातीयरवणवत्त्वं सादृश्यं नेवार्थं इति यावत् ।

2 अन्वयासंभव इति — सादृश्यस्य विभक्त्यर्थत्वाभावेन तत्र विभक्तिजन्योपस्थितेः विशेष्यतया असत्त्वादिति भावः ।

भेदस्य पाकादावन्वयो न स्यात् । पाकस्य धात्वर्थतया तन्निष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेन [1]भे (दस्या) [दे] अन्वयबोधासंभवादिति वाच्यम् । नामार्थातिरिक्तत्वेन धात्वर्थस्य विशेषणात् । उक्तस्थले च पाकादेर्धात्वर्थत्वेऽपि [2]नामार्थत्वेनादोषादिति चेन्न ।

स्तोकं पचतीत्यादौ [3]व्यभिचारवारणाय प्रकारतायां भेदसंबन्धावच्छिन्नत्वस्यावश्यं निवेशेन उक्तस्थले इवशब्दस्य सादृश्याश्रये लाक्षणिकतया, तस्यचाभेदसंबन्धेनैव धात्वर्थे गमनादौ प्रकारतयाऽन्वयसंभवात् ।

---

1 भेदे इति — विभक्त्यर्थभिन्ने इत्यादिः ।

2 नामार्थत्वेन — कृदन्तपाकनामार्थत्वेन ।

3 व्यभिचारवारणायेति — स्तोकं पचतीत्यादौ क्रियाविशेषणस्थले स्तोकनामार्थस्याभेदेन धात्वर्थे अन्वयात्, धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेन शाब्दबोधस्य स्तोके नामार्थे उत्पत्त्या तत्र विभक्तिजन्योपस्थितेः कारणस्याभावेन प्रसक्तव्यतिरेकव्यभिचारस्य वारणायेत्यर्थः ।

### गमनकर्तरि गजसादृश्यबोधः इति केषांचिन्मतम्

केचित्तु, उक्तानुपपत्त्या तत्र गजादिसादृश्यस्य गमनादिकर्तर्येवान्वयः । कर्तरि गजादिसादृश्यं च [1]स्वगमनादिसदृशगमनादिकर्तृत्वमेवेत्याहुः ।

---

### गमनकर्तरि गजसादृश्यवादिमतमयुक्तं, गजपदस्य गजगमनलक्षकत्वमेव साधु इति अन्येषां मतनिरूपणम्

अन्ये तु [2]एतन्मतमयुक्तम्, तथा सति, वनं गज इव गृहं देवदत्तो गच्छति इत्यादौ वनादेः सर्वथैवा[3]नन्वयापत्तेः । तस्मात् गजनिरूपित[4]सादृश्यप्रयोजकगमनाश्रयः इत्येव बोधः ।

---

1 स्वगमनेति — स्वपदार्थः गजः ।

2 एतन्मतं — गमनकर्तरि गजसादृश्यबोध इति मतम् ।

3 अनन्वयापत्तेरिति— गृहकर्मकत्वान्विते धात्वर्थे गमने वनकर्मकत्वान्वयासंभवादिति भावः ।

4 सादृश्यप्रयोजकेति — इवार्थसादृश्यस्य प्रयोजकतासंबन्धेन धात्वर्थे गमने अन्वयः । सादृश्यं च साधारणधर्मप्रयोज्यमतिरिक्तः पदार्थः इत्याशयः ।

 

वनं गज इवेत्यादौ तु गजादिपदानां [1]गजादिकर्तृकगमनादौ लक्षणेत्येव साधु । नचैवमपि धात्वर्थनिष्ठेत्यादेः प्रागुक्तकार्यकारणभावस्य व्यभिचारो दुरुद्धर [2]एवेति वाच्यम् । तादृशकार्यकारणभावस्यैवानङ्गीकारात् । तदङ्गीकारे च तूष्णीं, आरात्, पृथक्, गच्छतीत्यादौ तूष्णींपदार्थादेः गमनादावन्वयेन व्यभिचारापत्तेः । न च तदनङ्गीकारे घटो न [प] श्यतीत्यादौ घटाभावं पश्यतीत्यादिशाब्दबोधवारणासंभव इति वाच्यम् । धात्वर्थनिष्ठविशेष्यतानिरूपित प्रकारतासंबन्धेन शाब्दबोधं प्रति (नत) [नञ्] जन्योपस्थितेः विषयतया प्रतिबन्धकत्वकल्पनेन तद्वारणादित्याहुः ।

---

### अन्ये त्विति मतस्य निरासः

अत्रेदमवधेयम्—एतन्मतमयुक्तमित्ययुक्तम् । उक्तप्रतिबध्यप्रतिबन्धकभावकल्पने न कलञ्जं भक्षयेदित्यादौ

---

1 गजादिकर्तृकगमनादाविति — तत्रैव वनमिति द्वितीयान्तार्थान्वयः इत्यभिसन्धिः ।

2 व्यभिचार इति —धात्वर्थं प्रयोजकतासंबन्धेन इवार्थस्य प्रकारतया, तत्र विभक्तिजन्योपस्थितेः कारणस्याभावादिति भावः ।

कलञ्जभक्षणादौ विध्यर्थ— बलवदनिष्टाननुबन्धित्वाभाव-बोधो न स्यादिति [1]पूर्वोक्तकार्यकारणभाव एवावश्यक इति, [2]अन्येतुवादिमतस्यैवायुक्तत्वात् । नच त्वदुक्तरीत्या[3]मेत-दनुमपन्नम्, अभावस्य विभक्त्यर्थत्वाभावादिति वाच्यम् । तत्र विशिष्य धातुविशेषसमभिव्याहृतनञ्जन्योपस्थितित्वेन कारण-त्वान्तरकल्पनात् । (नवय) [न च [4]म]-माप्येवमेव निस्तार इति वाच्यम् । प्रतिबन्धकसत्त्वे हेत्वन्तरेणापि कार्यानु-दयात् ।

वस्तुतस्तु, न कलञ्जमित्यत्र लिङोऽनिष्टसाधनत्वे लक्षणा, नञस्तात्पर्यग्राहकता इति मतावलम्बनेनोक्तव्यभि-चारा (भावा) भावेन, [5]उक्तकारणत्वान्तरं न कल्प्यते ।

---

1 पूर्वोक्तकार्यकारणभावः — धात्वर्थनिष्ठविशेष्यतानिरूपित-प्रकारतासंबन्धेन शाब्दबोधे विभक्तिजन्योपस्थितिः कारणमिति कार्यकारणभावः ।

2 अन्येतु वादिमतस्य — गजसादृश्यप्रयोजकगमनाश्रयः इति बोधवादिमतस्य ।

3 एतत् — कलञ्जभक्षणे धात्वर्थे नञा लिङर्थस्य बलवदनिष्टा-ननुबन्धित्वस्याभावो बोध्यते इत्येतत् ।

4 ममापि — उक्तबोधे नञ्जन्योपस्थितेः प्रतिबन्धकतावादिनः ममापि ।

5 उक्तकारणत्वान्तरमिति — धातुविशेषसमभिव्याहृतनञ्पद-जन्योपस्थितित्वेनेत्यादिः ।

वनं गज इव गृहं देवदत्तो गच्छति इत्यत्र च वन-शब्दार्थवनसदृश–गृहयोरभेदान्वयः। देवदत्तेन सादृश्यं च वनसंयोगानुकूलगमनसदृशगृहसंयोगानुकूलगमनकर्तृ म्। तथाच उक्तधर्मेण गजसदृश: पुरुषः वनसदृशाभिन्नगृह[कर्मक गमन]कर्ता इत्याद्याकारकः शाब्दबोध इति, [1]उक्तरीत्या पूर्वमत-दूषणं (य) [न] सम्यक्।

---

## पूर्वमते कैश्चिदुक्तं दूषणं, तस्यायुक्तता च

यदपि पूर्वमते देवमिव भवन्तं पश्यामि इत्यादावसंगतिः। तत्र हि भवत्कर्मकदर्शने देवकर्मकसादृश्यं प्रतीयते। न तु भवति देवसादृश्यम्। तथासति देवपदोत्तरद्वितीयावैयर्थ्यात्। संभवत्यर्थसाधुत्वे पदसाधुत्वस्यापि व्यर्थत्वापरपर्यायत्वात्। न च देवेने[2]वार्थस्य तत्र च द्वितीयार्थस्यान्वय इति वाच्यम्।

---

1 उक्तरीत्या पूर्वमतदूषणं—वनं गज इवेत्यत्र सर्वथा वनमित्यस्या-न्वयानुपपत्तिः इति, गमनकर्तरि गजसादृश्यबोधवादिमते दूषणम्।

2 इवार्थस्येत्यादि — इवपदेन सादृशः उपस्थाप्यते, देवान्वित-सदृशस्य देवपदोत्तरविभक्त्यर्थे कर्मत्वे अन्वयः। तथाच देव-सदृशकर्मकत्वं देवमिव इति भावेन बोध्यते इत्यभिसन्धिः।

तथाऽननुभवात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थप्रत्यायकत्वभङ्गप्रसङ्गाच्चेति, दूषणं कैश्चिदुक्तम्। तदप्यसत्। उपमानोपमेययोः समानविभक्तिकत्वस्यौत्सर्गिकतया वैयर्थ्याभावात्।

---

### स्वयं पूर्वमते दूषणनिरूपणम्

[1]परं तु, पूर्वमते [2]कर्तृवाचकपदाभावेऽनुपपत्तिः। तत्र कर्तरि सादृश्यान्वयासंभवात्। एवं सादृश्यस्य विधेयतया प्रतीतिरनुभवसिद्धा न सिद्ध्येत्। गज इव यः पुरुषः स गच्छति, पुरुषो यः स गज इव गच्छति, इति [3]वाक्याभ्यां भिन्नविधेयकप्रतीतिजननात्। किञ्च, स्वः पश्यतीत्यादौ विभक्तिजन्योपस्थितेः हेतुतायां व्यभिचारवारणाय स्वपदस्य स्वकर्मके लक्षणाश्रयणस्यावश्यकतया गज इव इत्यादावपि इव-

---

1 गमनकर्तरि गजसादृश्यबोधवादिमतं स्वयं दूषयति — परंत्विति।

2 कर्तृवाचकपदाभावे—देवदत्तादिप्रथमान्तपदाभावे। प्रथमान्ताभावे आख्यातार्थविशेष्यकबोधस्यैवाभ्युपगमात् कृत्याश्रयस्याबोधादिति भावः।

3 वाक्याभ्यामिति— प्रथमवाक्यजबोधे सादृश्यमुद्देश्यविशेषणतया भासते। गमनं विधेयतया भासते। द्वितीयवाक्यजबोधे विधेयकोटिप्रविष्टतया भासते इति भावः।

शब्दस्य सादृश्याश्रये लक्षणामाश्रित्य तस्य [1]गमनादावन्वय एवोचित इति पूर्वमतमप्यसम्यगेव ।

---

### विभक्तिजन्योपस्थितेः शाब्दविशेषे हेतुत्वं नास्तीति नव्यमतप्रतिपादनम्

नव्यास्तु घटाभावं पश्यतीत्यादिबोधे घटो न पश्यतीत्यादयः स्वरूपायोग्याः । तत्र [2]तत्तदानुपूर्वीरूपाकाङ्क्षाज्ञानाभावात्, [3]तादृशानुपूर्व्या प्रतिबन्धाद्वा न शाब्दबोध इति धात्वर्थेत्याद्युक्तरीत्या विभक्तिजन्योपस्थितेर्हेतुत्वमेव नास्तीति गज इवेत्यादौ इवार्थसादृश्यस्य गमनादावन्वये न कोऽपि दोषः इति प्राहुः, इति दिक् ।

---

### उपमानोपमेययोः लिङ्गसंख्याभेदेऽपि विभक्तिरेकैव

अत्र चन्द्र इव मुखमित्यादौ उपमानोपमेययोः विशेषणविशेष्यभावाभावेऽपि एकैव विभक्तिः ।

---

1 अन्वयः — अभेदेनान्वयः ।

2 तत्तदानुपूर्वीति — घटाभावं पश्यति इत्यानुपूर्वीत्यर्थः ।

3 तादृशानुपूर्व्या — घटो न पश्यति इत्यानुपूर्व्या ।

'लिङ्गसंख्याविभेदेऽपि उपमानोपमेयता ।
विभक्तिः पुनरेकैव उपमानोपमेययोः ॥'

इत्यनुशासनेन उपमानोप [मेय] पदयोः समानविभक्तिकत्व-नियमावगमात् । तेन चन्द्रस्येव मुखमित्यादयो [न प्रयो] गाः । लिङ्गसंख्याविभेदेऽपीत्यस्य च, लिङ्गवचनभेदो नोपमायां शाब्दबोधप्रतिकूलत्वेन दोषः । किन्तु सहृदयोद्वेग-जनकत्वेनैवेत्यादिः प्रागुक्त एवाशयः ।

——

इवशब्दः चन्द्रादिपदस्य चन्द्रादिसदृशे लक्षणातात्पर्यग्राहकतया द्योतकः इति मतनिरूपणम्, तन्मतस्यालोचनीयता च

[1]एतेन, चन्द्र इव मुखमित्यादौ चन्द्रपदं चन्द्रसदृश (पद)लक्षकम् । इवशब्द (श्च) [स्य] तात्पर्यग्राहकतया द्योतकत्वमिति वाच्यम् । नञादिनिपातानां वाचकत्वेऽपि

1 एतेनेति -- विशेषणविशेष्यभावाभावेऽपि उपमानोपमेययोः विभक्तिः पुनरेकैव उपमानोपमेययोः इत्यनुशासनेन समान-विभक्तिकत्वनियमावगमेन, लिङ्गवचनभेदयोः शाब्दबोधप्रति-कूलत्वेन दोषत्वाभावेन चेत्यर्थः । अस्य इत्युक्तमपि सुधी-भिरालोचनीयमिति व्यवहितेन संबन्धः । चन्द्र इवेत्या-दिना इत्युक्तमित्यन्तेन ग्रन्थेन चन्द्रादिपदस्य चन्द्रादिसदृशे लक्षणातात्पर्यग्राहकः इवशब्दः इति मतं निरूपितं बोध्यम् ।

अगत्या इवशब्दस्य द्योतकत्वोपगमे बाधकाभावात् । तथाहि—चन्द्रमिव मुखं पश्यामीत्यादौ चन्द्रपदोत्तरं द्वितीया सर्वसिद्धा । सा च इवशब्दस्य द्योतकत्वे एवोपपद्यते । तथा सत्येव चन्द्रपदस्य चन्द्रसदृशे लक्षणायां, तस्य मुखेऽभेदान्वयात् । अभेदान्वये च विशेषणविशेष्यवाचकपदयोः समानविभक्तित्वस्य नियामकतया विशेषणवाचकचन्द्रपदोत्तरं द्वितीयाया आवश्यकत्वात् । इवशब्दस्य सादृश्यवाचकत्वे तु तस्यैवाश्रयतया मुखेऽन्वयेन चन्द्रपदार्थ—मुखयोरभेदान्वयाभावात् चन्द्रपदोत्तरं द्वितीया अनुपपन्नैव, तस्या अनावश्यकत्वात् । चन्द्र इव मुखं पश्यामीत्यादितोऽपि तादृशबोधोपपत्तेः ।

अथ चन्द्रपदस्य चन्द्रप्रतियोगिकमर्थः । सादृश्यशक्तस्य चेवशब्दस्य सादृश्याश्रये लक्षणा । तस्य च मुखे अभेदेन अन्वयः इति रित्या चन्द्रमिव मुखं पश्यामीत्यादौ [1]समानविभक्तिकत्वोपपत्तिः संभवत्येवेति चेन्न ।

---

1 समानविभक्तिकत्वोपपत्तिरिति — कर्मीभूतमुखे अभेदेनान्वयी इवार्थः सादृश्याश्रयः, तदेकदेशसादृश्ये अभेदेनान्वयी चन्द्रप्रतियोगिकः चन्द्रपदार्थं इति परम्परया मुखे अभेदान्वय्यर्थकतया चन्द्रपदस्य मुखपदसमानविभक्तिकत्वमित्यभिसन्धिः ।

केवलं (चन्द्रपदेति) [इवेति] प्रयोगाभावेन शक्त्या इवपदात् सादृश्यविशेष्यकबोधाभावात् इवादेः सादृश्ये शक्तेरेवाकल्पनात्, तेषां निरर्थकतया स्वशक्यसंबन्धरूपलक्षणाया असंभवात् । तावता इवशब्दार्थस्यैवाभेदेन मुखेनान्वये मुखशब्दे इवशब्दसमानविभक्तिकतालाभेऽपि चन्द्रपदसमानविभक्तिकताया [1]अनुपपादनाच्च ।

एवं, इवशब्दस्य द्योतकत्वे, 'हंसीव धवलश्चन्द्रः' 'सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव' इत्यादौ लिङ्गभेदवचनभेदयोः उपमादोषत्वमुपपद्यते । तत्र हंसीपदस्य हंसीसदृशे, [कुलवधूपदस्य] कुलवधूसदृशे लक्षणायां, तस्य च चन्द्रे, सक्तुषु चाभेदेनान्वयात्, अभेदान्वये च विशेषणविशेष्यपदयोः समानलिङ्गकत्वस्य समानवचनत्वस्य च तन्त्रत्वात् । इवशब्दस्य सादृश्यवाचकत्वे तु हंसीसादृश्यस्य कुलवधूसादृश्यस्य इवार्थस्यैव आश्रयतया चन्द्रे सक्तुषु चान्वयेन (होम्यादि) [हंस्यादि] पदार्थाभेदान्वयाभावेन लिङ्गभेद–वचनभेदयोः [2]उपमादोषत्वानुपपत्तिः ।

---

1 अनुपपादनाच्चेति — चन्द्रपदार्थस्य साक्षादभेदेन मुखशब्दार्थे अनन्वयादिति भावः ।

2 उपमादोषत्वानुपपत्तिरिति — शाब्दबोधप्रतिकूलताया एव दोषताप्रयोजकत्वमिति भावः ।

नूनु, समानलिङ्गकत्व–समानवचनत्वयोरभेदान्वयनियामकत्वे, वेदाः प्रमाणमित्यादि प्रयोगानुपपत्तिः, तत्र लिङ्गभेदात् वचनभेदाच्च । नचानियतलिङ्गस्थले समानलिङ्गकत्वस्य नियामकतया, प्रमाणशब्दस्य नित्य (क्त्वावत्तया) [क्लीबतया] नियतलिङ्गत्वान्न दोष इति वाच्यम् । तथापि समानवचनत्वस्य नियामकत्वासंभवस्य दुरुद्धरत्वात् । प्रमाणशब्दस्या[1]नियतवचनत्वेन अनियतवचनस्थले समानवचनत्वस्य नियामकत्वोपगमेऽप्यनिस्तारादिति चेन्न ।

यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्या [विरुद्धसंख्या]न [2]विवक्षिता, तत्राभेदान्वये(पितद्धीभिस्तदालोचनीयम्) समानवचनत्वं नियामकमित्युक्तमपि सुधीभि[3]रालोचनीयम् ।

---

1 अनियतवचनत्वेनेति — प्रमाणानि, प्रमाणम्, इति च प्रयोगादिति भावः ।

2 न विवक्षितेति — वेदाः प्रमाणमित्यत्र विशेषणवाचकप्रमाणपदोत्तरविभक्त्या विशेष्यवाचकवेदपदोत्तरतात्पर्यविषय बहुत्वसंख्याविरुद्धा एकत्वसंख्या प्रकृत्यर्थतावच्छेदके प्रमाणत्वे (शब्दत्वावच्छिन्नशाब्दप्रमाकरणत्वे) अन्वयिनी विवक्षिता । अतः न समानवचनकत्वमित्यर्थः ।

3 आलोचनीयमिति— आलोचनीयत्वे निमित्तं च एतेन इति उपक्रमे एवाभिहितमनुसन्धेयम् ।

प्रमादाद्दुरुक्तं हि संशोधनीयम् ।

ग्रन्थोपसंहारः

यथाश्रुतानां मणिगोचराणां
निष्कर्षबोधाय [1]बहूक्तियुक्तः ।
अयं महादेवबुधेन यत्नात्
शम्भोर्दयातो रचितो निबन्धः ॥

इति श्रीमत्पदवाक्य प्रमाणपारावारीणश्रीमन्मुकुन्द-
पण्डितात्मज-पु (रा) [ण] ताम्बेकरोपनामक-
महादेवपण्डित विरचिते
न्यायकौस्तुभे, शब्दपरिच्छेदः
समाप्तः
॥ शिवं भूयात् ॥

---

1 बहूक्तियुक्तः — बहूनां उक्तिभिः युक्तः, बह्वीभिः उक्तिभिः उक्तिप्रतिपाद्ययुक्तिभिर्वा युक्तः ।

इति पण्डित राजः श्रीसुब्रह्मण्याभिधः सुधीः ।
बालावबोधसिद्ध्यर्थमकरोल्लघु टिप्पणम् ॥

इति राष्ट्रपति-साहित्य अकादमि संमानभाजनैः
न्यायवेदान्त वागीश-शास्त्ररत्नाकर-पण्तिराज-
वे. सुब्रह्मण्यशास्त्रिभिः विरचितं न्यायकौस्तुभ शब्दपरिच्छेदटिप्पणं
समाप्तम्
॥ शिवं भूयात् ॥

# APPENDIX I

## अनुबन्धः I

### उद्धृतानां निबन्धॄणां सूची

निबन्धा पुटसंख्या

| निबन्धा | | पुटसंख्या |
|---|---|---|
| 48 | महामुनिः | 713 |
| 49 | मिश्राः | 13,143,214,226,385,386, 388,402,454,639 |
| 50 | मिश्रानुसारीयाः | 392 |
| 51 | मीमांसकाः | 128,486,515,540 |
| 52 | मैथिलाः | 610 |
| 53 | वर्धमानोपाध्यायानुयायिनो मैथिलाः | 801 |
| 54 | वामनः | 654,875 |
| 55 | वैशेषिकाः | 24 |
| 56 | वैयाकरणाः, वैयाकरणनवीनाः | 544,554,563,592,602 |
| 57 | वैयाकरणानुयायिनः | 834 |
| 58 | व्यासः | 712 |
| 59 | शाब्दिकाः | 647,661,764,771 |
| 60 | शाब्दिकनव्याः | 772 |
| 61 | सौन्दलोपाध्यायाः | 334 |
| 62 | सौन्दलोपाध्यायानुयायिनः | 349 |
| 63 | स्वतन्त्राः | 359 |
| 64 | हरिः | 560,658,664 |

---

# APPENDIX II

## अनुबन्धः II

## उद्धृतानां निबन्धानां सूची

| निबन्धः | | पुटसंख्या |
|---|---|---|
| 1 | अमरकोशः | 573 |
| 2 | ईश्वरवादः (स्वकृतिः) | 162 |
| 3 | चिन्तामणिः | 383 |
| 4 | निरुक्तम् | 604,605 |
| 5 | प्रत्यक्षमणिदीधितिः | 391 |
| 6 | ब्रह्मपुराणम् | 819 |
| 7 | भनानन्दीयप्रकाशः (स्वकृतिः) | 381,395,549,568 |
| 8 | मणिः | 226 |
| 9 | महार्णवः | 571 |
| 10 | लीलावतीप्रकाशविवरणम् | 613 |
| 11 | वाक्यपदीयम् | 560 |
| 12 | विश्वमेदिनीकोशादिः | 756 |
| 13 | सादृश्यविचारः (स्वकृतिः) | 869 |
| 14 | हरिग्रन्थः | 562 |

# APPENDIX III

## अनुबन्धः III

## उद्धृतानां सूत्राणां सूची

---

# APPENDIX IV

# अनुबन्धः IV

## उद्धृतानां श्लोकानां सूची

| श्लोकः | | पुटसंख्या |
|---|---|---|
| 26 | पश्यतः श्वेतमारूपं. | 105 |
| 27 | पर्युदासः स विज्ञेयः. | 792 |
| 28 | पूर्वाह्णे मातृकं श्राद्धम्. | 819 |
| 29 | प्राप्ते कर्मणि नानेकः. | 468 |
| 30 | बहूनां वृत्तिधर्माणां. | 664 |
| 31 | भम धम्मि अ वीसत्थो. | 730 |
| 32 | भद्रात्मनो दुरधिरोहतनोः. | 740 |
| 33 | मात्सर्यमुत्सार्य विचार्य कार्यं. | 746 |
| 34 | यज्ञो दानं तपः कर्म. | 373 |
| 35 | यत्संज्ञास्मरणं तत्र. | 658 |
| 36 | योगरूढस्य शब्दस्य. | 754 |
| 37 | लिङोऽभिधा सैव च शब्दभावना. | 252 |
| 38 | लिङ्गसंख्याविभेदेऽपि. | 887 |
| 39 | शक्तिग्रहं व्याकरणोपमान. | 574 |

शुभं भूयात्

---